३१) न विद्यते । इद वामनचरितं कुरुजाङ्गले लोमहर्षणसूतेन ऋषिभ्य कथितम्। वामनपुराणस्य मुख्यौ सवादकर्त्तारौ पुलस्त्यनारदौ । वामनपुराणस्य अन्तिमेषु कतिचिद् अध्यायेषु वर्त्तमान वामनचरित पुलस्त्येन नारदाय समाख्यातम्। अत इदमेव पुलस्त्यप्रोक्त वामनचरित वामनपुराणोक्त मुख्य वामनचरितमिति, तदपेक्षया च उत्तरभारतीयदेवनागरीहस्तलेखेषु तथा तदनुवर्त्तिषु पूर्वनिर्दिष्टेषु मुद्रितसस्करणेषु वर्त्तमान सरोमाहात्म्यान्तर्गत वामनचरित च गौणमिति वक्तु शक्यते ।

(ख) सर्वेषु त्रिषु वङ्गलिपिहस्तलेखेषु तथा ते, वर्जितेषु सर्वेषु दाक्षिणात्यहस्तलेखेषु च सम्पूर्ण एव सूतर्षिसवादात्मक सरोमाहात्म्यं (स.मा) नाम सप्तविंशत्यध्यायात्मक (वेंकटे० २२ ४७ ४९ ५६) ग्रन्थो न वर्त्तते । दक्षिणभारतीयतञ्जौर नगरस्थस्य सरस्वतीमहलाख्यग्रन्थागारस्य पञ्चसु देवनागरीहस्तलेखेष्वपि (D 10419—D 10423) इमे सरोमाहात्म्य नामका अध्याया न वर्त्तन्ते इति तत प्राप्तात् तेषा विवरणाद् अवगम्यते, तेषु तु वामनपुराणस्य ६५, ६७ वा अध्याया एव वर्त्तन्ते ।

सूतर्षिसवादात्मके अस्मिन् सरोमाहात्म्यग्रन्थे निम्नलिखिता विषया वर्त्तन्ते—

(१) वेंकटे० २२ ४७ ६० ( अस्माक स मा १) अत्र स्थाणुतीर्थस्य माहात्म्य वर्णन च वर्त्तते ।

(२) वेंकटे० अ० २३-३१ (स मा २-१०)– प्रथममथवा गौण वामनचरितं अत्र वर्तते । इद वामनचरित मत्स्यपुराणोक्तेन ( अ० २४४ २४६ ) वामनचरितेन हरिवंशोक्तेन (भविष्यपर्व, अ० ६५ ७२) वामनचरितेन च सह बाहुल्येन साम्यमावहति । अत इदमनुमातु शक्यते यत् त एव वामनचरिते अस्य वामनपुराणवामनचरितस्याधारभूते आस्ताम् ।

(३) वेंकटे० अ० ३२ ४२ (स मा ११-२१)– अत्र कुरुक्षेत्रवर्त्तिना तीर्थाना वर्णन माहात्म्य च विद्यते । इद कुरुक्षेत्रतीर्थानां वर्णन माहात्म्य च महाभारतग्रन्थस्य पाठसमीक्षात्मकसस्करणस्य आरण्यकपर्वणि (८१ प्रभृतिषु अध्यायेषु ) शल्यपर्वणि (३७-४२ अध्यायेषु) च वर्त्तमानेन कुरुक्षेत्रतीर्थाना वर्णनेन माहात्म्येन च सह नितान्तं साम्यमावहति ।

वामनपुराणे इद कुरुक्षेत्रतीर्थमाहात्म्य सूतेन ऋषिभ्य कथितम्, महाभारते तु पुन पुलस्त्येन भीष्माय कथितम्, यत्र च पुलस्त्येन भीष्म 'नरव्याघ्र' ( ८१ २३a), 'राजन्' (८१ २१०), 'धर्मज्ञ' (८१ ४६a) इत्यादिरूपेण सबोधित, भीष्माय च एतानि सबोधनानि तत्र सगतानि सन्ति । परन्तु वामनपुराणस्य बहुतमेषु कदाचिच्च सर्वेषु हस्तलेखेषु समान श्लोकेषु 'नरव्याघ्र' ( वेंकटे० सस्क० ३५ २० ), 'राजन्' ( वेंकटे० सस्क० ३४ ४२० ), तथा 'धर्मज्ञ' (वेंकटे० संस्क० ३५ ४२a ) इत्यादीनि सबोधनानि ऋषिभ्य सूत प्रयुक्तानि विद्यन्ते । अनेन प्रतीयते यदेते अध्याया (वेंकटे० ३२–४२ ) महाभारतमाधारीकृत्य निर्मिता । अस्यांशस्य केचिच्छ्लोका नारदपुराणोक्तकुरुक्षेत्रमाहात्म्यस्य ( उत्तरार्द्धे अ० ६४, ६५ ) श्लोकै समाना विद्यन्ते । अत, वामन पुराणस्य अयमश महाभारतनारदपुराणाभ्या संगृह्य निर्मित स्यात्। मूलवामनपुराणे च पश्चात् सयोजित इत्यनुमान सुकरम्।

(४) वेंकटे० अ० ४३-४९ (स मा २२-२८)–एतेषु अध्यायेषु प्रायेण स्थाणुतीर्थमभित प्रतिष्ठिताना शिवलिङ्गाना माहात्म्य कथितम्। एतच्च माहात्म्यमत्र सनत्कुमारेण मार्कण्डेयाय मुनये कथित वर्तते । एते अध्याया महाभारते अन्येषु पुराणेषु न प्राप्ता अस्माभि । परन्तु पृथूदकतीर्थमाहात्म्यविषये महाभारते उक्तम्—"गीत सनत्कुमारेण व्यासेन च महात्मना" ( ३ ८१ १२७ ), किमनेन इद संभावयितु शक्य यद् वामनपुराणस्य एते अध्याया ( वेंकटे० ४२-४९) पूर्वं स्कन्दपुराणस्य इदानीमनुपलभ्यमानाया सनत्कुमारसंहिताया विद्यन्ते स्म ?

पुन सर्वे एव एते सरोमाहात्म्याध्याया (वेंकटे २३-४९) वामनपुराणे देवेभ्यो हरिणा प्रोक्तस्य कुरुक्षेत्रमाहात्म्यस्य पृथूदकतीर्थमाहात्म्यस्य च अन्तरङ्गभूता न विद्यन्ते, प्रत्युत एतैरध्यायै प्रधान कथासूत्रं विच्छिन्नं विद्यते, यच्च वेंकटे० २२ अध्यायानन्तरं ५० अध्याये पुनरारब्धम् ।

काश्मीरहस्तलेखा उत्तरभारतीयदेवनागरीहस्तलेखा इव

वेंकटे० २२.४६ अनन्तर सूतर्षिसंवादमारभन्ते आरम्भे च देवनागरीहस्तलेखेष्विव काश्मीरहस्तलेखेष्वपि ऋषय सूतं वामनोत्पत्तिविषयक प्रश्नं पृच्छन्ति ('उत्पत्तिं वामनस्य च' वेंकटे० २२.४८८ )। परन्तु काश्मीरहस्तलेखेषु ऋषीणा प्रश्नस्य समाधानरूपेण न कुत्रचिदपि सूतेन वामनोत्पत्तिविषयकमाख्यान कथितम्, देवनागरीहस्तलेखेषु च तद् वर्त्तते। अत काश्मीरहस्तलेखेषु अस्य सरोमाहात्म्यान्तर्वर्त्तिनो वामनचरितस्य प्रधान वामनचरितमपेक्ष्य बुद्धिपूर्वकोऽयं लोप कृत इति प्रतिभाति, अन्यथा कथं तत्र वामनोत्पत्तिविषयके प्रश्ने वर्त्तमाने तत्समाधानग्रन्थस्य लोपो विद्येत।

तस्मात् वामनपुराणस्य ग्रन्थपरिमाणविषयिका स्थितिस्त्विय वर्णितुं शक्या—

अस्माभि उत्तरभारतीयदेवनागरीहस्तलेखाननुसृत्य सर्वे एव सरोमाहात्म्याध्याया वामनपुराणे इदानीं स्वीकार्या, अथवा वङ्गहस्तलेखानां दाक्षिणात्यहस्तलेखाना च साक्ष्यमङ्गीकृत्य सर्वे एवैते सरोमाहात्म्याध्याया तिरस्कार्या, इति विचारणीयम्। सरोमाहात्म्यान्तर्गत केवल वामनचरितमात्र तु तिरस्कर्तुं न शक्यम् यतस्तद्विषये काश्मीरहस्तलेखप्रामाण्य संदिग्ध वर्तते। पुनश्च, अस्माभि वामनपुराणस्य केचिद् ग्रन्थलिपिहस्तलेखा मलयालम लिपिहस्तलेखाश्च नाद्यापि संप्राप्ता। अत इदानीं दाक्षिणात्यपाठसरणौ वामनपुराणस्य कियन्मात्र ग्रन्थपरिमाणं वस्तुत भवितु शक्यमिति निश्चेतु न शक्यते। अन्यच्च, कृत्यकल्पतरुप्रभृतिषु केषुचित् पुरातनेषु धर्मशास्त्रनिबन्धग्रन्थेषु सरोमाहात्म्याध्यायाना श्लोका उद्धृता प्राप्यन्ते। दाक्षिणात्यो वैद्यनाथदीक्षितोऽपि स्वरचिते स्मृतिमुक्ताफलनामके निबन्धे आह्निकप्रकरणे सरोमाहात्म्यान्तर्गतस्य वेंकटे० ३४ अध्यायस्य कांश्चित् श्लोकान् समुद्धरति।

अपि च नारदपुराणेऽपि वामनपुराणग्रन्थस्य सूतर्षिसंवादात्मकत्व निर्दिष्टम्, तद् यथा—

'इत्येतद् वामनं नाम पुराण सुविचित्रकम्।
पुलस्त्येन समाख्यातं नारदाय महात्मना॥
ततो नारदत प्राप्तं व्यासेन सुमहात्मना।
व्यासात्तु लब्धवान्वत्स तच्छिष्यो रोमहर्षण॥
स चाख्यास्यति विप्रेभ्यो नैमिषेयेभ्य एव च।
एव परम्पराप्राप्त पुराण वामन शुभम्॥
(नारद-पु १ १०५ १७१६)

अत, इदमनुमीयते यत् सूतर्षिसवादात्मकमपि वामनपुराण कदाचिद् वर्त्तते स्म, सूतर्षिसंवादात्मका पूर्वनिर्दिष्टा सरोमाहात्म्याध्यायाश्च तस्यैव सूतर्षिसंवादात्मकस्य वामनपुराणस्यान्तर्वर्त्तिनो बभूवुरित्यपि संभाव्यते, पुलस्त्यनारदसंवादात्मकस्य वामनपुराणस्य कालान्तरे केचिदंशा प्रणष्टा आसन् इत्यपि अनुमीयते, यत निबन्धग्रन्थेषु उद्धृता वामनपुराणस्य बहव श्लोका इदानीं पुलस्त्यनारदसंवादात्मके वामनपुराणे न प्राप्यन्ते। सूतर्षिसंवादात्मकस्य वामनपुराणस्य सरोमाहात्म्याध्याया पृथक्त्वेन सरक्षिता कालान्तरे च पुलस्त्यनारदसंवादात्मके वामनपुराणे समग्रथिता इत्यपि च संभावना वर्त्तते।

अस्या स्थितौ वामनपुराणग्रन्थात् सरोमाहात्म्याध्यायाना नितान्त निराकरण न युक्तम् प्रतिभाति। नापि तेषा वामनपुराणस्य मौलिकग्रन्थरूपेण स्वीकरणमुचित प्रतीयते, वङ्गपाठसरणौ दाक्षिणात्यपाठसरणौ च तेषामनुपलभ्यमानत्वात्। अत, अस्माभि सूतर्षिसंवादात्मकोऽखिल सरोमाहात्म्यग्रन्थो मध्यमार्गमाश्रित्य वामनपुराणग्रन्थमध्ये एव यथोचित यथास्थानं च पृथक्त्वेन धृत, येन देवनागरीहस्तलेखेषु प्राप्ता अध्यायानामानुपूर्वी न विप्लुता भवेत्।

पुराणवाङ्मयं तु हिन्दुधर्मस्य विश्वकोश इव विलसति, अत एतद्वाङ्मय देशकालानुसारेण पुराणकारै पुराणसंग्राहकै पुराणवाचकै सूतैश्च संशोधितं परिवर्तितं परिवर्धितं च, येनास्य धर्मकोशस्य युगानुसारिणीभिर्विचारधाराभि सह सामञ्जस्यमक्षुण्ण तिष्ठेत्। एते महानुभावा परम्परागतं पुराणज्ञान पुराणश्रुतिं च यत्नत संरक्षन्तोऽपि काले काले प्रचलिताभि नूतनविचारधाराभिस्तज्ज्ञानं तच्छ्रुतिं चोपबृंहितवन्त, न तु ते ता नूतनविचारधारास्तिरस्कृतवन्त, येन पुराणाना पुराणत्व ('पुरा यत्र अनिति' 'पुरा यत्र नव भवति' इत्यादि स्वरूप) संरक्षित वर्त्तते। अनेनोपबृंहणहेतुना पुराणवाङ्मयस्य ग्रन्थप्रमाणं प्रवृद्धिमगात् चतुर्लक्ष यावत्।

पुराणवाङ्मयस्येय प्रवृद्धिरुपबृंहण वा सर्वथा नोपेक्षार्हा

मस्माकम्। अत सुपुष्टप्रमाणाभावे पुराणेषु प्रचलिताशाना सर्वथा निराकरणं न युक्त स्यात्। तथापि समुपलब्धहस्तलेखाना प्रामाण्यमपेक्ष्य पुराणेषु वर्त्तमान कश्चिद् ग्रन्थो यदि मौलिकत्वेन सदिग्ध प्रतिभाति तदा तं सदिग्ध ग्रन्थमपि पुराणसस्करणे यथावद् अन्तर्भाव्य मौलिकग्रन्थात् तस्य पृथक्त्व सूचनीयमिति विचारपद्धतिमनुसृत्यैव अष्टाविंशत्यध्यायात्मक सरोमाहात्म्यनामको(स मा ) ग्रन्थो वामनपुराणस्य प्रधानग्रन्थमध्ये एव पृथक्त्वेन सनिवेशितोऽस्माभिर्न तु ग्रन्थान्ते परिशिष्टरूपेण धृत इति विभावयन्तु सुधिय ।

वामनपुराणस्य वास्तविक ग्रन्थपरिमाण दशसहस्र श्लोकात्मक कथ्यते ('दशसाहस्रसख्यकम्' नार० १ १०५ १) बृहद्वामनपुराणाख्यया चतु सहितात्मक उत्तरभागोऽपि वामन पुराणस्यासीत् पुरेति नारदपुराणादेवावगम्यते। स च भाग चतु सहस्रश्लोकात्मक आसीद् यथा च —

> शृण्वतोऽस्योत्तर भाग बृहद्वामनसञ्ज्ञकम् ।
> माहेश्वरी भागवती सौरी गाणेश्वरी तथा ॥
> चतस्र सहिताश्चात्र पृथक् साहस्रसख्यया ॥
>
> (नार० पु० १ १०५ १३ १४)

परन्तु बृहद्वामनसज्ञकोऽयमुत्तरभागो नाद्योपलभ्यते, यद्यपि तस्य श्लोका यत्र तत्र निबन्धेषु उद्धृता प्राप्यन्ते। अवशिष्ट पूर्वभाग एव वर्त्तमानवामनपुराणरूपेणोपलभ्यते। अतएव उपलब्धवामनपुराणस्य ग्रन्थपरिमाण षट्सहस्रश्लोकात्मकमापतति। वामनपुराणस्य एतादृशा अपि बहव श्लोका निबन्धेषु समुद्धृता वर्त्तन्ते, ये नेदानीं वामनपुराणस्य मुद्रितेषु हस्तलिखितेषु वा पुस्तकेषु प्राप्यन्ते। एतादृशा श्लोका अस्माभि पृथक् सगृहीता, परिशिष्टे च प्रदत्ता सन्ति, यत, एते श्लोका हस्तलेखसाक्ष्याभावाद् वामनपुराणग्रन्थमध्ये सनिवेशं नार्हन्ति।

(ग) वामनपुराणस्य द्वयोर्हस्तलेखयो ( दे 2 ते 1 ) 'तथा गवर्नमेण्ट ओरियन्टल लाइब्रेरी मैसूर' स्थानात् प्राप्ते देवनागरीहस्तलेखे ( C-433 ) च वेंकटे ८४.१० ८९ ६ अंशात्मको ग्रन्थो न विद्यते।

संक्षेपतो हस्तलेखानामाधारेण वर्त्तमानवामनपुराणस्य निम्नलिखितो ग्रन्थपरिमाणभेदोऽवाप्यते —

१ उत्तरभारतीयदेवनागरीहस्तलेखेषु ग्रन्थपरिमाण वेंकट मुद्रितग्रन्थपरिमाणतुल्य वर्त्तते।

२ वेंकटे अ ८४ १० ८९ ६ ग्रन्थो दे2 ते1 हस्तलेखयोर्न विद्यते।

३ वेंकटे २३ ३१ अध्याया (सरोमाहात्म्यान्तर्गत वामनचरितम्) काश्मीरहस्तलेखेषु न विद्यन्ते।

४ वेंकटे अ २२ ४७ ४९ ५१ ग्र थ (सरोमाहात्म्यम्) बङ्गहस्तलेखेषु दाक्षिणात्यहस्तलेखेषु ( ते1 वर्जयित्वा ) न विद्यते।

वामनपुराणस्य प्रस्तुते पाठसमीक्षात्मकसस्करणे (पा स स ) अध्यायाना विन्यास इत्थ वर्त्तते—

१ वेंकटे अ १४, द्वयोरध्याययोर्विभक्त (पा स स – अ. १४, १५)

२ वेंकटे अ ८३, ८४ एकत्र समेलित (पा स स – अ ५७)

३ सरोमाहात्म्य (स मा ) नाम ग्रन्थो वामनपुराणस्य मुख्यग्रन्थात् पृथक् कृत, परन्तु एष मुख्यग्रन्थेन सहैव तस्मिन्नेव स्थाने सनिवेशित, यत्र एष उत्तरभारतीयदेवनागरीहस्तलेखेषु प्राप्यते, केवलमस्य ग्र थस्य अध्यायसख्या (१ २८) मुख्यग्रन्थस्य अध्यायसख्याया पृथक् दत्ता। वेंकटे २२ अध्यायस्य अन्त्या १४ श्लोका (श्लोक ४७ ६०) स मा अ १ रूपेणात्र पा स संस्करणे सन्निविष्टा वर्त्तन्ते।

४ वेंकटे अ ९५ द्वयोरध्याययोर्विभक्त (पा स स - अ ६८, ६९) वेंकटे ९५ १ ८४ = पा स स अ ६८ अत्र त्रिविक्रमचरित समाप्यते। ततोऽवशिष्टा श्लोका = पा स स अ ६९, अत्र ६९ अध्याये फलश्रुतिर्वर्त्तते।

## २ पाठसमीक्षात्मकसस्करण वेंकटेश्वर-सस्करणयोरध्यायसवाद

| पा स सं. | वेंकटे स |
|---|---|
| १—१४ | = १ १४ ५७ |
| १५ | = १४ ५८ १४ १२२ |
| १६—२२ | = १५ २१ |
| २३ | = २२ १ ४६ |
| स मा १ | = २२.४७ ६० |

| | |
|---|---|
| स मा २ २८ | = २३ ४६ |
| २४ | = ५० |
| २५ ६८ | = ५१ ६५ ८४ |
| ६६ | = ९५ ८५ त |

### ३ पाठसमीक्षात्मकग्रन्थे गद्यांशा

| अध्याय सख्या | गद्यांशा |
|---|---|
| स मा ५ | ५४१ अक्षराणि |
| स मा २३ | ४६४ ,, |
| अ ३९ | ४०० ,, |
| अ ४३ | ५९ ,, |
| अ ४४ | १६३ अक्षराणि |
| अ ६६ | ११०४ ,, |
| योग | = २७३१ अक्षराणि ( = ८६ श्लोका ) |

### ४. पाठसमीक्षात्मकग्रन्थे श्लोकसख्या

| | |
|---|---|
| पाठसमीक्षात्मको ग्रन्थ (अ १ ६९) | = ४५६३ श्लोका |
| गद्यांशा | = ८६ श्लोका |
| सरोमाहात्म्यम् (स मा १ २८) | = १२२८ श्लोका |
| योग | = ५८७७ श्लोका |

## वामनपुराणपाठनिर्धारणाय स्वीकृता सिद्धान्ता.

[ अस्मिन् पाठसमीक्षात्मकसस्करणे वामनपुराणस्य यथासभव प्राचीनतमपाठनिर्धारणाय पाठसमीक्षाविज्ञानमाश्रित्य ये सिद्धान्ता अत्रावधारितास्ते इहाग्र प्रतीयन्ते । एषा निदर्शनानि तु आङ्गलभाषाभूमिकायामेव द्रष्टव्यानि ]

१ हस्तलेखानाम् अधिकतमसंख्याया साक्ष्य पाठनिर्धारणे प्राय स्वीकृतम् ।

२ हस्तलेखसख्यापेक्षया पूर्वनिर्दिष्टाना हस्तलेखवर्गाणाम् अधिकतमसख्याया साक्ष्य प्राथम्येन स्वीकृतम् ।

३ तत्रापि दूरतरदेशव्यवहितयोर्हस्तलेखवर्गयो साक्ष्य प्राथम्येन स्वीकृतम्, यथा काश्मीरहस्तलेखदाक्षिणात्य हस्तलेखवर्गयो प्रामाण्यमुत्तरभारतीयदेवनागरीहस्तलेख वङ्गहस्तलेखवर्गयो प्रामाण्यापेक्षया समीचीनतरत्वेन हेतुना स्वीकृतम् ।

४ कस्यचित् श्लोकस्य श्लोकसमूहस्य वा पाठनिर्धारणे यथासभव विभिन्नहस्तलेखाना हस्तलेखवर्गाणा च पाठानां साङ्कर्यं विवर्जितम् ।

५ यदि हस्तलेखाना हस्तलेखवर्गाणा वा पाठाना परस्पर विभिन्नता वर्तते तर्हि स एव पाठो गृहीतो योऽर्थ-समत्या साधु प्रतीयते, यथा ३१ अध्यायस्य ९१b श्लोके वङ्गवर्गस्य पाठ एव सुसगत, अत स एव तत्र गृहीत । अन्यत्र प्रायेण काश्मीरवर्गस्य पाठ एव सुसगतो वर्तते, तस्मात् स एव पाठो गृहीत ।

६ कदाचिदर्थदृष्ट्या व्याकरणदृष्ट्या च साधु पाठ कुत्र चिदेव हस्तलेखे सुरक्षित माप्यते । अस्यां स्थितौ बहूना हस्तलेखाना पाठाननादृत्य स एव पाठ समीचीनत्वेन गृहीत ।

७ यदि केषाञ्चिद्धस्तलेखाना पाठ पूर्वापरसदर्भेण सह सवदति ततो बहुतरहस्तलेखपाठापेक्षया स एव पाठ समीचीनत्वेन स्वीकृत ।

८ यदि कस्यचिद् हस्तलेखस्य हस्तलेखसमूहस्य वा पाठो हस्तलेखसाक्ष्यापेक्षया केनचिद् बाह्यसाक्ष्येण समर्थित-तरो भवति तदा स एव पाठ स्वीकृत ।

९ कदाचिद् साधुर्मूलपाठोऽपि वक्तृपरम्पराया लेखनपरम्पराया वा भ्रष्टो जायते, कालान्तरे च स भ्रष्ट पाठ अज्ञानात् शोधित सन् भ्रष्टतर सजायते, अथवा साधुपाठ एव काठिन्याद्धेतो कदाचित् सरली क्रियते, सरलीकरणे च स शुद्ध पाठोऽपि कदाचिदशुद्धो जायते । अस्या स्थितौ साधुर्मूलपाठ पूर्वापरग्रन्थसाहाय्येन केनचिदुपलभ्यमानबाह्यसाक्ष्यसाहाय्येन अर्थादिसगत्या वा निश्चीयते ।

१० केषुचिद्धस्तलेखेषु आगताना प्रचलितपाठानामपेक्षया अन्येषु हस्तलेखेषु तत्स्थले आगतानामप्रचलितपाठानां प्राचीनतरत्वाचेषामेव ग्रहण कृतम् ।

११ पुराणेषु महाभारतादिषु च अपाणिनीया प्रयोगा बहुशो

वर्त्तन्ते। एते प्रयोगास्तत्र कदाचित् प्राचीनत्वेन हेतुना, कदाचित्प्राकृतभाषाप्रभावहेतुना आगता, परन्तु *प्रायेण बहवोऽपाणिनीयप्रयोगाश्छन्दोऽनुरोधेन* पुराणादिषु प्रयुक्ता सन्ति, यत व्याकरण-शुद्ध्यपेक्षया छन्द शुद्धिरेव पुराणादिषु प्रायेण सरक्षिता दृश्यते, युक्त चैतत्, यत सूतादिभि पुराणवाचकै छन्द शुद्धिरेव प्रायेणापक्षिता आसीत्। परन्तु पुराणाना लेखनकाले एतादृशा अपाणिनीय प्रयोगा लेखकै पुराणपाठकैर्वा बहुषु हस्तलेखेषु पाणिनीयव्याकरणदृष्ट्या सशोधिता आसन्। कदाचिच्च तेऽपाणिनीया प्रयोगा स्वैरसंशोधनहेतुना अशुद्ध तरा अपि सजाता। तु च हि इत्यादिनिपाताना प्रयोगेण द्वयो स्वरयोर्मध्या विवृत्तिस्तु हस्तलेखेषु प्रायेणापसारिता वर्त्तते, द्वि सधिरपि बहुधा कयाचिद् युक्त्या सशोधिता दृश्यते। अत केषुचिद् हस्तलेखेषु उपलभ्यमाना अपाणिनीयप्रयोगा तत्रैव स्थले अन्यहस्तलेखेषु प्राप्ताना सशोधितपाणिनीय-प्रयोगाणामपेक्षया प्राचीनतरा इति तु नि सन्देह वक्तु शक्यते। पुराणपाठनिश्चित्यै च पाणिनीयप्रयोगाणा मपेक्षया अपाणिनीयप्रयोगा एव मौलिकत्त्वात् ग्राह्या वर्त्तन्ते। एते अपाणिनीयप्रयोगाश्च—(क) स्वरविवृत्ति (ख) द्वि संधि, (ग) लिङ्गव्यत्यय, (घ) वचन-व्यत्यय, (ङ) विभक्तिव्यत्यय, (च) कालव्यत्यय, (छ) वैदिकप्रयोगा—इत्यादिरूपेण पुराणेषु प्राप्यन्ते। वामनपुराणेऽपि एतादृशा बहव प्रयोगास्तत्र तत्र हस्त-लेखेषु विद्यन्ते। अत पाठनिर्धारणे पाणिनीयप्रयोगा-पेक्षया अपाणिनीयप्रयोगा एव प्रायेण प्राचीनतरत्वात् मौलिकत्वाच्च गृहीता।

१२. परन्तु कदाचित केषुचिद्धस्तलेखेषु लेखकानां प्रमादात् अज्ञानाद्वा मौलिका पाणिनीया साधुप्रयोगा अपि अपाणिनीया कृता विद्यन्ते। एतादृशे स्थले पाणिनीया साधुप्रयोगा एव गृहीता।

१३. 'उवाच' आदिषु सङ्केतवाक्येषु विषये हस्तलेखेषु नैकरूपता विद्यते। केषुचित् 'पुलस्त्य उवाच', केषुचित् 'पुलस्त्य उ', केषुचिच्च 'पुलस्त्य' इत्येव वर्त्तते। एकस्मिन्नेव हस्तलेखेऽपि कदाचिदस्मिन् विषये नैकरूपता विद्यते। प्रस्तुतसंस्करणे तु सर्वत्र 'पुलस्त्य उवाच' 'देवा ऊचु' इत्यादि पाठ एव स्वीकृत।

१४. हस्तलेखेषु क्लिष्ट पाठ प्रायेण लेखकै कालान्तरे सरलपर्यायादिना सरलीक्रियते। अत सरलपाठापेक्षया क्लिष्टपाठ एव प्राचीनतरत्वात् स्वीकृत।

१५ मानवज्ञानं कालान्तरे क्रमशो विस्तरमापद्यते। अतो *विस्तृतज्ञानविषयकस्य ग्रन्थस्यापेक्षया अविस्तृतज्ञान-*विषयकस्य अल्पतरविस्तृतज्ञानविषयकस्य वा ग्रन्थस्य तत प्राचीनतरत्वमनुमातु शक्यते। अतएव येषु हस्तलेखेषु अविस्तृतज्ञानसूचको अल्पतरविस्तृतज्ञानसूचको वा पाठ उपलभ्यते, स पाठ, अन्यहस्तलेखेषु तत्स्थाने वर्त्तमानात् विस्तृतज्ञानसूचकात् पाठात् प्राचीनतर इति वक्तु शक्यते, अतो हेतो पूर्वोक्त *प्राचीनतर पाठ एव एतादृशे स्थले स्वीकृत।*

१६. पाठनिर्धारणे प्रक्रमभङ्गस्य यथासम्भव परिहार कृत।

१७. कदाचित् कश्चिद् ग्रन्थ केषुचिदेव हस्तलेखेषु अविद्यमानो भवति, शेषेषु सर्वेषु स ग्रन्थोऽवाप्यते, परन्तु यदि पूर्वापरसंदर्भेण तस्य ग्रन्थस्य अविद्यमानतैव समर्थ्यते, तदा स ग्रन्थो बहुषु हस्तलेखेषु विद्यमानोऽपि सन् न गृहीत।

१८ कदाचित् बहुतरेषु हस्तलेखेषु *कश्चन नष्ट* पाठ, कस्यचिदेकस्य वर्गस्य (विशेषत काश्मीरवर्गस्य) हस्तलेखेष्वेवोपलभ्यते। एतादृशे स्थले अस्य वर्गस्य हस्तलेखेषु *विद्यमान स पाठो गृहीत, यत* पूर्वापर-ग्रन्थेन तस्य विद्यमानता समर्थ्यते।

१९ कदाचित् कश्चिद् ग्रन्थो हस्तलेखेषु स्थानव्यत्ययाद् अयुक्तस्थाने लिखितो वर्त्तते, तस्यां स्थितौ 'पाठक्रमा-दर्थक्रमो बलीयान्' (*महाभा वनपर्व* ८३ २०३, *नीलकण्ठटीका*) इति वचनानुसारेण स पाठ अर्थसदर्भयो सङ्गतिमनुसृत्य युक्तस्थाने संनिविश्यते।

२०. कदाचित् कश्चित पाठ सर्वेषु हस्तलेखेषु उपलभ्यमानोऽपि सन्नर्थसङ्गतिं बाह्यसाक्ष्यं च व्यभिचरति, अस्या स्थितौ तस्य असंगतपाठस्य अर्थसङ्गतिमनुसृत्य सशोधन कृतम् । सशोधितपाठस्य च सशोधनसूचनार्थं तस्याध रेखा ( – ) प्रदत्ता । एतादृशा संशोधितपाठाश्चात्र विरला एव सन्ति ।

२१ केचित् पाठा हस्तलेखेषु सदिग्धा अनिश्चिता वा वर्त्तन्ते । ते च त्रिविधा सन्ति, यथा—

(क) यदि द्वयो पाठयोर्विषये हस्तलेखाना साक्ष्य प्रायेण तुल्य वर्त्तते, निगिगमकसाक्ष्याभावोऽपि च तत्र वर्त्तते, तदा तयो पाठयो कश्चिदपि एकतर पाठ ग्रहीतु शक्यते ,

(ख) यदि कश्चित् पाठो बहुतरेषु हस्तलेखेषु वर्त्तमानोऽपि सन् युक्तमर्थं न ददाति, तथा तस्य पाठस्य विरुद्ध किञ्चिदन्त साक्ष्यं, बाह्यसाक्ष्यं वापि नोपलभ्यते, तदा स पाठ अर्थदृष्ट्या सदिग्धोऽपि सन् गृहीत ।

(ग) यदि कश्चित् पाठ कस्मिंश्चिदेकस्मिन्नेव हस्तलेखे केषुचिदेव हस्तलेखेषु वा विद्यते, अर्थदृष्ट्या च स पाठ सगतोऽपि प्रतीयते, परन्तु एतादृश पाठो मौलिक सशोधितो वेति न निश्चीयते, तदा स पाठ सदिग्धोऽपि सन् अर्थदृष्ट्या गृहीत । परन्तु यदि स लेखकै पाठकैर्वा संशोधित पाठ इति निश्चित भवति, तदा स पाठ अर्थदृष्ट्या सगतोऽपि सन् सशोधितपाठत्वाचिरस्कृत । अस्मिन् सस्करणे एतादृशाना सदिग्धाना पाठानामधो वक्ररेखा (~) प्रदत्ता ।

एव वामनपुराणपाठनिर्धारणे ये सिद्धान्ता प्रस्तुत-सस्करणस्य सपादनाय स्थिरीकृतास्तेऽत्र सक्षेपेण वर्णिता । परन्तु अस्थिरपाठवता पुराणसदृशानां प्राचीनग्रन्थाना पाठ निर्धारणाय कश्चिदपि राजपथो न वर्तते । हस्तलेखाना परस्परं साक्ष्यविरोधे सति सपादकाय प्राय स्वविवेकादृते नान्य पन्था विद्यते । पुराणाना कश्चिदादर्शं प्राचीनतमो मौलिको वा पाठोऽप्यनुसधातु शक्यते इत्यत्रापि सदेहो वर्त्तते, सपादकदृष्ट्या एतादृशस्य पाठस्य संभावनायामपि स पाठ सर्वेषामेव विदुषा सन्तोषमावहेदित्यपि वक्तु न शक्यते लोकाना विभिन्नरुचित्वात् । वामनपुराणस्य प्रस्तुत पाठसमीक्षात्मक सस्करण तु अस्यां दिशि केवल विनम्रप्रयास एव ।

इद सस्करणमनेकै परिशिष्टै कतिपयामि सूचिभिश्च सयोजित, येनेद पुराणानामध्ययनेऽनुसधानकार्ये च किञ्चित् साहाय्यं प्रयच्छेत् । परन्तु सस्करणस्यास्य प्रामाणिकत्वे उपयोगित्वे च सुधिय एव प्रमाणम् ।

## कृतज्ञताप्रकाशनम्

अस्य सस्करणस्य निर्माणे यैर्विद्वद्भि सह विमर्श कृत , पुराणविभागस्थैर्ये सहकारिभिश्च सहयोग प्रदत्त, तेभ्य सर्वेभ्य एव कृतज्ञता प्रकाशयाम । वामनपुराणस्य ग्रन्थपरिमाणादिविषये,समीक्षोपकरण (Critical Apparatus) विषये च हस्तलेखाना सम्बन्धे च मद्रासविश्वविद्यालयस्य सस्कृतविभागाध्यक्षैरस्मत्पुराणसमितिसदस्यैश्च डा वे० राघवन्महोदयै , भण्डारकरप्राच्यशोधसस्थानस्थैर्महाभारतसम्पादकै डा पी० एल० वैद्यमहोदयै , डा आर० एन० दाण्डेकर-महोदयैश्च या सम्मतय प्रदत्ता , तदर्थं तेऽतीव धन्यवादार्हा सन्ति । समीक्षोपकरणनिर्माणकार्ये मुफसशोधनादिकार्ये परिशिष्टादिनिर्माणकार्ये च अस्मत्सहकारिणा डा गगासागरराय महोदयेन अन्यैश्च सहकारिभिर्यच्चिरन्तरमक्लिष्ट च साहाय्यं कृत तदर्थं तेभ्यो हार्दिकीं कृतज्ञता प्रकाशयाम ।

काशिराजन्यासस्याध्यक्षा काशिनरेशमहाराजा डा. विभूतिनारायणसिंहमहोदया वामनपुराणस्य पाठसमीक्षात्मक सस्करणनिर्माणकार्यं सर्वदैव पर्यवेक्षितवन्त , काले काले च स्वसम्मतिप्रदानेन मार्गप्रदर्शनेन च अस्मिन् कार्ये महत् साहाय्य प्रदत्तवन्त , अस्मत्पुराणसमितिसदस्या केन्द्रीयशिक्षा-मन्त्रालयस्था श्री डा रामकरणशर्ममहोदया वामनपुराणस्य पाठसमीक्षात्मकसंस्करणनिर्माणयोजना समर्थितवन्त तद्विषये च उपयोगिन विमर्शं कृतवन्त, वाराणसेया पण्डितराज श्री

राजेश्वरशास्त्रिणः, श्री पं. हरिरामशुक्लमहोदयाः, श्री पं. विश्वनाथशास्त्रिदातारमहोदया, वाराणसेयसंस्कृतविश्वविद्यालयस्य भू.पू. उपकुलपतिमहोदयाः श्री डा. सुरेन्द्रनाथशास्त्रिणश्च पाठ-समीक्षात्मकसंस्करणस्यास्य ग्रन्थपरिमाणादिविषये उपयोगिनः परामर्शान् प्रदत्तवन्तः; काशिराजन्यासस्य महामन्त्रिणः श्रीरमेशचन्द्रदेवमहोदयाः परिशिष्टादिविषये काले काले स्वसम्मतिप्रदानेन बहुविधसाहाय्यापादनेन च अस्मानुपकृत-वन्तः। एतदर्थम् एते महानुभावाः परमधन्यवादमर्हन्ति।

एवम् अनेकैः सरस्वत्युपासकैरस्मिन् परमपावने महति सारस्वतयज्ञे विविधा आहुतयः प्रदत्ताः। अनेन सारस्वतयज्ञेन भगवान् पुराणपुरुषः संप्रीयतामिति प्रार्थयामहे।

काशिराजन्यासीयः
पुराणविभागः — आनन्दस्वरूपगुप्तः
८ श्रावण, शक १८८९

# ŚLOKA CONCORDANCE OF THE VĀMANA-PURĀṆA EDITIONS

## ( वामनपुराणस्य मुद्रितसंस्करणानाम् श्लोक-संवादः )

### A

CONCORDANCE OF THE NUMBER OF ŚLOKAS OF THE ADHYĀYAS OF THE FOUR PRINTED EDITIONS OF THE VULGATE TEXT OF THE VAMANA PURAṆA

( वामनपुराणस्य प्रचलितपाठस्य चतुर्णां मुद्रितसंस्करणानां प्रत्यध्यायं श्लोकसंख्या-संवाद तुलना )
( For the description of these Editions see Introduction एषां चतुर्णां संकरणानां विवरणम् आङ्गलभूमिकायां वर्त्तते )

| | I | II | III | IV |
|---|---|---|---|---|
| Adhyāyas | Jagad dhitecchu-Press Ed. | Bangali Ed. (M. C. Pal) | Bangali Ed (Baṅgavāsī Press) | Veṅk. Ed. |
| अध्याया | जगद्धितेच्छु प्रेस, पूना, सस्करणम्, देवनागरी | वङ्गाक्षरसंस्करणम् (महेशचन्द्रपालसम्पादितम्) | वङ्गाक्षरसरकरणम् (पञ्चाननतर्करत्नसंपादितम्, वंगवासी प्रेस) | वङ्कटेश्वरप्रेस-संस्करणम् |
| | श्लो० सं० (No of Ślokas) | श्लो० सं० (No. of Ślokas) | श्लो० सं० (No of Ślokas) | श्लो० सं० (No. of Ślokas) |
| १* | 31 | 30 | 31 | 31 |
| २ | 56 | 56 | 56 | 56 |
| ३ | 51 | 51 | 51 | 51 |
| ४* | 55 | 55 | 57 | 57 |
| ५ | 61 | 61 | 61 | 61 |
| ६ | 107 | 107 | 107 | 107 |
| ७ | 65 | 65 | 65 | 65 |
| ८ | 72 | 72 | 72 | 72 |
| ९* | 53 | 52 | 52 | 52 |
| १० | 57 | 57 | 57 | 57 |
| ११ | 58 | 58 | 58 | 58 |
| १२* | 58 | 57 | 57 | 57 |
| १३ | 59 | 59 | 59 | 59 |
| १४ | 122 | 122 | 122 | 122 |
| १५* | 63 | 62 | 62 | 62 |
| १६ | 66 | 66 | 66 | 66 |
| १७ | 73 | 73 | 73 | 73 |
| १८* | 36 | 37 | 37 | 37 |
| १९* | 42 | 42 | 43 | 43 |
| २० | 51 | 51 | 51 | 51 |
| २१ | 62 | 62 | 62 | 62 |
| २२ | 60 | 60 | 60 | 60 |
| २३ | 21 | 21 | 21 | 21 |
| २४ | 38 | 38 | 38 | 38 |

| Adhyāyas<br>अध्याया | I<br>Jagad dhitecchu Press Ed<br>जगद्धितेच्छु प्रेस, पूना, (संस्करण देवनागरी)<br>श्लो० सं०<br>(No of Ślokas) | II<br>Bangali Ed.<br>(M C Pal)<br>वङ्गाक्षर संस्करण<br>(महेशचन्द्रपाल सम्पादित)<br>श्लो० सं०<br>(No of Ślokas) | III<br>Bengali Ed<br>वङ्गाक्षर संस्करण<br>(पंचाननतर्करत्नसम्पादित, बंगवासी प्रेस)<br>श्लो० सं०<br>(No of Ślokas) | IV<br>Venk Ed<br>वेंकटेश्वर प्रेस संस्करण<br>श्लो० सं०<br>(No of Ślokas) |
|---|---|---|---|---|
| २५* | 22 | 22 | 23 | 22 |
| २६ | Prose+1 Śloka | Prose+1 Śloka | Prose+1 Śloka | Prose+1 Śloka |
| २७* | 37 | 37 | 36 | 36 |
| २८ | 17 | 17 | 17 | 17 |
| २९ | 48 | 48 | 48 | 48 |
| ३० | 44 | 44 | 44 | 44 |
| ३१ | 97 | 97 | 97 | 97 |
| ३२ | 24 | 24 | 24 | 24 |
| ३३ | 21 | 21 | 21 | 21 |
| ३४ | 50 | 50 | 50 | 50 |
| ३५ | 56 | 56 | 56 | 56 |
| ३६ | 80 | 80 | 80 | 80 |
| ३७ | 38 | 38 | 38 | 38 |
| ३८ | 23 | 23 | 23 | 23 |
| ३९ | 39 | 39 | 39 | 39 |
| ४० | 45 | 45 | 45 | 45 |
| ४१ | 32 | 32 | 32 | 32 |
| ४२ | 30 | 30 | 30 | 30 |
| ४३ | 89 | 89 | 89 | 89 |
| ४४* | 38 | 39 | 39 | 39 |
| ४५ | 31 | 31 | 31 | 31 |
| ४६ | 59 | 59 | 59 | 59 |
| ४७* | 162 | 163 | 163 | 163 |
| ४८ | 35 | 35 | 35 | 35 |
| ४९ | 51 | 51 | 51 | 51 |
| ५० | 13 | 13 | 13 | 13 |
| ५१ | 75 | 75 | 75 | 75 |
| ५२ | 69 | 69 | 69 | 69 |
| ५३ | 62 | 62 | 62 | 62 |
| ५४ | 78 | 78 | 78 | 78 |
| ५५* | 86 | 85 | 86 | 86 |
| ५६ | 72 | 72 | 72 | 72 |
| ५७ | 104 | 104 | 104 | 104 |
| ५८ | 121 | 121 | 121 | 121 |

| Adhyayas अध्याया | I Jagad-dhitecchu Press Ed जगद्धितेच्छु प्रेस, पूना, (सस्करणम्, देवनागरी) श्लो० स० (No of Ślokas) | II Bengali Ed (M C Pal) वङ्गाक्षरसस्करण (महेशचन्द्रपालसम्पादितम्) श्लो० स० (No of Ślokas) | III Bengali Ed (Bangavasi Press) वङ्गाक्षरसस्करणम्, पञ्चाननतर्करत्नसपादितम्, बंगवासीप्रेस, श्लो० स० (No of Ślokas) | IV Veṅk Ed वेङ्कटेश्वरप्रेस, संस्करणम् श्लो० स० (No of Ślokas) |
|---|---|---|---|---|
| ५९ | 47 | 47 | 47 | 47 |
| ६०* | 78 | 77 | 78 | 78 |
| ६१ | 77 | 77 | 77 | 77 |
| ६२ | 59 | 59 | 59 | 59 |
| ६३ | 86 | 86 | 86 | 86 |
| ६४ | 79 | 79 | 79 | 79 |
| ६५ | 168 | 168 | 168 | 168 |
| ६६ | 64 | 64 | 64 | 64 |
| ६७ | 59 | 59 | 59 | 59 |
| ६८ | 65 | 65 | 65 | 65 |
| ६९ | 161 | 161 | 161 | 161 |
| ७०* | 94 | 95 | 94 | 94 |
| ७१ | 42 | 42 | 42 | 42 |
| ७२ | 76 | 76 | 76 | 76 |
| ७३* | 54 | 53 | 54 | 54 |
| ७४ | 50 | 50 | 50 | 50 |
| ७५ | 52 | 52 | 52 | 52 |
| ७६ | 49 | 49 | 49 | 49 |
| ७७ | 57 | 57 | 57 | 57 |
| ७८* | 88 | 89 | 89 | 89 |
| ७९ | 84 | 84 | 84 | 84 |
| ८० | 39 | 39 | 39 | 39 |
| ८१ | 33 | 33 | 33 | 33 |
| ८२* | 46 | 46 | 48 | 48 |
| ८३ | 33 | 33 | 33 | 33 |
| ८४ | 50 | 50 | 50 | 50 |
| ८५* | 83 | 84 | 84 | 84 |
| ८६ | 121 | 121 | 121 | 121 |
| ८७ | 49 | 49 | 49 | 49 |
| ८८ | 28 | 28 | 28 | 28 |
| ८९ | 59 | 59 | 59 | 59 |
| ९० | 48 | 48 | 48 | 48 |
| ९१ | 115 | 115 | 115 | 115 |
| ९२ | 66 | 66 | 66 | 66 |
| ९३ | 15 | 15 | 15 | 15 |
| ९४* | 75 | 76 | 76 | 76 |
| ९५* | 92 | 92 | 92 | 92 |

A NOTE ON THE DIFFERENCE IN THE ŚLOKA NUMBERS OF CERTAIN ADHYĀYAS IN THE FOUR EDITIONS

*Adh १. Both the Baṅgālī editions contain the 'नारायणं नमस्कृत्य ...' śloka, but in M C Pal Ed this śloka is given after its first śloka (which is identical with the first śloka of the Venk Ed) and is numbered as 2, but in the Pañcānana Ed this śloka is given in the beginning and is not numbered The two Devanāgarī edns omit this śloka

The M C Pal edition has wrongly omitted to number its two ślokas (२० and २१) and so the number of ślokas in its first Adh is 30

*Adh ४. The J P Ed and the M C Pal Ed omit śl ४७ cd of the Venkṭ Ed The other difference in the number of the ślokas is due to the difference in numbering of the ślokas by combining one or more lines of a certain śloka with the preceding or the following śloka

*Adh ६, १२, १५, १८, १९, २५, २७, ४४, ४७, ७०, ७३, ७८, ८२, ८५ and ९४. In all these Adhyayas the difference in the number of the ślokas in these editions is due to the difference in their numbering of the ślokas

*Adh ५५ The Vaṅga Edn of M C Pal omits sl ८६ of the other editions

*Adh ६० The same edn omits śl ६० of this Adh of the other editions

*Adh ९५ The two Devanāgarī edns (J P and Venkṭ) insert the colophon 'इति श्रीत्रिविक्रम चरित समाप्त' after their śl ८४; but this colophon is missing in the two Baṅgālī editions

चतुर्षु संस्करणेषु तारकाङ्कितांध्यायानां श्लोकसंख्या-भेदविषये टिप्पणी

*अ. १. अत्र द्वयोरपि वङ्गसंस्करणयोः प्रारम्भे 'नारायणं नमस्कृत्य' इत्यादि श्लोको वर्तते परन्तु देवनागरीसंस्करणयोरयं श्लोको न विद्यते। महेशचन्द्रपालसम्पादिते वङ्गसंस्करणेऽयं श्लोकः 'त्रैलोक्यराज्यमाच्छिद्य' इति प्रथमश्लोकस्य पश्चात् श्लोक २ रूपेण वर्तते, वंगवासीप्रेस-संस्करणे तु प्रारम्भे एवायं श्लोको वर्तते सख्या चास्योपरि न प्रदत्ता।

महेशचन्द्रपालसस्करणेऽनवधानात् २०, २१ श्लोको संख्यारहितो वर्तेते, अतोऽत्र श्लोकाना संख्या ३० वर्तते।

*अ. ४. जगद्धितेच्छुप्रेससस्करणे महेशचन्द्रपालवङ्ग-संस्करणे च वेंकटे. सस्करणस्य ४७cd श्लोकार्द्धो न विद्यते। अन्यत्र च एषु संस्करणेषु क्वचित् कचित् श्लोकसख्यालेखपद्धतौ भेदो विद्यते, यथा कस्यचित् श्लोकस्य पूर्वार्धस्योत्तरार्धस्य वा पूर्वश्लोकेन सह उत्तर-श्लोकेन सह वा संयोजनमित्यादि।

*अ. ९. ९, १२, १५, १८, १९, २५, २७, ४४, ४७, ७०, ७३, ७८, ८२, ८५, ९४—एषु सर्वेषु अध्यायेषु उक्तप्रकारेण श्लोकसख्यालेखनपद्धतिभेदकृत एव श्लोक सख्या भेदो जातः।

*अ ५५. महेशचन्द्रपालवङ्गसस्करणे अन्येषा संस्करणाना ८६ संख्याक श्लोको नास्ति।

*अ. ६०. अस्मिन्नेव सस्करणे अन्येषा सस्करणाना श्लो० ६० नास्ति।

*अ. ९५. उभयोरपि देवनागरीसंस्करणयोस्तयोः श्लो० ८४ परत 'इति श्रीत्रिविक्रमचरित समाप्तम्' इति पुष्पिका विद्यते, परन्तु उभयोरेव वङ्ग-सस्करणयोरिय पुष्पिका न विद्यते।

## B

### CONCORDANCE OF ADHYĀYAS AND ŚLOKAS OF CRITICAL EDITION OF THE VĀMANA PURĀṆA WITH THOSE OF THE VEṄKAṬEŚVARA EDITION

(वामनपुराण पाठसमीक्षात्मक (पा. स.) संस्करणस्य अध्यायानां श्लोकानां च वेंकटेश्वर (वें) संस्करणेन सह संवाद)

| Cr. Ed. (पा. स. सं.) | Venk. Ed. (वें. सं.) | Cr. Ed. (पा. स. सं.) | Venk. Ed. (वें. सं.) | Cr. Ed. (पा. स. सं.) | Venk. Ed. (वें. सं.) |
|---|---|---|---|---|---|
| अ० १ | अ० १ | ४७cd | ४६cd | ३० | ३०cd-३१ab |
| १-१९ | १-१९ | ...... | ४७cd | ३१ | ३१cd-३२ab |
| २०ab | २०ab | ४८-५७ | ४८-५७ | ३२ | ३२cd-३३ab |
| ...... | २०cd-२१a | | | ३३ | ३३cd-३४ab |
| २०cd | २१bc | अ० ५ | अ० ५ | ३४ | ३४cd-३५ab |
| २०ef | २१d-२२a | १-४५ | १-४५ | ३५ | ३५cd-३६ab |
| २१abc | २२bcd | ४६ab | ४७cd | ३६ | ३६cd-३७ab |
| २१d | २३a | ४६cd | ४६ab | ३७ | ३७cd-३८ab |
| २२abc | २३bcd | ४७ab | ४६cd | ३८ | ३८cd-३९ab |
| २२d | २४a | ४७cd | ४७ab | ३९ | ३९cd-४०ab |
| ...... | २४b | ४८-६१ | ४८-६१ | ४० | ४०c-f |
| २३ | २४cd-२५ab | अ० ६ | अ० ६ | ४१-५०a | ४१-५०a |
| २४ | २५cd-२६ab | १-१०७ | १-१०७ | ५०b | ५०b |
| २५ | २६cd-२७ab | | | ५०c | ५०b |
| २६ | २७c-f | अ० ७ | अ० ७ | ५०d | ५०c |
| २७-३० | २८-३१ | १-५६ | १-५६ | ५१-५२ | ५१-५२ |
| | | ५७ab | ५७ab | | |
| अ० २ | अ० २ | ५७cd-५८ab | ...... | अ १० | अ १० |
| १-११ab | १-११ab | ५८cd | ५७cd | १-५७ | १-५७ |
| ...... | ११cd-१४ab | ५९-६१ | ५८-६० | अ. ११ | अ. ११ |
| ११cd | १४cd | ६२ab | ६१ab | १-३० | १-३० |
| १४-२५ | १५-२६ | ...... | ६१-६२ab | ३१ | ३१a-d |
| | | ६२cd-६५ | ६२cd-६५ | ३२ | ३१ef ३२ab |
| अ० ३ | अ० ३ | | | ३३ | ३२cd-३३ab |
| १-२८ | १-२८ | अ. ८ | अ ८ | ३४ | ३३cd-३४ab |
| २९a-d | २९a-d | १-३८ | १-३८ | ३५ | ३४cd-३५ab |
| २९ef | ...... | ३९ | ४० | ३६ | ३५cd-३६ab |
| ३०-५१ | ३०-५१ | ४० | ३९ | ३७ | ३६cd-३७ab |
| अ० ४ | अ० ४ | ४१-७२ | ४१-७२ | ३८ab | ३७cd |
| १ | १ | | | ३८cd | ...... |
| २ | ...... | अ. ९ | अ. ९ | ३९a-d | ३८ |
| ३-४६ | २-४५ | १-२८ | १-२८ | ३९ef | ३९cd |
| ...... | ४६ab | २९abcd | २९ | ४०abcd | ४० |
| ४७ab | ४७ab | २९ef | ३०ab | | |

| Cr Ed. (पा स स ) | Venk Ed (व स ) |
|---|---|
| ४०cd ४१ab | ४२ |
| ४१cd ४२ab | ४३ |
| ४२cd ४३ab | ४४ |
| ४३cd ४४ | ४५a f |
| ४५ ४७ | ४६ ४८ |
| ४८a-d | ४९ |
| ४८ef ४९ab | ५० |
| ४९cd ५०ab | ५१ |
| ५०cd ५१ab | ५२ |
| ५१cd ५२ab | ५३ |
| ५२cd ५३ab | ५४ |
| ५३cd ५४ab | ५५ |
| ५४cd ५५ab | ५६ |
| ५५cd ५६ad | ५७ |
| ५६cd ५७ab | ५८ |
| ५७cd ५८ab | ५९ |
| ५८cd ५९ab | ६० |
| ५९cd ६०ab | ६१ |
| ६०cd ६१ab | ६२ |
| ६१cd ६२ab | ६३ |
| ६२c-f | ६४ |
| ६३a-c | ६५ |
| ६३ef ६४ab | ६६ |
| अ० १८ | अ० १७ |
| १ १६ | १ १६ |
| १७a-d | १७ |
| १७ef १८ab | १८ |
| १८cd १९ab | १९ |
| १९cd २०ab | २० |
| २०cd २१ab | २१ |
| २१cd २२ab | २२ |
| २२cd २३ab | २३ |
| २३cd २४ab | २४ |
| २४cd २५ab | २५ |
| २५cd २६ab | २६ |
| २६cd २७ab | २७ |
| २७cd २८ab | २८ |
| २८cd २९ab | २९ |

| Cr Ed (पा स सं ) | Venk Ed (वें सं ) |
|---|---|
| २९cd ३०ab | ३० |
| ३०cd ३१ab | ३१ |
| ३१cd ३२ab | ३२ |
| ३२cd ३३ab | ३३ |
| ३३cd ३४ab | ३४ |
| ३४cd ३५ab | ३५ |
| ३५cd ३६ab | ३६ |
| ३६cd ३७ab | ३७ |
| ३७ d ३८ | ३८a f |
| | ३९ab |
| ३९ab | ३९cd |
| ३९cd | ४०ab |
| ४०ab | ४०cd |
| ४०cd | ४१ab |
| ४०ef | ४१cd |
| ४१ ७२ | ४२-७३ |
| अ १९ | अ १८ |
| १ ३७ | १ ३७ |
| अ २० | अ १९ |
| १ २६ | १ २६ |
| २७ab | २७ab |
| २७cd २८ab | |
| २८cd | २७cd |
| २९ ४४ | २८ ४३ |
| अ २१ | अ २० |
| १ ५ | १ ५ |
| ६ | |
| ७-३९ | ६ ३८ |
| ४०a | |
| ४०bcd | ३९abc |
| | ३९d |
| ४१ ५२ | ४० ५१ |
| अ २२ | अ २१ |
| १-७ | १-७ |
| | ८ |

| Cr Ed. (पा स सं ) | Venk Ed (वें सं ) |
|---|---|
| ८ ६१ | ९ ६२ |
| अ २३ | अ २२ |
| १ १४ab | १ १४ab |
| १४cd | -- |
| १५ab | १४cd |
| १५cd १६ab | १५ |
| १६ab १७ab | १६ |
| १७cd १८ab | १७ |
| १८cd १९ab | १८ |
| १९cd २०ab | १९ |
| २०cd २१ab | २० |
| २१cd २२ab | २१ |
| २२cd २३ab | २२ |
| २३cd २४ab | २३ |
| २४cd २५ab | २४ |
| २५cd २६ab | २५ |
| २६cd २७ab | २६ |
| २७cd-२८ab | २७ |
| २८cd २९ab | २८ |
| २९c-f | २९ |
| ३० ३१ | ३० ३१ |
| ३२a-d | ३२ |
| ३२ef ३३ab | ३३ |
| ३३cd ३४ab | ३४ |
| ३४cd ३५ab | ३५ |
| ३५cd ३६ab | ३६ |
| ३६c f | ३७ |
| ३७-३८ | ३८ ३९ |
| — | पुनस्त्य उवाच |
| ३९ ४५ | ४० ४६ |
| स मा अ १ | (अ २२) |
| देव्येवउवाच | |
| १ | ४७ |
| २ १४ | ४८ ६० |
| स मा अ २ | अ २३ |
| १-२१ | १ २१ |

| Cr Ed. ( पा. स. सं. ) | Venk Ed ( वें. सं. ) |
|---|---|
| स. मा अ ३ | अ २४ |
| १-१३ | १-१३ |
| १४ | १४a-d |
| १५ab | १४ef |
| ...... | कन्या उवाच |
| १५cd | १५ab |
| कन्या उवाच | ...... |
| ...... | १५cd |
| १६-३८ | १६-३८ |
| स मा अ ४ | अ. २५ |
| १-७ab | १-७ab |
| ७cd-८ | ...... |
| ९ab | ७cd |
| ९cd | ...... |
| १०-१२ | ८-१० |
| १३ | ११a-d |
| १४ | ११ef १२ab |
| १५ | १२cd-१३ab |
| १६ab | १३cd |
| ...... | १४ १५ab |
| १६c-f | १५cd-१६ab |
| १७ | १६cd-१७ab |
| १८ | १७cd-१८ab |
| १९ | १८cd-१९ab |
| २० | १९cd-२०ab |
| २१ | २०cd-२१ab |
| २२ | २१cd-२२ab |
| २३ab | २२cd |
| २३cd | २३ab ( वेङ्. संस्करणे दत्त संख्या न वर्ते ) |
| स. मा. अ. ५ | अ. २६ |
| ...... | ॐ नमोऽच्युतेश्वर |
| कन्या उवाच | कन्या उवाच |
| १ | १ |
| स. मा. अ. ६ | अ. २७ |
| १-६ | १-६ |
| ...... | लोमहर्षण उवाच |

| Cr. Ed ( पा. स. सं. ) | Venk Ed. ( वें सं. ) |
|---|---|
| ७-३६ | ७-३६ |
| स. मा. अ. ७ | अ. २८ |
| १-१३ | १-१३ |
| १४ab | १४ |
| १४c-f | १५ |
| १५-१६ | १६-१७ |
| स मा अ ८ | अ. २९ |
| १-२२ | १-२२ |
| २३ | ...... |
| २४ | २३ |
| २५a | ...... |
| २५bcd | २४abc |
| ...... | २४d |
| २६-४९ | २५-४८ |
| स मा अ. ९ | अ ३० |
| १-४४ | १-४४ |
| स. मा. अ. १० | अ. ३१ |
| १-९ | १-९ |
| १०a-d | १० |
| १०ef-११ab | ११ |
| ११cdef | १२ |
| १२-२१ | १३-२२ |
| ...... | २३-२४ |
| २२-२६ | २५-२९ |
| २७ | ...... |
| २८-३१ | ३०-३३ |
| ...... | ३४ ( द्विपदात्मक ) |
| ३२-३३a | ३५-३६a |
| ...... | ३६bcd-३८a |
| ३३bcd | ३८bcd |
| ३४-८३ | ३९-८८ |
| ८४ab | ( ८९ द्विपदात्मक ) |
| ८४c-f | ९० |
| ८५-९१ | ९१-९७ |
| स. मा. अ. ११ | अ ३२ |
| १-६ | १-६ |

| Cr. Ed. ( पा. स. सं. ) | Venk Ed. ( वें. सं. ) |
|---|---|
| ७ab | ७ab |
| ७cd | ...... |
| ७ef | ७cd |
| ८-२४ | ८-२४ |
| स मा. अ. १२ | अ ३३ |
| १-६ab | १-६ab |
| ६cd | ...... |
| ...... | ६cd |
| ७-२१ | ७-२१ |
| स. मा अ. १३ | अ. ३४ |
| १-१७ | १-१७ |
| १८a-d | १८ |
| १८ef | १९ab |
| १९ | ...... |
| २० | १९c-f |
| २१-२६a-d | २०-२५ |
| २६ef | २६ ( द्विपदात्मक ) |
| २७-३९ | २७-३९ |
| ४०a | ४०a |
| ४०bc | ...... |
| ४०d | ४०b |
| ४१ab | ४०cd |
| ४१c-f | ४१ |
| ४२-५० | ४२-५० |
| स मा अ १४ | अ ३५ |
| १-२६ | १-२६ |
| स मा अ १५ | अ ३६ |
| १-१० | १-१० |
| ११a-d | ११ |
| ११ef | १२ ( द्विपदात्मक ) |
| १२-१५ | १३-१६ |
| १६a-d | १७ |
| १६ef | १८ ( द्विपदात्मक ) |
| १७-३८ | १९-४० |

| Cr. Ed. (पा. स. सं.) | Venk. Ed (वें. सं) |
|---|---|
| स मा. अ १६ | अ. ३७ |
| १-३३ | १-३३ |
| ३४a | ३४a |
| ३४b-f ३५a | ...... |
| ३५bcd | ३४bcd |
| ३६-३८ | ३५-३७ |
| ३९-४०ab | ३८a-f |
| ४०cd | ...... |
| स मा अ. १७ | अ ३८ |
| १-१९ab | १-१९ab |
| ...... | १९cd |
| ...... | लोमहर्षण उवाच |
| १९cd | २०ab |
| २०ab | ...... |
| २०cd-२३ | २०cd-२३ |
| स. मा अ. १८ | अ ३९ |
| १-१२ | १-१२ |
| १३a-d | १३ |
| १३ef-१४ab | १४ |
| १४cd-१५ab | १५ |
| १५cd-१६ab | १६ |
| १६cd-१७ab | १७ |
| १७cd | १८ab |
| १७ef-१९ab | ...... |
| १९cd | १८cd |
| २०-४० | १९-३९ |
| स मा अ. १९ | अ ४० |
| १-२३ | १-२३ |
| २४ab | २४ab |
| २४cd-२५ab | २५ |
| २५c-f | २६ |
| २६-२९ | २७-३० |
| ३०a-d | ३१ |
| ३०ef-३१ab | ३२ |
| ३१cd-३२ab | ३३ |
| ३२cd-३३ab | ३४ |

| Cr. Ed. (पा. स. सं.) | Venk Ed. (वें. सं) |
|---|---|
| ३३cd ३४ab | ३५ |
| ३४ d | ३६ab |
| ...... | ३६cd-३७ab |
| ३५ab | ३७cd |
| ३५cd | ...... |
| ३६ | ३८ |
| ३७-४३ | ३९-४५ |
| स मा अ. २० | अ ४१ |
| १-६ab | १-६ab |
| ६cd | ...... |
| ६ef | ६cd |
| ७-९ab | ७-९ab |
| ९cd-१०ab | ...... |
| १०cd | ९cd |
| ११-२२ | १०-२१ |
| २३ | ...... |
| २४-३२ | २२-३२ |
| स मा अ. २१ | अ. ४२ |
| १-३० | १-३० |
| स मा अ. २२ | अ ४३ |
| १-२२ | १-२२ |
| ...... | २३ |
| २३-३८ | २४-३९ |
| ३९a-d | ४० |
| ...... | ४१ |
| ३९e-f | ४२ ( वें. संस्करणस्य ४०cd तथा ४२ab समानमेव ) |
| ४०-४२ | ४३ ४५ |
| ४३ | ...... |
| ४४-६०cd | ४६-६२ |
| ...... | नार्य ऊचु |
| ६०ef | ६३ab |
| नार्य ऊचु | ...... |
| ६१ab | ६३cd |
| ६१c-f | ६४ |
| ६२-८६ | ६५-८९ |

| Cr. Ed (पा. स. सं.) | Venk. Ed. (वें. सं.) |
|---|---|
| स मा. अ २३ | अ ४४ |
| १-२६ | १-२६ |
| ...... | २७ab |
| २७ab | २७cd |
| ...... | २८ |
| २७c f | २९ |
| २८-३५ | ३०-३७ |
| गद्यं | गद्यं |
| ३६ | ३९ |
| स मा अ २४ | अ ४५ |
| १-३१ | १-३१ |
| स मा अ २५ | अ. ४६ |
| १-४ab | १-४ab |
| ४cd ७ab | १७-१९ |
| ७cd | ४cd |
| ७-१५ | ५-१२ |
| १६a-d | १३ |
| ...... | १४-१६ |
| ७cd | २०ab |
| १६ef | २०cd |
| १७-३८ | २१-४२ |
| ३९a | ४३a |
| ३९bcd-४०a | ...... |
| ४०bcd | ४३bcd |
| ४१-४५ | ४४-४९ |
| स मा अ. २६ | अ ४७ |
| १-३abc | १-३abc |
| ३de | ... |
| ३f | ३d |
| ४-३१ | ४-३१a-d |
| ३२ab | ३१ef |
| ३२cd | ...... |
| ३३-१०१ | ३२-१०० |
| १०२a | १०१a |
| १०२bc | ...... |
| १०२d | १०१b |

| Cr. Ed. (स. स. सं.) | Venk. Ed. (वे. सं.) |
|---|---|
| १०२ef | १०१cd |
| १०३-१४१ | १०२-१४० |
| १४२a-d | १४१ |
| १४२ef | १४२ab |
| ...... | १४२cd |
| १४३-१५३ | १४३-१५३ |
| स. मा. अ २७ | अ. ४८ |
| १-३५ | १-३५ |
| स. मा अ. २८ | अ ४९ |
| १-४३ | १-४३ |
| ...... | ४४-४५ |
| ४४-४८ | ४६-५१ |
| अ. २४ | अ ५० |
| ...... | सनत्कुमार उवाच |
| ...... | १ |
| देवदेव उवाच | ...... |
| १-४ | २-५ |
| ५a-d | ६ |
| ५ef | ७ab |
| ६ab | ७cd |
| ६cd-७ab | ८ |
| ७cd | ९ |
| ८-११ | १०-१३ |
| अ २५ | अ ५१ |
| १-७५ | १-७५ |
| अ. २६ | अ ५२ |
| १-४७ab | १-४७a-c |
| ४७cd-४९ab | ...... |
| ४९cd | ४७d-f |
| ५०-७१ | ४८-६९ |
| अ २७ | अ ५३ |
| १-५३ | १-५३ |
| अ २८ | अ ५४ |
| १-५६ | १-५६ |
| ५७a-d | ५७ |

| Cr. Ed. (स. स. सं.) | Venk. Ed. (वे. सं.) |
|---|---|
| ५७ef | ५८ab |
| ...... | ५८cd |
| ५८-७७ | ५९-७८ |
| अ २९ | अ ५५ |
| १-३८ | १-३८ |
| ३९ | ३९a-d |
| पुलस्त्य उवाच | ...... |
| ४०ab | ...... |
| ४०cd | ३९ef |
| ४१-४६ab | ४०-४५ab |
| ४६cd | ...... |
| ४७ | ४५cd |
| ४८-८८ | ४६-८६ |
| अ ३० | अ ५६ |
| १a-d | १ |
| १ef-२ab | २ |
| २cd-३ab | ३ |
| ३cd-४ab | ४ |
| ४cd-५ab | ५ |
| ५cd-६ab | ६ |
| ६cd-७ab | ७ |
| ७cd | ८ab |
| ८ | ...... |
| ९ab | ८cd |
| ९cd-१०ab | ९ |
| १०cd-f | १० |
| ११-६६ | ११-६६ |
| ६७ | ...... |
| ६८-७१ | ६७-७० |
| अ. ३१ | अ ५७ |
| १-१०० | १-१०० |
| १०१a-d | १०१ |
| १०१ef | १०२ab |
| १०२ | १०२cd-१०३ab |
| १०३ | १०३cd-१०४ab |
| १०४ | १०४cd |

| Cr. Ed. (स. स. सं.) | Venk. Ed. (वे. सं.) |
|---|---|
| अ ३२ | अ ५८ |
| १-७८ | १-७८ |
| ७९ab | ७९ab |
| ७९cd | ...... |
| ७९ef | ७९cd |
| ८० | ८० |
| ८१ab | ८१ab |
| ...... | ८१cd |
| ...... | ८२ab |
| ८१cd | ८२cd |
| ८१ef | ८२ef |
| ८२-१२० | ८३-१२१ |
| अ ३३ | अ ५९ |
| १-४७ | १-४७ |
| अ. ३४ | अ ६० |
| १-१७ | १-१७ |
| १८ | ...... |
| १९-७९ | १८-७८ |
| अ ३५ | अ ६१ |
| १-३३ | १-३३ |
| ब्रह्मोवाच | ...... |
| ३४-७३ | ३४-७३ |
| अ. ३६ | अ ६२ |
| १-२६ | १-२६ |
| ...... | नारद उवाच |
| २७ | २७ |
| ...... | पुलस्त्य उवाच |
| २८-३६ | २८-३६ |
| अ ३७ | अ ६३ |
| १-४० | १-४० |
| ४१a-d | ४१ |
| ४१ef | ...... |
| ४२-७० | ४२-७० |
| ७१ab | ...... |
| ७१cd | ७१ab |
| ७२ | ७१cd-७२ab |

| Cr Ed (पा स स) | Venk Ed (वें स) |
|---|---|
| ७३ | ७२cd-७३ab |
| ७४ | ७३cd ७४ab |
| ७५ | ७४cd ७५ab |
| ७६ | ७५cd ७६ab |
| ७७ | ७६cd ७७ab |
| ७८ | ७७cd ७८ab |
| ७९ | ७८cd ७९ab |
| ८०ab | ७९cd |
| ८०c-f | ८० |
| ८१-८६ | ८१ ८६ |
| अ ३८ | अ ६४ |
| १ ४३ | १ ४३ |
| ४४a-d | ४४ |
| ४४ef ४५ab | ४५ |
| ४५cd | ४६ab |
| ४६ | ४६c-f |
| ४७-७९ | ४७ ७९ |
| अ ३९ | अ ६५ |
| १ ९३ | १ ९३ |
| ९४ | |
| ९५ १२० | ९४ ११९ |
| गद्य | गद्य |
| १२१ १३८ | १२० १३७ |
| १३९ab | १३८ab |
| १३९cd | |
| १३९ef | १३८cd |
| १४० १६९ | १३९ १६८ |
| अ ४० | अ ६६ |
| १ ६४ | १ ६४ |
| अ ४१ | अ ६७ |
| १ ३७ab | १ ३७ab |
| ३७cd ३८ | ~३७cd ३८ |
| ३९ ४१ | ३९ ४१ |
| ४२ | ४२-४३ab |
| ४३ | ४३cd ४४ab |
| ४४ | ४४cd ४५ab |
| ४५ab | -- -- |

| Cr Ed (पा स स) | Venk Ed (वें स) |
|---|---|
| ४५cd | ४५cd |
| ४६ ४९ | ४६ ४९ |
| ५०ab | ५०ab |
| ५०cd | |
| ५०ef | ५०cd |
| ५१ ५९ | ५१ ५९ |
| अ ४२ | अ ६८ |
| १ १६ | १ १६ |
| हर उवाच | शशिशेखर उवाच |
| १७-३५ab | १७-३५ab |
| ३५cd ३६ | |
| ३७ab | ३५cd |
| ३७cd ३८ab | ३६ |
| ३८cd ३९ab | ३७ |
| ३९cd-४०ab | ३८ |
| ४०cd ४१ab | ३९ |
| ४१cd ४२ab | ४० |
| ४२cd ४३ab | ४१ |
| ४३cd ४४ab | ४२ |
| ४४cd ४५ab | ४३ |
| ४५cd ४६ab | ४४ |
| ४६cd ४७ab | ४५ |
| ४७cd ४८ab | ४६ |
| ४८cd ४९ab | ४७ |
| ४९cd ५०ab | ४८ |
| ५०c-f | ४९ |
| ५१ ६६ | ५० ६५ |
| अ ४३ | अ ६९ |
| १ | |
| | १ |
| २ ९ | २ ९ |
| १० | |
| ११ ३१ | १० ३० |
| गद्य | गद्यं |
| ३२ ३६ | ३१ ३५ |
| ३७-३८ab | ३६ |
| ३८c-f | ३७ |
| ३९ ४९ | ३८ ४८ |

| Cr Ed (पा स स) | Venk Ed (वें स) |
|---|---|
| ५०a-d | ~४९ |
| ५०ef | |
| | ५० ५१ |
| ५१ ५२ | ५२ ५३ |
| ५३ab | ५४ (द्विचरणात्मक) |
| ५३cd ५४ab | ५५ |
| ५४cd | ५६ab |
| ५५ ५७ab | |
| ५७cd | ५६cd |
| ५८-७६ | ५७ ७५ |
| | मन्थक उवाच |
| ७७ १६२ | ७६ १६१ |
| अ ४४ | अ ७० |
| १ ३२ | १ ३२ |
| ३३ ३६ | |
| | ३३ ३४ |
| ३७-७९a-d | ३५-७७ |
| ७९ef | |
| ८० ९० | ७८-८८ |
| ९१a d | ८९ |
| ९१ef | ९०ab |
| गद्य | गद्य |
| ९२ ९६ | ९०c-f-९४ |
| अ ४५ | अ ७१ |
| १ ४२ | १ ४२ |
| अ ४६ | अ ७२ |
| १ ११ | १ ११ |
| १२ab | १२ab |
| -- | १२cd |
| १२cd | १३ab |
| १३ | १३c-f |
| १४ | १४a-d |
| | १४ef |
| १५-७६ | १५-७६ |
| अ ४७ | अ ७३ |
| १ २६ | १ २६ |
| २७ab | २७ab |

| Cr. Ed. (पा. स. सं.) | Venk. Ed. (वें. सं.) |
|---|---|
| २९ | ३० |
| ३०ab | ३१ab |
| ३०cd | ३२ab |
| ३१ab | ३१cd |
| ३१c-f | ३२c-f |
| ३२-८० | ३३-८१ |
| ८१ | ... |
| ८२-१२१ | ८२-१२१ |
| अ ६० | अ. ८७ |
| १-४४abc | १-४४abc |
| ४४d-४६a | ... |
| ४६b | ४४d |
| ४६cd-४७ab | ४५ |
| ४७cd-४८ab | ४६ |
| ४८cd-४९ab | ४७ |
| ४९cd-५०ab | ४८ |
| ५०cd-५१ | ४९ |
| अ. ६१ | अ. ८८ |
| १-८abc | १-८abc |
| ८d-१०a | ... |
| १०b | ८d |
| १०cd-११ab | ९ |
| ११cd | १०ab |
| ११a | १०c (= ९c) |
| ११b | १०d (= ७b) |
| १२-२९ | ११-२८ |
| अ ६२ | अ. ८९ |
| १-५९ | १-५९(१-९ = ८४ १-९) |
| अ. ६३ | अ. ९० |
| १-४८ | १-४८ |
| अ. ६४ | अ. ९१ |
| १-१६c | १-१६c |
| ...... | १६d |
| १६d | १७a |
| ...... | १७b |
| १७ab | १७cd |
| १७c-f | १८ |
| १८-५५ab | १९-५६ab |
| ...... | ५६cd |
| ५५cd-५६ab | ५७ |
| ५६cd-५७ab | ५८ |
| ५७cd-५८ab | ५९ |
| ५८cd-५९ | ६० |
| ६०-१०५ | ६१-१०६ |
| १०६-१०७ab | १०७ |
| १०७cd-१०८ab | १०८ |
| १०८cd-१०९ab | १०९ |
| १०९cd-११० | ११० |
| १११-११४ | १११-११४ |
| पुलस्त्य उवाच | ... |
| ११५ | ११५ |
| अ ६५ | अ. ९२ |
| १-३ | १-३ |
| ४ | ...... |
| ५-२९ | ४-२८ |
| ३०a-d | २९ |
| ३०ef | ...... |
| ३१-३३ | ३०-३२ |
| ३४ab | ३३ab |
| ३४cd | ...... |
| ३४ef | ३३cd |
| ३५-५१ | ३४-५० |
| ५२ | ...... |
| ५३-६८ | ५१-६६ |
| अ ६६ | अ. ९३ |
| १-२ | १-२ |
| ३-५ | ...... |
| ६-११ | ३-८ |
| गद्यं | गद्यं |
| १२-१८ | ९-१५ |
| अ ६७ | अ. ९४ |
| १-८ | १-८ |
| ... | ९ab |
| ९a-f | ९cd-१० |
| १०-४६ | ११-४७ |
| ४७-४८ | ...... |
| ४९-५२a-d | ४८-५१ |
| ५२ef | ५२ |
| ५३-७०a | ५३-७०a |
| ७०b | ...... |
| ७०cd-७१a | ७०bcd |
| ७१bcd-७२a | ७१ |
| ७२bcd-७३a | ७२ |
| ७३bcd-७४a | ७३ |
| ७४b | ७४a |
| ...... | ७४b |
| ७४cd-७६ | ७४cd-७६ |
| अ ६८ | अ. ९५ |
| १-१८ | १-१८ |
| ...... | १९ab |
| १९ab | १९cd |
| १९cd-२०ab | २० |
| २०cd-२१ab | २१ |
| २१cd-२२ab | २२ |
| २२cd-२३ab | २३ |
| २३cd-२४ab | २४ |
| २४cd-२५ab | २५ |
| २५cd-२६ab | २६ |
| २६cd-२७ | २७ |
| ...... | २८ab |
| ( अ. ६९. ४-१२ ) | (२८cd-३७) |
| २८ | ३८ |
| २९ | ...... |
| ३०-४२ | ३९-५१ |
| ...... | ५२ |
| ४३-५१ | ५३-६१ |
| ...... | ६२ |
| ५२ | ६३ |
| ५३a-d | ६४ |
| ५३ef-५४ab | ६५ |
| ५४cd | ६६ (द्विचरणात्मक) |
| ५५ | ६७ |
| ...... | ६८ ( द्विचरणात्मक ) |
| ५६-७० | ६९-८३ |
| ... | पुलस्त्य उवाच |
| ७१ | ८४ |
| अ. ६९ | (अ. ९५) |
| १-३ | ८५-८७ |
| ४-१२ | २८cd-३७ |
| १३ | ८८ |
| १४a | ८९a |
| ...... | ८९bcd-९०a |
| १४b | ९०b |
| १४cd | ९०cd |
| १५-१६ | ९१-९२ |

# ADHYĀYA CONTENTS

## अध्यायविषयसूची

# अथ श्रीवामनपुराणम्

## १

नारायण नमस्कृत्य नरं चैव नरोत्तमम् ।
देवीं सरस्वतीं व्यास ततो जयमुदीरयेत् ॥

त्रैलोक्यराज्यमाक्षिप्य बलेरिन्द्राय यो ददौ ।
श्रीधराय नमस्तस्मै छद्मवामनरूपिणे ॥ १
पुलस्त्यमृषिमासीनमाश्रमे वाग्विदां वरम् ।
नारदः परिपप्रच्छ पुराणं वामनाश्रयम् ॥ २
कथं भगवता ब्रह्मन् विष्णुना प्रभविष्णुना ।
वामनत्वं धृतं पूर्वं तन्ममाचक्ष्व पृच्छतः ॥ ३
कथं च वैष्णवो भूत्वा प्रह्लादो दैत्यसत्तमः ।
त्रिदशैर्युयुधे सार्धमत्र मे संशयो महान् ॥ ४
श्रूयते च द्विजश्रेष्ठ दक्षस्य दुहिता सती ।
शंकरस्य प्रिया भार्या बभूव वरवर्णिनी ॥ ५
किमर्थं सा परित्यज्य स्वशरीरं वरानना ।
जाता हिमवतो गेहे गिरीन्द्रस्य महात्मनः ॥ ६
पुनश्च देवदेवस्य पत्नीत्वमगमच्छुभा ।
एतन्मे संशयं छिन्धि सर्ववित् त्वं मतोऽसि मे ॥ ७ वें १

---

[शा1 पुस्तके प्रथमपत्रस्य नष्टत्वात् प्रथमाध्यायस्य १ १४ श्लोका न सन्ति ब3 पुस्तके १ १० १४ ३० श्लोका क्रिमिभक्षितत्वादिहेतुना प्रायशो नष्टा अपाठ्या वा सन्ति द1 2 पुस्तकयो अस्य अध्यायस्य १ ११ श्लोका न सन्ति तेषां स्थाने अन्ये ३२ श्लोका सन्ति ( द्र ११ श्लोकस्य पा वि ) दे1 पुस्तके 1 12 पत्राणां नष्टत्वात् १ ५ अध्याया न सन्ति । ]

[ आरम्भे लेखकलिखितानि देवतानमस्कारवाक्यानि—कारा ॐ श्रीशारदा जयति ॥ ॐ श्रीगणेशाय नम । ॐ नमो वामनाय ॥ का 1 ॐ श्रीगणेशाय नम ॥ ॐ नमो वामनाय ॥ का2 ॐ नम परमात्मने श्रीपुराणपुरुषोत्तमाय ॥ ब1 ॐ नमो गणपतये ॥ दे1 श्रीगणेशाय नम ॥ ॐ नम परमात्मने श्रीपुराणपुरुषोत्तमाय ॥ दे 5 7 9 श्रीगणेशाय नम ॥ दे3 श्रीगणेशाय नम ॥ ॐ नम परमात्मने श्रीपुरुषोत्तमाय ॥ दे4 श्रीगणेशाय नम ॥ छ ॥ श्रीसरस्वत्यै नम ॥ ॐ नमो वामनात्मने शिवाय च ॥ दे10 ॐ नम श्रीगजवदनभारतीभ्यां ॐ नमो भगवते श्रीवासुदेवाय ॥ दे11 श्रीगणेशाय नम ॐ नमो भगवते वासुदेवाय न1 श्रीगणाधिपतये नम ॥ श्रीविद्याशंकराय नम ॥ शुभमस्तु ॥ ]

नारायणमित्यादिनमस्कारमन्त्र शा कारा का1 ० दे9 न1 पुस्तकेषु विद्यते —c) का० चैव (→व्यास)

१ अयं श्लोक का० दे7 पुस्तकयोः ६ श्लोकात्पर दे4 पुस्तके च ७ श्लोकस्य पूर्वार्धात् पर वर्तते ( लेखकप्रमादात् ) —a)कारा का1 आकृष्य दे1 3 9 11 न1 आच्छिद्य (→आक्षिप्य) —b) दे9 न1 [अ]ददात (→ददौ) —c) दे1 3 9 11 नमस्तस्मै सुरेशाय —d) दे1 3 10 11 सत्य (→छद्म)

१ श्लोकात्पर दे9 न1 अधिकम्—

1* किं छत्रं किं नु रत्नं किमु तिलकमहो कुण्डले कौस्तुभं वा
चक्रं वा वारिजं वेत्यमरयुवतिभिर्यद् बलिद्वारिदेहे ।
ऊर्ध्वं मौलौ ललाटे श्रवसि हृदि करे नाभिदेशेऽस्य दृष्ट
पायात् तद्वोऽर्कबिम्बं स दनुजरिपुवर्धमानः क्रमेण । [4]

[ —1) दे9 चित्र (→छत्र) दे9 चित्र (→रत्न) दे9 महो वा खण्डितम् —2) दे9 चक्र खण्डितम् न1 °देये (हे ?) (→°देहे) —3) दे9 च (→[-अ]थ) —4) दे9 बिम्ब ध खण्डितम् ]

२ दे2 c1 ○ a) दे9 सुख° (→ऋषि°) —b) का2 आसने (→आश्रमे) का वाग्मिना (→वाग्विदा) दे7 वर (→वर) —d) दे4 9 न1 °द्वय (→°श्रय)

२ श्लोकात्परं कारा दे4 अधिकम्– नारद उवाच

३ दे3 न1 ○ —a) दे4 किमथ रूपमुत्सृज्य —b) दे2 सवपीतिना (→प्रभविष्णुना) c) दे० वृत दे7 कृत (→धृत) —d) दे4 मम ब्रूहि (→ममाचक्ष्व)

४ दे9 न1 ○ —b) का2 दानवोत्तम (→दैत्यसत्तम) —c) का1 द4 5 7 युध्यते (→युयुधे) d) का० दे4 तत्र (→अत्र)

५. दे9 न1 ○ का1 दे कारा ab, cd मध्ये अधिकम्—

2* पुनश्च देवदवस्य पत्नीत्वमगमच्छुभा । ( = ७ ab)

[कारा °गमच्छता का1 °गमच्छता ( →°गमच्छुभा )]

६ दे9 न1 ○ —a) दे11 वा ( →सा )

७ दे9 न1 ○ का2 दे ab○ कारा का1 दे5 अत्र ab ५ श्लोकस्य ab, cd मध्ये वर्तते —b) दे4 °च्छुभ(→°च्छुभा) —c)

११.१४ किं लक्षणो भवेद् धर्मः किमाचरणसत्क्रियः।
यमाश्रित्य न सीदन्ति देवाद्यास्तु तदुच्यताम्॥ १४

ऋषय ऊचुः।✲

देवानां परमो धर्मः सदा यज्ञादिकाः क्रियाः।
स्वाध्यायवेदवेत्तृत्वं विष्णुपूजारतिः स्मृता॥ १५
दैत्यानां बाहुशालित्वं मात्सर्यं युद्धसत्क्रिया।
वेदनं नीतिशास्त्राणां हरभक्तिरुदाहृता॥ १६
सिद्धानामुदितो धर्मो योगयुक्तिरनुत्तमा।
स्वाध्यायं ब्रह्मविज्ञानं भक्तिर्द्वाभ्यामपि स्थिरा॥ १७
उत्कृष्टोपासनं ज्ञेयं नृत्यवाद्येषु वेदिता।
सरस्वत्यां स्थिरा भक्तिर्गान्धर्वो धर्म उच्यते॥ १८
विद्याधरत्वमतुलं विज्ञानं पौरुषे मतिः।
विद्याधराणां धर्मोऽयं भवान्यां भक्तिरेव च॥ १९
गन्धर्वविद्यावेदित्वं भक्तिर्भानौ तथा स्थिरा।
कौशल्यं सर्वशिल्पानां धर्मः किंपुरुषः स्मृतः॥ २०
ब्रह्मचर्यममानित्वं योगाभ्यासरतिर्दृढा।
सर्वत्र कामचारित्वं धर्मोऽयं पैतृकः स्मृतः॥ २१
ब्रह्मचर्यं यताशित्वं जप्यं ज्ञानं च राक्षस।

---

१४ –b) दे3 सदा° (→किमा°), दे7 °चरत (→°चरण°) का2 °सत्कृत, दे3 5 9 °सत्क्रिया (दे3 °या) (→°सत्क्रिय) –c) ब3 दे1 7 समा°, दे9 तामा° (→यमा°) –d) दे3 वेदवास्तु (?) दे7 देवाद्या यत्, दे9 देवाद्याश्च (→देवाद्यास्तु)

✲ दे2 ऋषय उ, दे4 ऋषयोवाच, दे6 8 ऋषिरुवाच दे7 न1 ऋषय

१५ –a) ब1 3 दे4.7 हि (दे4 7 च) परो धर्म, दे6 8 परमा धर्मा (→परमो धर्म) –b) दे6.8 यवादिका, दे7 यज्ञाश्रिता (→यज्ञादिका), दे4 सदा यज्ञक्रियान्वित –c) ब1 साध्याय, दे4 स्वाध्याय, दे7 9 स्वाध्याय, ते1 स्व यत्र (→स्वाध्याय) ब1 3 दे1 4 9 ते1 °तत्त्व (ब1 [°त्व]) वेदित्व, दे7 तत्र वै दिव्य (→°वेदवेत्तृत्व) दे3 स्वाध्याय (वेद) तत्त्वविज्ञान –d) कारा रतिस्तथा ब1 3 दे9 न1 रति (ब1 °ति) स्मृति (ब1 °त) दे1 4 ते1 इति श्रुति दे6 8 रति तत्त, दे7 त्विति श्रुति (→ रति स्मृता)

१६ –a) दे6 8 बहु° (→बाहु°) ब1 °शालित, दे7 °मानित्व (→°शालित्व) –b) दे1 3 9 आश्चय, दे4 एश्वय (→मात्सर्य) ब2 3 दे3 6 9 ते1 न1 °सत्क्रिया (→°सत्क्रिया) –c) शा1 कारा का1 ? ब2 3 निन्दन, ब1 दे1 5 8 वन्दन, दे 7 नन्दन दे3 सेवन दे4 वदन, दे9 चिंतन, दे10 ते1 वि (दे10 वि) दन (→वेदन) –d) दे5 हरिभक्ति°, न1 हरेभक्ति° (→हरभक्ति°)

१७ ब? d ○ –a) दे7 उचितो, दे9 न1 आदितो (→उदितो) –b) ब1 °सिद्धि°, दे4 °मुक्ति° (→°युक्ति°) –c) कारा दे? 4 5 न1 स्वाध्यायो (→स्वाध्याय) –d) ब3 स्थिता, दे6 8 ✲? (→स्थिरा), दे1 भक्तिविष्णु हरते तथा, दे3 4 ते1 भक्तिर्विष्णौ हरे (ते 1 °रेस्) तथा, दे5 भक्तिर्द्वाभ्याम ? स्थिरा

१८ –a) ब2 'उत्कृ , सन' खडित ब3 उत्कृष्टोपासना, दे7 उत्कृष्टायासन (→उत्कृष्टोपासन), ब3 दे4 न1 गेयं (→ज्ञेय) –b) दे4 9 न1 नित्य (→नृत्य), दे7 नृप° (→नृत्य°), कारा °वाद्यादि-, दे7 °वादेषु, दे9 °वाह्येषु (→°वाद्येषु); दे4 वादिता, दे8 वेपिता (→वेदिता). –c) ब3 °स्वत्या (→°स्वत्या), ब1 ✲✲, दे2 बुद्धि (→भक्ति) –d) दे9 गन्धर्वो (→गान्धर्वो)

१९ –a) दे1.3 5.7 न1 विद्या(दे1 [द्या])धारि°, दे9 विद्याधार° (→विद्याधर°), दे9 अमल (→अतुल) –b) ब3 °पो मति, दे1 5 °पे मति, दे9 °प गति (→°पे मति) –c) ब2 °धरान् स (→°धराणा) ब? धर्माह, दे6 धर्मेद (→धर्मोऽयं) –d) ब3 भवान्या (→भवान्यां), ब2 एव तु दे4 उतमा (→एव च)

२० –a) शा1 कारा ब2 3 दे9 10 न1 गान्धर्व° (→गन्धर्व°), शा1 °वेदित, का1 °वेद्यत्व, दे8 °वेदित्वे (→°वेदित्व) –b) ब2 भक्तिभानो, दे7 9 भक्तिर्भावो (→भक्तिर्भानौ), ब3 स्थिरा तथा (→तथा स्थिरा), न1 भक्तिभा[नो ?]स्तथा स्थिरा –c) ब1 3 दे4 7 9 न1 कौशल, दे1 3 कौशिल्य, दे5 कोशल्य (→कौशल्य), शा1 ब3 ते1 °शल्याना, दे1 4 7 9 °विद्याना दे4 °वस्तूना,+विद्याना (→°शिल्पाना) –d) न1 धर्म (→धर्म) कारा ब1 3 दे8 ते1 कपुरुष दे1 9 किं पुरुष (→किं पुरुष) दे9 स्थित (→स्मृत)

२१ दे7 ○ –b) दे1 °भ्यासे (→°भ्यास) दे9 दृढं (→दृढा) –d) शा1 कारा का1 2 यौगिक, दे9 पातक ? (→पैतृक) दे3 स्मृत ○

२२ का1 ○ –a) शा1 कारा का? दे1 मिताशित्वं, दे? 4 सत्य सत्य, दे3 ते1 तथाशित्व, दे7 उपासित्व दे9 ध्रमानित्व, न1 अनाशित्व (→यताशित्वं) –b) दे1 3 ते1 तथ्य ज्ञान, दे2 स्नान जप्य, दे5 7 9 जप्य स्नान (→जप्य ज्ञान) शा1 दे9 राक्षस, दे5 ते1 राक्षस (→राक्षस) दे4 जप स्नान सदैव तु –c) कारा. दे? 3 7.8 °मावर्म°, का3 °मात्मर्म°, दे4 6 9 °मोधर्म° (→°मार्द्धर्म°).

नियमाद्धर्मवेदित्वमार्यो धर्मः प्रचक्ष्यते ॥ २२
स्वाध्यायं ब्रह्मचर्यं च दानं यजनमेव च ।
अकार्पण्यमनायासं दयाऽहिंसा क्षमा दमः ॥ २३
जितेन्द्रियत्वं शौचं च माङ्गल्यं भक्तिरच्युते ।
शंकरे भास्करे देव्यां धर्मोऽयं मानवः स्मृतः ॥ २४
धनाधिपत्यं भोगानि स्वाध्यायं शंकरार्चनम् ।
अहंकारमशौण्डीर्यं धर्मोऽयं गुह्यकेष्विति ॥ २५
परदारावमर्शित्वं पारक्येऽर्थे च लोलुपा ।
स्वाध्यायं त्र्यम्बके भक्तिर्धर्मोऽयं राक्षसः स्मृतः ॥ २६
अविवेकमथाज्ञानं शौचहानिरसत्यता ।
पिशाचानामयं धर्मः सदा चामिषगृध्नुता ॥ २७
योनयो द्वादशैवैतास्तासु धर्माश्च राक्षस ।
ब्रह्मणा कथिताः पुण्या द्वादशैव गतिप्रदाः ॥ २८

सुकेशिरुवाच ।❀

भवद्भिरुक्ता ये धर्माः शाश्वता द्वादशान्वयाः ।
तत्र ये मानवा धर्मास्तान् भूयो वक्तुमर्हथ ॥ २९

ऋषय ऊचुः ।❀

शृणुष्व मनुजादीनां धर्मांस्तु क्षणदाचर ।
ये वसन्ति महीपृष्ठे नरा द्वीपेषु सप्तसु ॥ ३०
योजनानां प्रमाणेन पञ्चाशत्कोटिरायता । व. ११.

---

–d) शा1 का2 व1-3 दे2 6.8 ते1 प्रवक्षते, दे9 प्रवर्त्तते (→प्रचक्ष्यते)

२३. का1.○. –a) दे4 स्वाध्यायो (→स्वाध्याय); दे1 *, दे4 तु (→च). –b) दे6 पठनम्, दे3 जपय (न ?) म् (→यजनम्) –c) व1.2 दे2 °यास-, दे7 °रंभो (→°यास). –d) शा1 कारा. का2 व1-2 दे1-3 ते1 °क्षमादय, व3 °क्षमा तथा, दे6.8 °क्षमोदय (→°क्षमा दम).

२४ का1. ○. –a) व3 शौचत्व, दे6.8 मा शौच (→शौच च) –b) दे2.4.7 मङ्गल, न1 माङ्गल्ये (→माङ्गल्य), दे4 7 भक्तिरुत्तमा, शेषेषु पुस्तकेषु 'भक्तिरच्युते' (→भक्तिरच्युते). –c) न1 शाकरे (→शकरे), दे4 दिव्या (→देव्या)

२५. –a) दे1 °धिपत्य-, दे3 °दिपत्य, दे5 °धिपत्या (→°धिपत्य), कारा. का1 दे1.3 8 ते1 भोगाश्च, दे2 योगाश्च, दे4 योगाश्च, दे5 योगानि, दे7 योगाङ्ग (→भोगानि). –b) कारा. दे1-4.7 ते1 स्वाध्याय (→स्वाध्याय). –c) दे1.2.4 दे7 °कार (→°कारम्), शा1 का1 स (का1 सु) सौन्दर्यं, कारा. असौन्दर्यं, का2 ससौदर्यं, व1.2 मशौटीर्यं, व3 सशौटीर्य्यं, दे1 तशोंडीय (?), दे2.4 च शौर्यं च, दे5 असौवीर्यं, दे6.8 असंदीर्यं, दे7 ह्यसौंडीर्यं, दे9 असोधत्व (→अशौण्डीर्यं) –d) दे1 -ष्वपि, ते1 स्थित (→-ष्विति).

२६. –a) शा1 कारा. का1 व1.2 दे7 °वर्षित्व, व3 °वर्षित्व, दे2 °वमर्शत्व, दे4 °व (र) र्शित्व (→°वमर्शित्व). –b) व1 पारक्यार्थे, व2 पारक्यान्, व3 पारस्वे *, दे1.5 पा (दे5 प) रक्यर्थे, न1 याचक्येर्थे (→पारक्येर्थे), कारा. च लुब्धता, व1.2 दे3.6 ते1 च लोलुपा, दे1 4 लोलुपा, दे2 4 च लोलता, दे5.9 च लोलुप (दे9 °प), दे7 [-अ]वलोलुपा (→च लोलुपा). –c) शा1 कारा. का1.2 दे2 4.7.9 स्वाध्याय, दे5 स्वाध्याय (?) (→स्वाध्याय) –d) दे2.9 न1 राक्षस-, दे6 8 राक्षस (→राक्षस).

२७. –a) व1 दे2-5.7.9 °कस्तथा°, दे1 °कमय°, न1 °कमप° (→°कमया°). –b) दे3 अनित्यता (→असत्यता). –c) का1 पिशाच° (चा ?) (→पिशाचा°), व2 °यद्धर्म (→ °यं धर्म). –d) शा1 का1 चामिषगृह्लुताम्, व3 चाशिषगृध्नुता, दे6.8 चामर्षगृध्नुता (→चामिषगृध्नुता).

२८. –a) व3 °दशैवेता, दे5 °दशोवैता, दे7 °दशैवेत (→°दशैवैता) –b) शा1 दे3.9 न1 धर्मश्च, दे1.3 धर्मा सु- (→धर्माश्च), दे6.7 ते1 राक्षसाः, न1 राक्षसं (→राक्षस). –c) व1 दे4.9 ब्रा (दे4 ब्र) ह्मणा (→ब्रह्मणा), दे9 कथिता (→कथिता); दे1 पुण्य (→पुण्या) –d) दे8 -द्वाद° (→द्वाद°), शा1 का1 गतिः प्रदा, दे4.7 गतिप्रदा (→गतिप्रदा)

२८ श्लोकादनु कारा. अधिकम्—

इति वामनपुराणे द्वादशयोनिधर्मोनाम चतुर्दशोऽध्यायः ।

❀ शा1 का1 दे7.9 न1 सुकेशि, का2 सुकेशि उवाच; दे2 सुकेशिरु, दे4 सुकेश्युवाच

२९. –a) व2 दे1.5 धर्मा (→धर्माः), दे9 न1 भवद्भिः कथिता धर्मा. –b) व2 भवन्ति, दे2 9 शाश्वतो (दे2 °ता). (→शाश्वता) –c) दे6 8 मानवान् धर्मान् (→मानवा धर्मा). –d) का2 °थ,+°सि (→°थ)

❀ दे2 ऋषय उ., दे7.9 न1 ऋषय.

३०. –a) दे4 शृणु त्व, दे7 शृण्वन्तु, ते1 शृणुध्वं (→शृणुष्व). –b) कारा. व3 धर्मास्त्व, दे6 धर्मा*, दे7 धर्माश्च, दे8 धर्मारम (?), न1 धमास्तान् (→धर्मांस्तु) –c) दे4 °प्रष्टे (→°पृष्ठ), न1 एव सति धरापृष्ठ. –d) दे3 नर- (→नरा), दे8 सप्त सा (→सप्तसु)

३१ –a) न1 प्रमाणानि (→प्रमाणेन). –b) शा1

११.३१ जलोपरि महीयं हि नौरिवास्ते सरिज्जले ॥ ३१
तस्योपरि च देवेशो ब्रह्मा शैलेन्द्रमुत्तमम् ।
कर्णिकाकारमत्युच्चं स्थापयामास सत्तम ॥ ३२
तस्येमां निर्ममे पुण्यां प्रजां देवश्चतुर्दिशम् ।
स्थानानि द्वीपसंज्ञानि कृतवांश्च प्रजापतिः ॥ ३३
तत्र मध्ये च कृतवाञ्जम्बूद्वीपमिति श्रुतम् ।
तल्लक्षं योजनानां च प्रमाणेन निगद्यते ॥ ३४
ततो जलनिधी रौद्रो बाह्यतो द्विगुणः स्थितः ।
तस्यापि द्विगुणः प्लक्षो बाह्यतः संप्रतिष्ठितः ॥ ३५
ततस्त्विक्षुरसोदश्च बाह्यतो वलयाकृतिः ।
द्विगुणः शाल्मलिद्वीपो द्विगुणोऽस्य महोदधिः ॥ ३६
सुरोदो द्विगुणस्तस्य तस्माच्च द्विगुणः कुशः ।
घृतोदो द्विगुणश्चैव कुशद्वीपात्प्रकीर्तितः ॥ ३७
घृतोदाद् द्विगुणः प्रोक्तः क्रौञ्चद्वीपो निशाचर ।
ततोऽपि द्विगुणः प्रोक्तः समुद्रो दधिसंज्ञितः ॥ ३८
समुद्राद् द्विगुणः शाकः शाकाद् दुग्धाब्धिरुत्तमः ।
द्विगुणः संस्थितो यत्र शेषपर्यङ्कगो हरिः ।
एते च द्विगुणाः सर्वे परस्परमपि स्थिताः ॥ ३९

---

°मारुता, कारा. °मानता, का$_1$ मारु(न)ता, का$_2$ ब$_2$ दे$_{2.4.7}$ नं$_1$ °राप्लुता, ब$_1$ °राप्लु (या) ता, ब$_3$ °रौरिता, दे$_8$ °रायत, दे$_9$ °काप्लुता (→°रायता). –c) दे$_2$ मही**, दे$_7$ मही चेयं (→महीयं हि). –d) दे$_2$ नौरिवासीत्, न$_1$ नंरिवास्ते (→नौरिवास्ते), दे$_6$ ****, दे$_8$ जलोपरि, दे$_9$ सरि जले (→सरिज्जले).

३२. दे$_{6\ 8}$. ab ⊙. –a) दे$_1$ तस्या (तु) परि च, दे$_4$ तस्या उपरि, दे$_7$ तस्यामुपरि (→तस्योपरि च), ब$_2$ गदावेशो (→च देवेशो) –b) दे$_9$ शैलेन्द्रसत्तम (→शैलेन्द्रमुत्तमम्). –c) ब$_2$ सकर्णिकारम् , दे$_1$ कर्णिका (र) कारम् (→कर्णिकाकारम्); दे$_2$ अत्युग्र, दे$_5$ अरयुसं (?), दे$_7$-मत्पूर्वं, ते$_1$ अत्युच्चै (→अत्युच्च), –d) शा$_1$ कारा. का$_1$ दे$_{2.4}$ सत्तम , ब$_1$ सत्तम (→सत्तम).

३३. –a) कारा. ब$_2$ तस्येमा, ब$_3$ तस्य मा, दे$_{1\ 3.4}$ सयेमा, दे$_{5.7}$ तत्रेमा (→तस्येमां), कारा. पुण्या , दे$_7$ दु ख, न$_1$ पुण्य (→पुण्यां), दे$_9$ तस्याग्रे निर्मिता पुण्या. –b) कारा. दे$_{8.9}$ न$_1$ प्रजा देव (दे$_9$ °वा ), ब$_{1\ 2}$ दे$_2$ प्रजा देवं (→प्रजां देव ), ब$_3$ दे$_9$ न$_1$ चतुर्दश, दे$_1$ चतुर्विधं (→चतुर्दिशम्). –c) दे$_2$ ते$_1$ द्विप° (→द्वीप°).

३४. –a) दे$_9$ तन्मध्ये कृतवान् देवो. –b) कारा का$_1$ इति व्रत, दे$_3$ न$_1$ मतिश्रुत, दे$_9$ इति स्मृतं (→इति श्रुतम्). –c) शा$_1$ कारा. का$_1$ दे$_{1.3\ 6\ 8.9}$ न$_1$ तल्लक्ष- (→तल्लक्ष) –d) का$_1$ °नेन (→°णेन).

३५. का$_1$ दे$_9$. cd ○. –a) शा$_1$ कारा. का$_{1\ 2}$ दे$_{1.2}$ निधि क्षारो, ब$_1$ °निधि रोरो (?), दे$_{5\ 8}$ °निधा रौद्रो, दे$_9$ °विधी रौद्रो (→°निधीरौद्रो) –b) का$_1$ वलयाकृति, ब$_2$ द्विगुण स्मृत, दे$_5$ द्विगुण (णो?) हित , दे$_{7.8}$ द्विगुणो स्थित (→द्विगुण स्थित ).

दे$_8$. ab, cd मध्ये ३४ श्लोक पुनरावृत्त.

३६. दे$_9$. ○, का$_1$. ab ○. –a) ब$_{1\ 2}$ ततश्चेक्षु° दे$_8$ ततस्त्वक्ष° (→ततस्त्विक्षु°) –c) न$_1$ शाल्मलिर् , ब$_1$ दे$_{3.4.7}$ शाल्मली (→शाल्मलि-). –d) ते$_1$ °णोस्ति, न$_1$ °णश्च (→°णोस्य).

३७. दे$_9$ ○; ब$_{1\text{-}3}$ दे$_7$ न$_1$. cd ⊙. –a) दे$_2$ सुरोदे, दे$_3$ सुरोदा, दे$_{6.8}$ सुरोद (?) (→सुरोदो). –b) ते$_1$ द्विगुणा (→द्विगुणः) –c) दे$_2$ द्विगुण शाक , दे$_8$ दागुणश्चैव (→द्विगुणश्चैव). –d) दे$_{6.8}$ °द्वीपाच्च प्र° (→°द्वीपात्प्र°), ते$_1$ कुशद्वीपा प्रकीर्तिता .

दे$_{5\text{-}7}$ ab, cd मध्ये अधिकम्—

35* तावानेव घृतोदस्तु विस्तराद् वलयाकृति ।

दे$_8$ पुस्तके ३७ श्लोक. बहुश आवृत्य पाठान्तरे सह इत्य वर्तते—

36 * सुरोदो द्विगुणस्तस्य तस्माच्च द्विगुणः कुश ।
तावानेव घृतोदस्तु विस्तराद्वलयाकृतिः ।
घृतोदो द्विगुणश्चैव कुशद्वीपाच्च कीर्तित ।
घृतोदा(द?)द्विगुणस्तस्य तस्माच्च द्विगुण. कुश । [4]
तावानेव घृतोदस्तु विस्तराद्वलयाकृति ।
घृतोदोदागुणश्चैव कुशद्वीपाच्च कीर्तित ।
घृतोदा द्विगुणस्तस्य त.माच्च द्विगुण कुश ।
तावानेव घृतोदस्तु विस्तराद्वलयाकृति । [8]
घृतोदा द्विगुणश्चैव कुशद्वीपाश्च कीर्तितः ।

३८. दे$_3$. ⊙; ब$_{1\ 3}$ दे$_{1\ 3\ 8}$ ते$_1$ cd ⊙. –a) ब$_{1\text{-}3}$ न$_1$ घृतोदो, दे$_4$ घृतोदा (→घृतोदाद्), कारा. चैव, ब$_{1\text{-}3}$ दे$_{1.3\ 8}$ ते$_2$ न$_1$ क्रोञ्चो (ब$_1$ °क्रौञ्च) (→प्रोक्त ). –b) ब$_{1\text{-}3}$ दे$_{1\ 3\ 8}$ न$_1$ दध्यो (दे$_4$ °ध्यौ) दो (दे$_{6.8}$ °गे) द्विगुस्तत , ते$_1$ दुग्धोदाद्द्विगुणस्तत .

३९. दे$_1$. ef ○. –a) शा$_1$ शाका॰, ब$_1$ **, दे$_5$ शाकं (→शाक ). –b) दे$_{6.8}$ दुग्धाब्धिसत्तम, ते$_1$ दुग्धाब्धिरुत्तमा

११.४८ रौरवाद्यास्ततो रौद्रः पुष्करो घोरदर्शनः ॥ ४८

सुकेशिरुवाच ।ꕥ

कियन्त्येतानि रौद्राणि नरकाणि तपोधनाः ।
कियन्मात्राणि मार्गेण का च तेषु स्वरूपता ॥ ४९

ऋषय ऊचुः ।ꕥ

शृणुष्व राक्षसश्रेष्ठ प्रमाणं लक्षणं तथा ।
सर्वेषां रौरवादीनां संख्या या त्वेकविंशतिः ॥ ५०
द्वे सहस्रे योजनानां ज्वलिताङ्गारविस्तृते ।
रौरवो नाम नरकः प्रथमः परिकीर्त्तितः ॥ ५१
तप्तताम्रमयी भूमिरधस्ताद्वह्नितापिता ।
द्वितीयो द्विगुणस्तस्मान्महारौरव उच्यते ॥ ५२
ततोऽपि द्विःस्थितश्चान्यस्तामिस्रो नरकः स्मृतः ।
अन्धतामिस्रको नाम चतुर्थो द्विगुणः परः ॥ ५३
ततस्तु कालचक्रेति पञ्चमः परिगीयते ।
अप्रतिष्ठं च नरकं घटीयन्त्रं च सप्तमम् ॥ ५४
असिपत्रवनं चान्यत्सहस्राणि द्विसप्ततिः ।
योजनानां परिख्यातमष्टमं नरकोत्तमम् ॥ ५५
नवमं तप्तकुम्भं च दशमं कूटशाल्मलिः ।
करपत्रस्तथैवोक्तस्तथाऽन्यः श्वानभोजनः ॥ ५६
संदंशो लोहपिण्डश्च करम्भसिकता तथा ।

---

(→°रद्वीपो) –c) शा1 कारा का2 दे6.8 दुर्ध(दे6 8 °र्द्ध)र्ष, दे1 दुर्द्दर्शो, दे2 तद्वर्ष, दे3 दुर्दशो, दे4 दुर्द्दशः, ते1 दुर्दशो, न1 दुधर्प (→दुर्दर्श ); ब2 °विह्तितो (→°रह्तितो). –d) ब2.3 दे2.3.5–8 न1 घोर- (→घोर ); दे1.3.5 ते1 कर्मार्थं°, दे6 कर्मा तु°, दे8 कर्मानु° (→कर्मान्त°).

ꕥ दे4 ऋषय उवाच, दे7 न1 ऋषयः.

४८. –a) का1 [तस्मिन्निशाचर द्वौ] पं. –b) दे6 * रका, दे8 ५.८ का (→नरका ). –c) शा1 ब3 °द्यास्तथो (ब3 °धा), दे8 °८ स्ततो (→°द्यास्ततो); ब3 दे5 रौद्रा (→रौद्र ). –d) दे4 पुष्करा, दे7 पुष्करे (पुष्करो), दे 4.7 °दर्शना (→°दर्शनः)

ꕥ शा1 दे7.9 न1 सुकेशि ; दे2 सुकेशिरु., दे4 सुकेशी उवाच,

४९. का1. ○. –a) शा1 कियत्ते-, का2 दे1.5.9 कियत्ति (दे 1.5 °ते), दे7 कियत्ये- (→कियन्त्ये ) –b). शा1 का2 ब2 दे1.4 6 7 °कानि (→°काणि). –c) दे7 मार्गेह, न1 मानेन (→ मार्गेण) –d) ब3 का वा (→का च).

ꕥ दे6. ○, शा1 दे2.7 न1 ऋषय ; दे4 ऋषय उवाच.

५०. दे8. a ○. –a) ब3 दे4 शृणु त्व (→शृणुष्व); दे3.7 राक्षस श्रेष्ठो (दे7 °ष्ठ ) (→राक्षसश्रेष्ठ) –b) दे1 'लक्षण' ○. –c) दे1 सर्वेषां (→सर्वेषां) –d) कारा. दे1 ते1 तक्ष्यया, दे8 संख्यया (→संख्या या).

५१. दे6. a ○. –a) ब1 सहस्र- (→सहस्रे). –b) दे1 ज्वलिताङ्गारि°, दे4 ज्वलनागार° (→ज्वलिताङ्गार°). का1 दे8 °विरत्वते, दे2.5.9 °विस्तृत (→°विस्तृते).

५२. –a) दे4 9 न1 तत्र (→तप्त-), का1 °मये, दे1 * यी (→°मयी). –c) ते1 द्वितीया (→द्वितीयो). –d) दे2 7.9 न1 इत्युत (दे2 °त), दे4 इत्युच्यते (→उच्यते).

दे8. ab, cd मध्ये आवृत्ता—

* द्वितीयो (?) द्वे सहस्रे ये जनाना ज्वलितागार विसत्वते
रौरवो नाम नरक प्रथम परिकीर्तित ॥
तप्तताम्रमयी भूमिरधस्ताद्वह्नितापिता । (= ५१–५२ ab) ।

५३. –a) दे1 3.4 ते1 ततोऽति- (→ततोऽपि), ब2 द्वि स्थित, ब3 * स्मृत, दे2 4.7 विस्तृत (→द्वि स्थितः), ते1 मन्यद (→अन्य ), दे6 ततोऽपि द्विगुण ( ?) तत्र, दे3 ततोऽपि द्विसुवर्णान्त, दे9 ततोस्थितश्चान्यतम. –b) दे5 नरका (क ?) स्मृत, दे8 नरकं स्मृत (→नरक स्मृत ). –d) शा1 का2 द्विगुणः परम्, ब1-3 दे4 7 न1 द्विगुणोऽपर, दे5 द्विगुण स्मृत (→द्विगुण पर)

५४. –a) दे8 ततस्तत (→ततस्तु), कारा. का1 दे1.२.4. 6 7 °सूत्रेति, ते1 °सूत्रेऽपि (→°चक्रेति). –b) दे7 पञ्चम (→पञ्चम ) –c) मुवे. तथा षष्ठ (→च नरक), कारा. मप्रतिष्ठश्च नरको. –d) कारा. घटीयत्र, दे2 घटायत्र, दे9 षष्ठं यत्र, ते1 घटयंत्रा (→घटीयन्त्र), कारा. सप्तम (→सप्तमम्).

५५. –a) शा1 अथ (→असि ), ब3 दे3 न1 चान्यं, दे2 चास्य (→चान्यद् ). –b) का1 सहस्र परिगीयते, ब1 सहस्राणि [द्वि] सप्त (ता )ति. –d) दे9 अष्टकं (→अष्टम); दे4 नरकाधमं (→नरकोत्तमम्)

५६. –a) का1 तप्तकुड, दे3 यत्रकुम्भं, दे9 न1 सप्तकुम्भं (→तप्तकुम्भ), दे3 सप्तकुभं च दशम. –b) ब2 कुट्ट, दे3 कू*, दे6.8 कूल° (→कूट°), शा1 कारा. का1 2 ब1.2 दे4 °शाल्मलिम्, दे9 °शाल्मलि (→°शाल्मलि ). –c) दे7 °पत्र (→°पत्र ), दे2 तथैवान्य, दे7 तथैवोक्ते, न1 तथा चोक्त (→तथैवोक्त). –d) ब3 दे1.5 तथान्य-, दे7 तथान्यद, दे8 तथास (→तथान्य ), ब3 -श्वानभोजन, दे6 श्वानभोजन, दे7 °श्व श्वभोजन, दे9 श्वनं(न?)भोजनं (→श्वानभोजन). न1 तथा चान्यश्वानभोजनः.

५७. ब1-2. cd ○. –a) शा1 सन्दंशो, का2 संदेशो, ब3

घोरा क्षारनदी चान्या तथान्यः कृमिभोजनः ।
तथाऽष्टादशमी प्रोक्ता घोरा वैतरणी नदी ॥ ५७
तथाऽपरः शोणितपूयभोजनः
क्षुराग्रधारो निशितश्च चक्रकः ।
संशोषणो नाम तथाप्यनन्तः
प्रोक्तास्तवैते नरकाः सुकेशिन् ॥ ५८

इति श्रीवामनपुराणे एकादशोऽध्यायः ॥

# १२

सुकेशिरुवाच ।※
कर्मणा नरकानेतान् केन गच्छन्ति वै कथम् ।
एतद्वदन्तु विप्रेन्द्राः परं कौतूहलं मम ॥ १

ऋषय ऊचुः ।※
कर्मणा येन येनेह यान्ति शालकटंकट ।
स्वकर्मफलभोगार्थं नरकान् मे शृणुष्व तान् ॥ २ बं. १२

संदंशं, दे7 सदंशो (→सदंशो), शा1 दे5 लोहपिण्ड च, दे9 लोहकाड च, न1 लोहिपिंडश्च (→लोहपिण्डश्च). –b) कारा. °सिकत, दे7 °सिकर (→°सिकता) –c), दे4 तथा क्षार, दे5.6.8 घोरा क्षारा (दे5 °रो), (→घोरा क्षार-), दे4 दुर्गा, दे5 चान्यो, दे: पूया (?) (→चान्या), दे9 घोराक्षरादिनामान्या. –d) का1 दे1-3 8. ते1 तथान्या, का2 तथान्या, दे5 तथान्य-, दे7.9 तथान्यत्, न1 तथा (चा) न्य (→तथान्य): का2 °भोजना, दे1-3 9 ते1 °भोजना, दे6.7 °भोजनम् (→°भोजन) –e) दे8 तथाष्ट° (→तथाऽष्टा°): दे5 8 °दशम (→°दशमी).

५८. –a) दे°8 थोणि° (→शोणि°), दे6 °पर ***, दे8 °ता *** (→°पूयभोजन) –b) दे6 8 त्रु (?) राग्र°, दे7 क्षुरोग्र°, दे9 क्षुराभ° (→क्षुराग्र°), दे1.7.9 न1 चक्र, दे4 श चक्र, दे5.6 8 च (दे5 8 व ?) क्रग (दे5 °क), दे7 नक्र (→चक्रक). –c) दे1.3.5 6.8 ते1 तथापि चान्ते (दे6.8 न्त) (→तथाप्यनन्त), ब3 इत्येक विंशतिविकाररूपा (?). –d) शा1 कारा. का1.2 ब1 प्रोक्तास्तथैते, दे4 प्रोक्तस्तथा वै, दे8 प्रोक्तासेते (→प्रोक्तास्तवैते): दे4 नरकः (→नरका): कारा. ब1 दे9 सुकेशे, ब3 सुकेशि (→सुकेशिन्): ब2 दे7 प्रोक्तास्तवैते नरका सुकेश (दे7 °शि).

ब1.2 ५८ ab स्थाने पाठ —

● क्षुराग्रधारो निशितश्चक्रस्तथासिपत्रवन सुविस्तरं. ब3 पाठस्तु

क्षुराग्रधारनिशितश्च चक्रसशोषणो नाम तथाप्यनन्त ।

पुष्पिका—शा1 का1 2 दे1-3.5.6 8 ते1 न1 इति श्री (दे1.5 8 [श्रो]) वामनपुराणे भुवनकोशे, कारा. ब2 दे4 7 इति श्री कारा. ब2 [श्रो]) वामनपुराणे, ब1.3 इति श्री (ब3[श्री]. वामनपुराणे भैरवप्रादुर्भावे, दे9 श्रीवामनपुराणे, मुत्रे. इति श्रीवामनपुराणे पुलस्त्यनारदसंवादे. अध्यायनाम—ब1 3 दे4 6-7. शा1 का1 दे1 3.5.8.9 ते1 न1 पुष्करद्वीपवर्णन नाम, कारा. सप्तद्वीपाब्धिनरक-निर्देशो नाम अध्यायसंख्या—दे2.5.8 ○, शा1 का1 2 दे3 6.7.9 न1 मुत्रे, एकादशोध्याय; कारा. पंचदशोध्याय, ब1-3 दे4 तृतीयोध्याय: दे1 ।११।, ते1 द्वादशोऽध्याय: ।

१२

※ शा1 का1 दे7 9 न1 सुकेशि, दे1 सुकेशिरु, दे4 सुकेशी उवाच.

१. –b) ब1 2 भो द्विजा, ब3 केनचित्, दे2 वं नरा, दे4 मानवा, दे7 केऽर वं, दे9 के च ते, न1 के च वं (→वै कथम्). –c) न1 एव (→एतद्): शा1 वदन्ति, का1 दे1 3 5.9 ते1 वदत (→वदन्तु), ब1 2 भो विप्रा (→विप्रेन्द्रा) –d) ब3 हि न, दे4 हि मे (→मम).

※ का1 दे5.7 9 न1 ऋषय: दे2 ऋषय ऊ, दे4 ऋषय उवाच.

२. –b) दे3 °कट, दे4 °कट, दे9 न1 °कटे (→°कट), शा1 कारा का1.2 याति शा म लिकड(कट ?)कन् –c) ब3 दे7.9 यान्या (दे7 °न्या) अ कर्म°, दे2 कर्मणा फल° (→स्वकर्मफल°), न1 °भोगार्थान् (→°भोगार्थं) –d) ब3 दे4 नरकांस्तान्, दे7 नारकास्त्व, दे9 न1 नरकास्त्व (→नरकान्मे), ब3 शृणुष्व मे, दे1.3 शृणुष्व तत्, दे4 शृणुष्व न, दे11 शृणुष्व:, ते1 शृणुष्व तत् (→शृणुष्व तान्).

१२.३ वेददेवद्विजातीनां यैर्निन्दा सततं कृता ।
ये पुराणेतिहासार्थान् नाभिनन्दन्ति पापिनः ॥ ३
गुरुनिन्दाकरा ये च मखविघ्नकराश्च ये ।
दातुर्निवारका ये च तेषु ते निपतन्ति हि ॥ ४ ॥
सुहृद्दम्पतिसोदर्यस्वामिभृत्यपितासुतान् ।
याज्योपाध्याययोर्यैश्च कृतो भेदोऽधमैर्मिथः ॥ ५
कन्यामेकस्य दत्त्वा च ददत्यन्यस्य येऽधमाः ।
करपत्रेण पाट्यन्ते ते द्विधा यमकिङ्करैः ॥ ६
परोपतापजनकाश्चन्दनोशीरहारिणः ।
बालव्यजनहर्त्तारः करम्भसिकताश्रिताः ॥ ७

निमन्त्रितोऽन्यतो भुङ्क्ते श्राद्धे दैवे सपैतृके ।
स द्विधा कृष्यते मूढस्तीक्ष्णतुण्डैः खगोत्तमैः ॥ ८
मर्माणि यस्तु साधूनां तुदन् वाग्भिर्निकृन्तति ।
तस्योपरि तुदन्तस्तु तुण्डैस्तिष्ठन्ति पत्त्रिणः ॥ ९
यः करोति च पैशुन्यं साधूनामन्यथा मतिः ।
वज्रतुण्डनखा जिह्वामाकर्षन्तेऽस्य वायसाः ॥ १०
मातापितृगुरूणां च येऽवज्ञां चक्रुरुद्धताः ।
मज्जन्ते पूयविण्मूत्रे त्वप्रतिष्ठे ह्यधोमुखाः ॥ ११
देवताऽतिथिभूतेषु भृत्येष्वभ्यागतेषु च ।
अभुक्तवत्सु येऽश्नन्ति बालपित्रग्निमातृषु ॥ १२

---

३. –a) ब1-3 दे4.5 देववेद°, दे1.3.7 न1 देवदेव°, दे9 वधदेव°, ते1 वेदवेद° (→वेददेव°) –d) ब3 दे6.11 अभिनिन्दन्ति (→नाभिनन्दन्ति).

४. –a) दे9 गुरोर्निन्दा° (→गुरुनिन्दा°), ब1 °रता (→°करा), दे5 येन (→ये च). –b) ब2 दे6.11 °निन्दा° (→°विघ्न°). –c) का2 निन्दाकरा, दे3 विकारका, दे7 निरोधका (→निवारकाः). –d) ब1 3 तेष्वे(ष्वे ?)तेषु (→तेषु ते नि ); दे4 निवसति हि, दे7 निपतन्ति च (→निपतन्ति हि)

५. दे1. ○. –a) शा1 का1.2 सुहृद प्रति, कारा. सौहार्द्दं दत्त्वि, दे6 सुहृदं * ति (→सुहृद्दम्पति-), ब1 सुहृच (यो ?) पित° ब2 सुहृद्पित° (→सुहृद्दम्पति°), शा1 दे3.5 सौन्दर्यं (दे3 °र्य°), का1.2 सोदर्य, (→-सोदर्य-), दे4 ते1 °सौदर्य° (→°सोदर्य°). –b) कारा. का1 2 °पितृसुतान्, ब1 दे3 9 10 ते1 न1 °पितासुतं (न1 °ते), दे2 °पितृन्सुतान्, दे4 °पितामहान्, दे7 °सुतासु च (→°पितासुतान्). –c) शा1 कारा. का1.2 दे1 3.10 ते1 याज्याध्यापकयोयेश्च (दे1 3-10 ते1 °श्चैव), दे4 याज्यापाध्याययोश्चैव, दे7 शिष्योपाध्याययोश्चैव. –d) शा1 कारा, का 1.2 ह्यधर्मत (→[-ध]धर्मैर्मिथ ).

६. दे1. ab ⊙. –a) ब3 [-अ]व (→च). –b) शा1 का2 दे3.10 ददन्त्य°, दे7 ददात्य° (→ददत्य°), दे- येऽधम- (→येऽधमाः). –c) का1 पातयन्ते (→पाट्यन्ते), न1 निपीड्यन्ते (→पाट्यन्ते). –d) दे2 द्विमा (→द्विधा), दे9 °कारकै (→°किङ्करैः)

७. न1. ○, दे9. cd ○. –a) दे7 °का ये च (→°जनका:); दे4 परतापकरा ये च. –b) ब1.3 कर्पूरो° (→चन्दनो°), ब2 कर्पूरोशीर° (→कर्पूरोशीर°). –c) शा1 का1 °हर्तारः, ब1.3 हर्ता च (→°हर्तारः). –d) शा1 का1 श्रित, (→°श्रिताः), का1 करम्भसिकताश्रित ,+गृहभङ्ग करोति य .

८. दे9 न1 ○. –a) दे8.11 न्यमन्त्रितो (→निमन्त्रितो): दे4 निमन्त्रिताश्च नो भुङ्क्ते. –b) का1 दे7.2 दैवे च, ब1.3 दे1-4.10 दैवेऽथ (→दैवे स-), ते1 श्राद्धादावपि (→श्राद्धे दैवे स-). –c) दे1.3.5.6-10.11 ते1 मर्त्यं (→मूढः); ब1.2 कृष्यते सोधमो मूढ-.

९. दे9 न1. ○. –a) ब3 कर्माणि (→मर्माणि). –b) दे2 तीक्ष्ण- (→तुदन्), दे4 त्वाग्भि (→वाग्भि.). –c) शा1 कारा. का1.2 तुद(का1 °दु)न्तस्ते, ब3 तु दन्ताश्च, दे3.10 ते1 वदन्तस्तु (→तुदन्तस्तु). –d) ब3 दे7 पक्षिग (→पत्रिण ), दे11 तीक्ष्णन्तुण्डे पतत्रिण.

१० –a) ब1 [य करोति च]. –b) दे8 व्रत , दे11 जन (→मति ) –c) न1 वक्र° (→वज्र°): कारा. °तुण्डैर्नखैर् (→°तुण्डनखा ), शा1 दे1-3 4.10 ते1 °निभा (दे1.3.4 °भां), का1.2 °नखै , दे7 °खगा, दे11 °नखा (→°नखा). –d) कारा. का1 2 आकर्षन्त्यस्य, दे4 नाकर्षन्तेस्य, दे5.7 आकर्षन्तस्य, दे9 आकर्षन्तेऽत्र (→आकर्षन्तेऽस्य).

११. –a) ब3 दे4.7 मातापित्रोर् (→मातापितृ-), का1 दे2.9 पितृमातृ°, दे3 ते1 मातृपितृ° (→मातापितृ°), ब1.2 ये (→च) –b) ब1 मवज्ञां, ब2 स्ववज्ञां (→येऽवज्ञां), दे4 चक्रुर्मुधता , दे7 कुर्युरुद्धताः (→चक्रुरुद्धता ). –c) कारा. ब1.3 दे11 मज्जन्ति (→मज्जन्ते). –d) ब1 त्वप्रतिष्ठे, दे2 त्वं प्रतिष्ठे (→त्वप्रतिष्ठे), शा1 कारा. का1.2 दे2 °मुखम् (→°मुखा ): ब3 त्वप्रतिष्ठे त्ववाङ्मुखा , दे4 ते पतिष्यन्त्यधोमुखा , दे7 ते प्रतिष्ठन्त्यधोमुखा , दे9 त्वप्रतिष्ठोत्यधोमुखा .

१२. –a) ब1.2 दे2.4.7.9 न1 °भृत्येषु (→°भूतेषु) –b) ब2 दे2.4.7.9 न1 भूतेष्व° (→भृत्येष्व°). –c) दे7 अभुक्तो ये तु खादन्ति. –d) शा1 कारा. का1 ब3 दे3 °पित्राग्नि° (→°पित्रग्नि°): दे7 °मित्रेषु (→°पित्राग्नि-).

दुष्टासृक्पूयनिर्यासं भुञ्जते त्वधमा इमे ।
सूचीमुखाश्च जायन्ते क्षुधार्ता गिरिविग्रहाः ॥ १३
एकपङ्क्त्युपविष्टानां विषमं भोजयन्ति ये ।
विड्भोजनं राक्षसेन्द्र नरकं ते व्रजन्ति च ॥ १४
एकसार्थप्रयातं ये पश्यन्त्यश्चार्थिनं नराः ।
असंविभज्य भुञ्जन्ति ते यान्ति श्लेष्मभोजनम् ॥ १५
गोब्राह्मणाग्नयः स्पृष्टा यैरुच्छिष्टैः क्षपाचर ।
क्षिप्यन्ते हि करास्तेषां तप्तकुम्भे सुदारुणे ॥ १६
सूर्येन्दुतारका दृष्टा यैरुच्छिष्टैश्च कामतः ।
तेषां नेत्रगतो वह्निर्धम्यते यमकिंकरैः ॥ १७
मित्रजायाथ जननी ज्येष्ठो भ्राता पिता स्वसा ।
जामयो गुरवो वृद्धा यैः संस्पृष्टाः पदा नृभिः ॥ १८
बद्धाङ्घ्रयस्ते निगडैर्लोहैर्वह्निप्रतापितैः ।
क्षिप्यन्ते रौरवे घोरे ह्याजानुपरिदाहिनः ॥ १९
पायसं कृशरं मांसं वृथा भुक्तानि यैर्नरैः ।
तेषामयोगुडास्तप्ताः क्षिप्यन्ते वदनेऽद्भुताः ॥ २०

---

गुरुदेवद्विजातीनां वेदानां च नराधमैः ।
निन्दा निशामिता यैस्तु पापानामिति कुर्वताम् ॥ २१ वे. १२.

---

१३. न1. ab ○. –a) ब1 2 दृष्टारः (ब1 [*]) पूय°, ब3 देष्टार पूय°, दे1.3.5.6.10.11 दुष्टास्ते पूय°, दे9 दृष्टासित्युश°, ते1 दुष्टा वै पूय° (→दुष्टासृक्पूय°), दे4 विष्टा पूयस्य (→दुष्टासृक्पूय), दे5 दुष्टास्ते पूय (वि) निर्यासा, दे7 विश्वासपूय निर्यासा. –b) कारा. तेऽधमा (→त्वधमा) दे4 तेऽधमा ध्रुव, दे9 नरकेष्विमे (→त्वधमा इमे).

१४ –a) न1 °पङ्क्तू° (→°पङ्क्त्यु°). –c) दे3 ते विड्भोज्यं, दे9 विडोजनं (→विड्भोजन).

१५. –a) ब1 एकस्यार्थ°, दे6 एकशा (ते1 °सा)र्थ° (→एकसार्थ°), ते1 एकसार्थं, न1 एकस्यार्थं (→एकसार्थ-), शा1 °प्रयाते ये, ब2 3 दे1-3 5.10.11 °प्रयाताश्च (ब1 ये, दे2 °ना), दे9 प्रयान्त ये (→°प्रयातं ये), ते1 प्रयाताश्च, न1 प्रयच्यन्ते (→प्रयातं ये), ब1 दे6 एकस्या (दे6 °शो)र्थप्रयाताश्च- –b) ब3 पश्यन्त, दे2 क्लिश्यन्त, दे4 क्लेश्यन्तं, दे5 पश्यंते, दे9 घसन, न1 घसन्त (→पश्यन्त ); ब1 चार्थिनं (→श्चार्थिनं); ब3 दे2 4.7.9 नरम् (→नरा ). –c) ब2 अल, दे4 अन्नं (→असं-), दे11 सविभज्य च भुञ्जन्ति. –d) दे7 ये याति, ते1 यांति ते (→ते यान्ति); ब3 °भोजिन, दे2 °भाजन (→°भोजनम्).

१६. ब1.2. cd ⊙; दे3 १६ cd इत्यारभ्य १७ ab इति यावत् नास्ति. –a) दे7 स्पृष्टा (→स्पृष्टा) –b) दे7 मस्तुतिष्ठं दे11 यैरुत्सृष्टै (→यैरुच्छिष्टै ); दे2 नराधमै, दे3 च कामता, दे4.10 क्षिपाचर, दे9 निशाचर (→क्षपाचर). –c) का1 क्रिकरैस्ते च, दे9 हि करास्ते तु (→हि करास्तेषां). –d) न1 °णम् (→°णे).

१७ दे3. ab ⊙. (द्र. १६ या वि.) ब1 सूर्यस्त्व° (→सूर्येन्दु°), दे7 तु तारकान् (→तु तारका), ते1 °तारकान् (→°तारका), का2 दृष्टा, ब1 दे4.6.7 दृष्टा (→दृष्टा); दे1 -यैरुत्सृष्ट: (→दृष्टा ). –b) दे1 * ह° दे7 यैनु (?) (→यैरु°); ब1.2 दे4.7.9 न1 तु (→च).

१८ –a) ब1-3 मित्र (→मित्र-), दे1 °जा यथा, दे3 °जाया तु, दे4 °माजाय-, दे7 °जायार्य-, दे9 °जानार्य (→°जायाथ). –b) ब3 [**]स्वसा, दे4 °पितासुता, दे9 °पितृस्वसा (→°पिता स्वसा). –c) ब3 दे5.11 यामयो, दे7.9 ज्ञातयो (→जामयो), दे9 न1 गुरुवृद्धा ये (दे9 °यै ) (→गुरवो वृद्धा ). –d) दे9 न1 संस्पृष्टास्तु (→यै संस्पृष्टा ). दे4- दिभि, दे11- तिभि (→नृभि).

१९. दे2 9 cd ⊙ –a) दे7.9 न1 निगलै (→निगडै ), –b) दे9 न1 लोह (→लोहैर्) –c) ब2 नरके (→रौरवे), शा1 कारा. का1.2 अगाररराशिमध्यस्था . –d) ब3 दे3 ते1 न1 माजानु° (→°ह्याजानु), शा1 कारा. का1.2 तिष्ठत्याजानुदाहिन (का1 °त ).

न1 पुस्तके पूर्वार्द्धोत्तरार्द्धयो क्रमव्यत्यासेनायं पाठ —

38 ● क्षिप्यन्ते रौरवे घोरे ह्याजानुपरिदाहिन ।
बद्धाङ्घ्रयस्ते निगडैर्लोहैर्वह्निप्रतापितै ।

२०. शा1 कारा. का1.2 दे2. ⊙. –a) ब1 कृपर, ब2.3 दे1.3 6 कृशरा, दे7.10 कृशरा (→कृशर). –b) ब1 भक्तानि (→भुक्तानि), दे9 न1 यैरिह (→यैर्नरै ) –c) दे7 °मुखा कूरा, दे9 न1 °गु (दे9 °ग) स्तस (→°गुडास्तप्ता ) –d) दे5.9.11. न1 क्षिप्यने, दे7 क्षप्यंते (→क्षिप्यन्ते), ब1 °नाद्भुता, दे5 °नाद्भुता, दे- °नेद्भुता, दे3 °नेऽद्भुत , न1 °नान्तरे (→°नेऽद्भुता )

२० श्लोकस्य स्थाने शा1 कारा का1.2 अय पाठ—

* यैं सारजमन्यथा प्रोक्तमुपति (कारा. का2 °दि) ष्टमसत्तया ।
प्रतप्तास्सित्वचास्तेषां क्षिप्यन्त वदनेषु ता (का1 तै ) (का2 °शुभा).
[का2 वदनेशुभ (→वदनेषु ता ].

२१. –a) कारा. °वेद° (→°देव°) –b) शा1 कारा. का1.2 दे2 देवताना, ब1.3 दे7.9 न1 देवानां च (→वेदाना च). –c) दे2 3 -निन्दा श्रुता, दे4 -निशामिते (→निशामिता). दे9 न1 निन्दा श्रुता यैः पापिष्ठै . –d) ब1-3 दे1-3.5.9 10. °नामभि-, दे5 °नामपि-, दे7 °नामधि-, दे6.11 °नां प्रति- (→°नामिति).

१२.२२ तेषां लोहमयाः कीला वह्निवर्णाः पुनः पुनः ।
श्रवणेषु निखन्यन्ते धर्मराजस्य किंकरैः ॥ २२
प्रपादेवकुलारामान् विप्रवेश्मसभामठान् ।
कूपवापीतडागांश्च भङ्क्त्वा विध्वंसयन्ति ये ॥ २३
तेषां विलपतां चर्म देहत क्रियते पृथक् ।
कर्त्तिकाभिः सुतीक्ष्णाभिः सुरौद्रैर्यमकिंकरैः ॥ २४
गोब्राह्मणार्कमग्निं च ये वै मेहन्ति मानवा ।
तेषा गुदेन चान्त्राणि विनि.कृन्तन्ति वायसाः ॥ २५

स्नपोषणपरो यस्तु परित्यजति मानवः ।
पुत्रभृत्यकलत्रादिबन्धुवर्गमकिञ्चनम् ।
दुर्भिक्षे सम्भ्रमे चापि स श्वभोज्ये निपात्यते ॥ २६
शरणागतं ये त्यजन्ति ये च बन्धनपालकाः ।
पतन्ति यन्त्रपीडे ते ताड्यमानास्तु किंकरैः ॥ २७
क्लेशयन्ति हि विप्रादीन् ये ह्यकर्मसु पापिनः ।
ते पिष्यन्ते शिलापेषे शोष्यन्तेऽपि च शोषकैः ॥ २८
न्यासापहारिणः पापा बध्यन्ते निगडैरपि ।

२२ —a) शा1 कारा बा1 लोहमया (शा1 °य ) दे० लोह्मपि, दे4 वह्निमया (→लोहमया ) —c) दे5 निषगन्त, दे6 11 निष(दे6 °ख)ध्यन्ते, तै1 निखन्या तु (→निखन्यन्ते) दे7 सुवक्त्रषु विशन्त्येते d–) दे9 किकरस्तु भयकर

२३ —a) का1 °लया°, (→°कुला°) ब3 °गृहारामान्, दे9 °गृहाराम (→°कुलारामान्) कारा ब1 2 दे1-7 9 10,11 तै1 °राम (→°रामान्) —b) दे4 °सभाशयान्, दे7 °सभासये, दे9 °मठान्सभा°, न1 °सन्ना मठान् (→°सभामठान्) —c) का2 ब1 दे5 10 वापीकूप° (→कूपवापी°), दे1 3 7 तै1 °तडागानि (→°तडागांश्च), दे4 वापीकूपह्रडागानि —d) दे11 न1 न वा (→भङ्क्त्वा) दे4 रूक्षाणि, दे7 मक्षाणि, (?) (→भङ्क्त्वा वि )

२४ —a) दे9 बिलु° (→विल°), दे11 घर्म (→चर्म) —b) दे2 क्रियत (→क्रियते) —c) शा1 ब० कात्तिकाभि, दे० कतृकाभि, दे1 कटकाभि, दे10 कर्त्तरीभि, न1 वर्तिकाभि (→कर्तिकाभि ) दे9 कर्णिकाभिस्तु तीक्ष्णाभि —d) दे4 सुरेन्द्र, न1 सुरैंद्र (→सुरौद्र )

२५ —a) दे4 °कर्मग्नि च, दे9 °कवह्नीगान्, न1 °कवह्नींश्च (→°कर्मग्नि च) कारा शा विप्रमकर्मग्नि च —b) ब1 3 न1 अभि दे7 ये प्र दे9 ये द्रु (→ये वै) दे4 ब्राह्मणा (→मानवा ) —c) शा1 का1 2 गुदेषु चान्त्रा (का1 °न्त्रा)णि, ब1 ० गुदेभ्य (?)चमाणि, दे2 4 गुदेभ्यश्चान्त्राणि दे7 गुदेभ्यश्चा त्राणि (→गुदेन चान्त्राणि) दे9 तेषामाक्रम्य नेत्राणि, न1 तुण्डेन तेषा नेत्राणि —d) कारा विनिष्कर्षन्ति, ब1 3 विनिष्कामन्ति, ब2 विनिचक्रामन्ति दे5 विनिकृन्तन्ति, दे7 विनिकर्षन्ति न1 विनिष्कुपन्ति (च) (→विनिकृन्तन्ति)

२६ —a) दे11 स्पो° (→ स्वपो°) —b) ब2 °जन्ति (→°जति) —c) कारा दे4 °मित्र° (→°भृत्य°) —e) दे2 सभ्रम दे4 नरके न1 सत्यजे (→सभ्रमे) ब1 दे7 9 वापि (→चापि) —f) शा1 का1 2 ब1 2 दे1 3 स श्वयोनौ, ब3 सोऽश्वभोज्ये, दे6 11 पशुयोनौ, दे7 स श्वभोजे, दे10 सश्च योनौ, तै1 सर्पयोनौ, (→स श्वभोज्ये) शा1 निपातिते (→निपात्यते) कारा सोप्येन यमकिंकरै

२६ श्लोकात्पर कारा अधिकम्—

39* उद्धृत्य दन्तानि मुखात्स्वमांसान्यश्नुते क्षुधा ।

२७ —a) शा1 का1 ० दे5 11 त्यजन्ति ये, ब3 त्यजति यो, दे1 3 तै1 त्यजन्तीति, दे9 न1 यस्त्यजति (→ये त्यजन्ति) —b) ब3 यश्च बान्धव°, दे4 7 पशुबन्धन°, दे9 न1 य (न1[य])श्च बन्धून° (→येच बन्धन°), ब3 दे9 न1 °लक, दे1 °लिका (→°लका ) —c) न1 पतते (→पतन्ति), ब1 मन्द्रपीडे ते, ब2 ते यन्त्रपीडे, दे1-3 10 तै1 यन्त्रपीठ वै (दे10 ते), दे4 यत्र पीडा ते, दे5 यन्त्रपीठघप्सु, दे6 1 11 यत्र पीड्यन्ते, न1 यन्त्रपीठसौ (→यन्त्रपीडे ते), दे9 पतत्रिणश्च पीडन्त —d) ब2 ताड्यमानत्तु (नास्तु ?) किङ्करैः, ब3 दे9 ता (दे9 पि) ड्यन्ते यमकिंकरै, न1 पीडितो यमकिंकरै.

२७ श्लोकात्पर न1 अधिकम्—

40* एतस्य ते भवेत्तेषा यैरिमै दुष्कृता कृता ।

२८ —a) दे2 ये क्लेशयन्ति, दे4 केशयन्ति हि, दे5 कुशयति (?) हि (→क्लेशयन्ति हि) —b) शा1 कारा का1 2 पापकर्मसु, ब1 येज्यकर्मस्य, दे1 3 11 तै1 त्याज्यकर्मसु, दे० 5 6 10 याज्यकर्मसु, दे4 ये विकर्मसु, दे7 ये विकर्मभि (भि ?) दे9 ये च कर्मसु न1 प्रष्य-कर्मसु (→येह्यकर्मसु) —c) शा1 पिशन्ते, का1 पिशन्ते, का2 पिष्टन्ते, दे4 पतन्ति, दे6 पीड्यन्ते दे7 पिष्टान्ते, तै1 पेष्यन्ते (→पिष्यन्ते) शा1 कारा का1 2 दे1 3 5.6 10.11 तै शिलाया वै (दे1 वै) दे2 शिलायन्त्रै, दे9 शिलापेषै, न1 शिलापापै (→शिलापेषे) —d) ब1 शोषन्तेऽपि ब3 शुष्यन्ते चापि, दे1 शोष्यतेपि, दे4 शोष्यन्ते वै (→शोष्यन्तेऽपि) शा1 कारा का1 2 हि (→च) शा1 शोषकै, ब3 दे4 शोषके, दे7 शोषणे (→शोषकै ).

२९ —a) दे5 श्वासा° (→न्यासा°) न1 °हरणे (→°हारिण ), दे7 पापाद् (→पापा) —b) दे4 बाध्यन्ते, दे9 विध्यन्ते (→बध्यन्ते) दे9 निगलै° (→निगडै°) —c) शा1 का2

क्षुत्क्षामाः शुष्कताल्वोष्ठाः पात्यन्ते घ्रश्विकाशने ॥ २९
पर्वमैथुनिनः पापाः परदाररताश्च ये ।
ते वह्नितप्तां कूटाग्रामालिङ्गन्ते च शाल्मलीम् ॥ ३०
उपाध्यायमधःकृत्य यैरधीतं द्विजाधमैः ।
तेषामध्यापको यश्च स शिलां शिरसा वहेत् ॥ ३१
मूत्रश्लेष्मपुरीषाणि यैरुत्सृष्टानि वारिणि ।
ते पात्यन्ते च विण्मूत्रे दुर्गन्धे पूयपूरिते ॥ ३२
श्राद्धातिथेयमन्योन्यं यैर्भुक्तं भुवि मानवैः ।
परस्परं भक्षयन्ते मांसानि स्वानि बालिशाः ॥ ३३
वेदवह्निगुरुत्यागी भार्यापित्रोस्तथैव च ।
गिरिशृङ्गादधःपातं पात्यन्ते यमकिंकरैः ॥ ३४
पुनर्भूपतयो ये च कन्याविध्वंसकाश्च ये ।
तद्गर्भश्राद्धभुग् यश्च कृमीन्भक्षेत्पिपीलिकाः ॥ ३५
चाण्डालादन्त्यजाद्वापि प्रतिगृह्णाति दक्षिणाम् ।
याजको यजमानश्च सोऽश्मान्तः स्थूलकीटकः ॥ ३६
पृष्ठमांसाशिनो मूढास्तथैवोत्कोचजीविनः । कं. १२.

---

दे4 7 °क्षाम- (→°क्षामाः), का1 °क्षामा ,+°क्षाम-, न1 °क्षामे (→°क्षामा ), ब1 शुल्कताल्वाद्या , दे1.3 शुष्कवदना (→शुष्कताल्वोष्ठा ), दे7 -कण्ठतास्वोष्ठा (→शुष्कताल्वोष्ठा ) —d) कारा पाट्यन्ते, का2 पीड्यन्ते, दे9 प्रारयते (→पात्यन्ते); शा1 कारा. का1.2 °कानने , दे1 °साशने, दे5 °काशन , दे7 °कानने, न1 °काशना (→°काशने).

३०. —a) दे3 (स) पर्व°, दे7 पर्य° (→पर्व°), शा1 पाप. (→पापा ) —c) कारा. दे9 न1 °तप्तकूटाग्राम् , का2 °तप्तां कूटाग्राम् ,+तप्ता कूटाग्राम्, दे1.3 °कूटां तप्ताग्राम् , दे2 °तप्तां कूटाग्राम् , दे4 °प्रकूटाग्रम् , दे5 °तप्ता कूटाग्राम् , दे7 °तप्तकूटाग्रम् , दे11 °तप्ताकूटाग्रा (→°तप्तां कूटाग्राम्). —d) कारा. मालिङ्गयन्, दे2 मालिनं ते च, दे4 मालिङ्गन्ति [च], दे- मालिङ्गन्ति (→मालिङ्गन्ते च), शा1 कारा. का1.2 दे4.7.9 °लिम् , दे11 °लो. (→°लीम्)

३० श्लोकात् परं न1 अधिकम्—

41 • स्वकीयामङ्गनां (नां ?) त्यक्त्वा ये वेश्यागामिनो नरा ।
[ते ?] वह्नितप्तसर्वाङ्गामालिङ्गन्ते हि शाल्मलीम् ॥

३१. —a) ब1-3 दे1.5.7.9 न1 कृत्वा (दे5 °त्वां) (→°कृत्य). —b) ब2.3 दे1.3 द्विजोत्तमै , दे3 नराधमै (→द्विजाधमैः ). —c) दे1.3.4.7 भूतवा° (→तेषाम°), दे4 यस्तु (→यश्च), दे9 तेषामध्ययवेर्शाभ (?). —d) शा1 सलिलां, का2 दे4 सलिलं, दे9 केनांश (→शिलां), न1 तान् सर्वान् शाल्मली वहेत् .

३२. —b) ब1 2 दे1.3 यैरपिष्टा°, दे3 मरसृष्टा° (?), दे3 यैस्तु सृष्टा° (→यैरुत्सृष्टा°). —c) ब1.2 दे4 न1 हि, ब3 दे7 ह (→च), दे3 विण्मूत्रेण निपात्यन्ते. —d) दे3 °पूर्जिते, दे7 °शोणिते (→°पूरिते).

दे3 ab, cd मध्ये अधिकम्—

• भ्रातुस्तावदेव (?) ज्येष्ठस्य ये वै भार्योपगामिन ।

३३. —a) शा1 श्राद्धातिथ्ये°, का1 श्राद्धतिथ,+श्राद्धतिट (?), ब1.3 दे2.4.6.7 10.11 ते1 श्राद्धे तिथे°, दे1 श्राद्धतिथे°, दे3 श्रद्धेतिथे°, न1 श्रद्धातिथे° (→श्राद्धातिथे°). का2 श्राद्धेतिथो (→श्राद्धेतिथे-), —c) कारा. दे4.7.10 °यन्ति, दे1 °यन्त, न1 °यन्तो (→°यन्ते) —d) ब1 स्वमांसानि च, ब2.3 दे2.4-6.11 ते स्वमांसानि (→मांसानि स्वानि), शा1 का1.2 स्वमांसानि च केवलम् , कारा. ते स्वमांसानि केवलम् , दे7 मांसानि स्वानि स्वानि स°.

३४. —a) दे1.3 देव° (→वेद°), दे11 °विह्नि° (→°वह्नि°). —b) शा1 कारा. का1.2 भार्यापित्रो , दे1.3.4.6.7 10 ते1 मातापित्रो , दे2 भार्या मित्रम् , दे9 भार्यापुत्रो (→भार्यापित्रो ) —c) ब3 °दधोजान्, दे3 °दधोपात्य, दे11 मधोपात (→°दधः पातं); दे4 तस्य राक्षसगात्राणि, दे7 रौद्रामष्टदवान्मत्त , दे9 पानादिषु च यो मत्त, न1 स सर्वथाप्यधोमर्त्यं . —d) ब3 न1 पायन्ते, दे4 पात्यन्ते (→पात्यन्ते).

३५ दे1. cd ⊙, दे3. d○. —b) दे2 कन्यां (→कन्या-). —c) कारा. तद्गृहे (→ तद्गर्भ-), ब1.2 °श्राद्धयस्तु, दे9 °श्राद्धमप्यश्च, मुद्रे. °श्राद्धश्च (→°श्राद्धभुग्यश्च) —d) कारा. कृमीन्भक्षेत् , का1-2 दे9 किमिभक्षे, ब2 तान्भक्षेय , ते1 कृमीन्रक्षेत्, न1 क्रिमिभक्ष- (→कृमीन्भक्षेत्), कारा पिपीलिकान्, का1 पिपीलिका,+पतति ते, दे2 न1 पिपीलिक, दे4 निरोक्ष्यते (→पिपीलिका).

३६. दे1. ○, दे3. abc ○ —a) का2 याजको° (→याजको°); दे9 न1 वापि (→वापि) —b) का2 °गृह्णन्ति, दे4 °गृह्णन्तु (→°गृह्णाति), दे11 दक्षिगम् (→दक्षिणाम्). —c) दे4 याचको (→याजको) —d) दा1 सोऽश्मस्त स्थूलकीटक, कारा. का1.2 स स्थूल (कारा सोऽश्मन ) स्थूलकीटक, ब1 सोऽश्मास्त स्थूलं कीटक, ब2 सोऽश्मान्त स्थूलकीटक , ब3 सोऽश्यन्ते स्थूलकीटका , दे1.4.10 ते1 स स्यादस्मिन्कीटक (दे3 °का ), दे2 सोऽश्मान्त स्थूलकीटका, दे5 सोऽश्मान्त्स्यनकीटका, दे6 पात्यन्ते स्थूलकीटकै, दे7 न1 सोऽश्मान्त स्थूलकीटक, दे9 सोऽश्मा स्थूलगीपंत , दे11 पात्यन्ते स्थूलकीटकै.

३७. दे3 b ⊙. —a) शा1 पृष्ठ°, दे4 पृष्ट° (→पृष्ठ°); ब3 °मांसानि, दे1 °मांसानि- (→°मांसाशि-). —b) शा1 का1

१२.३७ क्षिप्यन्ते वृकभक्षे ते नरके रजनीचर ॥ ३७
स्वर्णस्तेयी च ब्रह्मघ्नः सुरापो गुरुतल्पगः।
तथा गोभूमिहर्त्तारो गोस्त्रीबालहनाश्च ये ॥ ३८
एते नरा द्विजा ये च गोषु विक्रयिणस्तथा।
सोमविक्रयिणो ये च वेदविक्रयिणस्तथा ॥ ३९
कूटसभ्यास्त्वशौचाश्च नित्यनैमित्तनाशकाः।
कूटसाक्ष्यप्रदा ये च ते महारौरवे स्थिताः ॥ ४०
दशवर्षसहस्राणि तावत् तामिस्रके स्थिताः।
तावच्चैवान्धतामिस्रे असिपत्रवने ततः ॥ ४१
तावच्चैव घटीयन्त्रे तप्तकुम्भे ततः परम्।
प्रपातो भवते तेषां यैरिदं दुष्कृतं कृतम् ॥ ४२
ये त्वेते नरका रौद्रा रौरवाद्यास्तवोदिताः।
ते सर्वे क्रमशः प्रोक्ताः कृतघ्ने लोकनिन्दिते ॥ ४३
यथा सुराणां प्रवरो जनार्दनो
यथा गिरीणामपि शैशिराद्रिः।
यथायुधानां प्रवरं सुदर्शनं
यथा खगानां विनतातनूजः।
महोरगाणां प्रवरोऽप्यनन्तो
यथा च भूतेषु मही प्रधाना ॥ ४४
नदीषु गङ्गा जलजेषु पद्मं

---

°वोत्को च, दे2.6 °वोत्कोच, दे4 °वोत्का च, दे7 °वा क्रौंच-, ते1 °वोत्कोपि (→°वोत्कोच-), न1 तत्रैव क्रिमिभोजना. –c) दे6 11 कथ्यन्ते (→क्षिप्यन्ते), ब3 वृष° (→वृक°), कारा. °भक्ष्येते, दे9 °भक्ष्येषु (→°भक्षेते), दे7 वृषभक्ष्येते (→वृकभक्षे ते), दे6 °चरा (→°चर), दे9 ते नरा रजनीचर.

३८ शा1 कारा. का1.2 दे4-6.11 न1 सुवर्णस्तेयी, दे2 सुवर्णस्तेयी (च) (→स्वर्गस्तेयी च), ब1-3 दे4 विप्रघ्न, दे1 तदापा, दे7 विश्र भी (→ब्रह्मघ्न). –c) दे4 भूमि ह (र) र्त्ता च, दे9 वाजिहर्तारो (→भूमिहर्त्तारो). –d) शा1 गोस्त्रे बाल°, दे3 गोत्रपाल°, ते1 गोस्त्रीभिर्वा (→गोस्त्रीबाल°), कारा. हनाश्च, का1.2 दे1-3.5-6-9 11 ते1 न1 हताश्च, दे4 –हृणश्च (→हताश्च)

३९. दे1 a चरणानन्तर ४० c 'यावत् ○ (द्र सं.), ब1.2. cd ○. (द्र. स.) –a) न1 ये वै (→एते). –b) ब2.3 पिष्ठु°, दे4 गोदेव°, दे5 गोष्ठ°, ते1 धेनु° (→गोषु°) –d) दे3.5 देव° (→वेद°).

४०. दे10. ○, दे1. abc ⊙(द्र. सं द्र. ३९ पा. वि.). –a) ब2 कूटवाद्यास्, दे4 कूटशल्यास् दे6.11 कूटभक्ष्यास्, दे7 कूटामान्यास् (?), दे9 कूटमन्त्रास्त्वसो[चाश्च], न1 कूटवृत्ता. –b) दे7 °नैमित्य° दे9. ⊙ (→°नैमित्त°), दे2.4 °नाशना (→°नाशका), ब2 नित्यनैमित्तिनाशक, दे2.4.5.6.11 °साक्षि° (→°साक्ष्य°), दे4-प्रदानै (→-प्रदाये). –d) का1 °वे स्थित, दे3.5 °वस्थिता (→°वेस्थिता).

४१. ब3. ab ⊙. दे1.3 ते1. cd ⊙. –a) दे9 न1 यावत् (→तावत्). –b) दे9 °स्रकं (→°स्रके). –c) शा1 तावत्स्वेवान्ध°, कारा. दे5.7.9 11 तावन्त्येवान्ध°, का1 दे2 तावत्स्येवान्ध°, ब1. तावत्ते चान्ध°, ब3 तावन्त्येवान्ध°, दे9 न1 यावन्त्येवाघ° (→तावच्चैवान्ध°). –d) शा1 कारा. का1.2 दे2 6.7.11 त्वसि° (→असि°), दे9 त्वसिपत्रे (→असिपत्र-), ब3 गत, दे5 तथा, दे7.9 स्थित (→तत).

४२. दे1.3 ते1. ⊙; शा1 कारा का1 2 दे2 न1 cd ⊙. –a) शा1 कारा का1 2 ब1.3 दे1.7.9.11 न1 तावन्त्येव, दे2 5 तावत्येव, दे11 तावत्येवं (→तावच्चैव) –b) का2 °कुम्भी (→°कुम्भे), दे9 गता परं (→तत पर) –c) ब1 2 प्रयातो (ब1 °ता) भवते तेषा, दे4 तेषा प्रपातो भवति, दे5.7 प्रपातो हि भवत्तेषा, दे9 प्रभाते भविता तेषा. –d) ब1 3 दे9.11 यैरिमे, दे6 यैरियं, दे7 यैरित्थ (→यैरिद), ब1-3 दे9.11 न1 दुष्कृता कृता, दे5.6 दुष्कृता कृता (→दुष्कृत कृतम्).

४३. शा1 कारा का1.2 दे2. ○; दे1.3. ab ○. –a) ब3 येत्र ते, दे11 पच्येते, न1 एते वै (→ये त्वेते), ब1 2 दे9 घोरा (→रौद्रा), न1 प्रचो° (→तवो°) –d) ब3 दे7 कृतघ्नो (→कृतघ्ने), ब2.3 दे5-7 11 न1 °निन्दके, दे4 °विन्दति (→°निन्दिते).

४४. –b) कारा. शैशिरोद्रि, ब1 शैशिरान्द्रि, ब3 शैशिरान्द्रि, दे4 शैशराद्रि, दे5 शैशिराद्रे (→शैशिराद्रि); दे7 यथा गिरीणा प्रवरो हिमाद्रि. –c) दे9 युधानां (→[-था]युधाना), दे9 प्रवर (→प्रवर), दे9 °र्शन (→°र्शन). –d) शा1 का2 तथा (→यथा), दे1 वेगाना (→खगानां) –e) का1 दे7 °गानां (→°गाणां); कारा. ब3 दे4 °वरोह्य°, ब2 °वरेष्य° (→°वरोऽप्य°). –f) दे5 भू[तेषु] (→भूतेषु), ब1 महीप्रधाना, दे6 [मही]प्रधान, दे9 वरो मनुष्य (→मही प्रधाना), दे11 यथावधूतेषु शिव प्रधानम्.

४५. ब3. ○, न1. b ○. –b) का1 °मुख्ये°,+°मध्ये° (→°मुख्ये°), दे7 हरो सुविभक्ति, दे9 हरोरिरक्ष (→हराग्निभक्ष). –c) शा1 °जङ्गला च, कारा. दे2 °जाङ्गल च, का2

सुरारिमुख्येपु हराङ्घ्रिभक्तः ।
क्षेत्रेपु यद्वत्कुरुजङ्गलं वरं
तीर्थेपु यद्वत् प्रवरं पृथूदकम् ॥ ४५
सरस्सु चैवोत्तरमानसं यथा
वनेपु पुण्येपु हि नन्दनं यथा ।
लोकेपु यद्वत्सदनं विरिञ्चेः
सत्यं यथा धर्मविधिक्रियासु ॥ ४६
यथाऽश्वमेधः प्रवरः क्रतूनां
पुत्रो यथा स्पर्शवतां वरिष्ठः ।
तपोधनानामपि कुम्भयोनिः
श्रुतिर्वरा यद्वदिहागमेपु ॥ ४७

मुख्यः पुराणेपु यथैव मात्स्यः
स्वायंभुवोक्तिस्त्वपि संहितासु ।
मनुः स्मृतीनां प्रवरो यथैव
तिथीपु दर्शो विपुवेपु दानम् ॥ ४८
तेजस्विनां यद्वदिहार्क उक्तो
ऋक्षेपु चन्द्रो जलधिर्ह्रदेपु ।
भवान् यथा राक्षससत्तमेपु
पाशेपु नागस्तिमितेपु बन्धः ॥ ४९
धान्येपु शालिर्द्विपदेपु विप्रः
चतुष्पदे गौः श्वपदां मृगेन्द्रः ।
पुष्पेपु जाती नगरेपु काञ्ची बं. १२.५

°जङ्गल च, दे$_{9}$ ब$_{1}$ दे$_{9.11}$ °जाङ्गलं वर (→°जङ्गल वर); न$_{1}$ यद्वत्कुरु जङ्गल वर ○: –d) न$_{1}$. तीर्थेपु ○, दे$_{1.4}$ सद्वत (→यद्वत्), शा$_{1}$ का$_{2}$ दे$_{2.6.7.11}$ न$_{1}$ प्रवर (→प्रवर), शा$_{1}$ कारा, का$_{1.2}$ दे$_{2.6.7.11}$ न$_{1}$ °दक, दे$_{5}$ °दके (→°दकम्).

४६. दे$_{1.3}$. a ○, ब$_{3}$. ab ○: दे$_{2}$ b ○, दे$_{9}$ .d ○ –a) ब$_{1.2}$ चेहोत्तर°, दे$_{2}$ दंवोत्तर°, न$_{1}$ चैवोत्तम° (→चैवोत्तर°); शा$_{1}$ °मानसां यथा, दे$_{2}$ °मानस च, दे$_{4}$ °मानस (च) तथा (→°मानस यथा). –b) शा$_{1}$ का$_{1}$ लेप्येपु, का$_{1}$ सर्वेपु, ब$_{1}$ लेख्येपु (→पुण्येपु), का$_{2}$ ब$_{1}$ नन्दनो (→नन्दन), कारा. वनेष्वदोपेपु च नन्दन यथा, ब$_{2}$ वरेपु लेख्येपु हि नन्दिन यथा, दे$_{7}$ वन सुरागां दिवि नन्दन यथा, दे$_{5}$ वनेपु पुण्येपु [हि नन्दन यथा], न$_{1}$ वनेपु मुख्य स्विह नन्दन वन. –c) दे$_{2}$ लोकेपु ○, ब$_{1.3}$ दे$_{1-4}$ विरञ्चे (→विरिञ्चे). –d) ब$_{3}$ सत्यं च यद्वत् (→सत्य यथा), दे$_{1}$ मर्म° (→धर्म°), ब$_{1}$ [°क्रिया]सु, दे$_{1}$ °क्रिया (→°क्रियासु).

दे$_{9}$. ४६ श्लोक इत्थं वर्तते—
42* सरस्सु चैवोत्तरमानसं यथा
लोकेपु यद्वत्सदन विरञ्चे ।
वनेपु मुख्येष्वथ नन्दन च ।
यथा सत्य……………।[4]
दे$_{2}$. a, b मध्ये द्विवारमागतम् अधिकम्—
43* लोकेपु यद्वत्कुरु जागल च ।
तीर्थेपु यद्वत्प्रवर पृथूदक ॥ (= ४५ cd)

४७. –c) दे$_{2}$ इव, दे$_{4.9}$ पय (→अपि). –d) दे$_{3}$ श्रुतिर्वरिष्ठा य°, दे$_{9}$ श्रुतिस्वरा य° (श्रुतिर्वरा य°)).

४८. न$_{1}$. b,d ○. –a) कारा. का$_{1}$ दे$_{1.2.4-6.9}$ न$_{1}$ मुख्यं, दे$_{3}$ तख्यं, दे$_{7}$ मत्स्यं, दे$_{11}$ पुण्य (→मुख्य); कारा. दे$_{4.9}$ न$_{1}$ मात्स्यं, दे$_{1.3}$ मत्स्य, दे$_{7}$ मुख्य, दे$_{11}$ मत्स्य (→मात्स्य). –b) दे$_{7}$ स्वयम्भुवोक्तिस्त्वपि (→स्वायम्भवोक्तिस्त्वपि), दे$_{1.6}$ °ष्वपि (→°स्त्वपि) –c) ब$_{3}$ मन्त्र (→मनु), दे$_{4}$ यथा तु (→यथैव). –d) शा$_{1}$ तिथेपु, दे$_{4}$ तिथौ तु, दे$_{6}$ तीर्थेपु (→तिथीपु): शा$_{1}$ दर्श (→दर्शो), ब$_{2.3}$ विपुवे च मीन, दे$_{4.10}$ विबुधेपु वासव (→विपुवेपु दानम्): ब$_{1}$ तिथिपु दर्शो विपुवे च विपुवयोश्च मीन (?), दे$_{2}$ दर्शस्थिताना विपुवेपु दानम्, दे$_{7}$ तिथिष्वदशा विपयेपु मासा.

४९ दे$_{9}$. bcd ○. –a) शा$_{1}$ का$_{1.2}$ ब$_{1-3}$ दे$_{1.2.11}$ च प्रवरोऽर्क उक्त, कारा च प्रवरो यथार्क, दे$_{3}$ च प्रवरोर्कयुक्त, दे$_{4}$ यद्वदिहार्कमुग्र, दे$_{5}$ य (च ?) प्रवरो यथोर्क्क, दे$_{6}$ च प्रवरो यथोर्क (उक्त), दे$_{7}$ न$_{1}$ यद्वदिहार्क मु (न$_{1}$ यु) क्त (→यद्वदिहार्क उक्तो). –b) दे$_{4}$ ऋक्ष्येपु, दे$_{6}$ खेपु (→ऋक्षेपु), न$_{1}$ नदेपु (→ह्रदेपु). –c) दे$_{1.3}$ °पुगवेपु (→°सत्तमेपु) –d) का$_{2}$ बन्ध,+ चान्व, ब$_{1}$ दे$_{4}$ बन्धु, ब$_{3}$ सिन्धु, दे$_{1}$ मीन, दे$_{3}$ बन्धो (→बन्ध), दे$_{5}$ पाशेपु नागास्वमितेपु बन्ध, दे$_{6}$ पाशेपु नागा सुकवेपु राजा, दे$_{7}$ पाशेपु नागस्त्रिपुधर्ममार्ग, दे$_{11}$ पाशेपु नागा पुरुषेपु राजा, न$_{1}$ मासेपु माघा ऋतुभिवसन्त.

५०. दे$_{1}$. ⊙, दे$_{9}$. abc ○, दे$_{3}$ b ○ –a) दे$_{4}$ धानेपु (→धान्येपु) –b) शा$_{1}$ का$_{1.2}$ दे$_{5.6.10.11}$ °पदे गौश्च यथा, कारा °पदे गौर्हरिणे, ब$_{1}$ °पदा गौश्च तथा, ब$_{2}$ °पदा गौश्च यथा, ब$_{3}$ °पदे गौश्च यथा, दे$_{4.7}$ °पदेऽश्व यथा, न$_{1}$ °पथेऽश्वेव यथा (→°पदे गौ श्वपदा). –c) का$_{2}$ मुख्येपु, ब$_{2}$ पुष्पे [पु] (→पुष्पेपु), शा$_{1}$ कारा. का$_{1}$ जाती, का$_{2}$ दे$_{2.3}$ जाति (→जाती), शा$_{1}$ °रीपु (→°रेपु), शा$_{1}$ का$_{2}$ दे$_{2-4.6.7.11}$ कान्ती (→काञ्ची). –d) दे$_{2}$ नागेपु (→नारीपु), ब$_{1.2}$ °श्रमिपु (→°श्रमिणां).

१२.५० नारीषु रम्भा श्रमिणां गृहस्थः ॥ ५०
कुशस्थली श्रेष्ठतमा पुरेषु
देशेषु सर्वेषु च मध्यदेशः ।
फलेषु चूतो मुकुलेष्वशोकः
सर्वौषधीनां प्रवरा च पथ्या ॥ ५१
मूलेषु कन्दः प्रवरो यथोक्तो
व्याधिष्वजीर्णं क्षणदाचरेन्द्र ।
श्वेतेषु दुग्धं प्रवरं यथैव
कार्पासिकं प्रावरणेषु यद्वत् ॥ ५२
कलासु मुख्या गणितज्ञता च
विज्ञानमुख्येषु यथेन्द्रजालम् ।
शाकेषु मुख्या त्वपि काकमाची
रसेषु मुख्यं लवणं यथैव ॥ ५३
तुङ्गेषु तालो नलिनीषु पम्पा
वनौकसेष्वेव च ऋक्षराजः ।
महीरुहेष्वेव यथा वटश्च
यथा हरो ज्ञानवतां वरिष्ठः ॥ ५४
यथा सतीनां हिमवत्सुता हि
यथार्जुनीनां कपिला वरिष्ठा ।
यथा वृषाणामपि नीलवर्णो
यथैव सर्वेष्वपि दुःसहेषु ।
दुर्गेषु रौद्रेषु निशाचरेश
नृपातनं वैतरणी प्रधाना ॥ ५५
पापीयसां तद्वदिह कृतघ्नः
सर्वेषु पापेषु निशाचरेन्द्र ।
ब्रह्मघ्नगोघ्नादिषु निष्कृतिर्हि
विद्येत नैवास्य तु दुष्टचारिणः ।

---

५१. दे1 a ○ –a) कारा. दे4.7 9 पुरीषु (→पुरेषु). –b) ब2 देवेषु (→देशेषु) –c) ब1 2 च्यूतो, दे2 नूतो, दे9 चूत, (→चूतो), दे5 6 11 मुकुलेषु कोश , दे9 न1 कुसुमेष्वशोक (→ मुकुलेष्वशोक ) –d) दे2 पथ्य , दे8 पथ्य (→पथ्या)

५२. –a) दे7 कर्म (→कन्द ), दे7 प्रवरं (→प्रवरो), का1 यथोक्ते, दे2 यथोक्ता , दे7 यथोक्तं (→यथोक्तो) –b) शा1 कारा. का2 ब1 दे6 7 9 11 न1 [-अ] जीर्ण (→[-अ] जीर्णं). –c) न1 सुतेषु (→श्वेतेषु), दे4 दुग्धं (→दुग्ध), दे7 सत्येषु मुद्गा प्रवरा यथैव. –d) शा1 का1 2 दे8 °ण हि, ब2 °णाद्धि, दे2 °णे हि (च), दे3 °णो हि, दे5 °णे हि (→°णेषु)

५३. न1 d खण्डितम् –a) ब2 दे11 कालासु (→कलासु), दे7 पुष्या (→मुख्या), ब1 तगता च, ब2 °कज्ञता च, दे6 °त तथा च, दे7 °तज्ञता तया, न1 °तज्ञताश्च (→°तज्ञता च) –b) शा1 विज्ञात° (न ?) (→विज्ञान°), ब3 °मुख्यश्च, दे1-3 °मुख्य हि, तै1 7 °मुख्यं च, मुवे °मुख्य तु (→°मुख्येषु), ब1 3 यथेन्द्रजाल, दे1 यथैव जालम् (→यथेन्द्रजालम्) –c) ब2 शाकेन (→शाकेषु), शा1 का1.2 मुख्य (→मुख्या); ब1 अपि, दे7 स्वय (→त्वपि), शा1 कारा का1 दे2 3 6.7 काचमाची, का2 काकमाजो, दे1 काच-माच (?), दे4 काचमारे, दे9 काकवल्ली (→काकमाची). –d) ब1 ** षु, दे9 मरीचि- (→रसेषु). दे9 तथैव (→यथैव).

५४. न1. ab खण्डितम्. –a) शा1 कारा. का1 2 ब1 3 दे2.3 5.6.9-11 तै1 फलेषु (→तुङ्गेषु), ब1 ताले, दे1 2 तै1 ताल, दे9 नाल (→तालो), शा1 पद्म, का1 पद्म, ब3 पुष्पा, दे9 पङ्कज (→पम्पा). –b) शा1 वाली नरे°, कारा वाली कपि°, का1 वलीयेसे° (?), का2 सवानरे° (→वनौकसे°), दे4 तु (→ च), दे4 ऋष्य° (→ऋक्ष°), दे9 तथा वनौकःषु च ऋक्षराज. –d) ब1 हरो ध्यान°, दे1 हरे ज्ञाने° (?) (→हरो ज्ञान°).

५५ न1 पुस्तके ५५ e 'रेश' इत्यारभ्य ५६ a 'कृतघ्न' इति पर्यन्त खण्डितम् –a) ब1 च, ब2 दे9 [अ] पि (→हि) –b). ब1 यथा गिरीशा, ब2 यथा गविना, दे1 यथा (हि)र्जुनीनां, दे8 यथा कुलीना, दे11 यथार्कनीना (→यथार्जुनीनां); शा1 कारा. का1. 2 कपिलो (→कपिला), का2 यथा मुनीनां कपिलो वरिष्ठ . –c) शा1 वृक्षा°, ब3 ऋषी° (→वृषा°), शा1 यथा वृषाक्षामपि, कारा. यथैव वर्णेष्वपि, का1 यथा च वर्णेष्वपि (→यथा वृषाणामपि). –cd) शा1 दे7 °र्णो तथैव, का2 ब1 3 दे1 6 9 11 न1 °र्णस् (का2 दे9 °र्ण, दे11 °र्णास्) तथैव (→°र्णो यथैव) –d) दे5.7-11 वर्णेष्वपि (→ सर्वेष्वपि) –e) कारा. ब3 सर्वेषु (→रौद्रेषु), का1 °चरेन्द्र , दे2.7 °चरेषु, दे9 °चरेन्द्र (→°चरेश) –f) कारा नृपातना, का1 नृपातनो, ब1.2 नृपार्चन, ब3 दे1 तै1 नृपावन, दे1.3.4.9 यथा नदी, दे2 न पावन, दे5 नृपवर्ता, दे6.11 नृपावर (दे11 °रे) (→नृपातन)

५६. दे7 9 न1. ef ○. –a) शा1 कारा तद्वदिहा, दे8 यद्वदिह, दे7 तद्वदसो, दे9 यद्वदुक (→तद्वदिह); शा1 कृतघ्ना, कारा. कृतघ्न, दे1 कृतघ्ना (→कृतघ्न ). –b) शा1 कारा. का1.2 मुख्यश्च (→पापेषु); का1 ब3 °चरेन्द्र, दे9 °चरेश (→°चरेन्द्र) –c) दे4 स्वाद्ब्रह्म° (→ब्रह्मघ्न°); दे1 °हिषु (→°दिषु); कारा. °तिस्तु (→°तिर्हि).

न निष्कृतिश्चास्ति कृतघ्नवृत्तेः सुहृत्कृतं नाशयतोऽब्दकोटिभिः ॥ ५६

इति श्रीवामनपुराणे द्वादशोऽध्यायः ॥ १२ ॥

# १३

सुकेशिरुवाच ।❀

भवद्भिरुदिता घोरा पुष्करद्वीपसंस्थितिः ।
जम्बूद्वीपस्य संस्थानं कथयन्तु महर्षयः ॥ १

ऋषय ऊचुः ।❀

जम्बूद्वीपस्य संस्थानं कथ्यमानं निशामय ।
नवभेदं सुविस्तीर्णं स्वर्गमोक्षफलप्रदम् ॥ २

मध्ये त्विलावृतो वर्षो भद्राश्वः पूर्वतोऽद्भुतः ।
पूर्वे उत्तरतश्चापि हिरण्यो राक्षसेश्वर ॥ ३
पूर्वदक्षिणतश्चापि किंनरो वर्ष उच्यते ।
भारतो दक्षिणे प्रोक्तो हरिर्दक्षिणपश्चिमे ॥ ४
पश्चिमे केतुमालश्च रम्यकः पश्चिमोत्तरे ।
उत्तरे च कुरुवर्षः कल्पवृक्षसमावृतः ॥ ५ वें. १३.५

---

–d) शा$_1$ °रिणो, दे$_4$ °रिणी (→°रिण) –e) का$_1$ ब$_{1\ 3}$ दे$_{2.5.6.10}$ चापि (→चास्ति), दे$_1$ कृत *** (→कृतघ्नवृत्ते). –f) ब$_{1.2}$ °तेऽब्द-, ब$_3$ °तेऽत्र (→°तोऽब्द-), दे$_1$ सुहृद्भिषा *** ताब्दकोटिभि.

पुष्पिका—शा$_1$ कारा. का$_{1.2}$ ब$_{2.3}$ दे$_{1\text{-}3.5.6}$ न$_1$ इति श्री (कारा. ब$_{2.3}$ दे$_1$ [श्री]) वामनपुराणे, ब$_1$ दे$_7$ इति श्रीवामनपुराणे भैरवप्रादुर्भावे, दे$_4$ इति श्रीवामनपुराणे भैरवे, दे$_9$ श्रीवामन, मुवे. इति श्रीवामनपुराणे पुलस्त्यनारदसंवादे. अध्यायनाम—ब$_{1\text{-}3}$ दे$_4$. ◯, शा$_1$ का$_{1.2}$ दे$_{1\text{-}3.5\ 6}$ न$_1$ कर्मविपाको नाम, कारा. दुष्कर्मविपाको नाम, दे$_7$ नरकस्वरूपवर्णन नाम. अध्यायसंख्या—दे$_5$. ◯, शा$_1$ का$_{1.2}$ दे$_{2.3\ 7.9.10}$ न$_1$ द्वादशोध्याय, कारा. षोडशोध्याय, ब$_{1\text{-}3}$ दे$_4$ चतुर्थोऽध्याय, दे$_1$ ॥ १२ ॥, दे$_{11}$ एकादशोध्याय.

## १३

१. दे$_{10}$. cd 'द्वीप…………महर्षय' ◯; न$_1$. bcd 'ष्कर…स्तुम' खण्डितम्. –a) ब$_{1.2}$ दे$_7$ कथिता, दे$_4$ गदिता, दे$_6$ मुदिता (?), दे$_{10}$ उदिता (म) (→उदिता). –b) दे$_{10}$ पुष्कर° (?) (→पुष्कर°), दे$_{2.5}$ °स्थित (दे$_5$ °ति), दे$_7$ °स्थिता (→°स्थिति). –c) शा$_1$ कारा. दे$_4$ जम्बु° (→जम्बू°), ब$_1$ द्वीप्य (?) * (→°द्वीपस्य).

❀ दे$_{10}$. ◯; ब$_2$ पुलस्त्य उवाच; दे$_4$ ऋषयोवाच, दे$_{7.9}$ न$_1$ ऋषय.

२. –a) कारा. दे$_4$ जम्बु°, दे$_{10}$ ** (→जम्बू°), का$_1$ सस्कार,+सस्थानं (→संस्थानं). –c) दे$_7$ नवम शुचि, दे$_9$ नन्वभेदं तु (→नवभेद सु-).

३. कारा. cd ◯, न$_1$ cd 'वर्षो……श्वर' खण्डितम्. –a) दे$_2$ तिला° (?) (→त्विला°), दे$_8$ °वृने (→°वृतो), दे$_9$ देशो (→वर्षो) –b) का$_2$ ब$_{2.3}$ दे$_5$ ते$_1$ भद्रास्य, दे$_2$ भेदाश्च (→भद्राश्व), ब$_3$ पर्वतो (→पूर्वतो), ब$_{1.2}$ स्मृत, दे$_7$ स्थित, न$_1$ मत (→[-अ]द्भुत). –c) शा$_1$ का$_{1\ 2}$ ब$_{1\text{-}3}$ दे$_{1\text{-}3.5.6.8\ 11}$ ते$_1$ न$_1$ पूर्वदक्षिणतो वर्षो, दे$_7$ पूर्व उत्तरतो वर्षो. –d) ब$_{1\ 3}$ दे$_{1.3.6.7\ 8}$ हिरण्वान्, दे$_{2.10}$ ते$_1$ हिरण्मान्, दे$_5$ हिरण्वान् (?) (→हिरण्यो), ब$_{1.2}$ दे$_2$ °श्वर (→°श्वर).

४. कारा. ⊙, शा$_1$ का$_{1\ 2}$ ब$_{1\ 3}$ दे$_{1\text{-}3.5\text{-}11}$. ab ◯; न$_1$ abc 'पूर्व……प्रोक्तो' खण्डितम् –c) दे$_{3.5}$ भारते (→भारतो); दे$_{1.9}$ दक्षिण (दे$_9$ °णा) (→दक्षिणे), दे$_2$ प्रोक्ता (?) दे$_9$, [प्रो]क्तो (→प्रोक्तो).

५. –a) दे$_1$ न$_1$ *** केतु° (→पश्चिमे केतु°), दे$_1$ °शालश्च (→°मालश्च) –b) दे$_{1.2.5.10}$ ते$_1$ चम्पक, दे$_3$ पङ्कज (→रम्यक); कारा. भारतो दक्षिणे तथा, दे$_7$ ताम (?) पश्चिम उत्तरे. –c) ब$_2$ दे$_{1\ 3.5.10}$ ते$_1$ उत्तरेण, ब$_3$ उत्तरे [तु], दे$_4$ उत्तरे तु (→उत्तरे च), का$_2$ ब$_{1\ 3}$ दे$_{1\text{-}8\ 10}$ ते$_1$ कुरोर् (→कुरु-); कारा. कुरोर्वर्षं, दे$_2$ कुरोर्ववर्षा (→कुरुवर्ष). –d) कारा. °वृतम् (→°वृत); न$_1$ कल्पवृक्ष समाहित.

५ श्लोकात्परं कारा. अधिकम्—

44* भारताद्युत्तरे वर्षं किं पौरुष मनोरमम् ।
तस्मादुत्तरतो ज्ञेय हरिवर्षं महाश्रयम् ।

१४.४० सन्ध्यासु वर्ज्यं सुरतं दिवा च
सर्वासु योनीषु परावलासु ।
आगारशून्येषु महीतलेषु
रजस्वलास्वेव जलेषु वीर ॥ ४०
वृथाऽटनं वृथा दानं वृथा च पशुमारणम् ।
न कर्त्तव्यं गृहस्थेन वृथा दारपरिग्रहम् ॥ ४१
वृथाऽटनान्नित्यहानिर्वृथादानाद्धनक्षयः ।
वृथा पशुघ्नः प्राप्नोति पातकं नरकप्रदम् ॥ ४२
सतत्या हानिरश्लाघ्या वर्णसंकरतो भयम् ।
भेतव्यं च भवेल्लोके वृथादारपरिग्रहात् ॥ ४३
परस्वे परदारे च न कार्या बुद्धिरुत्तमैः ।
परस्वं नरकायैव परदाराश्च मृत्यवे ॥ ४४
नेक्षेत् परस्त्रियं नग्नां न संभाषेत तस्करान् ।
उदक्यादर्शनं स्पर्शं संभाषं च विवर्जयेत् ॥ ४५
नैकासने तथा स्थेयं सोदर्या परजायया ।
तथैव स्यान्न मातुश्च तथा स्वदुहितुस्त्वपि ॥ ४६
न च स्नायीत वै नग्नो न शयीत कदाचन ।
दिग्वाससोऽपि न तथा परिभ्रमणमिष्यते ॥
भिन्नासनभाजनादीन् दूरतः परिवर्जयेत् ॥ ४७
नन्दासु नाभ्यङ्गमुपाचरेत

४० ब$_{1\,3}$ दे $_{9}$ न$_{1}$ c ○। दे$_{1}$ पुस्तके ४० b प्रमाणात् ३९ b पश्चादागत –a) ब$_{3}$ दे$_{4}$ वय (→व॰य) ब$_{1\,2}$ न्वासु, दे$_{9}$ दिवापि (→दिवा च) दे$_{7}$ सध्यासु चर्यासु दिवा निशासु –b) दे$_{9}$ सर्वास्व (→सर्वासु) ब$_{1}$ योनिष्व (→योनीषु) शा$_{1}$ कारा का$_{2}$ ब$_{3}$ °वरासु, न वरेषु (→°बलासु) –c) दे$_{1\,3\,10}$ स (दे$_{10}$ प ?) र्वासु योनिष्वपराबलास d) कारा रजस्वलेष्वेव (→रजस्वलास्वेव)। दे$_{4\,7}$ न$_{1}$ जले च दे$_{9}$ जले न (→जलेषु)। शा$_{1}$ कारा का$_{1\,2}$ न$_{1}$ धीर दे$_{9}$ वीरो (→वीर)

४० श्लोकात्पर कारा अधिकम्—

58 * व्यङ्गा सरोगा विधवा विरूपा
सवर्जयेत्स्त्रीं सकलायगुह्याम् ।

४० श्लोकात्पर दे$_{7}$ अधिकम्—

59 * एतानि सर्वाणि विगर्हितानि ।

४० श्लोकात्पर दे$_{9}$ न$_{1}$ अधिकम्—

60 * देवालये वह्निगृहे च नित्यम् (दे$_{9}$ °त्ये) ।

४१ न$_{1}$ ○ दे$_{11}$ cd ○ –a) दे$_{7}$ न कुर्वीत (→वृथा दान) –d) शा$_{1}$ °दान° (→°दार°)

४२ दे$_{7\,11}$ न$_{1}$ ○ –a) दे$_{1}$ °टन (→°टनात्) ब$_{3}$ वित्य° (→नित्य°) –b) ब$_{1}$ °दाने ब$_{2}$ दे$_{9}$ °दान (→°दानात्) –c) दे$_{1}$ बधाच्च (→पशुघ्न॰) –d) शा$_{1}$ कारा का$_{1\,2}$ यातनां ब$_{2,3}$ घातक (→पातक) शा$_{1}$ का$_{2}$ दे $_{3\,5\,10}$ ते$_{1}$ नरकाधि यत् कारा नरकार्पिताम् का$_{1}$ नरकोत्थिता ब$_{1\,3}$ नरक हि यत् (→नरकप्रदम्)

४३ दे$_{7}$ ○ न$_{1}$ ab ○ –a) दे$_{3}$ त सता दे$_{4}$ सततः दे$_{11}$ सतत्य (→सत॰या) दे$_{7}$ ग्लानि° (→हानि°) –b) ब$_{3}$ दे$_{9\text{-}10}$ °सकरताभयम् ब$_{2}$ °सकरताडनम् (→°सकरतो भयम्) –c) कारा भेतव्य दे$_{4,9}$ कर्त्तव्य (→भेतव्य) न$_{1}$ वृथैव लोके च [भवेत्] –d) न$_{1}$ वृथा **° (→वृथादार°) दे$_{9}$ °ग्रह (→°ग्रहात्)

४४ दे$_{7}$ bc ○ –a) दे$_{9}$ °दारेषु (→°दारे च) –d) ब$_{1}$ °दारश्च (→°दारा॰च)

४५ दे$_{9}$ ab ○ –b) दे$_{1}$ तस्करात् दे$_{7}$ तस्करं (→तस्करान्) –c) ब$_{1}$ तन्क्या (→उ॰क्या) दे$_{7}$ दर्शने (→दशन) –d) कारा सभापाश्च दे$_{9}$ सभाषा च (→सभाष च)

४६ –a) न$_{1}$ °सनं सदा (→°सने तथा) –b) शा$_{1}$ का$_{1}$ दे$_{3\,7}$ सौन्दर्या कारा सुन्दर्या दे$_{10\text{-}11}$ सोदर्या (दे$_{11}$ °य) (→सोदर्या) –c) ब$_{3}$ तथैव स्या॰स्व दे$_{4}$ सख्याश्चैवाथ, दे$_{7}$ सविपत्न्याश्च न$_{1}$ श्वसुश्चैवाथ मुवे सथा सापत्न (→तथैव स्यान्न) कारा मात्रा च (→मातुश्च) दे$_{9}$ श्वश्वा चैव तथा मातु॰ d) शा$_{1}$ का$_{2}$ ब$_{1}$ दे$_{1\,4\text{-}7}$ °दुहितुष्वपि ब$_{2}$ °दुहितुस्तथा दे$_{3\,9\,10}$ ते$_{1}$ न$_{1}$ दुहितृष्वपि (→°दुहितुस्त्वपि) कारा दुहित्रा भगिन्यापि च

४७ कारा दे$_{1\text{-}4,7\,10}$ ते$_{1}$ ef ○ –a) दे$_{1\,2}$ स्नायेत वै न$_{1}$ स्नायी भवेत् (→स्नायीत वै) –b) शा$_{1}$ शायीत (→शयीत) ब$_{1\,3}$ दे$_{7\,9}$ न$_{1}$ च (दे$_{7}$ न$_{1}$ न) कर्हिचित् (→क॰ाचन) –c) दे$_{7}$ °वाससो न दे$_{9}$ °वाससापि (→°वाससोऽपि) दे$_{7}$ च (→न) –d) दे$_{1}$ °श्रमण दे$_{10}$ °भ्रमग (→°भ्रमण°) –e) दे$_{9}$ न$_{1}$ भिन्न शय्यासनादींस्तु

दे$_{1\,4\,7\,10}$ ते$_{1}$ ef स्थाने—

61 * भिन्नाश्च शय्यासनभाजनादी
न्दूरतः सपरिवर्जयेत्तान् ।

[ 1) दे$_{4}$ भिन्ना च रथ्या° दे$_{7}$ भिन्नास्वशय्या° (→भिन्नाश्च शय्या°) दे$_{10}$ °भोज° (→°भाज°) –2) दे$_{1\,3}$ तत (→[श्र]त ) ]

४८ –a) दे$_{4}$ चाभ्यग° (→नाभ्यङ्ग°) दे$_{4}$ °चरेषु, दे$_{7}$ °चरेद (→°चरेत) –b) दे$_{1}$ * वि (रि ?) क्ति (त्ता ?) सु,

क्षौरं च रिक्तासु जयासु मांसम् ।
पूर्णासु योषित्परिवर्जयेत
भद्रासु सर्वाणि समाचरेत ॥ ४८
नाभ्यङ्गमर्के न च भूमिपुत्रे
क्षौरं च शुक्रे रविजे च मांसम् ।
बुधेषु योषित्र समाचरेत
शेषेषु सर्वाणि सदैव कुर्यात् ॥ ४९
चित्रासु हस्ते श्रवणे च तैलं
क्षौरं विशाखास्वभिजित्सु वर्ज्यम् ।
मूले मृगे भाद्रपदासु मांसं
योषिन्मघाकृत्तिकयोत्तरासु ॥ ५०
सदैव वर्ज्यं शयनमुदक्शिरास्
तथा प्रतीच्यां रजनीचरेश ।
भुञ्जीत नैवेह च दक्षिणामुखो
न च प्रतीच्यामभिभोजनीयम् ॥ ५१
देवालयं चैत्यतरुं चतुष्पथं
विप्राधिकं चापि गुरुं प्रदक्षिणम् ।
माल्यान्नपानं वसनानि यत्नतो
नान्यैर्धृतांश्चापि हि धारयेद् बुधः ॥ ५२
स्नायाच्छिरःस्नानतया च नित्यं
न कारणं चैव विना निशासु ।
ग्रहोपरागे स्वजनापयाते
मुक्त्वा च जन्मर्क्षगते शशाङ्के ॥ ५३
नाभ्यङ्गितं कायमुपस्पृशेच्च
स्नातो न केशान् विधुनीत चापि । ब १४

---

दे$_3$ च रिवा (क्ता ?) सु (सु ?) (→च रिक्तासु)ः दे$_1$ मयासु, दे$_2$ भयास दे$_{11}$ जया च (→जयासु) –c) बा$_1$ योषां +योषित् दे$_4$ योषां (→योषित् )ः ब$_{1\ 2}$ दे$_7$ °वर्जनीया दे$_{1\ 5\text{-}10}$ वे$_1$ °वर्जयेच्च (→°वर्जयेत) –d) दे$_{1\ 3\ 9}$ भ°णि (→भ°सु) दे$_{1\ 3}$ सर्वासु (→सर्वाणि)ः दे$_{1\ 3\ 5\text{-}10\text{-}11}$ वे$_1$ समाचरेच (→समाचरेत)

४९ –b) ब$_{1\ 2}$ क्षार (→क्षौर)ः दे$_7$ शुक्रग कुजेन मासम् (→शुक्रे रविजे च मासम्) –c) शा$_1$ का * बुधे (का °ढ) तु, दे$_{4\ 7}$ बुधे च दे$_{10}$ बुधे तु (→बुधेषु) कारा बुधे स्त्रिय नैव (→बुधेषु योषित्र)ः शा$_1$ कारा का$_{1\ 2}$ °श्रयेत ब$_2$ °चरेत्तु (→°चरेत)

५० –a) शा$_1$ का * ब$_3$ श्रवणेण दे$_{1\ 5\text{-}7\ 9\text{-}11}$ ते$_1$ श्रवणे न (→श्रवणे च) ब$_1$ * तिलच्च (→च तैलं) –b) ब * क्षार (→क्षौर)ः शा$_1$ का$_2$ °खा स्वभिजित्सु, दे$_9$ न$_1$ °खास्वभिपक्सु (न$_1$ °ल्सु) (→°खास्वभिजित्सु) –c) दे$_{1\ 4}$ न$_1$ भ°° (→म°°)ः दे$_9$ °पनान्य (→°पदासु)ः दे$_{11}$ साय (→मांसम्) –d) दे$_4$ न$_1$ योषां दे$_7$ योषा (→योषित् )ः दे$_7$ मघाम्, दे$_9$ महा (→मघा ) दे$_{2\ 5}$ –कृत्तिकमोत्तरासु, दे$_4$ –कृत्तिकरेवतीषु, दे$_7$ उत्तरकृत्तिकासु (→कृत्तिकयोत्तरासु)

५१ दे$_9$. b○ –a) ब$_1$ दे$_{1\ 5\text{-}10}$ वे$_1$ नयने (→शयन)ः दे$_4$ मुदक (→उदक्)ः कारा का$_1$ ब$_{1\ 3}$ दे$_{1\ 5\ 10}$ वे$_1$ न$_1$ शिरः दे$_7$ °स्थिरः (→°शिरा)ः दे$_9$ सदव वज्य तदुदक्शिरस्तथा –b) दे$_{4\ 7}$ न$_1$ परान्त (→प्रतीच्याम्) दे$_1$ रा(र?) (ह) जनी° (→रजनी°) –c) दे$_7$ °मुखं (→°मुखो) –d) न$_1$ नापि (→न च) दे$_{4\ 7}$ प्रतीच्यां (→प्रतीचीम्)ः दे$_4$ ऋषि दे$_7$ न$_1$ मपि दे$_9$ न च (→भि ) ब$_{1\ 3}$ °भुञ्ज° (→°भोज°)

५२ –a) दे$_7$ °तरु दे$_{11}$ °तनु, न$_1$ °वन (→°तरुं) ब$_{1\ 3}$ मृ°° दे$_9$ ●●●● (→चतुष्पथं) b) का$_1$ चाप्य (पि?) दे$_4$ वापि (→चापि) का$_1$ प्रणम्यात् +प्रदक्षिणम् (→प्रदक्षिणम्) –c) शा$_1$ कारा का$_1$ माल्यानु (कारा °ल्यु) पानं, दे$_{2\ 3}$ माल्यपानं (→माल्यान्नपानं) दे$_4$ च सवनानि न$_1$ वसनं च (→वसनानि) –d) ब$_{1\ 3}$ नान्यैर्धुताश्चापि दे$_{7\ 11}$ नान्यर्धृतांश्चापि बुधे धृतानि चान्य (→नान्यैर्धृतांश्चापि) दे$_9$ विवर्जयेत् (→हि धारयेत् )

५३ –a) ब °भयापि दे$_1$ वे$_1$ °भया (ते$_1$ °यो) च दे$_4$ °भयान्न (→°तया च)ः दे$_{4\ 7}$ न दे$_9$ स (→च) –b) शा$_1$ का$_{1\ 2}$ ब$_{1\ 3}$ दे$_{1\ 3\ 5\ 10,11}$ ते$_1$ निष्कारणं दे$_{4,7}$ अकारणं दे$_9$ नो कारणं (→न कारण) का$_1$ चैवं +नव दे$_{4\ 9\ 10}$ नैव (→चैव)ः का$_1$ बुधो ब$_{1,2}$ दे$_{1\text{-}4\ 10,11}$ वे$_1$ महा दे$_7$ सन (→विना) –c) दे$_{1\ 9}$ ग्रहो° (→ग्रहो°)ः शा$_7$ कारा का$_2$ दे$_{5\ 11}$ °भिपाते का$_1$ दे$_0$ °पघाते दे$_7$ °भिपाते दे$_9$ °तिपाते न निपाते (→°पयाते) ब$_3$ ग्रहोपरागेषु जलाभिलाप दे$_4$ ग्रहोपराग स्वजनाभिवात –d) ब$_{2\ 3}$ दे$_{11}$ मुक्ता (→मुक्त्वा) दे$_9$ निर्ज ऋक्ष° (→च जन्मर्क्ष°)ः कारा का$_1$ °गत शशांक (का$_1$ °के) (→गते शशाङ्के)

५४ –a) ब$_{1\ 3}$ दे$_7$ नाभ्यङ्गि (ब$_3$ °क्षि) त (→नाभ्यङ्गित)ः दे$_4$ °स्पृनेत (→°स्पृशेच्च) –b) वे$_1$ च (→न) दे$_1$ था (तथा) पि दे$_{7\ 9}$ न$_1$ वापि (→चापि) –c) कारा ब$_{2,3}$ दे$_{4\ 7\ 9\text{-}10}$ नैवाम्बर-का$_1$ वस्त्रेण च नैवाम्बर (→चैवाम्बर)

१४.५५ गात्राणि चैवाम्बरपाणिना च
स्नातो विमृज्याद् रजनीचरेश ॥५४
वसेच्च देशेषु सुराजकेषु
सुसंहितेष्वेव जनेषु नित्यम् ।
अक्रोधना न्यायपरा अमत्सराः
कृषीवला ह्योषधयश्च यत्र ॥ ५५
न तेषु देशेषु वसेत बुद्धिमान्
सदा नृपो दण्डरुचिस्त्वशक्तः ।
जनोऽपि नित्योत्सवबद्धवैरः
सदा जिगीषुश्च निशाचरेन्द्र ॥ ५६

इति श्रीवामनपुराणे चतुर्दशोऽध्याय ॥ १४ ॥

# १५

ऋषय ऊचुः ।※
यच्च वर्ज्यं महाबाहो सदाधर्मस्थितैर्नरैः ।
यद्भोज्यं च समुद्दिष्टं कथयिष्यामहे वयम् ॥ १
भोज्यमन्नं पर्युषितं स्नेहाक्तं चिरसंभृतम् ।
अस्नेहा व्रीहय. श्लक्ष्णा विकाराः पयसस्तथा ॥ २
शशकः शल्यको गोधा श्वाविधो मत्स्यकच्छपौ ।

---

–d) शा$_1$ स्नातोन्व, कारा का$_1$ दे$_5$ न$_1$ स्नातो व, ब$_{1 2}$ दे$_9$ स्नातो न, दे$_{11}$ स्नाता च (→स्नातो वि·) शा$_1$ कारा दे$_4$ °मृद्यात् (→°मृज्यात्)

५५ ब$_{1 3}$ दे$_7$ cd ○ –a) दे$_{3 1}$ वसेत्सु· (→वसेश), शा$_1$ कारा का$_{1 2}$ सराज°, दे$_4$ तु राज° (→सुराज°) –b) शा$_1$ कारा का$_{1 2}$ सदाभये° (→सुसंहिते°); कारा सुशीलकेषु, दे$_{10}$ जलेषु नित्य (→जनेषु नित्यम्) ब$_{1 3}$ वृद्धोस्तमो (ब$_3$ °पो) दण्ड करिस्त्वशक्त, दे$_7$ वसेच्च लोकेषु सुबुद्धिमत्सु –c) शा$_1$ कारा का$_{1 2}$ दे$_4$ न$_1$ त्वमत्सरा· (दे$_4$ °रान्), दे$_{1 3}$ विमत्सरा·, दे$_9$ [ अ] स्त्रशूरा (→अमत्सरा ) –d) दे$_4$ °वलान् (→°वला ) शा$_1$ कारा का$_{1 2}$ दे$_{1 5 10-11}$ ह्यौ (दे$_4$ तो ?) षध (का$_1$ ° दे$_{1 3 5}$ °धि) जातयश्च न$_1$ ह्याषध यत्र यश्च (→ह्योषधयश्च यत्र)

५४ श्लोकात् पर मुवे अधिकम्
62 ※ श्वापस्तु वैद्यो धनिकश्च यत्र
सच्छ्रोत्रियस्तत्र वसेत नित्यम् ।

५६ ब$_{1 3}$ ab ○ –a) शा$_1$ कारा का$_{1 2}$ वसेच्च, न$_1$ वसेषु (→वसेत) दे$_4$ येषु, दे$_9$ विद्वान् (→बुद्धिमान्) दे$_7$ न य (त ?) त्रधीमान्निवसेच्च यत्र –b) शा$_1$ का$_1$ ° न यो नृपो कारा नृपो न यो दे$_{4 7}$ भवेन्नृपो (→सदा नृपो) शा$_1$ कारा का$_{1 2}$ द्वन्द्वरुचि, दे$_7$ दण्डकर (→दण्डरुचि·) दे$_{11}$ अशक न$_1$ अशक्य (→अशक्त ) –c) दे$_7$ जनस्तु, दे$_9$ न$_1$ जनेषु (दे$_9$ °ष्य ) (→जनोपि) –cd) कारा cd चरणयो क्रमव्यत्यास

पुष्पिका—शा$_1$ का$_{1 2}$ दे$_{1 3 5 10-11}$ ते$_1$ मुवे ○ –कारा इतिवामनपुराणे ऋषिसुकेशिसंवादे, ब$_1$ दे$_7$ इतिश्री वामनपुराणे भैरवप्रादुर्भावे, ब$_{2 3}$ इति वामनपुराणे, दे$_4$ न$_1$ इति श्रीवामनपुराणे, दे$_9$ इति श्रीवामनपुराणे अध्यायनाम—कारा कुमारीद्वीपाचारवर्णन नाम, दे$_4$ न$_1$ सदाचारलक्षण (न$_1$ °निर्णयो) नाम, दे$_9$ सदाचारो नाम अध्यायसंख्या—कारा अष्टादशोऽध्याय· ब$_{1 3}$ दे$_4$ षष्ठोऽध्याय दे$_{2 7}$ त्रयोदशोऽध्याय दे$_9$ न$_1$ चतुर्दशोऽध्याय

## १५

※ ब$_{\circ 3}$ दे$_2$ ○ शा$_1$ का$_1$ दे$_9$ न$_1$ ऋषय·, दे$_4$ ऋषयोवाच

१ –a) दे$_3$ तच्च (→यच्च) –b) न$_1$ °परं (→°स्थितै·); का$_1$ ब$_{1 2}$ दे$_5$ स्थितैर्नरैः (→°स्थितैर्नरैः) –d) दे$_{11}$ °महो (→°महे)

२ दे$_9$ ab 'पयुषित स्नेहाक्त' ○ –b) का$_1$ स्नेहार्थ· (→स्नेहाक्तं) ब$_1$ दे$_{1 10 11}$ °संवृत, दे$_7$ °संस्थित (→°संभृतम्) –c) का$_1$ सस्नेहा, ब$_2$ स्नेहाक्ता·, दे$_7$ सुस्नेहा, न$_1$ अस्नेहाद् (→अस्नेहा ) न$_1$ चेष्टा (→श्लक्ष्णा·)

३ –a) ब$_{1 2}$ शल्यकौ, दे$_{4 7 11}$ शल्लको (→शल्यको); कारा गण्डको, का$_1$ ° श्वाविधौ (का$_2$ °दो), ब$_1$ दे$_9$ श्वा (ब$_1$ स्वा) विध (दे$_9$ °धा)° ब$_2$ दे$_{\circ 3}$ समेधा (दे$_2$ °धो), ब$_3$ दे$_{1 4-5 7}$ 10 ते$_1$ ससेधा (दे$_4$ °धो, दे$_7$ °धो), दे$_{11}$ ससेध्यो (→श्वाविधो) –c) शा$_1$ कारा का$_{1 2}$ विलावकादीनि ब$_{2 3}$ विदलकादीनि, दे$_7$ वल्कल

तद्वद् द्विदलकादीनि भोज्यानि मनुरब्रवीत् ॥ ३
मणिरत्नप्रवालाना तद्वन्मुक्ताफलस्य च ।
शैलदारुमयानां च तृणमूलौपधान्यपि ॥ ४
शूर्पधान्याजिनाना च सहताना च वाससाम् ।
वल्कलानामशेषाणामम्भुना शुद्धिरिष्यते ॥ ५
सस्नेहानामथोष्णेन तिलकल्केन वारिणा ।
कार्पासिकाना वस्त्राणा शुद्धि• स्यात्सह भस्मना ॥ ६
नागदन्तास्थिशृङ्गाणा तक्षणाच्छुद्धिरिष्यते ।
पुन• पाकेन भाण्डानां मृन्मयाना च मेध्यता ॥ ७
शुचि भैक्ष कारुहस्त• पण्य योपिन्मुख तथा ।
रथ्यागतमविज्ञात दासवर्गेण यत्कृतम् ॥ ८
वाक्प्रशस्त चिरातीतमनेकान्तरित लघु ।
चेष्टित बालवृद्धाना बालस्य च मुख शुचि ॥ ९
कर्मान्ताङ्गारशालासु स्तनधयसुता' स्त्रिय• ।
वाग्विप्रुपो द्विजेन्द्राणा सतमाश्चाम्बुनिन्दव: ॥ १०
भूमिर्विशुध्यते खातदाहमार्जनगोक्रमै । वें ११

चर्माणि दे$_{9}$ द्विदलचर्माणि न$_{1}$ द्विरलचर्माणि (→द्विदलकादीनि) –d) गा$_{1}$ मनु (→मनु)

३ श्लोकात्पर का$_{1}$ अधिकम्—

63* खड्गो कूमस्य पञ्चम । पञ्च पञ्चनखा भक्ष्या

४ दे$_{11}$ d ○ (इ स) –a) ब$_{1}$ दे$_{1\ 3\ 5\ 7\ 9\ 10}$ ते$_{1}$ न$_{1}$ °वस्त्र ब$_{2}$ °वज्र दे$_{4}$ °रत्न, दे$_{11}$ °वध (→°रत्न) दे$_{11}$ °प्रवालौश्च (→°प्रवालाना) –b) दे$_{4}$ तु दे$_{9}$ न$_{1}$ वै दे$_{11}$ वा (→च) –c) दे$_{2\ 3}$ मयाणा न$_{1}$ °मा (म ?) यानां (→°मयाना) –d) शा$_{1}$ कारा का$_{1\ 2}$ दे$_{5}$ °गुल्मो° न$_{1}$ °मूलो° (→°मूलो°); का$_{1}$ शैपधास्मना + श्रोपधान्यपि ब$_{3}$ श्रोपधानि च दे$_{7}$ श्रोपधा मपि (→श्रोपधान्यपि)

५. दे$_{11}$ a ○ (इ स) –a) ब$_{3}$ सूय° दे$_{5}$ श्रक° दे$_{1\ 4\ 10}$ सूप° दे$_{7}$ सर्पि° (→सूर्प°) ब$_{1}$ °धान्याजि (त) नानाश्च ब$_{2}$ °धान्यात्तिलाना च दे$_{1\ 4\ 7\ 10}$ ते$_{1}$ धान्यतृणाना च (→°धान्याजिनाना च) –b) शा$_{1}$ कारा का$_{1\ 2}$ रक्तवैदल दे$_{9}$ ***** (→संहताना च) –c) दे$_{7}$ अकोशाना (→अशेपाणा) –d) न$_{3}$ नान्यवत् (→अम्भुना)

५ श्लोकात्पर दे$_{7\ 9}$ अधिकम्—

64* पुन पाकेन भाण्डाना (दे$_{9}$+मृन्ममयाना) च मेध्यता ।
( – ७ cd)

६. दे$_{5}$ d ○ –b) दे$_{4}$ °काल्केन (→°वल्केन) शा$_{1}$ चापि तम्, का$_{1\ 2}$ चापि त (का$_{2}$ य)द् ब$_{1\ 3}$ दे$_{1\ 3\ 5\ 7\ 10.11}$ घा (दे$_{2}$ °धा दे$_{11}$ वा) वि (दे$_{5}$ °रि) कम् (→वारिणा) –d) दे$_{1\ 3\ 9\ 10}$ ते$_{1}$ बहिरम्बुना दे$_{11}$ सहभस्मना+सहमनुना (→सह भस्मना)

७ दे$_{7\ 9}$ cd ○ (६ श्लोके आगतम्) –a) ते$_{1}$ गज° (→नाग°) दे$_{9}$ °दारुणा (→°शृङ्गाणां) –b) शा$_{1}$ कारा का$_{1\ 2}$ ब$_{1}$ दे$_{1\ 5.7\ 9\ 11}$ ते$_{1}$ न$_{1}$ तत्क्षणाद (→तक्षणाद) –d) कारा मृण्मयाना (→मृन्मयाना) दे$_{2\ 3}$ ते$_{1}$ एष्यता दे$_{1}$ रधता (→मेध्यता)

८ दे$_{1}$ cd ○ –d) कारा का$_{1}$ ब$_{1\ 2}$ दे$_{7\ 11}$ शुचि दे$_{9}$ न$_{1}$ शुद्ध (→शुचि) कारा ब$_{3}$ भक्ष्य ब$_{2}$ भक्ष दे$_{7}$ भक्ष्य (→भक्ष) दे$_{4}$ °हस्तात् (→°हस्त) –b) गा$_{1}$ का$_{1}$ दे$_{1}$ पुण्य ब$_{1}$ दे$_{9}$ न$_{1}$ पण्य दे$_{7}$ पुण्य (→पण्य); का$_{1}$ योपिण्मुख, + योपि मुख (→योपिन्मुखम्) –c) दे$_{11}$ गज° (→रथ्या°) कारा यज्ञात (→अविज्ञात)

९ दे$_{1}$ वाक मुख ab cd ○ (इ स) –a) दे$_{2\ 3}$ वाक्यपूत (→वाक्प्रशस्त) दे$_{2\ 5\ 7\ 10\ 11}$ ते$_{1}$ चिरानीत दे$_{4}$ विपरीत (→चिरातीत) दे$_{9}$ न$_{1}$ पक्व तद्भि (न$_{1}$ पक्वास्मद्भि) विक्षिप्त –b) दे$_{9}$ °कान्तरिते न$_{1}$ °काचरित (→°कान्तरित) –d) गा$_{1}$ कारा वा$_{1\ 2}$ ब$_{1\ 3}$ दे $_{5\ 10\ 11}$ ते$_{1}$ तु (→च) गा$_{1}$ का$_{1}$ शुचि (→शुचि)

१० –a) का$_{1}$ कमम्यागार° का$_{2}$ कमा यागार° दे$_{4}$ कर्मान्त गोर° दे$_{9}$ कर्मांतकर° न$_{1}$ कर्माशामाप° (→कर्मान्ताङ्गार°) कारा ब$_{1\ 3}$ दे$_{4\ 7}$ °शालाश्च दे$_{1\ 3}$ °शालास्तु (→°शालासु) –b) ब$_{2}$ स्तनद्वय° (→स्तनधय°) शा$_{1}$ का$_{1}$ °सुत दे$_{1\ 3\ 5}$ °सुता (→°सुता) दे$_{7\ 9}$ न$_{1}$ स्तनद्वयमपि स्त्रिय (दे$_{9}$ °या) –c) का$_{2}$ वाग्विप्लुपो दे$_{11}$ वारिप्लुपो न$_{1}$ या विप्रुपो (→वाग्विप्रुपो) –d) शा$_{1}$ कारा का$_{2}$ दे$_{5}$ सततया ब$_{2}$ सतत दे$_{7\ 9}$ सतता न$_{1}$ सतते (→सतमा); दे$_{4,7\ 9}$ न$_{1}$ चापि (→चाम्बु-) दे$_{11}$ विदावर: (→ बिन्दव)

११ –a) कारा फाल ब$_{2\ 3}$ खाना (ता ?) द् दे$_{4}$ लेखाद्, दे$_{7}$ लेपाद् दे$_{9}$ चात्र न$_{1}$ तात (→खात) –b) कारा का$_{1}$ दास, दे$_{9}$ सह (→दाह) दे$_{2}$ °मार्जि (र्जि ?) त°, दे$_{4,7}$ °प्लावन° (→°मार्जन°) का$_{1}$ °गोमय +गोक्रमै, ब$_{1\ 3}$ °गोक्रमाद् दे$_{7}$ °गोत्तमै (→°गोक्रमै) – c) दे$_{11}$ उल्लेखात्स (→उल्लेखनाद्)

• १४.६८ लेपादुल्लेखनात् सेकाद् वेश्मसंमार्जनार्चनात् ॥ ११
केशकीटावपन्नेऽन्ने गोघ्राते मक्षिकान्विते ।
मृदम्बुभस्मक्षाराणि प्रक्षेप्तव्यानि शुद्धये ॥ १२
औदुम्बराणां चाम्लेन क्षारेण त्रपुसीसयोः ।
भस्माम्बुभिश्च कांस्यानां शुद्धिः प्लावो द्रवस्य च ॥ १३
अमेध्याक्तस्य मृत्तोयैर्गन्धापहरणेन च ।
अन्येषामपि द्रव्याणां शुद्धिर्गन्धापहारतः ॥ १४
मातुः प्रस्रवणे वत्सः शकुनिः फलपातने ।
गर्दभो भारवाहित्वे श्वा मृगग्रहणे शुचिः ॥ १५
रथ्याकर्दमतोयानि नावः पथि तृणानि च ।
मारुतेनैव शुद्धयन्ति पक्वेष्टकचितानि च ॥ १६
भृतं द्रोणाढकम्यान्नममेध्याभिप्लुतं भवेत् ।
अग्रमुद्धृत्य संत्याज्यं शेषस्य प्रोक्षणं स्मृतम् ॥ १७
उपवासं त्रिरात्रं वा दूषितान्नस्य भोजने ।
अज्ञाते ज्ञातपूर्वे च नैव शुद्धिर्विधीयते ॥ १८
उदक्याश्वाननग्नांश्च सूतिकान्त्यावसायिनः ।
स्पृष्ट्वा स्नायीत शौचार्थं तथैव मृतहारिणः ॥ १९
सस्नेहमस्थि संस्पृश्य सवासाः स्नानमाचरेत् ।

---

दे$_7$ सेकै (→सेकात्). –d) का$_{1\ 2}$ ब$_{1\ 3}$ दे$_{5\text{-}11}$ °सम्मार्जनाज्ज-लात्, न$_1$ °सम्मार्जनार्च (च्यं ?) र्घं (→°समार्जनार्चनात्).

१२. –a) दे$_7$ °कीटवि° दे$_9$ °कीडाव° न$_1$ °कीटव° (→°कीटाव°), शा$_1$ का$_{1.2}$ °पन्नान्ने, ब$_{1\ 3}$ °पन्नार्थे°, (→°पन्ने च): दे$_{7.9}$ न$_1$ -पन्ने च (→-पन्नेऽन्ने). –b) ब$_{1.2}$ निघ्राते, दे$_2$ गोघ्राति, दे$_9$ गोव्राते, दे$_{11}$ गोभ्राते (→गोघ्राते). –c) दे$_{1.5\text{-}11}$ मृद्वसु° (→मृद-म्बु°), दे$_{1.11}$ न$_1$ °क्षराणि (→°क्षाराणि), दे$_9$ मृदं भस्माद्यहाराणि.

१३. a) दे$_{1\text{-}11}$ उडब°, दे$_{3\ 4\ 7\text{-}10}$ उदुब° (→औदुम्ब°), दे$_2$ वास्तेन, न$_1$ चाम्रेण (→चाम्लेन). –b) दे$_2$ सारेण (→क्षारेण); शा$_1$ त्रप° (→त्रपु°): ब$_3$ दे$_1$ °शीसयो (→°सीसयोः). –c) दे$_{2.3\text{-}5.10}$ भस्माद्भिश्चैव, दे$_{1.11}$ भस्मादिभिश्च (→भस्माम्बुभिश्च), दे$_7$ कास्य (लोहा) ना (→कास्याना). –d) कारा प्लक्षोद्भव°, दे$_7$ -श्चापाद्रव° (→प्लावो द्रव°), ब$_{2\ 3}$ दे$_4$ तु (→च)

१४ –a) दे$_7$ अमेध्यात्यक्त- (→अमेध्याक्तस्य), ब$_2$ मृत्तो वै, दे$_9$ मृद्योगै (→मृत्तोयै). –b) शा$_1$ कारा का$_{1\ 2}$ शुद्धिर्गन्धा-पकर्षणात्. –c) का$_2$ द्रव्येषु, का$_1$ द्रव्येषु,+द्रव्याणा, न$_1$ द्रव्याणा, ब$_3$ तद्द्रव्य, दे$_{1\text{-}5\ 7.9\text{-}11}$ न$_1$ तद्द्रव्यै (दे$_{1\ 11}$ °व्ये) (→द्रव्याणाम्)

१५ –a) शा$_1$ का$_{1\ 2}$ दे$_{5.10.11}$ प्रस्र (शा$_1$ °श्र) वने, ब$_2$ दे$_{4.7}$ प्रश्रवणे, ब$_3$ प्रस्न (स्र ?) वणे, दे$_9$ प्रस्रवनात्, न$_1$ प्रस्न-वर्णात् (→प्रस्रवणे). –b) ब$_3$ कुशनि (→शकुनि), ते$_1$ °घातने (→°पातने). –c) दे$_2$ सार°, दे$_{11}$ वार° (→भार°). –d) दे$_4$ श्वै मृगवधे (→मृगग्रहणे).

१६. दे$_2$ ○. –b) ब$_1$ दे$_{3\text{-}10}$ गाव पथि, दे$_7$ गोश्च पन्था, दे$_9$ नावपन्न-, न$_1$ नावा पथ- (→नाव पथि) –c) दे$_{4\text{-}5\text{-}7}$ मार्त-तार्केण (→मारुतेनैव): ब$_{1\text{-}3}$ शुद्धयन्ते (→शुद्धयन्ति). –d) दे$_7$ °चयानि (→°चितानि), दे$_4$ तु (→च).

१७. दे$_2$. ab ⊙. –a) शा$_1$ शत, कारा. न$_1$ शत-, ब$_3$ मृत्र, दे$_{10}$ पक्व (→भृत), शा$_1$ कारा. का$_2$ द्रोणाधिक-, शा$_1$ द्रोणाधिक, दे$_5$ ते$_1$ द्रोणाटक-, न$_1$ द्रोणाधिक (→द्रोणाढक-): का$_1$ चान्नं, ब$_1$ -स्यार्थं, न$_1$ चान्य (→-स्यान्न). –b) ब$_{1\ 2}$ -लभेद, ब$_3$ ते$_1$ भवे (→भवेत्). –c) दे$_9$ उत्सृज्य (→उद्धृत्य); दे$_7$ तक्ष्याज्यं (→सत्याज्य). –d) दे$_4$ शुभ (→स्मृतम्).

१८. –a) कारा. का$_2$ दे$_{4\text{-}7\ 9.10}$ °वास (→°वासं); कारा. स्यात् (→वा). –b) दे$_9$ दूषितस्यान्न- (→दूषितान्नस्य); दे$_{4\text{-}7\text{-}10}$ °भोजनात् (→भोजने). –c) का$_1$ ब$_{1.3}$ दे$_{2\ 10}$ ते$_1$ अज्ञात- (→अज्ञाते), शा$_1$ दे$_4$ ज्ञान° (→ज्ञात°), शा$_1$ का$_1$ दे$_{2\text{-}3.10}$ ते$_1$ ब$_1$ वा (→च). –d) दे$_2$ * शिष्यते (→विधीयते).

१९. –a) ब$_{1.2}$ °स्नान°, ब$_3$ °चाण्डाल°, दे$_{2\text{-}10}$ °श्वानु°, दे$_3$ °स्तेन°, दे$_7$ °स्नात° (→°श्वान°), दे$_4$ °नग्नास्थि-, न$_1$ °जग्याश्च (→°नग्नाश्च), कारा. उदक्याश्वसृगालाश्च, दे$_9$ उदक्या मललग्नाश्च. –b) शा$_1$ का$_{1\ 2}$ पूजकान्त्या°, कारा. ब$_1$ दे$_{4\text{-}10}$ सूतिकान्ता°, दे$_9$ पूतिकान्ता° (→सूतिकान्त्या°), ब$_1$ °शायिका, दे$_1$ न$_1$ °सायिना (→°सायिन) –c) ब$_2$ स्नायी च (→स्नायीत), ब$_2$ शौचार्न्नं, दे$_9$ शुद्धयर्थं (→शौचार्थं). –d) का$_2$ °हारिग ,+°हारक , न$_1$ °भाविण (→°हारिण)

२०. –a) दे$_1$ सलेह° (→सस्नेह°), शा$_1$ ब$_{2\ 3}$ °मस्ति (स्थि ?) (→मस्थि). –b) ब$_{1\ 3}$ दे$_{4.7\text{-}9}$ न$_1$ सचै (ब$_{1\ 3}$ °चे) ल (→सवासा), कारा. स्नान समाचरेत् , मुवे जलमाविशेत्, दे$_{10}$ स्नानमाचरेत् +जलमाविशेत् (→स्नानमाचरेत्). कारा. वार स्नानं समाचरेत् –c) दे$_9$ ते$_1$ आचम्ये(ते$_1$ °म्यै)व च, न$_1$ आचम्य न तु (→आचम्यैव तु); का$_{1.2}$ दे$_{1.11}$ निस्नेह, दे$_7$ अस्नेहं (→निःस्नेह). –d) शा$_1$ गामावश्यक°, का$_2$ गामालम्यार्क°, दे$_7$ गाम्वालम्यार्क° (→गामालम्यार्क°); कारा. ब$_{1.2}$ दे$_4$ वा (→च), दे$_7$ °मीक्षयेत् (→°मीक्ष्य च).

आचम्यैव तु नि स्नेह गामालभ्यार्कमीक्ष्य च ॥ २०
न लङ्घयेत्पुरीपासृक्ष्ठीवनोद्वर्त्तनानि च ।
गृहादुच्छिष्टविण्मूत्रे पादाम्भासि क्षिपेद् बहि ॥ २१
पञ्चपिण्डाननुद्धृत्य न स्नायात् परवारिणि ।
स्नायीत देवखातेषु सरोह्रदसरित्सु च ॥ २२
नोद्यानादौ विकालेषु प्राज्ञस्तिष्ठेत् कदाचन ।
नालपेद जनविद्विष्ट वीरहीना तथा स्त्रियम् ॥ २३
देवतापितसच्छास्त्रयज्ञवेदादिनिन्दकै ।
कृत्वा तु स्पर्शमालाप शुद्ध्यतेऽर्कावलोकनात् ॥ २४

अभोज्या सूतिकापण्ढमार्जाराखुश्वकुक्कुटा ।
पतितापविद्धनग्नाश्चाण्डालाद्यधमाश्च ये ॥ २५
सुकेशिरुवाच ॥❀
भवद्भि कीर्तिताऽभोज्या य एते सूतिकादय ।
अमीषा श्रोतुमिच्छामि तत्त्वतो लक्षणानि हि ॥ २६
ऋषय ऊचु ॥❀
ब्राह्मणी ब्राह्मणस्यैव याऽवरोधत्वमागता ।
तावुभौ सूतिकेत्युक्तौ तयोरन्न विगर्हितम् ॥ २७
न जुहोत्युचिते काले न स्नाति न ददाति च ।

---

२१ –a) ते$_{1}$ नोलघयेत् न$_{1}$ न लघेय (→न लङ्घयेत्) ब$_{1\ 3}$ परस्यासृक्, दे$_{1\ 4\ 5.11}$ पर नासृक्, दे$_{2\ 3\ 7\ 9}$ ते$_{1}$ नर नासृक्, दे$_{10}$ नारमसृक्, न$_{1}$ नर यावत् (→पुरीपासृक) –b) शा$_{1}$ का$_{1\ 2}$ सङ्कीर्णो° दे$_{1\ 3\ 10\ 11}$ ते$_{1}$ शरीरो° दे$_{4}$ नाप्लुतो° दे$_{7}$ द्वीपको° (→ष्ठीवनो°) शा$_{1}$ [–उ] द्वन्तराणि (→[–उ]द्वर्त्तनानि) c) ब$_{1}$ गृहद्वोच्छिष्ट° दे$_{9}$ महानुच्छिष्ट° (→गृहादुच्छिष्ट°) शा$_{1}$ का$_{1\ 2}$ ब$_{2\ 3}$ दे$_{1\ 3\ 9\ 11}$ न$_{1}$ °मूत्र (→°मूत्र) –d) दे$_{1}$ पा ❀ म्यां सि दे$_{9}$ पादाम्या न न$_{1}$ पादाम्यामा (→पादाम्भसि)

२२ –b) दे$_{7}$ °वारिणा (→°वारिणि) –c) शा$_{1}$ स्नायेत (→स्नायीत) शा$_{1}$ दव° (→देव°) दे$_{9}$ °घातेषु (→°खातेषु) –d) दे$_{1}$ सरोदक, दे$_{2}$ ते$_{1}$ सरत्सूद दे$_{3}$ सर.सु च (→सरोह्रद) ते$_{1}$ °सरसु (→°सरित्सु)

२३ का$_{1}$ ○ –a) दे$_{1\ 11}$ नोयातादौ दे$_{2}$ नोपानादौ दे$_{7}$ नोद्यानोर्यां दे$_{10}$ नो (उ) द्यानादौ (→नोद्यानादौ) दे$_{9}$ नोद्यानवेदिकाया च –c) ब$_{1\ 3}$ न लपेत् दे$_{1\ 11}$ न लो (लु) पेत् दे$_{4}$ नालाप (पे ?)त् (→नालपेत्) दे$_{9}$ वान° (→जन°) –d) शा$_{1}$ का$_{2}$ चीर दे$_{11}$ धीर (→वीर) दे$_{1\ 4\ 11}$ °हीन (→°हीना) न$_{1}$ विरहिण्या (→वीरहीना) न$_{1}$ यथा (→तथा) दे$_{10}$ वीरहीना' शब्दस्यार्थ टिप्पण्याम्—

65❀ रहिता पतिपुत्राभ्या निवीरेत्यभिधीयते ।

२४ –b) ब$_{2}$ याव° ब$_{3}$ यद्वि° दे$_{1}$ पक्ष° दे$_{7}$ यवि° दे$_{11}$ यक्ष° (→यज्ञ°) ब$_{1\ 3}$ मन्त्रादि ब$_{3}$ दे$_{4\ 7}$ ना (ब$_{3}$ श) स्त्रादि दे$_{1\ 3\ 5\ 10.11}$ ते$_{1}$ न$_{1}$ °सत्रादि° दे$_{7}$ (त) °छत्रादि° (→°वेदादि°) –c) दे$_{2}$ ते$_{1}$ स्पशना दे$_{9}$ शासना° न$_{1}$ मागमा° (→स्पशमा°) –d) कारा दे$_{4}$ शुद्धमत्यर्काव° दे$_{1\ 11}$ शुद्धिरर्काव° दे$_{7}$ शुद्धयतार्काव°, दे$_{9}$ मुच्यतेऽकवि° (→शुद्धयतेऽर्काव°) ते$_{1}$ °रविलोकनात् (→[म]°र्कावलोकनात्)

२५ –a) शा$_{1}$ का$_{1}$ दे$_{4\ 7\ 10}$ अभोज्य (→अभोज्या) दे$_{1\ 11}$ सूतिकी दे$_{7}$ सूतिक (→सूतिका) दे$_{2}$ °खेट दे$_{4\ 7}$ पण्ढो ते$_{1}$ °पण्डा (→°षण्ढ) –b) शा$_{1}$ °मार्जाराखुश्व कारा °मार्जाराश्वाखु का$_{1}$ ब$_{3}$ दे$_{1\ 3\ 10.11}$ ते$_{1}$ न$_{1}$ °मार्जाराखुश्च ब$_{1\ 2}$ दे$_{4\ 7}$ °मार्जाराखु स° (→°मार्जाराखुश्व) दे$_{7}$ कुक्कुट दे$_{9}$ ककटा (→कुक्कुटा) –c) ब$_{2\ 3}$ °विद्ध° दे$_{11}$ °विघ्न° (→°विद्ध°) कारा पतितापविद्धनग्नाश्च दे$_{4\ 9}$ पतिताविद्धनग्नाश्च न$_{1}$ पतिताश्चापविद्धाश्च –d) शा$_{1}$ कारा का$_{1}$ ब$_{1\ 3}$ दे$_{1\ 2\ 4\ 7}$ ते$_{1}$ न$_{1}$ चण्डाला° (→श्चाण्डाला°) शा$_{1}$ कारा का$_{1}$ ब$_{1\ 3}$ दे$_{1\ 3\ 5\ 10.11}$ ते$_{1}$ °द्याध° (→°द्यध°) न$_{1}$ चण्डाला अधमाश्च ये

❀ शा$_{1}$ का$_{1}$ दे$_{7}$ न$_{1}$ सुकेशि दे$_{1\ 11}$ शुकेशिरुवाच दे$_{4}$ सुकेशी उवाच

२६ –a) दे$_{7}$ येऽमी ते$_{1}$ सम्यक (→[अ]भोज्या) –b) ब$_{1\ 2}$ यत्र ते दे$_{7}$ अभोज्या (→य एते) –d) दे$_{9}$ लक्षणादिभि (→लक्षणानि हि)

❀ शा$_{1}$ का$_{1}$ दे$_{7\ 9}$ न ऋषय दे$_{4}$ ऋषयोवाच

२७ –a) कारा [–अ] ब्राह्मणस्यैव दे$_{3\ 10}$ ते$_{1}$ ब्राह्मणश्चैव (→ब्राह्मणस्यैव) –b) ब यावबोध ब$_{2}$ या वा बाधा दे$_{2\ 3}$ ते$_{1}$ यावच्छेपत्व दे$_{5}$ यावतो धत्व दे$_{7}$ यावद्रोपत्व (→यावरोधत्व) दे$_{2\ 3\ 5\ 10}$ ते न$_{1}$ आगतं (→मागता) –d) ब$_{7}$ अथ (→अन्न)

२८ –a) दे$_{1}$ कु (जु?) होति (→जुहोति) शा$_{1}$ उच्यते (→उचिते) –b) दे$_{7}$ ना स्नाति (→न स्नाति) शा$_{1}$ का$_{2}$ दे$_{3}$ च (दे$_{3}$ नो) ददाति (→न ददाति) ब$_{1\ 2}$ वा (→च) –c) दे$_{1\ 11}$ °दीनि (→°दीन) –d) ब$_{1\ 3}$ दे$_{2\ 3\ 5\ 9}$ ते$_{1}$ न$_{1}$ स षण्ड दे$_{4}$ खढ दे$_{1\ 11}$ तरयन्न (→स षण्ढ)

४.८५ पितृदेवार्चनाद्धीनः स पण्ढः परिगीयते ॥ २८
दम्भार्थं जपते यश्च तप्यते यजते तथा ।
न परत्रार्थमुद्युक्तो स मार्जारः प्रकीर्तितः ॥ २९
विभवे सति नैवात्ति न ददाति जुहोति च ।
तमाहुराखुं तस्यान्नं भुक्त्वा कृच्छ्रेण शुद्ध्यति ॥ ३०
यः परेषां हि मर्माणि निकृन्तन्निव भाषते ।
नित्यं परगुणद्वेषी स श्वान इति कथ्यते ॥ ३१
सभागतानां यः सभ्यः पक्षपातं समाश्रयेत् ।
तमाहुः कुक्कुटं देवास्तस्याप्यन्नं विगर्हितम् ॥ ३२
स्वधर्मं यः समुत्सृज्य परधर्मं समाश्रयेत् ।
अनापदि स विद्वद्भिः पतितः परिकीर्त्यते ॥ ३३
देवत्यागी पितृत्यागी गुरुभक्त्यरतस्तथा ।
गोब्राह्मणस्त्रीवधकृदपविद्धः स कीर्त्यते ॥ ३४
येषां कुले न वेदोऽस्ति न शास्त्रं नैव च व्रतम् ।
ते नग्नाः कीर्तिताः सद्भिस् तेषामन्नं विगर्हितम् ॥ ३५
आशार्तानामदाता च दातुश्च प्रतिषेधकः ।
शरणागतं यस्त्यजति स चाण्डालोऽधमो नरः ॥ ३६
यो बान्धवैः परित्यक्तः साधुभिर्ब्राह्मणैरपि ।
कुण्डाशी यश्च तस्यान्नं भुक्त्वा चान्द्रायणं चरेत् ॥ ३७
यो नित्यकर्मणो हानिं कुर्यान्नैमित्तिकस्य च ।
भुक्त्वान्नं तस्य शुद्ध्येत त्रिरात्रोपोषितो नरः ॥ ३८
गणकस्य निषादस्य गणिकाभिषजोस्तथा ।
कदर्यस्यापि शुद्ध्येत त्रिरात्रोपोषितो नरः ॥ ३९

दे$_{1\ 11}$ (दु) परि° (→परि°)

२९ –a) दे$_{2}$ दभार्थी (→दम्भार्थं), दे$_{7\ 9}$ यजते, दे$_{1\ 11}$ जायते (→जपते) –b) कारा दे$_{7}$ तपते (→तप्यते) शा$_{1}$ ब$_{1}$ दे$_{2\ 10}$ ते$_{1}$ पठते ब$_{3}$ दे$_{1\ 9\ 11}$ जप, (दे$_{1\ 11}$ °य) ते, दे$_{4}$ च तपस्, दे$_{7}$ तापयेत् (→यजते) –c) शा$_{1}$ कारा का$_{1\ 2}$ परार्थं मूढ, दे$_{4}$ न च पुण्यार्थं, दे$_{7}$ न परान्नार्थं, दे$_{9}$ न परत्वार्थं, (→न परत्रार्थं) दे$_{4\ 7\ 9}$ न$_{1}$ इत्युक्त (→उद्युक्त) –d) शा$_{1}$ कारा का$_{1\ 2}$ब$_{1\ 2}$ दे$_{1-5\ 10\ 11}$ ते$_{1}$ मार्जार. परिकीर्तित, दे$_{4}$ स मार्जारो नराधम

३० –a) दे$_{9}$ नैवार्थं (→नैवात्ति) –b) दे$_{1\ 11}$ कु (जु ?) होति (→जुहोति) ब$_{1}$ दे$_{1\ 4.5\ 7}$ ते$_{1}$ न$_{1}$ च, दे$_{9}$ नो (→न); दे$_{4}$ न जुहोति ददाति च –c) ब$_{1}$ आख्यु, ब$_{3}$ आखु (→आखु)

३१ ब$_{1\ 3}$ दे$_{1\ 7\ 9-11}$ ते$_{1}$ न$_{1}$ ○ –c) शा$_{1}$ °गुणा° (→°गुण°)

३२ ब$_{2}$ cd ○ –a) दे$_{4}$ लोकाना, दे$_{7}$ य शश्वत् (→य सभ्य) –d) दे$_{4\ 7}$ तस्यैवान्न (→तस्याप्यन्न)

३३ ब$_{2}$ ○ –a) ब$_{3}$ दे$_{4.9}$ परित्यज्य (→समुत्सृज्य) –b) दे$_{7}$ °धर्मं (→°धर्म) कारा का$_{1\ 2}$ ब$_{3}$ दे$_{4\ 9\ 10}$ न$_{1}$ समाचरेत्, दे$_{1\ 3\ 11}$ ते$_{1}$ समारभेत् (→समाश्रयेत्) –c) शा$_{1}$ कारा का$_{1\ 2}$ अनाहत (→अनापदि) –d) ब$_{1\ 3}$ दे$_{4}$ परिकीर्तित, दे$_{7}$ परिगीयते (→परिकीर्त्यते)

दे$_{7}$ ३७ श्लोकस्य ab, cd मध्ये पुनरावृत्तम् (= 32 cd, 33 ab)

३४ दे$_{10}$ ○ –a) कारा का$_{1}$ ब$_{1\ 3}$ दे$_{1\ 5\ 7\ 11}$ ते$_{1}$ वेद°, ब$_{2}$ देव°, + वे°° (→देव°) –b) का$_{2}$ °भक्त्यजुप, ब$_{1\ 2}$ °पत्न्युर्जक, ब$_{3}$ वाक ** दे$_{2\ 3}$ °वद्भुग्नक, दे$_{1\ 5\ 11}$ °भक्त्युभुक, दे$_{4}$ °वद्भुष्ण (प्र ?) क, दे$_{7}$ °वद्भुजरक, दे$_{9}$ °वद्भुद्रसक, ते$_{1}$ °वप्रजुक (→°भक्त्यरत) न$_{1}$ देवेतरयजो तथा –c) ते$_{1}$ गोब्राह्मणस्त्रि च ** कृत् –d) ब$_{1\ 3}$ दे$_{4\ 7\ 9}$ प्रचक्ष (ब$_{2\ 3}$ °क्ष्य) ते, दे$_{2}$ न$_{1}$ प्रकीर्त्यते (→स कीर्त्यते)

३४ श्लोकात्पर ते$_{1}$ अधिकम्—

66* अनापदि स विद्वद्भि पतित परिकीर्त्यते (= ३३ cd)

३५ शा$_{1}$ कारा का$_{1\ 2}$ ब$_{1\ 3}$ दे$_{1\ 5\ 7\ 9-11}$ न$_{1}$ ○ –b) दे$_{4}$ तु (→च) –c) दे$_{2}$ तेनया (→ते नग्ना)

३६ –a) दे$_{4\ 7}$ आशाकर्तुं, दे$_{9}$ न$_{1}$ आशाका (न$_{1}$ °क) र (→आशार्ताना) –b) दे$_{1\ 5\ 7\ 11}$ दारु (तु ?) (→दातु) –d) शा$_{1}$ कारा का$_{1\ 2}$ दे$_{4\ 7\ 9}$ न$_{1}$ चण्डालो (दे$_{7}$ °ला) (→चाण्डालो), ते$_{1}$ चाण्डाल स (→स चाण्डाल) शा$_{1}$ दे$_{4}$ नरोधम, कारा ब$_{1\ 3}$ नराधम, दे$_{2\ 3\ 10}$ ते$_{1}$ [अ] धमो जन (→[-अ] धमो नर)

३७ –a) दे$_{9}$ अपि (→परि) दे$_{7}$ यो बाधवान्परित्यज्य –b) दे$_{7}$ सह (→अपि) –c) दे$_{3\ 9}$ यस्य (→यश्च) दे$_{4}$ तश्चा (स्या?) न्न (→तस्यान्न)

३८ दे$_{2\ 7}$ ○ –a) शा$_{1}$ कारा का$_{1\ 2}$ कर्महानि च ब$_{2}$ कर्मणा हानि (→कर्मणो हानिं) –b) दे$_{1\ 4\ 11}$ तु (→च) –c) ब$_{3}$ मुक्तार्थं (र्थं ?) (→भुक्त्वान्न) ब$_{2}$ दे$_{11}$ शुद्धत (→शुद्ध्येत) –d) दे$_{9}$ द्विज (→नर)

३९ शा$_{1}$ ब$_{1\ 3}$ दे$_{2\ 5\ 9.10}$ ते$_{1}$ न$_{1}$ ○ –b) दे$_{1\ 11}$ गणिका (°या) (→गणिका) का$_{2}$ दे$_{1\ 11}$ भिषज (→ भिषजो)

नित्यस्य कर्मणो हानिः केवलं मृतजन्मसु ।
न तु नैमित्तिकोच्छेदः कर्त्तव्यो हि कथचन ॥ ४०
जाते पुत्रे पितुः स्नानं सचैलस्य विधीयते ।
मृते च सर्वबन्धूनामित्याह भगवान् भृगुः ॥ ४१
प्रेताय सलिलं देयं बहिर्दग्ध्वा तु गोत्रजैः ।
प्रथमेऽह्नि चतुर्थे वा सप्तमे वाऽस्थिसंचयम् ॥ ४२
ऊर्द्ध्वं सचयनात्तेषामङ्गस्पर्शो विधीयते ।
सोदकैस्तु क्रिया कार्या संशुद्धैस्तु सपिण्डजैः ॥ ४३
विषोद्बन्धनशास्त्राम्बुवह्निपातमृतेषु च ।
बाले प्रव्राजि संन्यासे देशान्तरमृते तथा ॥ ४४
सद्यः शौचं भवेद्वीर तच्चाप्युक्तं चतुर्विधम् ।
गर्भस्रावे तदेवोक्तं पूर्णकालेन चेतरे ॥ ४५
ब्राह्मणानामहोरात्रं क्षत्रियाणां दिनत्रयम् ।
षड्रात्रं चैव वैश्यानां शूद्राणां द्वादशाह्निकम् ॥ ४६
दशद्वादशमासार्द्धमाससंख्यैर्दिनैश्च तैः ।
स्वाः स्वाः कर्मक्रियाः कुर्युः सर्वे वर्णा यथाक्रमम् ॥ ४७
प्रेतमुद्दिश्य कर्त्तव्यमेकोद्दिष्टं विधानतः ।
सपिण्डीकरणं कार्यं प्रेते आवत्सरान्तरे ॥ ४८
ततः पितृत्वमापन्ने दर्शपूर्णादिभिः शुभैः ।
प्रीणनं तस्य कर्त्तव्यं यथा श्रुतिनिदर्शनात् ॥ ४९
पितुरर्थं समुद्दिश्य भूमिदानादिकं स्वयम् ।
कुर्याद्येनास्य सुप्रीताः पितरो यान्ति राक्षस ॥ ५० वै. १४.

४०. –a) दे7 यो नित्य (→नित्यस्य), दे7 हाल (→हानि). –b) दे9 कृत° (→मृत°). –c) शा1 कारा. नित्य°, का1 नित्य°,+नतु, दे11 ननु (→न तु), दे4 °त्तिकछेद, दे7 °त्तिकोत्मेध (→°त्तिकोच्छेद). –d) कारा. न,(→हि)। दे7 कदाचन (→कथचन). दे7 दृष्टिदोषात् c,d मध्ये पुनरावृत्तम्—

67* कुर्यान्नैमित्तिकस्य तु ।
भुक्त्वा त तस्य शुद्धेत त्रिरात्रोपोषितो नर. ।
गणकस्य वि (नि ?) पादस्य गणिकाया भिषजस्तथा ।
कदर्यस्यापि शुद्ध्येत त्रिरात्रोपोषितो नर. ॥ [4]
नित्यस्य कमणो हानि केवल मृतजन्मसु ।
न तु नैमित्तिकोच्छेद कर्त्तव्यो हि कथंचन ॥ ( = ३८,–३९).

४१. –a) दे5 ताते (→जाते). –b) ब1 3 सचेलन्तु, दे3.4.7 9.10 तै1 न1 सचैल तु (→सचैलस्य). –c) ब2 मृतो हि (→मृते च).

४२. –b) ब1.2 युचिर्दग्ध्वा, दे4 बहिर्गत्वा तु, दे7 11 बहिर्दग्धा तु, दे9 बह्निदग्धाय (→बहिर्दग्ध्वा तु)। शा1 ब2.3 दे2.7 तै1 च (→तु), कारा. का1 स्वगोत्र° (→तु गोत्र°) –d) दे9 न1 °सचय (→°संचयम्).

४३. –a) दे9 सश्चयनाच्चैषा, दे10 सचयमात्रैषा (→सचयनात्तषां). –c) कारा साधकैस्तु, दे1 11 मो (दे1 सा) दकेसु, दे10 साद (ध ?) केषु (→सोदकैस्तु). –d) दे1.3.5 9-11 तै1 भ गुद्धैस्तु, दे3 आ गुद्धैस्तु, दे4 स गुद्धैभ, न1 साशुद्धैस्तु (→संशुद्धैस्तु). दे2 4 7.10 तै1 °पिण्डकै (→°पिण्डजै).

४४. –a) ब1 तै1 नुगोद्बधन°, दे7 विशोत्रने च (→विषोद्बन्धन°), कारा. °शस्त्रास्त्र°, ब3 °शस्त्रार्द्र°, +°शस्त्राम्बु° (→°शास्त्राम्बु°) –b) ब1.2 °घात-, न1 °पाते (→°पात-). –c) शा1 बाल्ये, दे9 न1 बाल- (→बाले) कारा. प्रव्रज्या-, ब1 2 प्राव्राजि, दे1.11 प्रजाजि (→प्रव्राजि), दे9 न1 सन्यासि (→सन्यासे), दे4.5.7 बाले प्रव्रजिते चैव. –d) दे7 °मृतेयवा (→°मृते तथा).

४५ –a) दे7 वीर (→वीर) –b) दे7 तथाप्युं°, दे11 तदाशु° (→तच्चाप्यु°) –c) दे2 गर्भे (→गर्भ-), दे1.2 9 11 तदैवोक्तं (→तदेवोक्त). –d) दे3 7 पूर्व° (→पूर्ण°), शा1 कारा का1.2 सदा चरेत्, दे1-5 9 11 तै1 –न वै चरेत् (→कालेन चेतरे).

४६. –c) ब1 2 अथ, ब3 दे4 7 अपि, दे9 अभि (→चैव). –c) ब3 दे4 द्वादशाहिकं, दे7 द्वादशाब्दिक, दे9 च दशाह्निक (→द्वादशाह्निकम्)

४७ –a) शा1 का1 दे1.3 5.7 11 न1 °मासार्धं, दे9 मस्यार्धं- (→°मासार्ध-) –b) ब3 दे2 4.7 9 10 तै1 न1 गतै (→च तैः) –c) ब1 2 गुद्धै, दे4 स्वा स्वां, दे7 स्वे स्वे, दे9 तोय- न1 स्वं स्व (→स्वा स्वा), मुवे. काले (→कर्म-), दे4.2 °त्रिया (→°क्रिया) –d) दे4 सर्व- (→सर्वे)

४८ शा1. bcd ○ (द स) –c) दे4 7 9 न1 प्रेते (→कार्यं) –d) कारा का1 2 प्रतस्य वत्स°, ब1 2 प्रेतस्या (ब1 °स्य) वत्स°, दे4 कार्यं संवत्स°, दे7.9 न1 कार्यमावत्स° (→प्रेते आवत्स°), दे2 4 7 न1 °त्सरान्ते (दे2 न1 °तरे.) (→°त्सरान्तरे)

४९. शा1 abc ○(द.स), दे7 कत्तव्य • नात् cd ○. (द.सं.) –a) कारा आपन्ना (→आपन्न). –b) ब2दे4.7 °पौर्ण° (→°पूर्णा°), ब1 वरै, दे2.3 10 तै1 दिनै (→शुभै) –c) ब1 दे11 प्रीणय (→प्रीणन) –d) न1 तथा (→यथा), शा1 कारा. दे4 °दर्शनं (→°दर्शनात्)

५० दे-. पितु ······ • नास्य abc ○. (द. सं.). –a) ब2.3 दे4 पित (दे4 °प ?) रथ, दे9 पितर स्वान्, न1 पितृनथ

१४.१०६ यद् यदिष्टतमं किंचिद् यच्चास्य दयितं गृहे ।
तत्तद् गुणवते देयं तदेवाक्षयमिच्छता ॥ ५१
अध्येतव्या त्रयी नित्यं भाव्यं च विदुषा सदा ।
धर्मतो धनमाहार्यं यष्टव्यं चापि शक्तितः ॥ ५२
यच्चापि कुर्वतो नात्मा जुगुप्सामेति राक्षस ।
तत् कर्त्तव्यमशङ्केन यन्न गोप्यं महाजने ॥ ५३
एवमाचरतो लोके पुरुषस्य गृहे सतः ।
धर्मार्थकामसंप्राप्तिः परत्रेह च शोभनम् ॥ ५४
एष तूद्देशतः प्रोक्तो गृहस्थाश्रम उत्तमः ।
वानप्रस्थाश्रमं धर्मं प्रवक्ष्यामोऽवधार्यताम् ॥ ५५

अपत्यसंततिं दृष्ट्वा प्राज्ञो देहस्य चानतिम् ।
वानप्रस्थाश्रमं गच्छेदात्मनः शुद्धिकारणम् ॥ ५६
तत्रारण्योपभोगैश्च तपोभिश्चात्मकर्षणम् ।
भूमौ शय्या ब्रह्मचर्यं पितृदेवातिथिक्रिया ॥ ५७
होमस्त्रिषवणं स्नानं जटावल्कलधारणम् ।
वन्यस्नेहनिषेवित्वं वानप्रस्थविधिस्त्वयम् ॥ ५८
सर्वसङ्गपरित्यागो ब्रह्मचर्यममानिता ।
जितेन्द्रियत्वमावासे नैकस्मिन् वसतिश्चिरम् ॥ ५९
अनारम्भस्तथाहारो भैक्षान्नं नातिकोपिता ।
आत्मज्ञानावबोधेच्छा तथा चात्मावबोधनम् ॥ ६०

---

(→पितुरर्थं), का1 घरू,+मर्थं (→मर्थं). –b) दे3.4.9 दासादिकं, न1 गोदानकं (→कोशादिक). –c) ब1 दत्वा ब्राह्म तत प्रीता, ब2 कुर्याच्छ्राद्धन्तत प्रीता, ब3 कुर्याद्येनास्य पितर. –d) ब3 सुप्रीता (→पितर), ब1-3 दे4.7 सन्ति (→यान्ति), शा1 राक्षसम् दे4.7 राक्षस (→राक्षस).

५१. दे7. d ○. (ह सं). –b) दे9 यचान्य (न्य?) (→यच्चास्य). –d) ब2 इच्छता, दे1.11 इच्छत (→इच्छता).

५२. दे5. ○, दे7. adc ⊙ (ह. स.). –a) दे2 3 10 तै1 °स्त्रयो (→त्रयी). –b) ब2.3 दे2-10 तै1 वेदाश्च, दे1-11 लाघ च (→भाव्य च), दे9 महाव्यत्व विपा सदा. –d) ब3 चादि, दे1-11 चाति- (→चापि).

५३. दे5 a ⊙ –a) दे4.7 यद्वापि, दे9 यद्वाति-, न1 यद्वाभि-(→यच्चापि), दे1-11 (धर्मार्थकाम) यच्चापि कुर्वंतो नात्मा. –b) दे1 11 जुगुप्सामिति (→जुगुप्सामेति), दे1 11 राक्षसा (→राक्षस). –d) दे1 11 न1 यश्च (→यन्न), ब1-2 यत्वन्मेप्य-गृहाजने

५४. का1. cd ○ –a) शा1 एक° (→एव°), ब1 दे1 माचारत, दे4 माचरते (→आचरत) –b) ब2 गृहे यत, दे7 विशेषत (→गृहे सत). –c) ब3 सवित्ति, दे1 11 यं प्राप्त (→संप्राप्ति); दे9 धर्मकामार्थसपत्ति. –d) दे2-4.9.10 तै1 न1 शोभना, दे7 शोभने (→शोभनम्).

५५. का1. ab ○; दे2. cd ○. (ह. स). –a) दे4 बुद्धमनुद्देशत (→एष तूद्देशत), दे1-11 प्राप्तो, दे5 प्रोक्त (→प्रोक्तो) –b) शा1 दे1 7.11 °श्रमम् (→°श्रम), दे1-11 उच्यते (→उत्तम), –c) ब3 -श्रमान्धर्मान्, दे4 प्रस्थस्य ते धर्मं, दे7 9 न1 प्रस्थस्य धर्म ते (→प्रस्थाश्रयं धर्म); कारा. का1 ब1-2 दे1 10 11 °श्रमं (→°श्रयं). –d) ब1 प्रवक्ष्यामि, दे4 वदिष्यामि, न1 कथयाम (→प्रवक्ष्याम); ब1 निबोधत, ब2 निबोध तत् (→[–अ] वधार्यताम्).

५६. दे2. ab ⊙. –a) दे9 सतति. (→सतति). –b) दे1.11 प्रज्ञो (→प्राज्ञो). ब1.2 वानति, दे7 न1 चारति, दे9 जारित (→चानतिम्).

५७. –a) ब2 तत्रापण्ये°, दे7 तत्र वन्यो° (→तत्रारण्यो°), दे10 भोग्यै (→°भोगै). –b) शा1 कारा. का1 2 दे1.4.5.9.11 न1 °दर्शन, दे2 10 तै1 °कर्शनम् (→°कर्षणम्). –c) न1 °चर्य (→°चर्यं). –d) शा1 कारा. का1 2 ब1 दे1.3.4 9.11 °क्रिया (→°क्रिया)

५८. –a) शा1 कारा का1 दे9 होम (→होम); शा1 कार दे2-4.10 तै1 नं1 त्रिषवग, का2 [–अ] भिषवग (→त्रिषवण). –b) का1 दे9 °धारिण (→°धारणम्) –c) दे3 विपेवित्वं, दे7 निशेवित्व (→निषेवित्व). –d) दे4 -स्थिति, दे7 ह्यय (→त्वयम्).

५९. [ ५९–६६ यावत् ब3 अस्पष्टम् ] –b) ब2 °चर्यसमन्विता, दे7.11 °चर्यत्य (दे11 °स) मानिता, दे3 °चर्यममाचि (नि?) ता (→°चर्यममानिता) –c) दे9 आवासो (→आवासे). –d) दे2-4 तै1 वसते चिरम् (→वसतिश्चिरम्).

६०. ब3 अस्पष्टम् –a) ब1 2 तथा हारे (ब2 °रे (रै.?)), दे9 तथा पानो (→तथा हारो) –b) शा1 का1 2 भैक्ष्यं नैवाति°, ब1 भैक्षार्थे (र्थं ?) नाति°, ब2 भैक्ष्यान्ने नाति°, दे1 5-11 भै (दे1 11 °भे) क्षान्न नाति°, दे7 भिक्षान्ने नाति°, दे9 भैक्षान्नैर्नाति°, न1 भैक्षादो नाति° (→भैक्षान्न नाति°), दे4 नावि° (→नाति°), कारा. भैक्ष्यान्ने नैककालिक. –c) ब1 2 आ (ब1 ना) त्मज्ञान (ब1 °ना) विघो चेष्टा. –d) ब1 2 आत्मविशोधनं (→°आत्मावबोधनम्).

चतुर्थे स्वाश्रमे धर्मा अस्माभिस्ते प्रकीर्तिताः ।
वर्णधर्माणि चान्यानि निशामय निशाचर ॥ ६१

गार्हस्थ्य ब्रह्मचर्यं च वानप्रस्थं त्रयाश्रमाः ।
क्षत्रियस्यापि कथिता ये चाचारा द्विजस्य हि ॥ ६२

वैखानसत्वं गार्हस्थ्यमाश्रमद्वितयं विशः ।
गार्हस्थ्यमुत्तमं त्वेकं शूद्रस्य क्षणदाचर ॥ ६३

स्वानि वर्णाश्रमोक्तानि धर्माणीह न हापयेत् ।
यो हापयति तस्यासौ परिकुप्यति भास्करः ॥ ६४

कुपितः कुलनाशाय ईश्वरो रोगवृद्धये ।
भानुर्वै यतते तस्य नरस्य क्षणदाचर ॥ ६५

तस्मात् स्वधर्मं न हि संत्यजेत
न हापयेच्चापि हि नात्मवंशम् ।
यः संत्यजेच्चापि निजं हि धर्मं
तस्मै प्रकुप्येत दिवाकरस्तु ॥ ६६

पुलस्त्य उवाच ॥ ❀

इत्येवमुक्तो मुनिभिः सुकेशी
प्रणम्य तान् ब्रह्मनिधीन् महर्षीन् ।
जगाम चोत्पत्य पुरं स्वकीयं
मुहुर्मुहुर्धर्ममवेक्षमाणः ॥ ६७　व. १४.

इति श्रीवामनपुराणे पञ्चदशोऽध्याय ॥ १५ ॥

---

६१　ब3 भ्रस्तष्टम् (द्र ५६ पा वि) —a) ब1 ॰ दे1 11 चतुर्य, दे5 चतुर्थो (→चतुर्थे) ब1 ॰ स्वाश्रमो दे1 11 स्वाश्रमो दे7 [–स] ष्याश्रमे (→स्वाश्रमे) शा1 कारा का1 ब1 2 दे1 3 5 11 धर्मो, का2 धर्म्यो दे॰ धर्मे, दे7 धमान् (→धर्मा) —b) दे10 स (ते ?) स्माभि, मुवे तेऽस्माभि (→अस्माभि) शा1 कारा का1 ॰ [–स] स्माभिस्तेश्च प्रकीर्तित, ब1 दे1 5-11 [स] स्माभिस्ते प्रकीर्तित (ब1 दे5 °ता) दे10 तेऽस्माभि परिकीर्तिता —c) ब1 वस्तुधर्माणि चान्यानि, दे7 वने कर्माणि चान्यानि, मुवे वर्गधर्मास्तथा चान्यान् —d) न1 प्रवक्ष्याम (→निशामय)

६२　ब3 अस्पष्टम् (द्र ५६ पा वि) —a) कारा ब्रह्मचर्यं च गार्हस्थ्य —b) शा1 का॰ दे1 5-7 9-11 त्रयाश्रमा, कारा च ते त्रय, न1 च श्राश्रमा (→त्रयाश्रमा) ते1 वानप्रस्थाश्रमास्त्रय —c) शा1 कारा का1 ॰ ब1.2 दे1 3 5 7 10 11 ते1 गन्ति, दे4 गन्ति (→कथिता) —d) शा1 कारा का1 ॰ ब1.2 दे2 3 5 7 10-11 ते1 न1 य श्राचारा, दे1 य श्राचरो (→ये चाचारा)

६३　ब3 भ्रस्तष्टम् (द्र ५६ पा ब), ब1 दे7 cd ○ —b) न1 द्वितये (→द्वितय) —c) शा1 दे10 श्राश्रम, ब2 न1 °चरितं, दे9 °मुचित (→°मुत्तमं)

६४　ब3 भ्रस्तष्टम् (द्र ५६ पा वि) —a) ते1 चामो, न1 यानि (→स्वानि), दे4 स्वानि वर्गप्रतिष्ठानि, दे7 स्वे स्वे वर्गप्रतिष्ठा च, मुवे स्वाम्स्वाम्वर्णाश्रमप्रोक्तान् —b) दे4 न कर्माणीह हापयेत्, दे7 न धर्माणि प्रहापयेत्, न1 नाधर्माणीति हापयेत्, मुवे स्वधर्मान्नैव हापयेत् —c) ब1 दे2 4.10 संतापयति, दे7 यो दापयति (→यो हापयति)

दे॰ 4 10 ते1 ab, cd मध्ये अधिकम्—

68 ❀ स्वधर्म (दे4 10 °कर्म) सरणान्यविधानाद्यो द्विजस्य यौम् (दे॰ त्रिय)

६५　ब3 भ्रस्तष्टम् (द्र ५६ पा वि) ब1 a ○ —a) दे1 5 11 कलि° (→कुल°) —b) ब॰ दे4.7 चेश्वरो, ब1 ●●रौं, दे9 भास्करो (→ईश्वरो) दे9 -°रधये (→°वृद्धये) दे1 3 5.10-11 ते1 देहरागविवृद्धये, न1 तापितो रोगवृत्तय —c) ब॰ तपते (→यतते)

६६　ब3 अस्पष्टम् (द्र ५६ पा वि) —a) दे7 सत्रम (→स्वधर्म), ब1 2 हि न, दे1 11 (च) न हि (→न हि) दे5 संत्यजेच्च (→संत्यजेत) —b) कारा हापयेच्चात्म दे9 हापये चापि, दे11 (हापयेच्चापि) हापयेच्चापि (→हापयेच्चापि) शा1 का1 2 हितात्मवर्णं (शा1 °वश्यम्), कारा हितात्मवश्यम्, ब॰ दे॰ 3 10 ते1 हि चात्मवंशं दे4 7 न1 हि चात्मनैव (न1 °श्वर) दे5 हि नात्मैव●, दे9 निजं च धर्मं (→हि नात्मवंशम्) —c) दे7 वापि (→चापि) दे7 सम (→धर्म) —d) ब1 ॰ तस्यैव दे4 तस्यैव (→तस्मै प्र°) दे4 -कुप्येत दे7 न कुप्येत, दे9 च कुप्येत ते1 प्रकुप्यन्ति न1 स कुप्येत (→प्रकुप्येत) ब1 ॰ च (→तु) दे7 हि भास्कर (→दिवाकर)

❀ ब3 भ्रस्तष्टम् (द्र ५६ पा वि) शा1 दे3 न1 पुलस्त्य : दे2 पुलस्त्य उ

६७　a) का॰ ब॰ दे5 10 मुनिना (→मुनिभि); कारा ब1 2 दे7 सुकेशि (→सुकेशी) —b) दे॰ 10 °महर्षीन् (→°निधीन्) —c) शा1 का2 सोत्पत्य (→चोत्पत्य); दे7 पुर (→पुरं); दे3 स्वकीयं (यै ?) (→स्वकीयं) —d) ब1 दे7 भानुं, ब2 भिन्नं (→धर्मं) का1 2 दे1 7 11 ते1 मवेक्ष्य° (→मवेक्ष°)

# १६

पुलस्त्य उवाच ।ꣳ

. १५.१ ततः सुकेशिर्देवर्षे गत्वा स्वपुरमुत्तमम् ।
समाहूयाब्रवीत् सर्वान् राक्षसान् धार्मिकं वचः ॥ १
अहिंसा सत्यमस्तेयं शौचमिन्द्रियसंयम. ।
दानं दया च क्षान्तिश्च ब्रह्मचर्यममानिता ॥ २
शुभा सत्या च मधुरा वाङ् नित्यं सत्क्रिया रतिः ।
सदाचारनिषेवित्वं परलोकप्रदायकाः ॥ ३
इत्यूचुर्मुनयो मह्यं धर्ममाद्यं पुरातनम् ।
सोऽहमाज्ञापये सर्वान् क्रियतामविकल्पत. ॥ ४

पुलस्त्य उवाच ।ꣳ

ततः सुकेशिवचनात् सर्व एव निशाचराः ।
त्रयोदशाङ्ग ते धर्मं चक्रुर्मुदितमानसाः ॥ ५
तत. प्रवृद्धिं सुतरामगच्छन्त निशाचराः ।
पुत्रपौत्रार्थसंयुक्ताः सदाचारसमन्विताः ॥ ६
तज्ज्योतिस्तेजसस्तेषां राक्षसानां महात्मनाम् ।
गन्तु नाशक्नुवन् सूर्यो नक्षत्राणि न चन्द्रमाः ॥ ७
ततस्त्रिभुवने ब्रह्मन् निशाचरपुरोऽभवत् ।
दिवा चन्द्रस्य सदृशः क्षणदाया च सूर्यवत् ॥ ८

---

पुष्पिका—शा1 का1 2 दे2 3 10 ते1 न1 इति श्री वामनपुराणे, कारा ब2 दे1 इति वामनपुराणे ब1 दे4 7 इति श्रीवामनपुराणे भैरवप्रादुर्भावे, दे5 इति श्री वाराह (?) पुराणे दे9 श्रीवामनपुराणे अध्याय नाम—ब1 • दे4 ○, शा1 का1 • दे1 4 5 10.11 ते1 न1 सुकेश्यनुशासनं नाम, कारा सुकेश्याचारानुशासन नाम दे7 चतुराश्रमधर्मकथनो नाम अध्यायसंख्या—दे5 ○, शा1 का1 • दे3.10 चतुर्दशोऽध्यायः, कारा एकोनविंशोऽध्यायः, ब1 • दे4 सप्तमोऽध्याय, त्रयोदशोऽध्याय, दे1 11 त्रयोदशोऽध्याय, दे10- ॥१४॥

१६

ꣳ शा 1 न1 पुलस्त्य 1 दे पुलस्त्य उ, दे9 श्री पुलस्त्य

१ —a) शा1 ब2 3 दे• 5 9.10 सुकेशी (→सुकेशिर्) —b) शा1 कारा का1 2 ब1 दे1 3 5 10-10-11 ते1 गत्वा पुरमनुत्तमं —d) दे7 (सव) धार्मिकं ब3 धार्मिको (→धार्मिक)

२ —c) दे4 दम क्षान्तिर् (→च क्षान्तिश्च) —d) दे9 °समानिता (→°ममानिता)

३ —a) दे3 शुद्धा (→शुभा) ब3 च सत्या (→सत्या च) —b) शा1 कारा का1 धार्मिन्वं, दे2 4-10-11 वाग् नित्य, (→वाङ्नित्य) दे10 गति (→रति) दे3 वमनित्य क्रिया रति —c) दे3 °चारं (→°चार) दे9 निषेवण्वं (→निषेवित्व) —d) दे1 °दायिका, दे3 न1 °दायकम् (→°दायका)

४ दे5 ○ —b) कारा सनातनं (→पुरातनं) —c) दे1 11 माज्ञापये (→माज्ञापये) —d) दे3 न1 °कल्पना (→°कल्पत)

ꣳ शा1 न1 पुलस्त्य दे• पुलस्त्य उ, दे9 श्रीपुलस्त्य

५ दे10- c इत्यारभ्य ६ ab यावन्नास्ति (इ सं) —a) दे3 4 सुकेशी° (→सुकेशि°) —b) शा1 दे• निशाचर, (दे2 °र) (→निशाचराः) दे7 सर्वानेव निशाचरान् —c) शा1 कारा का1 • °दशाङ्गतो, ब• दे10 °दशा ० ङ्गतो, ब3 °दा (द?) ० ङ्ग ते दे1 4 11 °दशाग ते, दे• °दशाशतो, दे9 °दशाङ्ग तत् (→°दशाङ्ग ते) दे• धर्मं (→धर्म)

६ दे9 cd ○ दे10-ab ○ (इ सं द्र ५ पा वि) —a) ब2 प्रवृद्धि, दे1 5.11 प्रवृत्तिम्, दे9 समृद्धि (→प्रवृद्धि) दे1 11 मसुराम् (→सुतराम्) —b) शा1 दे4 7 मगच्छन्ते दे3 मायच्छन्त (→मगच्छन्त) —c) ब• 3 °पौत्राश्च° (→°पौत्रार्थ°)

७ —a) ब3 तत् क्षान्तिस्, दे1 11 तवाति (?) (दे11 °तिस्), दे• 3 ते1 ततस्ते दे4 तत स्तु, दे10 ततस्तु, न1 सज्योतिस् (→तज्ज्योतिस्) कारा दे1 3 4 7 9 10 °तेजसा ब3 दे• न1 °तेजसा (°→तेजसस्) —c) का2 दे10-11 न1 °शक्नुवत्, दे4 °शक्नुयात् (→°शक्नुवन्), ब3 भूर्यो (→सूर्यो) —d) दे3 न नक्षत्रं, न1 नक्षत्रा ० (→नक्षत्राणि) ब1 च चन्द्रमा (→न चन्द्रमा)

८ दे3- cd○. —a) ब3 दे• 5 10 °भुवन, दे1 11 °भुवनाद् (→°भुवने) —b) ब1 दे2 4 10 ते1 °पुरं (ब1 °रो) विभा, दे °पुर वभो, दे3 °चराऽभवत् (→°पुरोऽभवत्) —c) कारा चन्द्रेण, ब1 3 दे1 5." 10.11 ते1 न1 सूर्यस्य (→चन्द्रस्य), शा1 दे2 5.10 ते1 सदृशं (→सदृश) —d) दे4 तु (→च) ब1 3 दे1 5." 10.11 ते1 न1 चन्द्रवत् (→सूर्यवत्)

न ज्ञायते गतिर्व्योम्नि भास्करस्य ततोऽम्बरे ।
शशाङ्कमिति तेजस्त्वादमन्यन्त पुरोत्तमम् ॥ ९
स्व विकास विमुञ्चन्ति निशामिति व्यचिन्तयन् ।
कमलाकरेषु कमला मित्रमित्यवगम्य हि ।
रात्रौ विकसिता ब्रह्मन् विभूतिं दातुमीप्सव ॥ १०
कौशिका रात्रिसमय बुद्ध्वा निरगमन् किल ।
तान् वायसास्तदा ज्ञात्वा दिवा निघ्नन्ति कौशिकान् ॥ ११
स्नातकास्त्वापगास्वेव स्नानजप्यपरायणा ।
आकण्ठमग्नास्तिष्ठन्ति रात्रौ ज्ञात्वाऽथ वासरम् ॥ १२
न व्ययुज्यन्त चक्राश्च तदा वै पुरदर्शने ।
मन्यमानास्तु दिवसमिदमुच्चैर्ब्रुवन्ति च ॥ १३
नूनं कान्ताविहीनेन केनचिच्चक्रपत्त्रिणा ।
उत्सृष्ट जीवित शून्ये फूत्कृत्य सरितस्तटे ॥ १४
ततोऽनुकृपयाविष्टो विवस्वास्तीव्ररश्मिभि. ।
सतापयज्जगत् सर्वं नास्तमेति कथचन ॥ १५
अन्ये वदन्ति चक्राह्वो नूनं कश्चिन् मृतो भवेत् ।
तत्कान्तया तपस्तप्त भर्तृशोकार्त्तया बत ॥ १६
आराधितस्तु भगवास्तपसा वै दिवाकर. । वँ १५

९ –a) वा$_{1\ 3}$ न नायेत दे$_{1\ 11}$ नालायते (?) (→न ज्ञायते) दे$_{1\ 11}$ गति वा द्वि (?) दे$_{4}$ गतिश्च– (→गति र्व्योम्नि) दे$_{9}$ न$_{1}$ ना (न$_{1}$-अ) नायत ततो ज्योतर् –b) दे$_{4\ 7}$ न$_{1}$ भास्कराम्या (दे$_{7}$ °स्या) (→भास्करस्य) दे$_{9}$ भास्कराम्यन्तरेम्बरे –c) शा$_{1}$ का$_{1\ 2}$ व$_{1\ 3}$ दे$_{1\ 5\ 7\ 10\ 11}$ शशाङ्कमिव ते$_{1}$ शशाङ्कामित्र (→शशाङ्कमिति) दे$_{9}$ न$_{1}$ तत्रस्था (→तेजस्त्वाद्) –d) दे$_{9}$ ह्रासयत (→अमन्यन्त)

१० शा$_{1}$ कारा का$_{1\ 2}$ व$_{3}$ दे$_{1\ 4\ 5\ 11}$ स्वन्त (का$_{1}$ °न्त) काम (दे$_{4}$ °य) व$_{1\ 2}$ स्वन्त (व$_{2}$ °ण) काल दे $_{3\ 10}$ ते$_{1}$ स्व विकार्ं दे$_{7}$ न$_{1}$ सन्निकार्श दे$_{9}$ सौनिकाशा (→स्व विकास) कारा व्यमुञ्चन्त दे$_{1\ 11}$ अपि मुञ्चन्ति (→विमुञ्चन्ति) –b) शा$_{1}$ न$_{1}$ दे$_{9}$ निशामिव (दे$_{9}$ °मेव) दे$_{1\ 11}$ निशाभे (दे$_{11}$ °भि) ध (→निशामिति) दे$_{4\ 7}$ मन्य (दे$_{4}$ °भि) चिन्तयन् (दे$_{4}$ °यत्) दे $_{11}$ च वित्तमन् (?) (→व्यचिन्तयन्) –c) दे$_{2\ 3}$ ते$_{1}$ °करे च (→°करेषु) दे$_{3\ 4}$ पद्मानि (→कमला) –d) कारा का$_{1}$ दे$_{1\ 3\ 5\ 10\text{-}11}$ ते$_{1}$ इत्यभि व$_{2\ 3}$ इयेव (→इत्यव) –f) का विभूति + विधूति व$_{2}$ नि भृति दे$_{1\ 11}$ विभ्रति (→विभूतिं) दे$_{1\ 11}$ दान° (→दातु°) दे$_{1\ 11}$ °मोनव (→°मीप्सव)

१० ab, cd मध्ये कारा अधिकम्—
69* रात्रौ कथमय सूर्यो काले ह्याविभवत्तुन
१० श्लोकानन्तर दे$_{2}$ क्षगन्याया पुरोत्तम
( – cd–ad) पुनरावृत्तम् (द स)

११ –a) दे$_{7}$ कौशिको (→कौशिका) –b) व$_{3}$ बुद्धा (दृष्ट्वा ?) दे$_{4}$ ज्ञात्वा दे$_{7}$ मत्वा (→बुद्ध्वा) दे$_{4}$ ये निगता दे$_{7}$ यो निर्गमा (ग ?) द दे$_{9}$ न$_{1}$ निगमयन् (→निरगमन्) –c) दे$_{7}$ तं (→तान्) –d) व$_{1\ 2}$ [-अ] निघ्नन्त (→निघ्नन्ति) का$_{1}$ कौशिका (→कौशिकान्)

१२ –a) व$_{1\ 2}$ स्नापकास् (→स्नातकास्) शा$_{1}$ कारा का$_{1\ 2}$ व$_{1\ 2}$ त्वा (कारा श्वा) पकाश्चव दे$_{7}$ आपगास्वेव दे$_{1\ 5\ 11}$ सूपकाश्चव दे$_{3}$ ते$_{1}$ न$_{1}$ वापगा (दे$_{3}$ °गा) श्चव (→वापगास्वेव) –b) दे$_{7}$ स्नाता (→स्नान) –c) दे$_{9}$ आकर्ण° (→आकण्ठ°) दे$_{1\ 5\ 11}$ ति (दे$_{1}$ °त्रि) ष्ठन्ते (→तिष्ठन्ति) –d) का$_{2}$ दे$_{5\ 7\ 9}$ रात्रि (→रात्रौ) दे$_{9}$ ज्ञात्वाधि (→ज्ञात्वाथ) दे$_{11}$ वासरान् (→वासर)

१३ –a) का$_{2}$ वियुज्यत व$_{1}$ व्य * ज्यत व$_{3}$ व्यमुह्यत दे$_{4}$ न्ययुज्यत (→व्ययुज्यन्त) व$_{3}$ दे$_{2\ 5\ 7\ 9\text{-}10}$ °चक्राह्वास (→चक्राश्च) –b) व$_{1}$ प्लव° (→पुर°) –c) दे$_{1}$ °नासु दे$_{9}$ °नास्त (→°नास्तु) –d) दे$_{3}$ व्रजन्ति (→ब्रुवन्ति) दे$_{7}$ हि (→च)

१४ –a) दे$_{1\ 2}$ कान्त° (→कान्ता°) ते$_{1}$ विधानेन (→विहीनेन) –b) व$_{1}$ चक्रपाणिना दे$_{4}$ च पतत्रिणा (→चक्रपत्त्रिणा) –c) शा$_{1}$ उच्छिष्ट व$_{1}$ दे$_{7}$ उत्सृष्ट (→उत्सृष्ट) दे$_{4\ 7}$ शून्य दे$_{9}$ न$_{1}$ मन्ये (→नूनं) –d) शा$_{1}$ न$_{1}$ हूत्कृत्य का$_{1}$ हूकृत्य व कृत्याद्य व$_{3}$ उत्कृत्य दे$_{4}$ पूत्कृत्य दे$_{7}$ प्रसह्य ते$_{1}$ दुत्कृत्य (?) (→फूत्कृत्य)

१५ –a) व$_{1}$ ततोम्बु दे$_{9}$ ततोऽथ न$_{1}$ तथत्र (→ततोऽनु) दे$_{2}$ °कपया (→°कृपया) –c) दे$_{2}$ सतापयज (त ?) (→सतापयन्) व$_{1}$ सतापयस्तु गन्धवाद् –d) दे$_{1\ 11}$ नास्ति° (→नास्त°)

१६ व$_{3}$ ○ –a) व$_{1}$ * चक्राङ्गो दे$_{1\ 2\ 4\ 5\ 7\ 9\text{-}10}$ ते$_{1}$ न$_{1}$ चक्राह्वा दे$_{3}$ चक्राह्वान् (→चक्राह्वो) –b) दे$_{9}$ किंचित् (→कश्चित्) दे$_{1\ 11}$ °मतो दे$_{3}$ नृगो (→मृतो) शा$_{1}$ का* दे$_{1\ 5\text{-}9\ 11}$ [-अ] भवत् (→भवेत्) –c) दे$_{10}$ कान्ताया (→कान्तया) –d) व$_{1}$ * °कात्तया च यत् दे$_{1\ 11}$ °कार्त या किल दे $_{3\ 7\ 10}$ °कात्तया तत दे$_{4}$ °कोष (ज ?) या तत्त दे$_{9}$ °कात्तयेति च (→°कात्तया बत)

१७ व$_{3}$ ab ○ –a) व$_{1}$ * दे$_{4\ 7\ 9}$ न$_{1}$ च (→तु) –c) दे$_{1\ 5\ 11}$ निर्जित्य दे$_{2\ 3\ 10}$ ते$_{1}$ –नं जित्वा दे$_{7}$ निर्यातो

६. १५. १७ तेनासौ शशिनिर्जेता नास्तमेति रविर्ध्रुवम् ॥ १७
यज्विनो होमशालासु सह ऋत्विग्भिरध्वरे ।
प्रावर्त्तयन्त कर्माणि रात्रावपि महामुने ॥ १८
महाभागवताः पूजां विष्णोः कुर्वन्ति भक्तितः ।
रवौ शशिनि चैवान्ये ब्रह्मणोऽन्ये हरस्य च ॥ १९
कामिनश्चाप्यमन्यन्त साधु चन्द्रमसा कृतम् ।
यदियं रजनी रम्या कृता सततकौमुदी ॥ २०
अन्येऽब्रुवँल्लोकगुरुरस्माभिश्चक्रभृद् वशी ।
निर्व्याजेन महागन्धैरर्चितः कुसुमैः शुभैः ॥ २१
सहलक्ष्म्या महायोगी नभस्यादिचतुर्ष्वपि ।
अशून्यशयना नाम द्वितीया सर्वकामदा ॥ २२
तेनासौ भगवान् प्रीतः प्रादाच्छयनमुत्तमम् ।
अशून्यं च महाभोगैरनस्तमितशेखरम् ॥ २३
अन्येऽब्रुवन् ध्रुवं देव्या रोहिण्या शशिनः क्षयम् ।
दृष्ट्वा तप्तं तपो घोरं रुद्राराधनकाम्यया ॥ २४
पुण्यायामक्षयाष्टम्यां वेदोक्तविधिना स्वयम् ।
तुष्टेन शंभुना दत्तं वरं चास्यै यदृच्छया ॥ २५
अन्येऽब्रुवन् चन्द्रमसा ध्रुवमाराधितो हरिः ।
व्रतेनेह त्वखण्डेन तेनाखण्डः शशी दिवि ॥ २६
अन्येऽब्रुवञ्छशाङ्केन ध्रुवं रक्षा कृतात्मनः ।
पदद्वयं समभ्यर्च्य विष्णोरमिततेजसः ॥ २७
तेनासौ दीप्तिमांश्चन्द्रः परिभूय दिवाकरम् ।
अस्माकमानन्दकरो दिवा तपति सूर्यवत् ॥ २८

(→निर्जेता). —d) कारा कगचन, व1 **** (→रविर्ध्रुवम्).

१८. —a) शा1 कारा का1 2 दे2 5 9 10 ते1 यज्वानो, व1 यज्ञिनो, दे1-5-11 याजिनो, दे7 वह्निनो (?) (→यज्विनो). —b) शा1 कारा. का1 2 व1 3 दे2-5-7-9 10 सहर्त्विग्भिरथाध्वरे, दे1.11 महाऋग्भिरथाध्वरे. —c) दे9 प्रावर्त्तयन्ति, ते1 प्रावर्त्तयन्त· (→प्रावर्त्तयन्त)

१९. —a) व3 °भागवत, दे1 11 °भागवता (→°भागवता·), दे9 पूजा· (→पूजा) —c) दे9 °वाद्य (→°वान्ये), कारा. रवेश्च शशिनश्चान्ये —d) का2 ब्राह्मणान्ये, व1 2 ब्रह्मणोऽय, दे7 ते1 ब्रह्मणेन्ये (→ब्रह्मणोन्ये), दे4 तु (→च)

२०. —a) दे9 केपिन, दे11 कामिना (→कामिनस् ), शा1 कारा. का1 दे7 चापि मन्यन्ते (→चाप्यमन्यन्त) —b) का1 व1 दे9 साधु (व1 °ध) चन्द्रसमाकृत (व1 °हृत, दे3 °कृति). —d) व2 हृतास उत कौमुदी, दे4 हृता च सतकौमुदी

२१. —b) दे9 समाभिन् (→अस्माभिस् ), दे9 न1 °धृग् (→°भृद्) —c) व2 महान् (→महा ). दे4 7 °भा र् (→°गन्धैर्), ते1 सुखै (→शुभै )

२२. —a) दे11 महलक्ष्म्या (→सह लक्ष्म्या). —b) व1 नमस्यादि, दे4 नभादिषु, दे7 नभसादि (→नभस्यादि-), शा1 कारा का1 2 चतुष्टय (कारा °ये), दे9 °च तु (चि ?) ष्वपि (→°चतुर्ष्वपि). —c) शा1 कारा. का1.2 दे9 °शयना- (→°शयन). —d) शा1 कारा. का1 -द्वितीया, का3 -द्वितीय (→द्वितीया), शा1 कारा. का1 °कामदा, का2 °कामद (→°कामदा).

२३. —a) व2 तेनासौ भगवान् ○. —b) दे3 प्रा. (प्र ?) सादा° (→प्रादाच्°). —c) शा1 का1-3 व1 2 अन्येऽशून्ये (व1 2 °न्य), दे4 7 पल्या शून्यं, दे9 न1 यदशून्य (→अशून्य च). शा1 का2 व1 2 दे4 9 °भागैर्, दे7 °योगी (→°भोगैर्); कारा. अन्ये प्रोचुर्महाभागा —d) शा1 का1 2 अनन्तमिव, दे7 न वास्तमति°, दे9 असनिमित°, न1 आसन्निमित° (→अनस्तमित°). कारा °खेचर (→°शेखर). दे1 11 °शेखरे, दे7 °शश्वर (→°शेखरम्)

२४ —a) व3 रुषा, दे1-6 11 महा (→ध्रुव) दे3 ते1 देवा· (→देव्या) —b) दे7 रोहिण्या (→रोहिण्या), दे9 क्षये (→क्षय) —c) दे9 तदा (→तपो), दे5 न1 घोर- (→घोर) —d) ते1 रुद्राय (→रुद्रारा-)

२५. —a) शा1 का1 2 सुपुण्याया कृष्णा°, व· 3 पुण्यानामक्षया°, दे1 11 सुपुण्यायामक्षया°, दे4 पुण्यमक्षयम°, न1 पुण्यया क्षयया° (→पुण्यायामक्षया°). व3 तस्या (→[-य]ष्टम्या). कारा. कृष्णाष्टम्या सुपुण्याया. —b) दे4.7 9-10 न1 ध्रुव (→स्वयं) —c) व1 3-4 7 दत्ता वरा, व3 दत्ता रमा, दे5 दत्तावरम्, दे3 न1 दत्तो वरम् (→दत्त वर) व1-3 ह्यस्यै, दे1 मस्यै, दे7 यस्यै, दे9 श्लाघ्यो (घ्यो ?), न1 चास्मै (→चास्यै)

२६. दे7· ○. —c) व1 °नेहत्य, व2 °नेहाद्य (→°नेह त्व ). —d) दे· तेन खण्ड, न1 तेनाखण्डे (→तेनाखण्ड·), ते1 मनखण्ड शशी दिवि

२७ —b) दे10 नून (→ध्रुवं): शा1 दे5 °वात्मना, दे1.11 °तात्मना (→°तात्मन·). —c) न1 °द्वन्द्व (→°द्वय) —d) दे1 11 °रायत° (→°रमित°)

२८. —a) न1 तेनात्ते (→तेनासौ). —d) दिवा(°वां) (→दिवा).

१७.२४ अस्मिंश्चीर्णे व्रते व्यक्तं परितुष्यन्ति देवताः ।
धर्मार्थकाममोक्षाद्यास्त्वक्षयाः संभवन्ति हि ॥ २४
एतानि ते मयोक्तानि व्रतान्युक्तानि कामिभिः ।
प्रवक्ष्याम्यधुना त्वेतद्वैष्णवं पञ्जरं शुभम् ॥ २५
नमो नमस्ते गोविन्द चक्रं गृह्य सुदर्शनम् ।
प्राच्यां रक्षस्व मां विष्णो त्वामहं शरणं गतः ॥ २६
गदां कौमोदकीं गृह्य पद्मनाभामितद्युते ।
याम्यां रक्षस्व मां विष्णो त्वामहं शरणं गतः ॥ २७
हलमादाय सौनन्दं नमस्ते पुरुषोत्तम ।
प्रतीच्यां रक्ष मे विष्णो भवन्तं शरणं गतः ॥ २८
मुसलं शातनं गृह्य पुण्डरीकाक्ष रक्ष माम् ।
उत्तरस्यां जगन्नाथ भवन्तं शरणं गतः ॥ २९
शार्ङ्गमादाय च धनुरस्त्रं नारायणं हरे ।
नमस्ते रक्ष रक्षोघ्न ऐशान्यां शरणं गतः ॥ ३०
पाञ्चजन्यं महाशङ्खमन्तर्बोध्यं च पङ्कजम् ।
प्रगृह्य रक्ष मां विष्णो आग्नेय्यां यज्ञसूकर ॥ ३१
चर्म सूर्यशतं गृह्य खड्गं चन्द्रमसं तथा ।
नैर्ऋत्यां मां च रक्षस्व दिव्यमूर्ते नृकेसरिन् ॥ ३२
वैजयन्तीं प्रगृह्य त्वं श्रीवत्सं कण्ठभूषणम् ।
वायव्यां रक्ष मां देव अश्वशीर्ष नमोऽस्तु ते ॥ ३३

---

२४ दे3 ab ○ –a) कारा °श्चीर्ण, दे7 °श्वीर्ये (→°श्चीर्णे), दे2 10 हि व्यक्तं तु, दे4 व्रते सम्यक, दे7 व्रत व्यक्त, ते1 दिव्यव्रते (→व्रते व्यक्त) –b) दे9 वेदिता (→देवता) –c) दे5 °मोक्षा (णि) द्या (→°मोक्षाद्या) –d) दे7 मक्षय्या (→मक्षया) दे9 °भवन्तु न, न1 °भवन्ति च (→°भवन्ति हि)

२५ –a) व1 3 दे7 मया प्रा°, व2 यानि प्रो (→ते मयो°) –b) ये1 11 कामिनि, दे7 कामभि (→कामिभि) – ) द4 चैतद्, दे5 9 न1 अप्येतद् (→त्वेतद्) –d) दे3 पञ्जरं (→पञ्जर)

२६ दे7 cd ○ –a) दे1 10 देवेश (→गोविन्द) –b) व2 प्रदर्शनम्, दे10 सुदर्शन (→सुदर्शनम्) –c) दे4 पूर्वस्या र° (→प्राच्या रक्षस्व) दे2 वै (→मां) –d) न1 भवत (→त्वामह), दे1 भगवच्छरणागतम्

२७ दे9 ○ –a) दे1 °मादकी (→°मोदकी), न1 कौमोदकी गदा गृह्य –b) शा1 °नाभस्य, का2 °नाभसि-(→°नाभामि-), दे4 दुष्टदैत्यविदारिणी –c) द4 याम्याया रक्ष (→याम्या रक्षस्व), शा1 दे1 10-11 मे (→मा) –d) कारा दे4 भवन्त (→त्वामह)

२८ दे9 ○ –a) दे2-5 10 ते1 पद्म°, न1 खड्ग° (→हल°), दे2-1 10 ते1 सनन्दं, दे1 दरेण, दे7 सं नदे (→सौनन्द) –ab) दे1 11 शार्ङ्गमादाय [च?] धनुरस्त्र नारायण हरे. –c) व2 3 दे2 4 10 ते1 मा (दे2 °स्व मा) विष्णो, दे7 गोविंद (→मे विष्णो) –d) शा1 कारा का2 व1 दे2 3-10 ते1 त्वामहं, दे4 म (ग) वंतं, न1 त्वामस्मि (→भवन्त)

२९ –a) व2 3 मुसन, दे1 4 7 10-11 मुशल (→मुसल), कारा का1 2 व1 3 दे7 शामनं, दे1 11 शातन (→शातन) –c) शा1 का1 व1 2 10 11 उत्तरायां, कारा उत्तरायां (→उत्तरस्यां). –d) व2 गता, दे9 गतं (→गत).

३० –a) व1 2 दे7 खड्गम् (→शार्ङ्गम्), व1 चर्म्माणि, व1.2 दे7 चर्माणि, (व1 °णि), व3 चर्म्मश्च, दे1 3-11 धनु, दे9 धनुष, ते1 तु धनु, न1 ते चापं (→च धनुर्) –b) शा1 °यणो हरि, का1 °यणो हरि, +°यणाच्युत, कारा. °यण हरे, व1 °यणं हरे, दे1 11 °यणो हरे (→°यण हरे) –c) शा1 का1 2 दे1-5 7 10 11 ते1 यक्ष- (→रक्ष) –d) दे2-4 10 ते1 न1 ईशान्या, दे1 पैशान्या (→ऐशान्या), दे9 गत (→गत)

३१. का1 cd ○ –b) का2 अतर्बोधं, व3 अन्तर्द्धस्य (?), दे2 महाबोध्य, दे3-10 ते1 अनुबोध्य, दे4 मनुबोध, दे9 मनुध्याय, न1 मतिबाध (→मन्तर्बोध्य), दे4 तु (→च), दे1 वारिजं (→पंकजम्). दे7 मध्येच पङ्कज जरम् –c) दे5 विष्णोर्, दे9 न1 नाथ (→विष्णो) –d) दे2 3 9 ते1 न1 आग्नेयां, दे4 ह्याग्नेयां, (→आग्नेय्यां). दे4 दिशिसूकर, न1 शरण गत, व2 दे3 4-7 10 यज्ञसूकर (→यज्ञसूकर)

३२ का1 ab ○ –a) व3 दे2 5-10 ते1 चर्मं, दे7 चद्र (→चर्म), व3 सूर्यगतं, दे4 नद्रस्तथा, दे9 न1 सूर्यमय (→सूर्यशतं). दे1 11 गृह्य (→गृह्य) –b) कारा चेन्द्रसमं, का2 चन्द्रसम, व1 दे7 चन्द्रशतं, दे1 11 चन्द्रसमं, दे2 3 चर्मसमं, दे4 चर्मयुतं, न1 चन्द्रमयं (→चन्द्रमसं), ते1 खड्ग चर्मञ्च तथा –c) दे3 नैर्ऋत्य, दे10 नैर्ऋत्या (→नैर्ऋत्या), कारा दिशि मा रक्ष, दे4 मांच रक्ष त्वं, न1 रक्ष मां देव (→मां च रक्षस्व) –d) दे4 दिव्य° (→दिव्य°), व1 °मूर्तिन्, दे1 11 °मूर्तेर् (→°मूर्ते), व1 नृकेसरे, व2 °सरिं, व3 मृगेन्द्रिन्, दे1 5-7 नृकेसरी (दे7 °रा) (→नृकेसरिन्)

३३ –b) दे1 श्रीवत्स- (→श्रीवत्स) –c) दे7 वायव्यं (→वायव्यां) –d) दे1. हय° (→अश्व°).

वैनतेयं समारुह्य अन्तरिक्षे जनार्दन।
मां त्वं रक्षाजित सदा नमस्ते त्वपराजित ॥ ३४
विशालाक्षं समारुह्य रक्ष मां त्वं रसातले।
अकूपार नमस्तुभ्यं महामोह नमोऽस्तु ते ॥ ३५
करशीर्षाङ्घ्रिपर्वेषु तथाऽष्टबाहुपञ्जरम्।
कृत्वा रक्षस्व मां देव नमस्ते पुरुषोत्तम ॥ ३६
एतदुक्तं भगवता वैष्णवं पञ्जरं महत्।
पुरा रक्षार्थमीशेन कात्यायन्या द्विजोत्तम ॥ ३७
नाशयामास सा यत्र दानवं महिषासुरम्।
नमरं रक्तबीजं च तथान्यान् सुरकण्टकान् ॥ ३८

नारद उवाच ।❀

काऽसौ कात्यायनी नाम या जघ्ने महिषासुरम्।
नमरं रक्तबीजं च तथाऽन्यान् सुरकण्टकान् ॥ ३९
कश्चासौ महिषो नाम कुले जातश्च कस्य सः।
कश्चासौ रक्तबीजाख्यो नमरः कस्य चात्मजः।
एतद्विस्तरतस्तात यथावद् वक्तुमर्हसि ॥ ४०

पुलस्त्य उवाच ।❀

श्रूयतां संप्रवक्ष्यामि कथां पापप्रणाशिनीम्।
सर्वदा वरदा दुर्गा येयं कात्यायनी मुने ॥ ४१
पुराऽसुरवरौ रौद्रौ जगत्क्षोभकराबुभौ।
रम्भश्चैव करम्भश्च द्वावास्तां सुमहाबलौ ॥ ४२
तावपुत्रौ च देवर्षे पुत्रार्थं तेपतुस्तपः।
बहून् वर्षगणान् दैत्यौ स्थितौ पञ्चनदे जले ॥ ४३
तत्रैको जलमध्यस्थो द्वितीयोऽप्यग्निपंचमी। हे. १७.

---

३४ दे$_4$ cd ⊙ –b) दे$_9$ मात° (→मन्त°), दे$_1$ $_{11}$ °र्द्दने, दे$_5$ °र्दन (→°र्दन), दे$_1$ रक्ष मा त्व रसातले –c) दे$_4$ न$_1$ मां च, दे$_{11}$ मा त्व (→मा त्व), दे$_7$ °जो च (→°जित) –d) शा$_1$ कारा व$_2$ –स्त्व° (→त्व°)

३५ दे$_4$ ab ○: दे$_2$ d ○ –a) शा$_1$ कारा विशालाग (→विशालाक्ष) –c) शा$_1$ कारा का$_1$ मकूवार, दे$_{1.5\text{-}11}$ माकूपार, दे$_7$ मधोक्षज (→मकूपार)

३६ दे$_2$ ○ –a) दे$_1$ $_{11}$ °शीर्षा हि, दे$_4$ °णीपादि- (→शीर्षाङ्घ्रि-), शा$_1$ कारा का$_{1\ 2}$ व$_2$ * दे$_{1\text{-}3\text{-}5\ 9\ 11}$ ते$_1$ न$_1$ सर्वेषु, दे$_7$ °पार्श्वेषु (→°पर्वेषु) –b) दे$_9$ मम्पररत्वा, न$_1$ तन्नस्त (→तथाष्ट–), दे$_4$ सत्पस्य वज्रपंजरम् –c) शा$_1$ रक्षमु, दे$_1$ रक्षस्व (→रक्षस्व), व$_{1.3}$ दे$_7$ विष्णो (→देव) –d) व$_2$ नमास्तु (→नमस्ते)

३७. –a) व$_1$ °दुक्ता दे$_{10}$ *क्त, (→°दुक्त), दे$_1$ $_{11}$ भगवतो (→भगवता) –b) व$_1$ सहृत (→महत्) –c) शा$_1$ ऐशेन, व$_{1.3}$ दे$_{4.7}$ ईशान्या° (→ईशेन) –d) का$_1$ कात्यायन्यै, + °न्या, दे$_{1.4\ 11}$ कात्यायिन्या, ते$_1$ कात्यायन्यै (→कात्यायन्या), कारा च दीभतम् (→द्विजोत्तमं)

३८ –a) दे$_5$ मा (→सा)· दे$_4$ देवी, दे$_9$ न$_1$ युद्धे (→यत्र) –c) शा$_1$ कारा का$_{1\ 2}$ चामर, व$_2$ नवमं, दे$_7$ दमन, दे$_9$ पामर (→नमर). दे$_7$ बीजस्य (→बीजं च)

३८ श्लोकानन्तरं कारा. एवमध्यायसमाप्ति —
इति वामनपुराणे वामनवैष्णवपंजराभिधानं नाम त्रिविंशोऽध्याय ।

❀ शा$_1$ का$_1$ न$_1$ नारद: दे$_2$ नारद उ; दे$_9$ श्रीनारद-

अत परं शा$_1$ कारा का$_{1\ 2}$ व$_2$ दे$_{1\text{-}3\text{-}5\text{-}7\text{-}10\text{-}11}$ ते$_1$ मुद्रे-अधिकम्-

76 * कश्चासौ महिषो नाम रक्तबीजादयश्च के।
[ –b) दे$_{2\ 3}$ ये (→के) ].

३९ व$_1$. ⊙: दे$_4$ cd○. –a) का$_2$ व$_2$ दे$_{4.7\ 9}$ न$_1$ का सा (→कासौ): दे$_{10}$ कात्यायिनी (→कात्यायनी): दे$_9$ नामा (→नाम) –c) शा$_1$ कारा. का$_{1.2}$ चामर, व$_2$ चावर, दे$_7$ दमन, दे$_9$ पामर (→नमर), दे$_7$ बीजस्य (→बीज च).

४०. –a) दे$_1$ $_{11}$ यश्चा° (→कश्चा°). –b) दे$_{1\text{-}3\text{-}10}$ कास्ते (→कुले), व$_1$ दे$_9$ कुले जातस्य कश्च स. दे$_4$ कुलेशो तश्च कस्य च, –c) कारा °बीजाख्यश्च, का$_1$ °बीजासो,+ °ख्यो, व$_1$ °बीजाशो (→°बीजाख्यो) –d) शा$_1$ कारा का$_{1.2}$ चामर, व$_{2.3}$ नवम, दे$_9$ पामर (→नमर.), दे$_{11}$ वात्म° (→चात्म°) –e) व$_{1\text{-}3}$ दे$_{1.5\text{-}7\ 11}$ एतान् (→एतद्): शा$_1$ कारा का$_1$ व$_2$ दे$_7$ विस्तरशमू° दे$_3$ विस्तर ** (→विस्तरतस्)

❀ शा$_1$ का$_1$ न$_1$ पुलस्त्य: दे$_2$ पुलस्त्य उ: दे$_9$ श्रीपुलस्त्य.

४१. –b) दे$_{10}$ °प्रनाशनी (→°प्रणाशिनीम्). –c) व$_{2\ 3}$ दे$_7$ सर्वगा (→सर्वदा) –cd) दे$_1$ $_{11}$ दुर्गायै, दे$_3$ दुर्गा इय, दे$_4$ दुर्गा या (→दुर्गा येय) –d) न$_1$ °यिनी (→°यनी)· दे$_1$ $_{11}$ पुरा (→मुने)

४२ –b) दे$_9$ °रोद्यमो (→°राबुभौ) –d) शा$_1$ कारा. का$_{1.2}$ न$_1$ द्वावेतो, दे$_7$ द्यावास्ता (→द्वावास्तां), दे$_7$ स (→सु-): शा$_1$ कारा °गुरो, मुद्रे °बली (→°बलौ).

४३. –a) दे$_9$ न$_1$ दनु° (→ताव°). –b) शा$_1$ कारा. पुत्रार्थं, दे$_{2.7}$ पुत्रार्थौ (→पुत्रार्थं). दे$_9$ तेपतुस् (→तेपतु-). –d) दे$_3$ वने (→जने).

४४ –b) शा$_1$ दे$_{2.4.10}$ [–प] पश्मि (दे$_4$°सि) पंचम,

१७ ४४ करम्भश्चैव रम्भश्च यक्षं मालवटं प्रति ॥ ४४
एकं निमग्नं सलिले ग्राहरूपेण वासवः ।
चरणाभ्यां समादाय निजघान यथेच्छया ॥ ४५
ततो भ्रातरि नष्टे च रम्भः कोपपरिप्लुतः ।
वह्नौ स्वशीर्षं संक्षिप्य होतुमैच्छन् महाबल. ॥ ४६
ततः प्रगृह्य केशेषु खड्गं च रविसप्रभम् ।
छेत्तुकामो निजं शीर्षं वह्निना प्रतिषेधित. ॥ ४७
उक्तश्च मा दैत्यवर नाशयात्मानमात्मना ।
दुस्तरा परवध्याऽपि स्ववध्याऽप्यतिदुस्तरा ॥ ४८
यच्च प्रार्थयसे वीर तद्ददामि यथेप्सितम् ।
मा म्रियस्व मृतस्येह नष्टा भवति वै कथा ॥ ४९
ततोऽब्रवीद् वचो रम्भो वरं चेन्मे ददासि हि ।
त्रैलोक्यविजयी पुत्रः स्यान्मे त्वत्तेजसाऽधिकः ॥ ५०
अजेयो दैवतैः सर्वैः पुंभिर्दैत्यैश्च पावक ।
महाबलो वायुरिव कामरूपी कृतास्त्रवित् ॥ ५१
तं प्रोवाच कविर्ब्रह्मन् बाढमेवं भविष्यति ।
यस्या चित्तं समालम्बि करिष्यसि तत. सुत. ॥ ५२
इत्येवमुक्तो देवेन वह्निना दानवो ययौ ।
द्रष्टुं मालवटं यक्षं यक्षैश्च परिवारितम् ॥ ५३
तेषां पद्मनिधिस्तत्र वसते नान्यचेतन. ।
गजाश्च महिषाश्वाश्चा गावोऽजाविपरिप्लुता. ॥ ५४
तान् दृष्ट्वैव तदा चक्रे भावं दानवपार्थिव. ।

---

कारा. [-अ]प्यग्निपचकी, का1 [-अ] प्यग्निपचमी,+°की, दे3 ह्यग्निपचम (→[-अ]प्यग्निपञ्चमी) –c) दे5 'रम्भश्च खंडितम् –d) ब1 यक्षमणि°, दे1 11 यक्षमाल°, दे3 क्षय (व्यत्यस्तम्) मान°, दे5 यक्षपाल°, दे7 यक्षभाज°, दे9 यक्षमूल° (→यक्ष माल°)

४५ –ab) दे9 एव निमग्नरूपेण ग्राहयामास वासव. –c) शा1 समाधाय, दे7 समागृह्य (→समादाय) –d) दे4 निजस्थाने (→निजघान)

४६ a) शा1 कारा का1 2 भग्न (→नष्ट) –b) दे4 9 न1 क्रोध° (→कोप°), शा1 °परिप्लुता दे9 °समन्वित ,दे11 °परिस्नुत (→°परिप्लुत ) –c) दे1 11 न1 स शीर्षं (→स्वशीर्षं) –d) दे4 न1 हतुम् (→होतुम्), दे2 महावल (→महाबल )

४७ –a) ब3 कोपस्त (स्थ?) (→केशेषु) –b) ब3 खग्ड (→खड्ग) शा1 कारा का1.2च रविसुप्रभम्, ब2स्वरतिसप्रभ दे4च रवि सप्रभम्, दे1 11 व रवि सप्रतिम्, दे7 9 भास्करनिभप्रभ, न1 रविसमप्रभ (→च रविसप्रभम्) –c) ब3 होतु , दे7 हृत्तु (→छेत्तु ) –d) ब1 दे7 ब्रह्मणा (→वह्निना) दे 4°पेक्षत , दे5 °पन्वित (→°षेधित )

४८ –a) शा1 मा दित्यवर, दे3 दैत्यवर मा (→मा दैत्य वर) –c) दे1 11 असुरा, दे7 दु ॰ रा (→दुस्तरा) दे7 च (→[अ]पि) d) दे7 दस्या (?) वध्यानप्यतिदुस्तरान दे9 स्वात्म वध्या तु किं पुन

४९ –a) ब3 यस्त्व (→यच्च) दे3 धीर (→वीर) –b) का1 दे2 3.5 ते1 ददामि (→ददामि) दे4 तवे° (→यथे°) –c) शा1 प्रियस्व, दे11 मृयस्व (→म्रियस्व), दे 3 °स्यैव (→°स्येह) –d) दे1 11 नन्दा (→नष्टा)

५० –a) ब3 धवो, दे9 विभु, न1 वर (→वचो) –b) ब2 चेद्दै, ब3 दे4 चैव, दे1 11 ह्यग्ने (→चेन्मे) दे4 चेत, दे9 तु (→हि) –c) शा1 °विजये (→°विजयी) –d) न1 स्यादे,+स्यान्मे (→स्यान्मे) शा1 ब2 मत्तस्तेज° (→मे त्वत्तेज°), दे4 °तेजसो° (→°तेजसा°)

५१ –a) दे अजयो (→अजेयो) –b) शा1 दे पुंभि र्दैत्यैश्च ब1 युधि कुलैश्च दे 4 10 ते1 युधि दैत्यै (दे ते1 °त्य)श्च (→पुंभि र्दैत्यैश्च) का दे7 पावक (→पावक) –c) ब1 दे7 महाबाहु रिव क्षोभात् –d) कारा कृतास्त्रक', ब1 3 दे4 7 9 महास्त्रविद्, न1 महासुर (→कृतास्त्रवित् )

५२ –a) दे5 तमो°, दे7 तथा° (→त प्रो°) ब रविर् (→कविर) –b) दे बाढमेव, दे9 इत्यमेव (→बाढमेवं) –c) दे3 तस्या (→यस्या) ब1 दे7 मन (→चित्त) दे 10 ते1 °लब्ध, दे4 °ल ॰ (→°लम्बि) –d) ब1 दे 10 ते1 करिष्यति, ब दे11 करिष्ना त (दे11 °सि), दे3 करिष्यामि, दे9 जनिष्यति, भुवे भविष्यति (→करिष्यसि), ब1 दे4 ततोसुर, ब2 3 दे1 3 5.7 9 11 ते1 न1 ततोसुर (→तत सुत )

५३ –a) दे7 देवर्षे (→देवेन) –b) ब1 दे7 ब्रह्मणा (→देवेन) –c) ब1 मणि°, दे मान°, दे7 भाज° (→माल°) दे9 °तने वृ रे (→°वटं यक्ष) d) शा1 यशान् (→यक्षै°)

५४ –b) कारा °चेतना , दे7 न1 °चेतसा (न1 °सा), दे9 °तेजसा (→°चेतन ) –c) दे 7 गजाश्व–, दे10 गजा ॰ (→गजाश्च) ब1 दे7 महिष–, दे10 महिष्यान् (→महिषाश्व) ब1 2 दे7 छागा , ब3 दे5 वाश्व , ते1 न1 चैव (→चाश्वा ) दे4 गजाश्चैव महिष्यश्च. –d) ब1 गावोव°, (→गावो°), दे °स्नुता , दे7 °प्लुता (→°प्लुता )

५५ शा1 cd ○ –a) दे1 4 11 ता दृष्ट्वा, दे3 न1 तां दृष्ट्वा (→तान्दृष्ट्वा) ब3 सदा (→तदा) –b) ब3 तावद् (→भाव),

महिष्यां रूपयुक्तायां त्रिहायण्यां तपोधन ॥ ५५
सा समागाच्च दैत्येन्द्रं कामयन्ती तरस्विनी ।
स चापि गमनं चक्रे भवितव्यप्रचोदितः ॥ ५६
तस्यां समभवद् गर्भस्तां प्रगृह्याथ दानवः ।
पातालं प्रविवेशाथ ततः स्वभवनं गतः ॥ ५७
दृष्टश्च दानवैः सर्वैः परित्यक्तश्च बन्धुभिः ।
अकार्यकारकेत्येवं भूयो मालवटं गतः ॥ ५८
साऽपि तेनैव पतिना महिषी चारुदर्शना ।
समं जगाम तत् पुण्यं यक्षमण्डलमुत्तमम् ॥ ५९
ततस्तु वसतस्तस्य श्यामा सा सुषुवे मुने ।
अजीजनत् सुतं शुभ्रं महिषं कामरूपिणम् ॥ ६०
एतामृतुमतीं जातां महिषोऽन्यो ददर्श ह ।
सा चाभ्यगाद् दितिवरं रक्षन्ती शीलमात्मनः ॥ ६१
तमुन्नामितनासं च महिषं वीक्ष्य दानवः ।
खड्गं निष्कृष्य तरसा महिषं समुपाद्रवत् ॥ ६२
तेनापि दैत्यस्तीक्ष्णाभ्यां शृङ्गाभ्यां हृदि ताडितः ।
निर्भिन्नहृदयो भूमौ निपपात ममार च ॥ ६३
मृते भर्तरि सा श्यामा यक्षाणां शरणं गता ।
रक्षिता गुह्यकैः साध्वी निवार्य महिषं ततः ॥ ६४
ततो निवारितो यक्षैर्हयारिर्मदनातुरः ।
निपपात सरो दिव्यं ततो दैत्योऽभवन्मृतः ॥ ६५ वे १७

दे11 °पार्थिवा (→°पार्थिव) शा1 मारा का1 भवितव्यप्रचोदित, -ab) दे1 ताश्चदृष्ट्वा तथा यक्ने त्रिभावन्या न पार्थिव -c) ब3 रूप धरायां, दे3 रूप (स) युक्ताया, दे10 भावयुक्ताया (या) (→रूप युक्ताया) -d) का2 दे1 3 5 10 11 न1 °हायन्या (→°हायण्या) दे4 त्रिणयिन्या, दे7 वर्जिताया, दे9 त्रिभाव्या (→त्रिहायण्या) दे7 तपोधना (→तपोधन)

मारा c) पाठस्तु—

77 * श्यामाभिधाया महिष्या भाव मन्नमाहित

शा1 cd पाठस्तु—

78 * महिष्या श्यामाधाय दृढचित्तो भवत्तत

५६ शा1 मारा का1 ○ -a) दे4 समागाच्च स (→सा समागच्च) -b) ब3 न1 काममता, दे० कमयती, दे4 काममता दे4.9 काममत्तं (→कामयन्ती) दे4 तरस्विनीं, दे7 तर स्विनी (→तरस्विना) -c) का2 दे1 11 न1 चाभि (→चापि) -d) दे5 भवितव्य ○, ब1 दे1 °प्रदेशित, दे3 4 10 न1 °प्रणा (दे10 °तो) दित (→°प्रचोदित)

५७ दे9 ○ -a) दे1 11 तरया (→तस्या) -b) ब3 स (→सा) -d) दे2 गत (→गत) शा1 मारा का1.2 ततो दृष्टश्च दानवै

५८ दे9 ○ -a) शा1 मारा का1 ° तत स, ब2 दृष्टश्च, दे० 3 5 ते1 दृष्ट्वा च (→दृष्टश्च) ब1 2 सार्द्ध (→सर्वै) -b) न1 स्वबन्धुभि (→च बन्धुभि) -c) शा1 °कर्तेत्येवं स, दे० °कर इत्येवं, दे3 °कारि इत्येवं, दे4 10 न1 °कारका होव, ते1 °कारि इत्येवं (→°कारकेत्येवं) -d) ब1 मणि°, दे7 मान° (→मान°)

५९. -a) का2 पतिता (→पतिना) -b) शा1 महिषे (→महिषी) दे4 °दर्शना (→°दर्शना) -c) दे1 पूर्ण (→पुण्य) ब3 स संजगाम तत्पुण्य, दे2 समंतमे गते पुण्यं, दे7 जगाम तत्पुण्येन्य

६० -b) शा1 दे9 सा श्यामा, दे० 3 शा(श्या?)मा सा (→श्यामा सा): ब1 -स्तशुभे, ब2 शुशुभे, दे० 4 10 षु (दे4 °तु) वने (→सुषुवे) -c) ब1 ० दे7 सुभ्र (→शुभ्र)

६१ ब3 ab एता महि° ○ -a) शा1 एतामृतुमती, दे1 11 युवा ऋतुमती, दे9 एकदा तु मति(?), न1 एकदा तु सतीं (→एतामृतुमतीं), दे1 11 जाता (→जाता), दे4 जातमात्रे सुते तस्मिन्. -b) ब3 दे9 महिषाख्यो (ब3 °ख्यो) (→महिषोऽन्यो), शा1 नो, मारा का1 2 दे1 5 9 11 न1 ताम्, दे7 हा (→ह) -c) मारा ब1 न1 सा (ब1 स) चाभ्यागाद्, दे1 11 नवाभ्याया, दे5 भवाभ्ययो (→सा चाभ्यगाद्), मारा दैत्यवर, का2 दितिवर (→दितिवर) -d) ब1 रमन्ती (→रक्षन्ती) शा1 शून° (→शील°).

६२ -a) दे5 वमुन्ना°, दे4 तमुजा° (→तमुन्ना°), दे5 °मिव (→°मित), ब1 3 दे11 °नाग(ब1 °प)च, ब2 °दासच (→°नासं च) -c) दे1 11 वड्गु (→खड्ग) का० दे० 4 10 निकृष्य, ब2.3 दे7 विकृष्य, दे1.5.11 निकृत्य (→निष्कृष्य) -d) शा1 दे2.3 10 ते1 महिषं तमु°, काप सं हतु समु°, ब1 महित समु°, दे4 महिषातमु° (→महिषं समु°) दे11 °पद्रवन् (→°पाद्रवत्)

६३ -a) दे7 तेनैव (→तेनापि) -c) दे7 संभिन्न° (→निर्भिन्न°) -d) दे10 पपात च (→निपपात)

६४ -a) दे4 न मे भर्तरि (→मृते भर्तरि सा) -b) दे3 यथानां (→यक्षाणां) -c) दे4 गुह्यकै रक्षिता (→रक्षिता गुह्यकै), ब1 साध्या, ब3 दे1 3.10 ते1 सार्द्धं, दे9 सा च (→साध्वी) दे० गता (→तत)

६५. -a) ब1 निवृत्तो, दे10 निवारितैर् (→निवारितो) -b) दे5 ऽश्वारि, दे10 हयारि,+महिषा (→हयारि)

१७ ६७ नमरो नाम विख्यातो महाबलपराक्रमः ।
यक्षानाश्रित्य तस्थौ स कालयन् श्वापदान् मुने ॥ ६६
स च दैत्येश्वरो यक्षैर्मालवटपुरस्सरैः ।
चितामारोपित' सा च श्यामा त चारुहत् पतिम् ॥ ६७
ततोऽग्निमध्यादुत्तस्थौ पुरुषो रौद्रदर्शनः ।
व्यद्रावयत् स तान् यक्षान् खड्गपाणिर्भयकर. ॥ ६८
ततो हतास्तु महिषाः सर्व एव महात्मना ।
ऋते संरक्षितार हि महिष रम्भनन्दनम् ॥ ६९
स नामत स्मृतो दैत्यो रक्तबीजो महामुने ।
योऽजयत् सर्वतो देवान् सेन्द्ररुद्रार्कमारुतान् ॥ ७०
एव प्रभावा दनुपुगवास्ते
तेजोऽधिकस्तत्र बभौ हयारि. ।
राज्येऽभिषिक्तश्च महाऽसुरेन्द्रै-
र्विनिर्जितै. शम्बरतारकाद्यै. ॥ ७१
अशक्नुवद्भि. सहितैश्च देवै.
सलोकपालै. सहुताशभास्करैः ।
स्थानानि त्यक्तानि शशीन्द्रभास्करै
र्धर्मश्च दूरे प्रवियोजितश्च ॥ ७२

इति श्रीवामनपुराणे अष्टादशोऽध्याय' ॥१८॥

६६ —a) गा1 कारा का1 • चामरो ब3 नवरो दे10 समरो (→नमरो) —c) ब1 • यक्षमाश्रि°, दे10 दह्यमाश्रि° (—यक्षानाश्रि°) गा1 का1 2 दे1 5 9 11 स', दे• 3 10 सा (→स) —d) ब3 कलयन्, दे1 4-5 11 ते1 पालयन्, दे• 3 पलायन् (→काल यन्) का• दे3 ते1 स्वपदान्, ब3 दे1 11 स्वापदान्, दे• ग्रूपदान्, दे4 श्वापदा दे1 श्वापदान् (→श्वापदान्) ब3 दे4 5 वने, दे7 च ते (→मुने) ब1 • कालजन्म यत्र वने दे10 काल गमयतो वने

६७ —a) गा1 सर्व (→स च) —b) ब1 मणिवट, ब2 मालवट', दे1 4 10.11 न1 मालावट दे7 मानवट दे9 मालवट (→मानवट ) दे• °पुरस्सर' (→°पुरस्सरै.) —c) दे9 °पितो द' 1 (→°पित सा च) —d) ब1 • दे7 तत्र श्यामागमत्पति, ब3 श्यामाचानुगमत्पति दे4 श्यामा पचत्वमागता दे9 सा श्यामाह दहत्पति

६८ —a) दे10 ततो मध्यात्समुत्तस्थौ —b) दे3 र°° (→रौ°°) —c) गा1 कारा दुद्रावयत्, ब1 • दे7 9 विद्रावयत्, ब3 न1 विद्रावयन् (→व्यद्रावयत ): दे7 यत्रगगान्, न1 स ता यत्र (→स तान्यक्षान्) —d) दे1 11 खड्ग° (→खड्ग°) दे• 3 ते1 महत्यत (→भयकर')

६९ —a) दे1 भूता (→हता ): दे9 पुरुषा (→महिषा) दे4 ततस्तु निहता यत्रा.. —b) दे7 महासना (→महात्मना) —c) गा1 कारा का1 2 दे1 3 5-10.11 विना (→ऋते) का1 • सं रक्षि° (→सरक्षि°)

७० —a) दे3 नामत, दे4 नाम [त ?] (→नामत ) —b) दे1 °बीजा दे1 °बीजो (→°बीजो) —c) का• ब1 दे3 जयेत्, दे1 9 न1 जेता (→[यो]जयत्) दे4 सर्वभूतानां दे7 न1 सर्वभुव (न1 [भुव]) नान्, दे11 सर्व्वत्र देवान् (→सर्वतो देवान्) —d) दे9 सेलक्ष्मणाक° (→सेन्द्ररुद्राक°): दे4 °रक्षा (→°मारुतान्)

७१ —a) ब1 • दे1 5 10.11 प्रभावो (दे4 °ता) (→प्रभावा): दे1 11 °पुगव (वा ?)स्ते दे 3 10 °पुगवोसो (→°पुगवास्ते) —b) दे4 °धिका (→°धिक ) ब1 • दे7 सुरारि (→हयारि ) —c) ब1 दे4 7 9 °भिषिक्त (दे9 °क्ता ) स्तु (→°भिषिक्तश्च) ब• 3 दे1 5 सवर° (→शम्बर°)

७२ —a) ब1 3 दे4.7 9 न1 जितश्चाक (ब1 3 °क-) सहितोपि (ब3 °तश्च) (→अशक्नुवद्भि सहितैश्च): ब• देव दे4 दवतै (→देवै ) —c) का2 स्नानानि (→स्थानानि): ब1 मुक्तानि दे10 मुक्तानि + त्यक्तानि (→त्यक्तानि) दे5 शशी तुलारके दे• 3 शशीन्द्रभास्वर (→शशी भास्करै ) दे9 न1 स्थानं परित्यज्य गत्र सभीरया —d) दे1 5 10 11 नमस्य न1 धर्मश्च (→धर्मश्च) दे5 मद्भुते दे4 9 दूर न1 दृढ (→दूरे) ब1 • दे7 प्रहितो जितश्च ब3 दे4 न1 प्रनिता हि लोकत (न1 °लोक ) दे9 सहितो हि लोकम् (→प्रवियोजितश्च)

पुष्पिका— गा1 का1 • दे 3.5.10 11 ते1 न1 इति श्रीवामन पुराणे कारा ब• 3 दे1 इति वामनपुराणे ब1 दे1 7 इति श्रीवामन (दे7 महावामन) पुराणे भरतप्राधुर्भावे दे1 श्रीवामनपुराणे मुने इति श्रीवामनपुराणे पुलस्त्यनारद वादे. अध्यायनाम—ब1 3 दे4.5• ○ गा1 का1 • दे1 3.5 9-11 ते1 न1 महिषासुरोत्पत्ति नाम (दे5 [नाम]) कारा महिषवामरस्तवादर्शनंनाम अध्यायसख्या—दे5.7 ○ गा1 का1 • दे1.3 सप्तदशोध्याय कारा षडविंशतितमोध्याय ब1 3 दे4 दशमाध्याय', दे. 11 षोडशो ध्याय' दे9 न1 अष्टादशोध्याय', दे10 अध्याय ॥१७॥

# १९

पुलस्त्य उवाच ।*
ततस्तु देवा महिषेण निर्जिताः
स्थानानि संत्यज्य सवाहनायुधाः ।
जग्मुः पुरस्कृत्य पितामहं ते
द्रष्टुं तदा चक्रधरं श्रियः पतिम् ॥ १
गत्वा त्वपश्यंश्च मिथः सुरोत्तमौ
स्थितौ खगेन्द्रासनशंकरौ हि ।
दृष्ट्वा प्रणम्यैव च सिद्धिसाधकौ
न्यवेदयंस्तन्महिषादिचेष्टितम् ॥ २
प्रभोऽश्विसूर्येन्दुनिलाग्निवेधसां
जलेशशक्रादिषु चाधिकारान् ।
आक्रम्य नाकात्तु निराकृता वयं
कृतावनिस्था महिषासुरेण ॥ ३
एतद् भवन्तौ शरणागतानां
श्रुत्वा वचो ब्रूत हितं सुराणाम् ।
न चेद् व्रजामोऽद्य रसातलं हि
संकाल्यमाना युधि दानवेन ॥ ४
इत्थं मुरारिः सह शंकरेण
श्रुत्वा वचो विप्लुतचेतसस्तान् ।
दृष्ट्वाऽथ चक्रे सहसैव कोपं
कालाग्निकल्पो हरिरव्ययात्मा ॥ ५
ततोऽनुकोपान्मधुसूदनस्य
सशंकरस्यापि पितामहस्य ।
तथैव शक्रादिषु दैवतेषु
महर्द्धि तेजो वदनाद् विनिःसृतम् ॥ ६
तच्चैकतां पर्वतकूटसन्निभं वे, १८.

१९

* शा1 न1 पुलस्त्य, दे2 पुलस्त्य उ, दे9 श्री पुलस्त्य

१ –a) दे1 5 7 11 निर्जिता (ता ?) (→निर्जिता) –b) ब2 स ८ हता° (→सवाहना°) –c) ब3 त, दे4 ततो (→त) –d) दे3 यदा- (→तदा), दे7 °धर (→°धरं), कारा ह्युमापति (→श्रिय पति)

२ –a) कारा का1 गत्वा * पश्यन्त, ब1 दे7 त (दे7 °तान्) पश्यतश्चापि, दे4 ते चाप्यपश्यन्त (→गत्वा त्वपश्यंश्च) दे1 7 11 सुरोत्तमै (दे7 °मान्) (→सुरोत्तमौ), दे9 न1 ततस्तु ते (न1 तौ) पश्चिमत सुरोत्तमौ –b) ब1 दे1 11 स्थिता (तौ?) (→स्थितौ) खगेन्द्रामर° ब2 सुरेन्द्रामर° (→खगेन्द्रासन°), दे1 11 स्थिता (तौ?), कारा °संक तां (रौ?) हि, दे1 °शंकरो भूयं, दे7 °शङ्करो हरि (→°शंकरौ हि) –c) ब3 हि दे5च,+न (→च), ब1 दे1 5 7 11 वे1 सिद्ध° (→सिद्धि) –d) ब1 3 त म°, (→तन्म°), शा1 का1 ब2 3 दे1 3.9-11 महिषारि-, कारा दे4 न1 महिषस्य (→महिषादि–)

३. –a) शा1 का1 2 प्रभोऽभ, कारा प्रभू च (→प्रभोऽश्वि-), ब2 प्रभोर्धि°, दे4.9 न1 वित्तप° (→प्रभोऽश्वि°), ब॰ दे2.3.5.11 सूर्येन्द्र° (द्र?) (→सूर्येन्दु°), दे7 न1 °तेजसा (न1 °सां) (→°वेधसां) –b) दे1 11 यशेन–(क्षेशे-), का2 दे2 5-10 शक्रादिसुरा°, दे1 9 11 चक्रादिषु चा°, दे5 चक्रादिसुरा°) (→शक्रादिषु चा°) –c) ब1 2 दे7 चाक्रम्य, ब3 दे4 नाकं तु, दे1 11 नाकाच्च (→नाकात्तु) –d) शा1 कारा का1 2 दे9 वनस्था, दे4 [-अ] धरस्था (→ [अ]-वनिस्था)

४. –b) ब॰ द्रुत-, दे9 भूत- (→ब्रूत) –c) दे9 न1 मयात् (→न चेद्), दे7 [अ] थ (→[-अ] द्य), दे1 11 रसस्तल (→रसातल) –d) ब2 काकिल [श्य], दे2 4 11 सकल्य°, दे9 न1 मक्लिश्य° (→संकाल्य) ब1 2 दे7 यादं (→युधि)

५ –a) दे9 बन्ध (→इत्थं), का1 ब2 सुरारि (→मुरारि) –b) ब1 दर्शनिर्वेदित ब, ब2 ब्रह्मपुरागमाना, न1 निष्ठुरचेतसः स्त (→विप्लुतचेतसस्तान्), शा1 चेतन तेन, कारा दे1 °चेतनास्तान्, दे2 4 10 व1 चेतसा हि (→चेतसस्तान्) –c) शा1 दृष्ट्वैव, दे2 3-10 न1 दृष्ट्वात्र (न1 च) (→दृष्ट्वाथ) –d) ब2 °कल्प, दे1 11 °चक्रो (→°कल्पो)

६ –a) कारा ततस्तु, ब3 ततोथ (→ततोऽनु) –c) न1 तत्रैव (→तथैव), दे1 11 ····[→°दैवतेषु] –d) शा1 कारा का1 2 ब3 दे1.3-7 न1 महर्द्धि, दे9 मरीचि, ब3 महर्षि- (→महर्द्धि) ब2 °तोया (→°तेजो); न1 वदनाच्च (→वदनाद् वि)

७. –a) ब1 2 तच्चै (ब1 °च्चै) कस° (ब1 °चं), दे1.2.11

१८.७ जगाम तेजः प्रवराश्रमे मुने ।
कात्यायनस्याप्रतिमस्य तेन
महर्षिणा तेज उपाकृतं च ॥ ७
तेनर्षिसृष्टेन च तेजसा वृतं
ज्वलत्प्रकाशार्कसहस्रतुल्यम् ।
तस्माच्च जाता तरलायताक्षी
कात्यायनी योगविशुद्धदेहा ॥ ८
माहेश्वराद् वक्त्रमथो बभूव
नेत्रत्रयं पावकतेजसा च ।
याम्येन केशा हरितेजसा च
भुजास्तथाष्टादश संप्रजज्ञिरे ॥ ९
सौम्येन युग्मं स्तनयोः सुसंहतं
मध्यं तथैन्द्रेण च तेजसाऽभवत् ।
ऊरू च जङ्घे च नितम्बसंयुते
जाते जलेशस्य तु तेजसा हि ॥ १०
पादौ च लोकप्रपितामहस्य
पद्माभिकोशप्रतिमौ बभूवतुः ।
दिवाकराणामपि तेजसाऽङ्गुलीः
कराङ्गुलीश्च वसुतेजसैव ॥ ११
प्रजापतीनां दशनाश्च तेजसा
याक्षेण नासा श्रवणौ च मारुतात् ।
साध्येन च भ्रूयुगलं सुकान्तिमत्
कन्दर्पबाणासनसन्निभं बभौ ॥ १२
तथर्षितेजोत्तममुत्तमं महन्-
नाम्ना पृथिव्यामभवत् प्रसिद्धम् ।
कात्यायनीत्येव तदा बभौ सा

---

तथैकतां, दे$_3$ तथैव #, दे$_4$ तथैकता, दे$_7$ तथैक (स?), न$_1$ तत्रैकता (→तथैकता). –b) शा$_1$ कारा. का$_{1.2}$ °श्रितं मुने, दे$_{1.11}$ °श्रमेषु, न$_1$ °शय मुने (→°श्रमे मुने) – ) दे$_1$ प्रमितस्य दे$_{2-4.10}$ [-अ]प्रतिमेन, दे$_{5\ 11}$ [-अ]प्रमितस्य, दे$_9$ प्रतिमस्य (→[ अ] प्रतिमस्य), ब$_{1\ 2}$ दे$_7$ चैतदा (दे$_7$ °ग), दे$_{23\ 4.10}$ तेजसा (→तेन). –d) दे$_7$ °कृत तु, न$_1$ हुतं च (→कृत च), ब$_{1\ 2}$ [-आ] कर्पगं तेज उपाकृत च, दे$_4$ तेजस्तथा तच्च समीकृत मुने, दे$_9$ महर्षिणा सर्वमुपाहृत च.

८ –a) दे$_5$ तेनर्षि°, दे$_7$ देवर्षि° (→तेनर्षि°), दे$_5$ भव-, दे$_{11}$ नव (→-न च), दे$_9$ -वृता (→वृत) –b) शा$_1$ का$_1$ दे$_7$ ज्वलन् (→ज्वलत्-), दे$_7$ प्रकाशोर्क° (→प्रकाशार्क°), दे$_9$ °तुल्या (→°तुल्यम्) –c) न$_1$ श्रमला° (→तरला°), ब$_{1.3}$ दे$_{7\ 9}$ न$_1$ आयतेक्षणा (→आयताक्षी), दे$_4$ तस्माच्च सा पद्मनिभेक्षणा हि. –d) न$_1$ पोषित° (→योग वि°) दे$_4$ °देव्या ( °देहा)

९. दे$_{10}$ cd इत्यारभ्य ११ यावत् ○. (द स.) –a) शा$_1$ का$_1$ दे$_4$ महेश्वराद् (→माहेश्वराद्), दे$_9$ °मयाब्ज (→°मथो ब-). दे$_7$ महेश्वराणा च यथा बभूव –b) दे$_9$ नतूमय (→नेत्रत्रय). ब$_{1.2}$ [-अ] भूत, दे$_7$ [ह्य-] भूत (→च) –c) ब$_{1\ 3}$ दे$_9$ याम्याश्च, ब$_2$. दे$_{5.7}$ न$_1$ याम्याच्च (दे- च) (→याम्येन) दे$_9$ न$_1$ °तेजसश्च (→°तेजसा च) –d) दे$_4$ तस्या भुजाष्टा° (→भुजास्तथाष्टा°)

१० दे$_{10}$ ○(द स.द्र.६पा वि ) –a) शा$_1$का$_{1\ 2}$ दे$_9$ °सहित, ब$_{2\ 3}$ °सभृत, दे$_2$ °सहिते, दे$_4$ °सगतं (→°संहत) –b) शा$_1$ का$_1$ दे$_{5.7}$ तथैन्द्रेण (तथैद्रेण), ब$_{1\ 2}$ तथै (ब$_1$ °थे) शेन च सहतावुभौ, दे$_7$ तथैंद्रेण च सहतावुभौ. –c) ब$_3$ दे$_{1\ 3}$ उरूरु-, न$_1$ उरुस- (→ऊरू च), शा$_1$ कारा. का$_1$ जघे सु-, ब$_{1.2}$ दे$_7$ संहत्य, दे$_{1.5.11}$ जघ -य(दे$_5$ °य) (→जघे च), कारा. का$_{1.2}$ ब$_1$ दे$_{2.3.5.7}$ ते$_1$ °संयुता,ब$_2$ °स्यता, दे$_{1.11}$ °सयुक्तौ (→°सयुते). –d) शा$_1$ कारा. का$_{1.2}$ दे$_{1-3.5.11}$ ते$_1$ जातौ (→जाते), दे$_9$ हि (→तु), कारा. का$_1$ भुव (→हि), ब$_{1\ 3}$ जलेशदेवस्य तु (ब$_3$ च) तेजसा हि, दे$_4$ जलेश्वरस्यैव च तेजसा भुव, दे$_2$ जातौ जलेन तु तेजसाद्धि.

११. दे$_{10}$ (द स.द्र. ६ पा.वि ). ○. –a) ब$_{1-3}$ दे$_7$ तु (→च). –b) कारा. राजीव°, ब$_{1.2}$ पद्माति° (ब$_2$ °पि), ब$_3$ पद्माति° (→पद्माभि°), दे$_{1.11}$ °काश° (→°काश°), दे$_7$ पद्माभिषेको (येन) शुभो बभूवतु –c) दे$_9$ मङ्गुलि. (→अगुली ). –d) शा$_1$ कारा. का$_{1.2}$ ब$_3$ दे$_{1-5.9.11}$ न$_1$ वासवतेजसा च (कारा. तु, न$_1$ हि).

१२. –a) दे$_7$ दशन (ना?) श्चि–, दे$_4$ दशनास्तु (→दशनाश्च). –b) शा$_1$ का$_2$ ब$_{1.2}$ दे$_{1.7.10}$ ते$_1$ यक्षेण, का$_1$ यक्षण,+याक्षेण, दे$_3$ क्षयेण, दे$_9$ न$_1$ दा (न$_1$ द) क्षेण (→याक्षेण), दे$_1$ या सा, दे$_7$ नासो (→नासा), दे$_{3.4.7.9}$ न$_1$ श्रवणे (→श्रवणो). दे$_3$ [-अ] व (→च) –c) का$_1$ दे$_{2.3}$ साध्येन तु, दे$_4$ साध्यैश्च तद् (→साध्येन च), दे$_{1\ 11}$ भ्रुर्° (→भ्रू°), दे$_7$ स्व , दे$_9$ स , न$_1$ च (→सु-). –d) शा$_1$ °सन्निभा, दे$_4$ °संस्थित (→°सन्निभ).

१३. दे$_7$. ab ○. –a) शा$_1$ कारा. का$_{1.2}$ दे$_{1\ 2.11}$ तथापि ब$_{2\ 3}$ तथा (थ ?) षि–, दे$_3$ ते$_1$ तस्यर्षि –, दे$_4$ तदर्पि–,दे$_9$ तथा हि, न$_1$ तथापि (→तथर्षि–), कारा तेजोतुल–, दे$_{1.11}$ तेजोमम (?)

नाम्ना च तेनैव जगत्प्रसिद्धा ॥ १३
ददौ त्रिशूलं वरदस्त्रिशूली
चक्रं मुरारिर्वरुणश्च शङ्खम् ।
शक्तिं हुताशः श्वसनश्च चापं
तूणौ तथाक्षय्यशरौ विवस्वान् ॥ १४
वज्रं तथेन्द्रः सह घण्टया च
यमोऽथ दण्डं धनदो गदां च ।
ब्रह्माऽक्षमालां सकमण्डलुं च
कालोऽसिमुग्रं सह चर्मणा च ॥ १५
हारं च सोमः सह चामरेण
मालां समुद्रो हिमवान् मृगेन्द्रम् ।
चूडामणिं कुण्डलमर्द्धचन्द्रं
प्रादात् कुठारं वसुशिल्पकर्त्ता ॥ १६
गन्धर्वराजो रजतानुलिप्तं
पानस्य पूर्णं सदृशं च भाजनम् ।
भुजंगहारं भुजगेश्वरोऽपि
अम्लानपुष्पामृतवः स्रजं च ॥ १७
तदाऽतितुष्टा सुरसत्तमानां
अट्टाट्टहासं मुमुचे त्रिनेत्रा ।
तां तुष्टुवुर्देववराः सहेन्द्राः
सविष्णुरुद्रेन्द्वनिलाग्निभास्कराः ॥ १८
नमोऽस्तु देव्यै सुरपूजितायै
या संस्थिता योगविशुद्धदेहा ।
निद्रास्वरूपेण महीं वितत्य
तृष्णा त्रपा क्षुद् भयदाऽथ कान्तिः ॥ १९
श्रद्धा स्मृतिः पुष्टिरथो क्षमा च
छाया च शक्तिः कमलालया च ।
वृत्तिर्दया भ्रान्तिरथेह माया दे. १८.२

(→तेजोत्तम-), दे$_{4}$ महा-, दे$_{9}$ मुद्गर् (→मद्गर) –b) व$_{1}$ चाप, व$_{2}$ गण्डा, दे$_{1\ 11}$ प्राता, दे$_{4}$ नाम्त्या (→नाम्ना). शा$_{1}$ भारा. का$_{1\ 2}$ व$_{1-3}$ दे$_{1\cdot2\cdot4\cdot10\cdot11}$ प्रसिद्धा (→प्रसिद्धम्) –c) दे$_{9}$ बभौ वरा (→तदा बभौ).

१४ न$_{1}$. cd ○ –a) न$_{1}$ ददौ त्रिशूली भव चाक्षमुत्तम –b) दे$_{3}$ न$_{1}$ पाशं (→शङ्खं) –d) व$_{1\ 3}$ दे$_{4\ 9}$ तूणावया- (दे$_{9}$ °पा), दे$_{2\ 5}$ तूणं तथा°, दे$_{3}$ तूणंस्तथा, दे$_{7}$ तूणा च या (→तूणा तथा°), शा$_{1}$ °शरो, दे$_{11}$ °शरं (रै ?) (→°शरौ)

१५ –a) दे$_{7}$ समुत्पाद्यच, दे$_{3}$ स्वरित्तगडनाय (→सह घण्टया च) –b) व$_{1-3}$ दे$_{4\cdot7\cdot9}$ न$_{1}$ [-थ] ति (→[-थ] थ) –c) दे$_{3}$ च (→स) –d) व$_{3}$ युग्मं (→उग्र), दे$_{2}$ चमणा (→चर्मणा)

१६. –a) दे$_{7}$ हरेश्च सोम (→हारं च सोम ) –b) दे$_{7}$ (स) हिम° (→हिम°), व$_{3}$ दे$_{1\ 11}$ मृगेन्द्र (व$_{3}$ °न्द्र ), न$_{1}$ नगेन्द्र (→मृगेन्द्रं).–d) शा$_{1}$ भारा. का$_{1\ 2}$ दे$_{1\cdot11}$ च शु°, दे$_{4}$ पुर°, दे$_{5}$ न$_{1}$ शुर° (→वसु°), व$_{1\ 3}$ दे$_{7}$ °ल्पि (व$_{1}$ °ल्प) योद (→°शिल्पकर्त्ता)

१७. –a) दे$_{9}$ रजतोर°, न$_{1}$ रजतार° (→रजतानु ): भारा. °क्लृप्त (→°लिप्तं). –b) दे$_{9}$ पूर्वं (→पूर्णं), दे$_{4\ 10}$ सुभृत (दे$_{10}$ °र्तं) च, दे$_{7}$ स्वदिरा, दे$_{3}$ न$_{1}$ सुतुल च (→सदृशं च): दे$_{1\ 7\cdot11}$ भाजं, दे$_{2}$ भाजने (→भाजन) –c) दे$_{3}$ °हारो (→°हारं). –d) का$_{2}$ आम्लान° (→अम्लान°), व$_{2}$ °पुष्प, दे$_{2\cdot3}$ °पुष्पो (→°पुष्पा): दे$_{2\ 11}$ ऋतव ,+ऋतव, दे$_{3}$ न$_{1}$ ऋपय (→ऋतव ), दे$_{7}$ स्रजा: (→स्रजं च), दे$_{3}$ हि (→च), दे$_{4}$ स्रजमुत्तमा च (→ऋतव स्रज च)

१८. –a) शा$_{1}$ तथाति-, व$_{3}$ तदा हि, दे$_{7}$ तदाभि- (→तदाति-)· दे$_{2\ 3}$ °सत्तमा ता, दे$_{4\cdot10}$ °सतमा सा, दे$_{7}$ °सत्तमा त (→°सत्तमानां). –b) दे$_{4}$ ततोट्ट°, दे$_{1\cdot9}$ न$_{1}$ महाट्ट° (→अट्टाट्ट°), दे$_{2}$ त्रिनत्रा, दे$_{3}$ त्रिणेत्रा (→त्रिनेत्रा°). –c) दे$_{4}$ गणा , दे$_{7}$ न$_{1}$ °वरा (?) (→°वरा), दे$_{3}$ महेन्द्रा (→सहेन्द्राः) –d) का$_{2}$ दे$_{1\cdot3\cdot5\cdot11}$ °रुद्रेन्द्र° (→°रुद्रेन्द्व°), दे$_{3}$ °निला स° (→°निलाग्नि°).

१९ a) दे$_{2}$ °जिता या (→°जितायै) –b) दे$_{9}$ सा स्थिता (→संस्थिता) –c) दे$_{2}$ विचिन्त्य (→वितत्य) –d) शा$_{1}$ भारा. का$_{1\ 2}$ तृष्णा तृषा, व$_{1\ 2}$ दे$_{7}$ तृष्णारहा, व$_{3}$ तृष्णा (क्षया) त्रपा, दे$_{4}$ तृष्णाप्रदा, न$_{1}$ तृषा त्रपा (→तृष्णा त्रपा): दे$_{1\ 3\cdot5\cdot9\ 10}$ च (→[थ]थ)

दे . १६ इत्यतः पर १६ cd आवृतम्—

२० –a) व$_{1}$ प्रज्ञा (→श्रद्धा), दे तु (ष्टिर्) (→पुष्टिर्), व$_{3}$ क्षमाय, दे$_{3}$ क्षया च →क्षमा च) –b) व$_{2\ 3}$ दे$_{2}$ [-थ]च शक्ति , दे$_{4\ 9}$ न$_{1}$ स (दे$_{3}$ °सु) शक्ति (→च शक्ति): दे$_{3}$ सुत्नी- लया, न$_{1}$ कमलासना (→कमलालया): दे$_{7}$ वा (→च). –c) शा$_{1}$ का$_{1\cdot2}$ धृतिर्दयाभ्रान्तिर्, व$_{1\ 2}$ दे$_{7}$ वृत्तिर्महाभ्रान्तिर्, व$_{3}$ वृत्तिर्हाभ्रान्तिर, दे$_{4\cdot10}$ मेधाधृति (दे$_{10}$ स्मृति ) क्षान्तिर्) (→वृत्तिर्दया भ्रान्तिर्): का$_{2}$ दे$_{1\cdot5\cdot11}$ च येह माता, दे$_{2\cdot3}$

, १८.२० नमोऽस्तु देव्यै भवरूपिकायै ॥ २०
ततः स्तुता देववरैर्मृगेन्द्र-
मारुह्य देवी प्रगताऽवनीध्रम् ।
विन्ध्यं महापर्वतमुच्चशृङ्गं
चकार यं निम्नतरं त्वगस्त्यः ॥ २१
नारद उवाच ।❀
किमर्थमद्रिं भगवानगस्त्य-
स्तं निम्नशृङ्गं कृतवान् महर्षिः ।
कस्मै कृते केन च कारणेन
एतद् वदस्वामलसत्त्ववृत्ते ॥ २२
पुलस्त्य उवाच ।❀
पुरा हि विन्ध्येन दिवाकरस्य
गतिर्निरुद्धा गगनेचरस्य ।
रविस्ततः कुम्भभवं समेत्य
होमावसाने वचनं बभाषे ॥ २३
समागतोऽहं द्विज दूरतस्त्वां
कुरुष्व मामुद्धरणं मुनीन्द्र ।
ददस्व दानं मम यन्मनीषितं
चरामि येन त्रिदिवेषु निर्वृतः ॥ २४
इत्थं दिवाकरवचो गुणसंप्रयोगि
श्रुत्वा तदा कलशजो वचनं बभाषे ।
दानं ददामि तव यन्मनसस्त्वभीष्टं
नार्थी प्रयाति विमुखो मम कश्चिदेव ॥ २५
श्रुत्वा वचोऽमृतमयं कलशोद्भवस्य
प्राह प्रभुः करतले विनिधाय मूर्ध्नि ।
एषोऽद्य मे गिरिवरः प्ररुणद्धि मार्गं
विन्ध्यस्य निम्नकरणे भगवन् यतस्व ॥ २६
इति रविवचनादथाह कुम्भजन्मा

ते$_{1}$ प्रयो महा (ते$_{1}$ ह) तो (ते$_{1}$ °ते) (→प्रथेह माया) ब$_{3}$ भवभावनायै, दे$_{1.2.5.11}$ भवरूपकायै (दे$_{2}$ °यैं), दे$_{4.9,10}$ ते$_{1}$ भवितव्यतायै (→भवरूपिकायै).

२१. –a) न$_{1}$ तु देवी (→मृगेन्द्रम्). –b) दे$_{7}$ प्रगता, दे$_{9}$ च गता, ते$_{1}$ प्रयता (→प्रगता-). –b) ब$_{3}$ दे$_{4.9}$ महीध्र, दे$_{1.11}$ वनान्त, दे$_{2\ 3.5.10}$ ते$_{1}$ वनाढ्य (दे$_{2}$ °द्य ?) (→[अ]वनीध्र), न$_{1}$ मृगेंद्रमारुह्य गता महेंद्र. –c) दे$_{2}$ °भंग (→°शृङ्ग), दे$_{7}$ ह्यगस्त्य (→त्वगस्त्य).

❀ दे$_{2}$ नारद उ, न$_{1}$ नारद.

२२. –a) दे$_{4}$ मगस्तिस् (→अगस्त्यस्). –b) दे$_{1.5.11}$ तन्निम्न° न$_{1}$ सनिम्न° (→तं निम्न°), का$_{1}$ न$_{1}$ महर्षे (→महर्षि). –c) दे$_{10}$ कस्मि [न्] (→कस्मै), दे$_{9}$ कदा (→कृते). –d) शा$_{1}$ कारा. का$_{1}$ यत्तद्, ब$_{3}$ चैतद् (→एतद्), ब$_{1}$ दे$_{7}$ °सत्त्वमूर्ते ब$_{2}$ °सत्तमूर्ते, दे$_{1\ 11}$ °सत्त्ववृत्त, दे$_{9}$ °चित्तवृत्त (→°सत्त्ववृत्ते).

❀ दे$_{9}$ श्री पुलस्त्य, न$_{1}$ पुलस्त्य.

२३. –a) दे$_{7}$ पुराद्रि- (→पुरा हि). –b) दे$_{9}$ हि रुद्धा (→निरुद्धा).

२४. –a) दे$_{1.5.11}$ दूरत स्त्वा, दे$_{4}$ दूरतस्त्व, दे$_{9}$ न$_{1}$ देशात (→दूरतस्त्वा) –b) न$_{1}$ कुरु स्व (→कुरुष्व), शा$_{1}$ का$_{1}$ मे प्रोद्धरण, का$_{2}$ दे$_{4}$ मेवो (का$_{2}$ °पो) द्धरणं, दे$_{1\ 3\ 5.11}$ विप्रोद्धरण, न$_{1}$ मा मुद्धरण (→मामुद्धरण); दे$_{9}$ कुरुष्व मोयुधरणं द्विजेन्द्र. –c) दे$_{4}$ समीहितं (→मनीषित). –d) कारा. °दिवे सु-, दे$_{9}$ °दिवेन (→°दिवेषु), दे$_{4}$ निर्भय (→निर्वृत).

[कारा. पुस्तके १९ अध्यायस्य २५ श्लोकादारभ्य २२ अध्यायस्य २ श्लोक यावत् पत्राणामभावात् खण्डितम् ]

२५. ब$_{2}$. ○. –a) शा$_{1}$ का$_{2}$ ब$_{1}$ °सग (शा$_{1}$ °गि) योगि, ब$_{3}$ सगयोनि (तु), °सगि श्रुत्वा, दे$_{9}$ न$_{1}$ °समताय (→संप्रयोगि). –b) दे$_{4}$ श्रोतस् (→श्रुत्वा), दे$_{4}$ °योनिरसौ (→°जो वचनं). –d) न$_{1}$ नार्थं (→नार्थी).

२६. दे$_{7}$. cd ○. –a) दे$_{9}$ न$_{1}$ °सम, दे$_{9}$ °भवं (→°मय). –b) शा$_{1}$ का$_{1\ 2}$ ब$_{3}$ दे$_{2.4\text{-}10}$ °तल, न$_{1}$ °पुटं (→°तले), दे$_{1\ 11}$ पूजा, दे$_{7}$ मूर्ध्ना (→मूर्ध्नि). –c) शा$_{1}$ एष प (प ?), का$_{1}$ एषोऽथ (→एषोऽद्य), दे$_{1\ 11}$ न$_{1}$ मा (→मे), दे$_{4}$ निरु, दे$_{9}$ तुरु- (→प्ररु-), ब$_{3}$ मार्गात् (→मार्गं). –d) ब$_{3}$ न$_{1}$ विन्ध्योस्य, दे$_{9}$ विन्ध्योह्य, मुद्रे. विन्ध्यश्च (→विन्ध्यस्य), दे$_{3}$ विन्ध्य° (→निम्न°), ब$_{1}$ भगवान् (→भगवन्); ब$_{2}$ चतस्व (→यतस्व).

२७. दे-. ab ○. –a) दे$_{9}$ इति वचनमाह कुम्भजन्मा. –b) दे$_{1}$ मयाद्रि- (→मया हि); रवे त्वमाह तं तं (←मया हि नोपभङ्ग). –c) का$_{1}$ भविष्यते, + यमद्रिराजो, ब$_{1\ 3}$ दे$_{2.3}$ भविष्यति, दे$_{7}$ भवेत् (→भविष्यते), दे$_{1\ 11}$ महीध्रो, दे$_{5}$ महान्ध्रो (→महीध्रो). –d) शा$_{1}$ का$_{2}$ दे$_{9}$ धरणं, का$_{1}$ चरणं (→चरण-); शा$_{1}$ का$_{1.2}$ °सभुग-

कृतमिति विद्धि मया हि नीचशृङ्गम् ।
तव किरणजितो भविष्यते महीध्रो
मम चरणसमाश्रितस्य का व्यथा ते ॥ २७
इत्येवमुक्त्वा कलशोद्भवस्तु
सूर्यं हि संस्तूय विनम्य भक्त्या ।
जगाम संत्यज्य हि दण्डकं हि
विन्ध्याचलं वृद्धवपुर्महर्षिः ॥ २८
गत्वा वचः प्राह मुनिर्महीध्रं
यास्ये महातीर्थवरं सुपुण्यम् ।
वृद्धोस्म्यशक्तश्च तथाधिरोढुं
तस्माद् भवान् नीचतरोऽस्तु सद्यः ॥ २९
इत्येवमुक्तो मुनिसत्तमेन
स नीचशृङ्गस्त्वभवन्महीध्रः ।
समाक्रमचापि महर्षिमुख्यः
प्रोल्लङ्घ्य विन्ध्यं त्विदमाह शैलम् ॥ ३०
यावन्न भूयो निजमाव्रजामि
महाश्रमं धौतवपुः सुतीर्थात् ।
त्वया न तावत्त्विह वर्धितव्यं
नो चेद् विशस्येऽहमवज्ञया ते ॥ ३१
इत्येवमुक्त्वा भगवाञ्जगाम
दिशं स याम्यां सहसाऽन्तरिक्षम् ।
*आक्रम्य तस्यै सहितां तदाशां*
काले व्रजाम्यत्र यदा मुनीन्द्रः ॥ ३२
तत्राश्रमं रम्यतरं हि कृत्वा
संशुद्धजाम्बूनदतोरणान्तम् ।
तत्राथ निक्षिप्य विदर्भपुत्रीं
स्वमाश्रमं सौम्यमुपाजगाम ॥ ३३
ऋतावृतौ पर्वकालेषु नित्यं मं. १८

---

थितस्य कार्यात्, ब 1.2 °समाश्रितो हि का व्यथा च, (ब2 [च]), दे2.3 समाश्रितस्य [का] ते व्यथा, दे9 श्रयतश्च [का] व्यथा ते

२८ –a) दे7 °भवस्य (→भवस्तु). –b) दे1.11 सूर्यं (→सूर्यं), दे4 9 न1 प्रतिस्तू (दे9 °ष्टू) य (→हि संस्तूय), शा1 का1 ब3 दे1-3 5.10-11 न1 विनम्र (→विनम्य), दे1.11 -दृष्ट्या (→भक्त्या). –c) दे3.7.9 न1 च, दे4 तु (→हि)· शा1 का1.2 दण्डकानि, ब3 दण्डक च, दे2.10 दण्डक (दे2 के) तु (दे2 हि) (→दण्डक हि).

२९ –b) दे1 यास्याम्यह, दे7 याम्यं महा-, दे9 यामो महा- (→यास्ये महा) –c) दे4 वृद्धोस्मि, दे7 वृद्धयारम्य° (→वृद्धोस्म्य-), दे4 शक्तो न (→[-अ]शक्तश्च), दे1 °विरोहणे (→°धिरोढुं). –d) दे9 न1 भवाद्य (→-स्तु सद्य ).

३० –b) न1 मुनीन्द्र (→महीध्र ). –c) शा1 दे1.2.11 न1 ते1 समाक्रमश्च (न1 चा) पि (→समाक्रमच्चापि), दे7 न1 °मुख्य (→°मुख्य ). –b) ब1 2 दे4.7.9 न1 वाक्यं, दे2.3 ते1 शैल (→विन्ध्य), दे4 मुनिराह, दे9 -मिदमाह (→त्विदमाह)· दे1 3.5.11 ते1 विन्ध्य (→शैल).

३१. ब1. cd⊙. –a) ब1.2 यावत्तु, दे1 11 यावद्ध (द्वि?) (→यावन्न)· दे8 इत्येवमुक्त्वा भगवान् जगाम. –b) दे3 स° (→सु°)· ब1 सौम्यमुपाजगाम (→धौतवपु सुतीर्थात्), दे7 दिशं स याम्यां धौतवपु सुतीर्थात्. –c) ब3 ••••, दे1 तावत् परि-, दे9 तावद्धि न (→तावित्त्वह), दे9 वर्द्धनीयं (→वर्धितव्य). –d) ब2.3 दे5.10 न (→नो) दे9 वेत्सि, न1 चेद्धि (→चेद्धि-), शा1 विश स्ये, दे1.11 विशशे (→विशस्ये), ब2.3 स्वमवज्ञकार्यात्, दे4 मम प्राज्ञभङ्गाद (→[म] हमवज्ञया ते)· दे7 त्वा (→ते).

३२. ब1 ⊙. ब1 3 दे7. cd⊙. –a) दे2 भगवन् (→भगवान्). –b) ब2.3 °रीक्ष, दे9 न1 °रिक्षात् (→°रिक्षम्). –c) दे9 सहसा (→सहितां). –d) दे4.9 न1 व्रजत्यन्य (दे4 त्र). (→व्रजाम्यत्र), दे9 न1 यया (→यदा)· का2 दे2 मुनीन्द्र (→मुनीन्द्र ).

३३. ब1. ⊙, ब2.3 दे7. ab○. –a) दे9 सौख्य° न1 सौम्य° (→रम्य°) –b) दे9 °जन्मा (→°जाम्बू-) –c) ब2.3 दे7 न1 अपि (→अथ), का2 नि क्षिप्य (→निक्षिप्य)· शा1 का1 2 °पुत्र, का1 दे3 °पुत्र,+पुत्री (→°पुत्री) –d) ब2 दे7 महा° (→स्वमा°)

३४. दे5. अस्पष्ट पाठ –a) शा1 का1 2 पर्वतकार्यमेव, ब1 पर्वदिनेषु कि नित्य, ब2 दे1-3.7.10.11 ते1 पर्व (ब2 °सर्व) कार्येषु नित्य, दे9 न1 सर्वकालेषु धीमान् (न1 नित्य) (→पर्वकालेषु-नित्यम्). –b) ब1 तमध्वरे, दे2.3 तदेवरे, दे4 ततोंवर-, दे9 ते1 तम (ते1 °द) न्तरे (→तमम्वरे), ब2 चोग्रमसा°, ब3 स्वाश्रममा°, दे1.11 मात्रममा°, दे3.4 या (दे4 °स्या) श्रमगा°, दे7 वाश्रममा° (→हाश्रममा°)· ब3 °चकार, दे2.3.9.10 न1 धावरोस-

१८.३४ तमम्बरे ह्याश्रममावसत् सः ।
शेषं च कालं स हि दण्डकस्थस्
तपश्चचारामितकान्तिमान् मुनिः ॥ ३४

विन्ध्योऽपि दृष्ट्वा गगने महाश्रमं
वृद्धिं न यात्येव भयान्महर्षेः ।
नासौ निवृत्तेति मतिं विधाय
स सस्थितो नीचतराग्रशृङ्गः ॥ ३५

एवं त्वगस्त्येन महाचलेन्द्रः
स नीचशृङ्गो हि कृतो महर्षे ।
तस्योर्ध्वशृङ्गे मुनिसंस्तुता सा
दुर्गा स्थिता दानवनाशनार्थम् ॥ ३६

देवाश्च सिद्धाश्च महोरगाश्च
विद्याधरा भूतगणाश्च सर्वे ।
सर्वाप्सरोभिः प्रतिरामयन्त.
कात्यायनीं तस्थुरपेतशोकाः ॥ ३७

इति श्रीवामनपुराणे एकोनविंशोऽध्याय ॥१९॥

# २०

पुलस्त्य उवाच ।❀
ततस्तु तां तत्र तदा वसन्तीं
कात्यायनीं शैलवरस्य शृङ्गे ।
अपश्यतां दानवसत्तमौ द्वौ
चण्डश्च मुण्डश्च तपस्विनीं ताम् ॥ १
दृष्ट्वैव शैलादवतीर्य शीघ्र-

(→मावसत्स ) –c) का1 व2 दे7 श्च8 (ब॰ ष्ठ) (→ह्येव) दे3 तु (→हि), दे4 च (→स) 1 3 11 दण्डकस्थ, दे4 तपश्चरन् वै, दे7 दण्डकस्य, दे9 दडक (→दण्डकस्थस्) –d) ब1 ॰ दे1 7 11 चकारा° (→चचारा°) दे7 [मा] मित° (→[म] मित°) न1 कीर्तिमान् स (→कीर्तिमा मुनि ) दे4 विधि समुल्लङ्घ्य तु कान्तिमान् स , दे9 स्वय चचारामितकातिमास्तप

३५ शा1 का1 दे9 cd ○ –a) गा1 का1 ब1 दे॰ 3 5 10.11 गमने (→गगने) –b) दे9 बुद्धि (→वृद्धि) दे9 [-ए] प तया (→[-ए] व भयात ) दे11 महर्षि (महर्षे ) –c) का2 तस्या (→नासौ) दे4 निवर्त्तेत (→निवृत्तति) ब॰ मिति ब3 वृत्ति (→मति) –d, का रन1 य, दे7 स्व (→स) दे1 सस्थितो (→सस्थितो)

३६ –a) दे10 महा(शु°) (→महा°) –b) न1 विहितो (→हि कृतो) –c) का1 व3 दे4 तस्योच्च ब1 ॰ दे7 तस्यो (दे7 °षो) च्च° (→तस्योर्ध्व°), दे7 °स कृता (→°सस्तुता) –d) गा1 का1 ॰ दे1 5 10 11 नागनार्थं, ब1 ॰ दे7 -सूदनार्थं (→नाशनार्थ)

३७ –a) ब॰ दे4 11 सिद्धा स (→सिद्धाश्च) –c) का दे9 न1 सहा (न1 °हो) प्स°, दे10 सहाप्स° (→सहाप्स°), ब3 प्रतिवासयन्त, दे3 प्रतिपालयत , न1 परिवारयत (→प्रतिरामयन्त ) –d) न1 °यिनीं (→°यनीं), दे9 अ पीत° (→अपेत°)

पुष्पिका—गा1 का1 ॰ दे1 3 ॰ 10.11 इति श्रीवामनपुराणे देवीमाहात्म्ये ब1 इति श्रीवामनपुराणे भैरवप्रादुर्भावे, ब॰ 3 इति वामनपुराणे दे4 7 न1 इति श्रीवामनपुराणे, दे9 श्रीवामनपुराणे वामने मुवे इति श्रीवामनपुराणे पुलस्त्यनारदसंवादे देवी माहात्म्ये अध्यायनाम दे9 देवीमाहात्म्य अध्यायसंख्या— व3 दे॰ 7 ○, गा1 का1 ॰ दे3 अष्टादशोऽध्याय , ब1 ॰ दे4 एकादशो ध्याय, दे1 11 सप्तदशोऽध्याय १७, दे॰ ।१७, दे3 न1 एकोनवि (न1 त्रि) शोऽध्याय , दे10 ।१८।

२०

[वारा पुस्तके ९१–१०० पत्राणि नष्टानि, अतोऽयमध्याय पत्राणामभावात् नष्ट]

❀ ब॰ ○ शा1 का1 न1 पुलस्त्य , दे5 पुलस्त्य च दे9 श्रीपुलस्त्य

१ –a) दे4 सत्र (→तत्र) –b) दे1 °यनी, दे4 °यिनीं (→°यनीं) –c) दे3 न1 ददर्शतुर् (→अपश्यतां) ब3 °सत्तमीं (→°सत्तमौ) –d) ब1 'मुण्ड' खण्डितम् दे ॰ 1 10 °नीं मुग, दे5 °ना ता, दे3 °नीं तु, दे11 °नी तां (→°नीं ताम्)

२ –a) शा1 का1 ॰ दृष्ट्वा च (→दृष्ट्वैव) दे4 मवतार्य (→मवतीर्य) –b) ब3 दे॰ 4.9 °स्तो (→°स्व ) दे1 4.5.10.11

माजग्मतुः स्वभवनं सुरारी ।
दृष्ट्वोचतुस्तौ महिषासुरस्य
दूताविदं चण्डमुण्डौ दितीशम् ॥ २
स्वस्थो भवान् किं त्वसुरेन्द्र साम्प्रत-
मागच्छ पश्याम च तत्र विन्ध्यम् ।
तत्रास्ति देवी सुमहानुभावा
कन्या सुरूपा सुरसुन्दरीणाम् ॥ ३
जितास्तया तोयधराऽलकैर्हि
जितः शशाङ्को वदनेन तन्व्या ।
नेत्रैस्त्रिभिस्त्रीणि हुताशनानि
जितानि कण्ठेन जितस्तु शङ्खः ॥ ४
स्तनौ सुवृत्तावथ मग्नचूचुकौ
स्थितौ विजित्येव गजस्य कुम्भौ ।
त्वां सर्वजेतारमिति प्रतर्क्य
कुचौ स्मरेणैव कृतौ सुदुर्गौ ॥ ५
पीनाः सशस्त्राः परिघोपमाश्च
भुजास्तथाऽष्टादश भान्ति तस्याः ।
पराक्रमं वै भवतो विदित्वा
कामेन यन्त्रा इव ते कृतास्तु ॥ ६
मध्यं च तस्यास्त्रिवलीतरङ्गं
विभाति दैत्येन्द्र सुरोमराजि ।
भयातुरारोहणकातरस्य
कामस्य सोपानमिव प्रयुक्तम् ॥ ७
सा रोमराजी सुतरां हि तस्या
विराजते पीनकुचावलग्ना ।
आरोहणे त्वद्भयकातरस्य
स्वेदप्रवाहोऽसुर मन्मथस्य ॥ ८
नाभिर्गभीरा सुतरां विभाति
प्रदक्षिणाऽस्याः परिवर्तमाना ।
तस्यैव लावण्यगृहस्य मुद्रा    मं. १

---

°भुवन (→°भवन), ब1-3 दे7 सुरागा (→सुरारी) –d) दे4 दूता-विमो, दे7 हता त्विद (→दूताविद): दे9 °ण्डावितीशम् (→°ण्डौ दितीशम्).

३. –a) ब1 2 सुस्थो, दे7 शुभो (→स्वस्थो), ब1 (शा) शृणसु°, ब2 किमसु°, दे2 शृणुसु°, दे3 शृण्वसु° (→किं त्वसु°) –b) ब1 स्वागच्छ, दे5 आगत्य, दे7 स्वागछ (त) (→आगच्छ), ब3 दे9 गच्छाम, दे4 गच्छाव, न1 -तान्छाम (→पश्याम), शा1 का1.2 पश्य च, ब3 दे4 9 न1 च पश्य (→च तत्र), ब1 विन्ध्यां (→विन्ध्यम्). –c) ब1 °वहानुभावा, ब3 °महास्वभावा (→°महानु-भावा). –d) का2 स्वरूपा (→सुरूपा).

४ –a) शा1 का1 2 ब1.3 दे3.4 9.10 जितस्तया, दे2 जितस्त्वया (→जितास्तया), शा1 का1.2 दे2.3.10 °धरोलकैर्हि, दे9 °धरोलकेन, न1 °वहालकैर्हि (→°धराऽलकैर्हि). –b) शा1 का1.2 तस्त्वा, दे1. 9.11 तस्याः, दे3 तथ्य (→तन्व्या) –c) दे4 °स्तेपि (→°स्त्रीणि), दे1 °शनाश्च (→°शनानि). –d) दे1 जिताश्च, दे9 न1 जितास्तु (→जितानि), ब1-3 दे4.7 च (→तु), शा1 का1 2 शम्बु (→शङ्ख).

५ –a) ब1-3 दे1 4.7 9-11 घनौ, न1 घनौ,+स्तनौ (→स्तनौ), ब1 दे7 न1 °अवमग्न°, ब2 °वरमग्न°, ब3 °विव [मग्न°], दे10 °भवमग्न°, मुद्रे. °वयनिम्न° (→°वथमग्न°): दे10 °चूचको (→°चूचुकौ). –b) शा1 ब1-3 दे1-2 4 5-9 विजित्यैव (→विजित्येव). –c) दे1.9 तां, दे10 त्वं (→त्वां). –d) दे7 न1 कृतौ (→कुचौ): का1 ब2.3 दे7 स्मरेणेव (→स्मरेणैव): दे7 सुदुर्गे (→सुदुर्गौ).

६. –a) शा1 पीना सशाखा, ब1.2 दे7 पीना सुशखा°, दे2 पीनाशशिस्त्रा, दे4 पीना प्रशस्ता, न1 पीना सुशस्ता: (→पीनाः सशस्त्रा): ब2 °पमश्च (→°पमाश्च). –b) दे5 भुजौ (→भुजास्). –d) ब2 यत्नाह्व (?), दे2.3 यन्त्राह (इ ?) व, दे4 यत्नादिव, दे9 वेत्रा इव (→यन्त्रा इव), ब2 हृतास्तु (→कृतास्तु).

७ –a) दे3 5 मध्ये (→मध्य), दे7 यस्या (→तस्या), का1 °तुरग (→°तरङ्ग) –b) दे9 सरोम° (→सुरोम°): दे4 °राजी, दे9.10 °राजि (→°राजि) –c) शा1 का1.2 दे1.5.11 भयात्तदा (शा1 °तुदा, दे5 °तवा) कातरमस्य दृष्ट्वा, ब1.2 दे2.4.10 ते1 भयात्तवा (दे4 °दा) रोहणकातरस्य, दे7 भयातुरावोतृणकातरस्य, दे9 तया (तु) दुरारोहणकातरस्य. –d) ब1-3 दे10 कामेन (→कामस्य)

८ –a) दे9 स (→सा): न1 राजि (→राजी): दे1-3.5.10 नितरां (→सुतरां) –b) दे9 वलीवं (→कुचाव-). –c) का1 मारोहिणी,+°णे (→मारोहणे); दे3 षेद् (→त्वद्). –d) दे7 खेद-प्रवासे, दे9 न1 स (न1 °सु) स्वेदवाहा (→स्वेदप्रवाहो), ब2 स्मर-, दे9 इव (→सुर).

९. –a) दे1.11 नाभिर्, दे7.9 नाभी ( नाभिर्): दे2.7.9 गम्भीरा (→गभीरा): ब1 खण्डितम्, दे3 नितरां (→सुतरां). –b) ब1-3 दे5.7 °दक्षिणेस्या, दे1.11 °दक्षिणोस्या,

१६ ६ कन्दर्पराज्ञा स्वयमेव दत्ता ॥ ९

विभाति रम्यं जघनं मृगाक्ष्याः
समन्ततो मेखलयाऽवजुष्टम् ।
मन्याम तं कामनराधिपस्य
प्राकारगुप्तं नगरं सुदुर्गमम् ॥ १०

वृत्तावरोमौ च मृदू कुमार्याः
शोभेत ऊरू समनुत्तमौ हि ।
आवासनार्थं मकरध्वजेन
जनस्य देशाविव सन्निविष्टौ ॥ ११

तज्जानुयुग्मं महिषासुरेन्द्र
अर्द्धोन्नतं भाति तथैव तस्याः ।
सृष्ट्वा विधाता हि निरूपणाय
श्रान्तस्तथा हस्ततले ददौ हि ॥ १२

जङ्घे सुवृत्तेऽपि च रोमहीने
शोभेत दैत्येश्वर ते तदीये ।
आक्रम्य लोकानिव निर्मिताया
रूपार्जितस्यैव कृताधरौ हि ॥ १३

पादौ च तस्याः कमलोदराभौ
प्रयत्नवस्तौ हि कृतौ विधात्रा ।
आज्ञापि ताभ्या नखरत्नमाला
नक्षत्रमाला गगने यथैव ॥ १४

एवस्वरूपा दनुनाथ कन्या
महोग्रशस्त्राणि च धारयन्ती ।
दृष्ट्वा यथेष्ट न च विद्म का सा

---

दे$_{4}$ °दक्षिणा मा, ते$_{1}$ °दक्षिणस्यो (→°दक्षिणाऽस्या) दे$_{1\ 10\ 11}$ °भाना (→°माना) –c) दे$_{9}$ °रहस्य, न$_{1}$ गृह स (→°गृहस्य) –d) दे$_{9}$ °रक्षाश्रय° (→°राज्ञा स्वय°), न$_{1}$ गत्वा (→दत्ता)

१० दे$_{2\ 3}$. cd ○ –a) दे$_{4}$ तस्या, दे$_{9}$ नम्र (→रम्य) –b) ब$_{1}$ मेखलाया, दे$_{9}$ मेघलया (→मेखलया) ब$_{1}$ –न्तहृष्ट, ब$_{3}$ -सुघृष्ट ब$_{2}$ –न्तघुष्ट, दे$_{1-3\ 5\ 11}$ ते$_{1}$ –वघृष्ट, दे$_{4}$ तिघृष्ट, दे$_{9}$ भिजुष्ट, दे$_{10}$ वघृ (घु) ष्टम्, न$_{1}$ तुजुष्ट (→वजुष्टम्) –c) शा$_{1}$ का$_{1\ 2}$ ब$_{3}$ मन्ये मत, दे$_{1\ 11}$ मात्या (दे$_{11}$ °त्या) मत दे$_{4\ 10}$ मन्ये ह्यह दे$_{9}$ न$_{1}$ मन्यामहे (→मन्याम त) –d) ब$_{1}$ प्रकार° (→ प्राकार°) ब$_{2\ 3}$ दे$_{1\ 10}$ °गुह्य, दे$_{4}$ °मुक्त, दे$_{9}$ °दुर्गं (→°गुप्त) शा$_{1}$ सुदुस्तर का$_{1}$ ब$_{2}$ दे$_{7}$ सुदुर्गमम्, ब$_{1}$ स्वदुर्गं (→सुदुर्गम)

११ दे$_{2\ 3}$ ○ –a) का$_{1\ 11}$ वृत्ता *रोमौ दे$_{7}$ वृत्तावधामौ, न$_{1}$ वृतावरोमा (→वृत्तावरोमौ) ब$_{3}$ च मृदु (इच) ब$_{2}$ दे$_{4}$ $_{11}$ च मृदु (→च मृदू) –b) दे$_{4}$ ऊरू तु शोभेत दे$_{9}$ न$_{1}$ ऊरू शुभौ दैत्य (→शोभेत ऊरू स) ब$_{1}$ च सम्नत्तमो हि, ब$_{2}$ दे$_{7}$ च अनुत्तमौ हि, दे$_{4\ 9}$ न$_{1}$ अनुत्तमौ हि (→समनुत्तमौ हि) –c) दे$_{7}$ आवासहेतो (→आवासनार्थं) –d) दे$_{7}$ देशाविवि, ते$_{1}$ देशानिव (→देशाविव) दे$_{4}$ चोपदिष्टौ (→सन्निविष्टौ)

१२ –b) दे$_{2-4\ 10}$ ह्यत्युन्न°, दे$_{9}$ न$_{1}$ प्रत्युन्न° (→अर्द्धोन्न°) –c) शा$_{1}$ का$_{1\ 2}$ यथा, ब$_{3}$ दृष्ट्वा, दे$_{1\ 3\ 11}$ न$_{1}$ सृष्ट्वा, दे$_{7}$ सृष्टौ (→सृष्ट्वा) शा$_{1}$ का$_{1\ 2}$ ब$_{1\ 2}$ दे$_{5\ 7}$ विधात्रा (का$_{2}$ + °ता) दे$_{4}$ विधा* (→विधाता) –cd) दे$_{9}$ हि निरूपणाय श्रान्ता, प्रसृष्टम् –d) न$_{1}$ सतस् (→श्रान्तस) ब$_{1\ 3}$ दे$_{1\ 5-7\ 9\ 11}$ न$_{1}$ °तलौ (→°तले) ब$_{1}$ ॰ प्रतीहि (→ददौ हि)

१३ ते$_{1}$ cd ○ –a) का$_{2}$ जगे, ब$_{3}$ दे$_{3}$** (→जङ्घे) ब$_{1\ 3}$ दे$_{7}$ विवृत्त, दे$_{2}$ पु वृत्त, दे$_{4}$ [-अ] पि वृत्ते (→सुवृत्त) –b) ब$_{1\ 3}$ दे$_{7}$ तस्यास्तु दे$_{2\ 3\ 10}$ ते$_{1}$ शुभे च दे$_{4}$ शुभे त्व–, दे$_{9}$ शुभेय न$_{1}$ शुभेद्य (→शुभे च) दे$_{2\ 9\ 10}$ दैत्येशपते (→दैत्येश्वर ते) दे$_{10}$ त्वदीये (→तदीये) –c) ब$_{2\ 3}$ आनम्य, दे$_{10}$ आगम्य (→आक्रम्य) दे$_{7\ 11}$ °नि च (→°निव) दे$_{2}$ निर्मितो ये दे$_{3}$ निर्मितं ये, मुवे निर्मिते ये (→निर्मिताया) –d) शा$_{1}$ दे$_{1\ 5\ 11}$ रूपाजितस्यैव, दे$_{2\ 3\ 10}$ रूप विजित्ये (दे$_{3}$ °त्यै) व मुवे [अ]सूप विजि°यैव (→रूपाजितस्यैव) शा$_{1}$ दे$_{5}$ कृताधरो, ब$_{1\ 3}$ दे$_{7}$ कृतोधरो (ब$_{3}$° री), दे$_{2\ 3}$ कृतेवरो (→कृताधरौ) –cd) दे$_{4}$ आगुल्फमान वहता विधात्रा रूपाश्रिरःयेव कृते वरे हि, दे$_{9}$ आकूत्यतामावहता विधात्रा रूपावरस्यैव कृतौ परावरौ न$_{1}$ आकल्पतामावहता विधात्रा रूपाजिनस्यैव कृतौ धरौ हि

१४ दे$_{5}$ d ○ –a) दे$_{7\ 9}$ तु (→च) शा$_{1}$ का$_{1\ 2}$ °लोपमानौ, दे$_{7}$ °लोद्गमाभौ (→°लोदराभौ) –b) शा$_{1}$ ब$_{2}$ दे$_{1\ 4\ 11}$ °तस्थौ (→°तस्तौ) –c) ब$_{1}$ दे$_{1\ 5}$ आज्ञायिताभ्या, दे$_{4}$ ज्ञायेव तस्या दे$_{9}$ ज्ञायेत याभ्या, दे$_{2\ 3}$ आनायितस्या, दे$_{10}$ ते$_{1}$ आज्ञापि तस्या, न$_{1}$ मायेव ताभ्या (→आज्ञापि ताभ्या) –d) दे$_{1\ 11}$ तथैव (→यथैव)

१५ दे$_{5}$ ○ –a) का$_{2}$ °स्वरूपा, दे$_{4}$ °सुरूपा (→°स्वरूपा), दे$_{3}$ ननु नाथ, न$_{1}$ दनुजेंद्र (→दनुनाथ) का$_{2}$ कन्यां (→कन्या) –b) न$_{1}$ शास्त्राणि (→शस्त्राणि) –c) दे$_{4}$ यथेष्ठ (→यथेष्ट) दे$_{9}$ नुप (→न च) दे$_{1}$ विघ्न, दे$_{2\ 4\ 10}$ ते$_{1}$ वेद्मि, न$_{1}$ विघ्न (?) (→विद्म) का$_{1}$ कासौ दे$_{1}$ का * (→का सा) –d) दे$_{2\ 3\ 10}$ तथा, दे$_{9}$

सुताऽथवा कस्यचिदेव बाला ॥ १५
तद्भूतले रत्नमनुत्तमं स्थितं
स्वर्गं परित्यज्य महाऽसुरेन्द्र ।
गत्वाऽथ विन्ध्यं स्वयमेव पश्य
कुरुष्व यत् तेऽभिमतं क्षमं च ॥ १६
श्रुत्वैव ताभ्यां महिषासुरस्तु
देव्याः प्रवृत्तिं कमनीयरूपाम् ।
चक्रे मतिं नात्र विचारमस्ति
इत्येवमुक्त्वा महिषोऽपि नास्ति ॥ १७
प्रागेव पुंसस्तु शुभाशुभानि
स्थाने विधात्रा प्रतिपादितानि ।
यस्मिन् यथा यानि यतोऽथ विप्र
स नीयते वा व्रजति स्वयं वा ॥ १८

ततो नु मुण्डं नमरं सचण्डं          २०.३.
विडालनेत्रं सपिशङ्गवाष्कलम् ।
उग्रायुधं चिक्षुररक्तबीजौ
समादिदेशाथ महासुरेन्द्रः ॥ १९
आहत्य भेरीं रणकर्कशास्ते
स्वर्गं परित्यज्य महीधरं तु ।
आगम्य मूले शिविरं निवेश्य
तस्थुश्च सज्जा दनुनन्दनास्ते ॥ २०
ततस्तु दैत्यो महिषासुरेण
संप्रेषितो दानवयूथपालः ।
मयस्य पुत्रो रिपुसैन्यमर्दी
स दुन्दुभिर्दुन्दुभिनिःस्वनस्तु ॥ २१
अभ्येत्य देवीं गगनस्थितोऽपि          वे. १६.

---

यदा (→[-अ]थवा).

१६. –a) का$_{1}$ त (→तद्), ब$_{1}$ °मु * त्तम, ब$_{2}$ °म ** म, दे$_{7}$ °मनुत्तम (हि) (→°मनुत्तम). –b) दे$_{1}$ $_{11}$ सम्यग् (→स्वर्गं). –c) दे$_{4}$ गत्वा च (→गत्वाथ), ब$_{3}$ दे$_{3}$ विन्ध्ये (→विन्ध्य). दे$_{1}$ $_{11}$ यस्या (→पश्य). –d) ब$_{2}$ अनुमत, दे$_{7.9}$ अभिहित (→अभिमत), दे$_{5}$ क्षम ते, दे$_{9}$ हित च (→क्षम च).

दे$_{5}$. १६ श्लोकात्परमधिकम्—
79 * नक्षत्रमाला गगने यथैव
एवं स्वरूपा दनुनाथ कन्या महोग्रशस्त्राणि च धारयन्ती ।
दृष्टा यथेष्ट न च विद्म का सा सुताथवा कस्यचिदेव बाला ।
तद्भूतले रत्नमनुत्तमं स्थित स्वर्गं परित्यज्य महासुरेन्द्र । [4]
गत्वाथ विंध्य स्वयमेव पश्य कुरुष्व यत्तेंभिमत क्षम च ।
( = १४ d—१६ d )

१७. –a) का$_{1}$ दे$_{4}$ श्रुत्वा च (→श्रुत्वैव), दे$_{5}$ °सुरस्य, दे$_{7}$ °सुरश्च (→°सुरस्तु). –b) ब$_{1}$ दे$_{9}$ ते$_{1}$ प्रवृत्त (→प्रवृत्तिं). –c) दे$_{9}$ मतिर्ना° (→मतिं ना°), का$_{2}$ ब$_{1}$ दे$_{2}$ $_{4}$ $_{10}$ विचार्य° (→विचार°). –d) ब$_{3}$ स महान् (→महिषो); शा$_{1}$ का$_{1.2}$ दे$_{4.9.10}$ न$_{1}$ महर्षे, ब$_{1}$ ***, ब$_{3}$ प्रशास्ति, दे$_{7}$ [-अ]पि तस्थौ (→[-अ]पि नास्ति).

१८. –b) ब$_{3}$ दे$_{1\cdot11}$ विधानात् (→विधात्रा), का$_{1}$ दे$_{11}$ °पादनानि (→°पादितानि). –c) ब$_{1-3}$ यानि तथैव, दे$_{1.11}$ यानि यथा तथा, दे$_{2.3}$ यानि च सोथ, दे$_{5.10}$ यानि यतोथ, दे$_{7}$ यानि तथैव, दे$_{9}$ यो नियथोत (°यतोथ ?) (→यानि यतोऽथ). –d) दे$_{7}$ सनी° (→सनी°), ब$_{1}$ $_{3}$ पतते, दे$_{7}$ यततो (→व्रजति); ब$_{1}$ $_{3}$ दे$_{2.4\cdot7}$ च (→वा).

१९. –a) दे$_{1.11}$ * मुंड, दे$_{10}$ न मु ड (→नु मुण्ड); शा$_{1}$ का$_{1}$ चमर, न$_{1}$ ब$_{3}$ नवम, दे$_{9}$ नमर (च) (→नमर), ब$_{3}$ च चण्ड, दे$_{9}$ न$_{1}$ शबर (→सचण्ड). –b) दे$_{9}$ विशाल° (→विडाल°), दे$_{2-5.9}$ न$_{1}$ कपिल स- (दे$_{3}$ लसु-, दे$_{9}$ श च, न$_{1}$ °श स-) (→सपिशङ्ग-), दे$_{9}$ -वाष्कर (→-वाष्कल). –c) का$_{1.2}$ ब$_{1.3}$ दे$_{5\cdot7.9}$ विक्षुर, दे$_{1.11}$ क्षिक्षुर-, दे$_{2}$ $_{4}$ ते$_{1}$ वीक्ष्य च, न$_{1}$ वक्षर- (→चिक्षुर-); शा$_{1}$ का$_{1.2}$ दे$_{2}$ $_{4}$ ते$_{1}$ न$_{1}$ -बीजं (→-बीजौ) –d) शा$_{1}$ का$_{1.2}$ दे$_{9}$ °शासु (शा$_{1}$ का$_{1}$ °सु) (→°शाथ).

२०. –a) ब$_{2}$ दे$_{10}$ अहत्य (→आहत्य), शा$_{1}$ भीरी, का$_{1}$ ब$_{1}$ दे$_{2-5.9.10}$ न$_{1}$ भेरीं, दे$_{7}$ देवी (→भेरीं), ब$_{1\cdot2}$ °शास्तृ, ब$_{3}$ °शास्नै, दे$_{7}$ °शास्त्वे (→°शास्ते). –b) दे$_{5}$ स्वयं (→स्वर्गं), ब$_{1}$ °धरान्ते, ब$_{2}$ दे$_{7}$ °धरास्ते, ब$_{3}$ न$_{1}$ °धर ते, दे$_{2,3}$ °रुहा ते, दे$_{4}$ °धरात, दे$_{9}$ °धराते (→°धर तु) –c) शा$_{1}$ का$_{1}$ आगत्य (→आगम्य), शा$_{1}$ का$_{1}$ मूल, न$_{1}$ शैले (→मूले), दे$_{7}$ शिविरे (→शिविर). –d) का$_{1}$ स्वमंख्या, दे$_{4}$ च सर्वे, दे$_{9}$ च स, जा (→च सज्जा), ब$_{1.2}$ दे$_{7}$ °पुङ्गवा (→°नन्दना)

२१. ब$_{1}$ d 'दुदुभि ⊙ शा$_{1}$ का$_{1}$ $_{2}$ दे$_{5}$ d 'दंदुभिनि स्वनस्तु' –a) दे$_{4}$ दैत्या (→दैत्यो). –b) दे$_{4}$ सप्रेपिता, दे$_{5}$ संप्रे (ष्य) पितो (→संप्रेपितो); दे$_{2-4}$ °पालाः (→°पाल ). –c) ब$_{1}$ दे$_{7}$ यमस्य, ब$_{3}$ धूम्रस्य (→मयस्य).

२२ शा$_{1}$ का$_{1.2}$ दे$_{5}$. ab 'अभ्ये······दुंदुभि' ⊙.

वा. २८.११ विरोचनं च तनयं बलिं चासुरनायकम् ॥ ११
जम्भं कुजम्भं नरकं बाणमन्यांस्तथासुरान् ।
आत्मानमुर्वीं गगनं वायुं वारि हुताशनम् ॥ १२
समुद्राद्रिसरिद्द्वीपान् सरांसि च पशून् महीम् ।
वयोमनुष्यानखिलांस्तथैव च सरीसृपान् ॥ १३
समस्तलोकस्रष्टारं ब्रह्माणं भवमेव च ।
ग्रहनक्षत्रताराश्च दक्षाद्यांश्च प्रजापतीन् ॥ १४
संपश्यन् विस्मयाविष्टः प्रकृतिस्थः क्षणात् पुनः ।
प्रह्लादः प्राह दैत्येन्द्रं बलिं वैरोचनिं ततः ॥ १५
तत्संज्ञातं मया सर्वं यदर्थं भवतामियम् ।
तेजसो हानिरुत्पन्ना शृण्वन्तु तदशेषतः ॥ १६
देवदेवो जगद्योनिरयोनिर्जगदादिजः ।
अनादिरादिर्विश्वस्य वरेण्यो वरदो हरिः ॥ १७
परावराणां परमः परापरसतां गतिः ।
प्रभुः प्रभूणां मानानां सप्तलोकगुरोर्गुरुः ।
स्थितिं कर्त्तुं जगन्नाथः सोऽचिन्त्यो गर्भतां गतः ॥ १८

प्रभुः प्रभूणां परमः पराणा-
मनादिमध्यो भगवाननन्तः ।
त्रैलोक्यमंशेन सनाथमेकः
कर्त्तुं महात्माऽदितिजोऽवतीर्णः ॥ १९
न यस्य रुद्रो न च पद्मयोनि-
र्नेन्द्रो न सूर्येन्दुमरीचिमिश्राः ।
जानन्ति दैत्याधिप यत्स्वरूपं
स वासुदेवः कलयावतीर्णः ॥ २०
यमक्षरं वेदविदो वदन्ति
विशन्ति यं ज्ञानविधूतपापाः ।
यस्मिन् प्रविष्टा न पुनर्भवन्ति
तं वासुदेवं प्रणमामि देवम् ॥ २१

---

(→[मा]दित्यान्). –c) दे4 तु, दे7 स (→च); दे11 तपनं (→ तनय). –d) ते1 ८●●● यक (→[म]सुरनायक).

१२. –a) दे7 जभ नरक वाणाद्यान्; दे10.11 जभ (दे11 °भो) नरकवाणाद्यान्. –b) दे7-10-11 मन्याश्चैवा-सुरांस्तनौ (दे5 °नि.) –c) दे7-10-11 गगन वायुं, दे7 गां च गगनं (→उर्वीं गगनं); दे2 (आत्मा) आत्मानमुर्वी (श) गगन. –d) दे5.10.11 मनस्तोय, दे7 वायुमंभो (→वायु वारि).

१३. –a) दे10 समुद्रादि- (→समुद्राद्रि-); दे7.10.11 °द्रुम° (→°सरिद्°), दे5.10.11 सरिद् (→द्वीपान्), दे1 समुद्राद्रि द्रुमसरित्. –c) दे3 4 निखिलान्, दे3 अखिलान् (→मखिलान्).

१४ –b) दे7 वा (→च). –a) दे7 पवन- (→ग्रहन-), दे5.10-11 वे1 ताराद्यान् (→ताराश्च) –d) दे1 ●●, दे7-10,11 वे1 ऋषींश्चैव (→दक्षाद्यांश्च); दे5 वे1 प्रजापति (→प्रजापतीन्).

१५. –b) दे11 दानवेन्द्र (→क्षणात् पुन). –d) मुवे. वैरोचन (→वैरोचनि)

१६. –a) दे4.5.10.11 वत्स (→तत् स). दे7 °आते (→°ज्ञात), दे5 सार्द्धं (→सर्वं) –b) दे2 यदर्थं (→यदर्थं), दे1-3 वे1 इद, दे2 इह, दे10 अय (→इय) –c) दे7 तेजोहानि समुत्पन्ना, दे11 तेजसो हानिरुत्पन्ने? –d) दे7-10.11 त्वच्छृणुध्व (दे5 °ध्व) मशेषत,

१७. –b) दे7 °दादि य°, दे1.2 वे1 दादि च (→°दादिज) दे5.10-11 जगदादिरज प्रभु.

१८. –a) दे7 पर. (→परा-); दे1.3.7 वे1 °परागां (→°वरागा), दे2-3 परम, दे4 परमा (→परम). –b) दे1 3 वे1 परापरसतागति, दे7 परावरवता पति, दे11 परायगसतां गति, मुवे. परावरवता गति. –c) दे1-3 प्रभुं (→प्रभु). –d) दे1 3-5 गुरुं (→गुरु) –e) दे1.3 स्थित (→स्थितिं). –f) दे7.7 सो दित्या, दे10.11 सोऽदित्या, मुवे. ह्यदित्या (→सोऽचिन्त्या); दे7.10.11 गर्भग प्रभु (→गर्भता गतः).

१९. –a) दे7-10.11 पर पराणा (→प्रभु. प्रभूणा); दे5.10-11 परमो महान् स (→परम पराणा). –b) दे7 अनन्तं (→अनन्त). –c) दे7 हंसेन (→मशेन). –d) दे3-5.10.11 दितिजा° (→[-अ] दितिजो°)

२०. –a) दे1 नायं च (→न यस्य), दे7 °योनि (→ योनि) –b) दे5.11 न चेन्दुर् (→नेन्द्रो न). –c) दे5 °पते स्वरूपं (→°प यत्स्वरूपं).

२० श्लोकात् परं दे5 अधिकम्—
9४● न यस्य रुद्रो न च पद्मयोनिर्नेन्द्रो (=२० a.)
२० श्लोकात् परं दे11. अधिकम्—
9३८ योऽसौ कर्त्ता गोप्ता नृसिंहरूपी अपान पूर्वं सितरं महे (मे) च ।
च सर्वयोनिश्च जगन्निवास स वासुदेव कलयावतीर्ण ॥

२१. –b) दे5.10-11 यत्रैव, दे7 संज्ञान- (→यं ज्ञान-). –c) दे4 यत्र स्थिता (→भवन्ति) –d) दे4 दर्शं, दे5 नित्यं, दे-पार्श्वं, दे10.11 या (दे11 वा) दं (→देवम्).

भूतान्यशेषाणि यतो भवन्ति
यथोर्मयस्तोयनिधेरजस्तम् ।
लयं च यस्मिन् प्रलये प्रयान्ति
तं वासुदेवं प्रणतोऽस्म्यचिन्त्यम् ॥ २२
न यस्य रूपं न बलं प्रभावो
न च प्रतापः परमस्य पुंसः ।
विज्ञायते सर्वपितामहाद्यै-
स्तं वासुदेवं प्रणमामि नित्यम् ॥ २३
रूपस्य चक्षुर्ग्रहणे त्वगेषा
स्पर्शग्रहित्री रसना रसस्य ।
घ्राणं च गन्धग्रहणे नियुक्तं
न घ्राणचक्षुः श्रवणादि तस्य ॥ २४
स्वयंप्रकाशः परमार्थतो यः
सर्वेश्वरो वेदितव्यः स युक्त्या ।
शक्यं तमीड्यमनघं च देवं
ग्राह्यं नतोऽहं हरिमीशितारम् ॥ २५
येनैकदंष्ट्रेण समुद्धृतेयं
धराऽचला धारयतीह सर्वम् ।
शेते ग्रसित्वा सकलं जगद् य-
स्तमीड्यमीशं प्रणतोऽस्मि विष्णुम् ॥ २६
अंशावतीर्णेन च येन गर्भे
हृतानि तेजांसि महाऽसुराणाम् ।
नमामि तं देवमनन्तमीश-
मशेषसंसारतरोः कुठारम् ॥ २७
देवो जगद्योनिरयं महात्मा
स षोडशांशेन महाऽसुरेन्द्राः ।
सुरेन्द्रमातुर्जठरं प्रविष्टो
हृतानि वस्तेन बलं वपूंषि ॥ २८
बलिरुवाच ।*
तात कोऽयं हरिर्नाम यतो नो भयमागतम् । वं. २९.

---

२२. दे$_{4}$ a-d. 'तान्य······प्रण-' इति यावत् खण्डितम्. –b) दे$_{7}$ यशोर्मयोस्तेजनिधेरजस्त. –c) दे$_{1}$ ले (ल ?) ये (→लये), दे$_{10}$ प्रलय (→प्रलये). –d) दे$_{7}$ प्रणमामि नित्य (→प्रणतोऽस्म्यचिन्त्य).

२३. दे$_{1-3}$ ते$_{1}$ मुवे. ○. –a) दे$_{11}$ बल- (→बलं). –b) दे$_{4}$ न चापि जाति (→न च प्रताप) –d) दे$_{1.5.10}$ °म्यचिन्त्यं (→°मि नित्य).

२४ –a) मुवे. रूप च (→रूपस्य), दे$_{3.10}$ चक्षु- (→चक्षुर्), दे$_{11}$ त्वच च (→त्वगेषा) –b) दे$_{5.10\,11}$ °ग्रहीता, मुवे. °ग्रहेऽयो (→°ग्रहित्री), दे$_{5.10.11}$ रसाश्च (→रसस्य) –c) दे$_{1-3}$ य त्वक्, दे$_{11}$ चक्षु° (→गन्ध°) –d) दे$_{1-3}$ ते$_{1}$ श्रवणे हि (→श्रवणादि-); दे$_{7}$ श्रोत्र च शब्दग्रहणे नियुक्त, मुवे. त्वग्घ्राणचक्षूंषि न तानि यस्य.

२४ श्लोकात् पर दे$_{7}$ २४d आवृत्तम्—

२५ दे$_{1\,3-7}$ ते$_{1}$ मुवे. a b ⊙. –b) दे$_{3}$ सु युक्त्या (→स युक्त्या). –c) दे$_{1}$ तमाद्यम्, दे$_{4}$ स्वमीड्यम् (→तमीड्यम्); दे$_{2}$ शक्य त सद्यमभय च देव, दे$_{3}$ शक्यतमेवाद्यमनघ च देव, दे$_{4}$ भक्त्याव्ययः सत्त्वसमुत्यया च, दे$_{5}$ काशकारत्वयाद्यमघवद्ववदेवदेव ?, दे$_{11}$ शक्यस्तमीमनघ देवदेव, ते$_{1}$ ह्यनाद्यन्तमनन्तदेव, मुवे ह्यनादिमध्यं त्वनघ च देवं –d) दे$_{1-3.5.10}$ ते$_{1}$ ततोऽह). (→नतोऽह); मुवे. नमाम्यह ते (→ग्राह्य नतोऽह).

दे$_{1}$. २४ श्लोकाद् परमधिकम्.

100* त वासुदेव प्रणतोऽस्म्यचिन्त्य. ( = २२ ).

२४ श्लोकात् पर मुवे. अधिकम्—

101* लोकैकनाथ भवभीतिनाशनम्.

२६. ते$_{1}$ a '···क दष्ट्रेण समुद्धृ-' खडितम्. –a) दे$_{11}$ °द्धृतोऽयं (→धृतेयं). –b) दे$_{2}$ धारा चला, दे$_{10}$ चलाचला (→धराचला-); दे$_{1}$ °ती * (→°तीह); मुवे. विश्व (→सर्वम्). –c) दे$_{2\,3}$ ते$_{1}$ एतद्, दे$_{7}$ स ते (→शेते); दे$_{5.11}$ गृहीत्वा, दे$_{7}$ प्रभित्त्वा (→ग्रसित्वा), दे$_{1}$ एत (जगद्) ग्रसित्वा, मुवे. इद च हर्ता (→शेते ग्रसित्वा), दे$_{7}$ च, ते$_{1}$ यत् (→य) –d) दे$_{7}$ त ** दे$_{5.10\,11}$ तमाद्य°, ते$_{1}$ ततस्त° (→तमीड्य°), दे$_{1}$ नित्य (→विष्णु).

२७. –a) दे$_{1}$ गर्भेण येन (→येन गर्भे). –c) दे$_{1}$ विष्णुमय च, दे$_{3}$ वेत्य सपच, ते$_{1}$ वेदप्रपञ्च. (→देवमनन्त-); दे$_{7}$ नमामि त चेश्वरमीश्वराणा.

२८. –b) दे$_{1\,3-5.7}$ ते$_{1}$ °सुरेन्द्र, दे$_{11}$ °सुरेन्द्री (→°सुरेन्द्रा) –c) दे$_{1-3}$ ते$_{1}$ स एव (→सुरेन्द्र-); दे$_{4.7}$ °जठरे (→°जठर). –d). दे$_{11}$ च पूर्वं (→वपूंषि); दे$_{1.3}$ भूतानि धत्त न (दे$_{1}$ तव) बलानि पुसा, ते$_{1}$ भूतानि ** स बलानि पुसा.

* दे$_{5}$ बलरुवाच

२९. –a) दे$_{11}$ जात (→तात). –d) दे$_{5}$ [-श] धिकः

। २६-२८ सन्ति मे शतशो दैत्या वासुदेवबलाधिकाः ॥ २९
विप्रचित्तिः शिबिः शङ्कुरयःशंकुस्तथैव च ।
हयशिरा अश्वशिरा भङ्गकारो महाहनुः ॥ ३०
प्रतापी प्रघसः शंभुः कुक्कुराक्षश्च दुर्जयः ।
एते चान्ये च मे सन्ति दैतेया दानवास्तथा ॥ ३१
महाबला महावीर्या भूभारधरणक्षमाः ।
एषामेकैकशः कृष्णो न वीर्यार्द्धेन संमित ॥ ३२

लोमहर्षण उवाच ।❀

पौत्रस्यैतद् वचः श्रुत्वा प्रह्लादो दैत्यसत्तमः ।
सक्रोधश्च बलिं प्राह वैकुण्ठाक्षेपवादिनम् ॥ ३३
विनाशमुपयास्यन्ति दैत्या ये चापि दानवा ।
येषां त्वमीदृशो राजा दुर्बुद्धिरविवेकवान् ॥ ३४
देवदेवं महाभागं वासुदेवमजं विभुम् ।
त्वामृते पापसङ्कल्प कोऽन्य एवं वदिष्यति ॥ ३५
य एते भवता प्रोक्ताः समस्ता दैत्यदानवाः ।
सब्रह्मकास्तथा देवाः स्थावरान्ता विभूतयः ॥ ३६
त्वं चाहं च जगच्चेदं साद्रिद्रुमनदीवनम् ।
ससमुद्रद्वीपलोकोऽयं यश्चेदं सचराचरम् ॥ ३७
यस्याभिवाद्यवन्द्यस्य व्यापिनः परमात्मनः ।
एकांशांशकलाजन्म कस्तमेवं प्रवक्ष्यति ॥ ३८
ऋते विनाशाभिमुखं त्वामेकमविवेकिनम् ।
दुर्बुद्धिमजितात्मानं वृद्धानां शासनातिगम् ॥ ३९
शोच्योऽहं यस्य मे गेहे जातस्तव पिताऽधमः ।
यस्य त्वमीदृशः पुत्रो देवदेवावमानकः ॥ ४०
तिष्ठत्वनेकसंसारसंघातौघविनाशिनि ।
कृष्णे भक्तिरहं तावदवेक्ष्यो भवता न किम् ॥ ४१

(→[अ] धिका)

३० –a) दे5 विप्रवि ❀ दे7 विप्रचिति, दे10 विप्राचित्ति (→विप्रचित्ति) मुवे शभुर् (→शकुर) –b) दे5 10 11 अभ कुम्भस्, दे7 भ्रज शकुस, (→अय शकुस) दे5 ये (→च) –c) दे7 महा°, ते1 अश्व° (→हय°) दे7 आश्वशिरा, ते1 भह कारो (→अश्वशिरा) –d) ते1 मह (हा ?) कारो (→भङ्गकारो) दे5 11 ते1 °धनु (→°हनु)

३१ –a) दे5 10 11 वातापि (→प्रतापी) दे2 सघस, दे3 ते1 प्रघस, दे10 प्रभस, दे5 मुवे प्रवश (दे5 स) (→प्रघस) दे5 (कुम्भ) शंभु, मुवे शुम्भ (→शम्भु) –b) दे2 ते1 मुवे कुकुराक्षश्च (ते1 स) दे4 कुकुयक्षश्च, दे5 10 11 कुभराव सु, दे7 कुरु रक्षश्च (→कुक्कुराक्षश्च) –c) दे7 [-अ]पि (→च) –d) दे1 दैत्येया (→दैतेया)

३२ –a) दे7 महाकाया, ते1 महोत्साहा (→महावीर्या –c) दे2 एकमे°, ते1 एषा चै° (→एषामे°) दे4 किंकरा (→°कैकश) –cd) दे5.10 कृष्णेन (→कृष्णो न) –d) दे5 10 11 वीर्यबल (→वीर्यार्द्धेन), दे7 -सम्मत, दे10 -सरमत, दे11 -सस्मित (→समित)

❀दे1 लोमहृपण उ; दे7 लोमहर्षणिरु

३३ –a) दे1 दोत्रस्य, दे7 10 पौत्रस्ये° (→पौत्रस्यै°) –b) दे2 5 7 10. 11 °पुगव (→°सत्तम) –d) दे1 °क्षपि (→°क्षेप)

३४ –b) दे1 दत्याद्या°, दे1 दैत्यास्ते (→दैत्या ये) –c) दे10 तेषा (→येषा)

३५ –a) दे11 देव (→देव); दे7 महादेव (→महाभाग) –c) दे1 3 त्वादृते (→त्वामृते); दे1 4 °सङ्कल्प (→°सङ्कल्प)

३६ –a) ते1 एते च (→य एते); दे11 न (भ ?) व ते (→भवता) –b) दे10 समस्त (→समस्ता) –c) दे1 दानवा (→देवा) दे11 सब्रह्मगस् (→सब्रह्मकास) –d) दे, 10.11 स्व (दे10 च) जातय, दे7 च भूतय (→विभूतय)

३७ –b) दे5 7 10 11 नद (→वन) –c) दे7 लोकाश्च, दे10 11 लोकाश्च (→लोकोऽयम्) –d) दे1 यच्चैंग यच्च नेङ्गति, दे2 यचे (च्चे) ह यच्च नेङ्गति, दे3 यत्चेव यत्र नेङ्गति, दे5 10-11 लीलया यो दधाति हि, दे7 यचेगा यव नेगिव (?) ऽजे1 यच्चेङ्गति यच्च सङ्गति

दे11 ३७ श्लोकात् परमाधकम्

10? ❀ यच्चेग यश्च नेङ्गति तत्सर्वं यो बिभर्ति हि

३८ –a) दे1 3 ते1 यश्चा°, दे11 यस्मा° (→यस्या°) दे1 3 °वाद्य, दे3 °वाद्य (→°वाद्य) दे1 3.5 ते1 °वद्यश्च (→°वन्द्यस्य) –c) दे5.7 एकांशा स (दे5 सा) मुवे एकैकांश° (→एकांशांश°); दे1 °कला (→°कला) –d) दे 10 वक्ष्यति (→प्रवक्ष्यति)

३९ –a) दे1 हृते वि, दे ऋचित (→ऋते वि) दे1 -भिहित, दे1 3 ❀❀ हृत ते1 °भिहृ (→-भिमुख) –d) दे1 प्रभाद्वि, दे11 प्रभोर्व्वा (→वृद्धाना)

४० –a) ते1 हि (→[-अ] ह) दे10 गेह (→गेहे) –b) दे1 5 [ध] धम, दे7 खन (→[-अ] धम) –d) दे1 3.4 देवार° (→°देवाव°) दे5 °मातक (→°मानक)

४१ –a) दे1 तिष्ठत्व° (→तिष्ठत्व°) –b) दे1 ते1 सथा तात° (ते1 घ), दे7 सङ्घ ❀❀, दे5 सथाविते, दे11 ❀ घातोघं, मुवे सङ्घघय° (→संघातौघ°) दे3.7 °नाशिनी (→°नाशिनि)

न मे प्रियतरः कृष्णादपि देहोऽयमात्मनः ।
इति जानात्ययं लोको भवांश्च दितिनन्दन ॥ ४२
जानन्नपि प्रियतरं प्राणेभ्योऽपि हरिं मम ।
निन्दां करोषि तस्य त्वमकुर्वन् गौरवं मम ॥ ४३
विरोचनस्तव गुरुर्गुरुस्तस्याप्यहं बले ।
ममापि सर्वजगतां गुरुर्नारायणो हरिः ॥ ४४
निन्दां करोषि तस्मिंस्त्वं कृष्णे गुरुगुरोर्गुरौ ।
यस्मात् तस्मादिहैव त्वमैश्वर्याद् भ्रंशमेष्यसि ॥ ४५

स देवो जगतां नाथो बले प्रभुर्जनार्दनः ।
न त्वहं प्रत्यवेक्ष्यस्ते भक्तिमानत्र मे गुरुः ॥ ४६
एतावन्मात्रमप्यत्र निन्दता जगतो गुरुम् ।
नापेक्षितस्त्वया यस्मात् तस्माच्छापं ददामि ते ॥ ४७
यथा मे शिरसश्छेदादिदं गुरुतरं बले ।
त्वयोक्तमच्युताक्षेपं राज्यभ्रष्टस्तथा पत ॥ ४८
यथा न कृष्णादपरः परित्राणं भवार्णवे ।
तथाऽचिरेण पश्येयं भवन्तं राज्यविच्युतम् ॥ ४९ मं. २६

इति श्रीवामनपुराणे सरोमाहात्म्ये अष्टमोऽध्याय ॥८॥

---

–c) दे11 कृष्ण- (→कृष्णे) दे1 कृष्णो (ष्णे ?) भक्त (क्तो ?) ष्यह यावत् –d) दे11 °भक्षेशो (→°भक्षेयो)

४२. –a) दे10 °तर (→°तर), दे11 (भ्रष्ट) कृष्णाद् (→कृष्णाद्) –b) दे5 देह, ते1 देहे (→देहो); दे1 3 5 10 11 ते1 महात्मन (→[-अ] यमात्मन) –d) ते1 भवाश्वा (→भवांश्च), दे5-11 °जाधम, ते1 °नन्दन, दे1 °जाधम (→°नन्दन)

४३ दे1 3 7 ते1 ○ दे4 cd ○ –b) दे1 11 हरिमर्म (→हरिं मम)

४४ दे4 ○ –c) दे3 तामपि, दे1 3 10 ते1 नमामि (→ममापि) –d) दे2 3 गुरु (→गुरुर्); दे1 3 ते1 नारायण (→नारायणो); दे1 3 9 हरिम् (→हरिः)

४५ –a) दे4 तस्य (→तस्मिन्), दे7 तु (→त्व) –b) दे2 कृष्णं, ते1 कृष्णो (→कृष्णे) –c) दे1 7 10-11 इहैश्वर्याद् (→इहैव त्व) –d) दे1 7 10 11 भचिराद् (→ऐश्वर्याद्); दे1 3 एष्यति, दे10 एष्यसि,+एष्यसि (→एष्यसि)

४६ –a) ते1 देवो स (→स देवो) दे2 जगतो (→जगता) –b) दे3 बन, दे11 बनेद् (→बले); दे4 5 10-11 मम (→प्रभु) दे3 °नार्दन (→°नार्दन) –c) दे11 नन्वहं (→नत्वहं), दे7 10 °वेक्षन् (→°वेक्ष्यस) –d) दे5-10-11 पितुर्मान्यो, दे7 प्रीतिमान् (→भक्तिमान्); दे1 3 नात्र (→अत्र), दे1 गुरुं (→गुरु)

४७ –a) ते1 °तावान्मात्र (→°तावन्मात्रम्), ते1 °मप्य• (→°मप्यत्र) –b) ते1 निन्दते (→निन्दता) दे11 जगता (→जगतो). –c) दे7 न वेक्षित्त, दे11 न वेक्षितः, ते1 नापेक्षितिस्, मुवे. नापेक्षित (→नापेक्षितम्), दे11 मयो (→त्वया), ते1 तस्मात् (→यस्मात्) –d) ते1 माव (→तस्मात्)

४८ –a) दे10 तया (→यथा) –b) दे1 गुरुं (→गुरु-), ते1 °भ्रत (→°तर), दे7 10 वच, दे11 वच (→बले). –c) दे4 °ता रेपि, दे10 °तारेपि (→°ता रेपं); दे1 3 ते1 यथोक्त (ते1 त्वयोक्त) मन्युना रेपं –d) दे7 राज्याद्, दे11 राज्य (→राज्य) ते1 °भ्रष्ट (→°भ्रष्ट), दे1 3 ते1 °थापि तु (ते1 °तु) (→°था पत)

४९ –c) दे10.11 पश्येम (→पश्येय)

पुष्पिका—दे1 इतिवामनपुराणे सरोमाहात्म्ये वामनप्रादुर्भावे, दे2 3 5 10-11 ते1 इति श्री (दे3-11. [श्री]) वामनपुराणे सरोमाहात्म्ये, दे4 इति वामने सरोमाहात्म्ये, दे7 इतिश्री वामनपुराणे उमाभिवे सरोमाहात्म्ये मुवे इति श्रीवामनपुराणे पुलस्त्यनारदसंवादे सरोमाहात्म्य अध्यायनाम—दे1 बलिशापनाम अध्यायसंख्या—दे2 4.5-○; दे1 10 ।२६।, दे3 नवविंशोऽध्याय, दे- षष्टमोऽध्याय, दे11 ।२८।, ते1 त्रिंशोऽध्याय, मुवे एकोनत्रिंशोऽध्याय ॥२६॥

# ६

लोमहर्षण उवाच ।※

. ३०.१ इति दैत्यपतिः श्रुत्वा वचनं रौद्रमप्रियम् ।
प्रसादयामास गुरुं प्रणिपत्य पुनः पुनः ॥ १

बलिरुवाच ।※

प्रसीद तात मा कोपं कुरु मोहहते मयि ।
बलावलेपमूढेन मयैतद्वाक्यमीरितम् ॥ २
मोहापहतविज्ञानः पापोऽहं दितिजोत्तम ।
यच्छप्तोऽस्मि दुराचारस्तत्साधु भवता कृतम् ॥ ३
राज्यभ्रंशं यशोभ्रंशं प्राप्स्यामीति ततस्त्वहम् ।
विषण्णोऽस्मि यथा तात तथैवाविनये कृते ॥ ४
त्रैलोक्यराज्यमैश्वर्यमन्यद्वा नातिदुर्लभम् ।
संसारे दुर्लभास्तात गुरवो ये भवद्विधाः ॥ ५
प्रसीद तात मा कोपं कर्तुमर्हसि दैत्यप ।
त्वत्कोपपरिदग्धोऽहं परितप्ये दिवानिशम् ॥ ६

प्रह्लाद उवाच ।※

वत्स कोपेन मे मोहो जनितस्तेन ते मया ।
शापो दत्तो विवेकश्च मोहेनापहृतो मम ॥ ७
यदि मोहेन मे ज्ञानं नाक्षिप्तं स्यान्महासुर ।
तत्कथं सर्वगं जानन् हरिं कञ्चिच्छपाम्यहम् ॥ ८
यो यः शापो मया दत्तो भवतोऽसुरपुंगव ।
भाव्यमेतेन नूनं ते तस्मात्त्वं मा विषीद वै ॥ ९
अद्यप्रभृति देवेशे भगवत्यच्युते हरौ ।
भवेथा भक्तिमानीशे स ते त्राता भविष्यति ॥ १०
शापं प्राप्य च मे वीर देवेशः संस्मृतस्त्वया ।

---

६

※ दे$_{7}$ लोमहर्षणिरुवाच, दे$_{11}$ लोमहर्ष उवाच

१. –b) दे$_{5.11}$ गुरोर्वचनम् दे$_{10}$ गुरोर्वचन,+रौद्र, ते$_{1}$ वचन चेदम् (→वचन रौद्रम्).

२. दे$_{1\ 3\ 7}$. २-३ श्लोकौ ○; ते$_{1}$. २१ त ६a यावत् ○ (द्र स). –b) दे$_{5}$ अस्पष्टम् –c) दे$_{4}$ 'बलेन, दे$_{10}$ °वले स° (→°वलेप-)

३. दे$_{1\text{-}3\ 7}$ ते$_{1}$. ○ (द्र. २ पा वि). –a) दे$_{7\ 11}$ विज्ञान (→विज्ञान) –d) दे$_{11}$ °त्तम (→°त्तम)

४ दे$_{1\ 3\ 7}$ ते$_{1}$ ○ (द्र २ पा. वि) –a) दे$_{5}$ अस्पष्टम् –c) दे$_{5}$ मदा (→यथा) –d) दे$_{10}$ विनये, दे$_{3}$ [-अ]विनय (→[-अ]विनये), दे$_{2}$ कृत (→कृते)

५ दे$_{1\ 3.7}$ ते$_{1}$ ○ (द्र २ पा वि) –a) मुवे त्रैलोक्यैश्वर्यमन्यद्वा –b) दे$_{4}$ वन्याति, दे$_{10}$ वाराति°,+वानाति° (→वा °नाति) दे$_{2}$ विमराह न दुर्नभम्

६. ते$_{1}$ a.○ (द्र २ पा वि.) –a) दे$_{5\ 10\text{-}11}$ तत प्रसीद न मे कोपं –c) दे$_{1}$ तिरतोप° (→त्वत्कोप°), दे$_{5\text{-}11}$ तव कोपाहि ना ह (द?)ष्ट (दे$_{5}$ °ष्टाव) –d) दे$_{4\ 5\text{-}11}$ परितप्ये (दे$_{11}$ °प्यो) न शाप्त .

※ दे$_{1.3}$ प्रह्लाद उ; ते$_{1}$ प्रह्लाद.

[ते$_{1}$. ७ a–१६ a यावत् मध्ये मध्ये बहुन खण्डितम्]

७. ते$_{1}$ २ b 'वत्स·········स्तेन' तथा d 'नाप·······.. मम' खण्डितम् . –a) दे$_{1.7}$ कोपि (दे$_{7}$ °पो) न (→कोपेन); दे$_{2}$ मोह, दे$_{4}$ मोदो, दे$_{7}$ जातो (→मोहो) –b) दे$_{3}$ जनि ह, दे$_{10}$ जानत (→जनित) दे$_{7}$ मोहेन जनितस्त्वयि. –c) दे$_{2}$ शापो दत्तो, दे$_{10}$ मुवे दत्तो (मुवे °त्त) शापो (→शापो दत्तो); दे$_{2}$ °कस्य (→°कश्च) –d) दे$_{11}$ मोहो (→मोहे-), दे$_{1}$ °हृतो, दे$_{2}$ °हतो (→°हृतो), दे$_{4}$ मोदे वापहृतो मम.

८ दे$_{7}$ ○; दे$_{2}$ ८b 'स्यान्म' इत्यारम्भ ६d 'स्मात' यावत्, ते$_{1}$ ২bd ○ खण्डितम् (द्र ७ पा वि) –a) दे$_{10}$ मोह° (→मोहे°) –b) दे$_{5.10}$ न क्षिप्तं, दे$_{4}$ नाक्षिप्त (→नाक्षिप्तं) –c) दे$_{11}$ तत्कष्ट (→तत्कथ), दे$_{1\ 3}$ जात (→जानन्) –d) दे$_{4\ 10}$ कचित (→कञ्चित्)

९. दे$_{2}$ चरणमारम्भ 'तस्मात्त्वं, यावत् ○ (द्र ८ पा वि); ते$_{1}$ खण्डितम् (द्र ७ पा वि) –a) दे$_{1\ 3}$ नून, दे$_{7}$ योथ, दे$_{10}$ योय (→यो य) –b) दे$_{5}$ भवता दैत्य°, दे$_{7}$ भवते सुर°, दे$_{10}$ भवतो दैत्य° (→भवतोसुर°), दे$_{7}$ °पुगवे, दे$_{11}$ °पुगव (→°पुंगव) –c) दे$_{3\text{-}10}$ ते नून (→नून ते), दे$_{11}$ भाव्यमेतेन नून ते –d) दे$_{2}$ मा (→मा)

१० ते$_{1}$ a–d (द्र ७ पा वि) –a) दे$_{1\ 3}$ देवेशो, दे$_{7}$ देवेन (→देवेशे), दे$_{1\ 3}$ भगवान्पुरुषते हरिः, दे$_{7}$ पुरुषते भगवान्हरि. –c) मुवे भवेस्त्वं (→भवेथा), दे$_{5}$ °मानीशो, दे$_{7}$ °मा तात (→°मानीशे) –d) दे$_{5}$ सते, दे$_{7}$ सर्वे (→सा ते)

११. दे$_{1\ 3\text{-}7}$ ○; ते$_{1}$ खण्डितम् (द्र. ७ पा. वि.). –a)

तथा तथा वदिष्यामि श्रेयस्त्वं प्राप्स्यसे यथा ॥ ११

लोमहर्षण उवाच ।❀

अदितिर्वरमासाद्य सर्वकामसमृद्धिदम् ।
क्रमेण ह्युदरे देवो वृद्धिं प्राप्तो महायशाः ॥ १२
ततो मासेऽथ दशमे काले प्रसव आगते ।
अजायत स गोविन्दो भगवान् वामनाकृतिः ॥ १३
अवतीर्णे जगन्नाथे तस्मिन् सर्वामरेश्वरे ।
देवाश्च मुमुचुर्दुःखं देवमाताऽदितिस्तथा ॥ १४
ववुर्वाताः सुखस्पर्शा नीरजस्कमभून्नभः ।
धर्मे च सर्वभूताना तदा मतिरजायत ॥ १५
नोद्वेगश्चाप्यभूद् देहे मनुजाना द्विजोत्तमाः ।
तदा हि सर्वभूताना धर्मे मतिरजायत ॥ १६
तं जातमात्रं भगवान् ब्रह्मा लोकपितामहः ।
जातकर्मादिकां कृत्वा क्रियां तुष्टाव च प्रभुम् ॥ १७

ब्रह्मोवाच ।❀

जयाधीश जयाजेय जय विश्वगुरो हरे ।
जन्ममृत्युजरातीत जयानन्त जयाच्युत ॥ १८
जयाजित जयाशेष जयाव्यक्तस्थिते जय ।
परमार्थार्थ सर्वज्ञ ज्ञानज्ञेयार्थनिःसृत ॥ १९
जयाशेष जगत्साक्षिञ्जगत्कर्त्तर्जगद्गुरो ।
जगतोऽजगदन्तेश स्थितौ पालयते जय ॥ २०
जयाखिल जयाशेष जय सर्वहृदिस्थित ।
जयादिमध्यान्तमय सर्वज्ञानमयोत्तम ॥ २१
मुमुक्षुभिरनिर्देश्य नित्यहृष्ट जयेश्वर ।
योगिभिर्मुक्तिकामैस्तु दमादिगुणभूषण ॥ २२
जयातिसूक्ष्म दुर्ज्ञेय जय स्थूल जगन्मय । वें. ३

---

दे$_4$ मद्वीर, दे$_5$ मान्वीर, दे$_{10}$ मा वीर दे$_{11}$ भगवान् (→मे वीर) –d) दे$_{11}$ त (→त्व) दे$_{10}$ प्राप्स्यते (→प्राप्स्यसे)

❀ दे$_2$ लोमहर्षण उ, दे$_7$ लोमहर्षणि

१२ ते$_1$ खण्डितम् (द्र ७ पा वि) –a) दे$_{10}$ अदितेर (→अदितिर्), दे$_{5\ 7\ 11}$ वन° (→वर°) –c) दे$_{5\ 10}$ क्रमेगवा (दे$_{10}$ °व) हरिर्वृद्धि, दे$_7$ स क्रमेणोदरे देवा, दे$_{11}$ क्रमेगंवोदरे वृद्धि –d) दे$_{5\ 10\ 11}$ देव (→वृद्धि)

१३ ते$_1$ bcd खण्डित (द्र ७ पा वि); दे$_{1\ 3\ 7}$ cd ○ –a) दे$_3$ माधे से(?), दे$_{5\ 10}$ मासे च (→मासेऽथ) –b) दे$_2$ प्रस्तुत, दे$_{5\ 11}$ प्रसत्र दे$_7$ प्रश्रव (→प्रसव)

१४ दे$_{1\ 3\ 7}$ ○ ते$_1$ खण्डितम् (द्र ७ पा वि) –b) दे$_5$ सर्वो (→सर्वा)

१५ ते$_1$ acd खण्डित (द्र ७ पा वि) –a) दे$_{11}$ वेतु (→ववु) –b) दे$_4$ 5-10 विर° (→नार°); दे$_{4\ 7}$ सत, (→नभ) –d) दे$_4$ मितिर् (→मतिर्)

१६ दे$_7$ ○; दे$_3$ bd 'ना द्विजो जायत' खण्डितम् –a) दे$_4$ नोद्वग चाप्यभूदेहे, दे$_5$ नोद्वगश्चाप्यभूद्देहे, ते$_1$ *** गावबुर्देहे –b) दे$_{10}$ मानवानां (→मनुजाना) –c) दे$_7$ तदादि (→तदा हि)

१७ –c) दे$_{5\ 7\ 11}$ °ग्कि (→°दिकां) –d) दे$_{5\ 11}$ कृष्ण (→क्रियां); दे$_{7\ 11}$ त (→च) मुवे प्रभु (→प्रभुम्)

❀ दे$_4$ ब्रह्मा उवाच

१८ –a) दे$_{5\ 11}$ जय धन (दे$_5$ °श) दे$_7$ जयदेव (→जयाधीश) दे$_{5\ 7}$ अव्यक्त (→अजेय) दे$_{10}$ जयाजया आद्य ईशव्य जयाव्यक्त –b) दे$_{5\ 7\ 10}$ जयसर्वात्मकाजय, (दे$_7$ °त्मक दे$_{10}$ °त्मज) दे$_{11}$ जयाजेयसु सर्वग –c) दे$_{5\ 7\ 10\ 11}$ जयजन्म° (→जन्ममृत्यु°) –d) दे$_1$ आनन्द (→अनन्त)

१९ –b) दे$_{11}$ व्यक्त° ([-अ]व्यक्त°) दे$_4$ °स्थितो (→°स्थिते) –c) दे$_3$ (जय) पर° (→पर°) –d) दे$_1$ **र्थ, दे$_{11}$ °कृपार्थ° (→°ज्ञेयार्थ°); दे$_{1\ 3\ 10}$ ते$_1$ °निश्चित, दे$_4$ °निश्चय, दे$_5$ °निभृत (?) (→°निःसृत)

२० दे$_5$ इत्यारभ्य २१ a जगत्' ab यावत् ○ –a) दे$_{2\ 7}$ अजेय (→अशेष) –b) दे$_{1\ 11}$ °कर्तृ ते$_1$ °कर्त्ता (→°कर्तर्) –c) दे$_1$ ते$_1$ °दन्ताशु, दे$_3$ दन्तस्तु मुवे °तश्चश (→°दन्तेश) दे$_4$ अंते जगदिन शेते –d) दे$_{1\ 3}$ ते$_1$ पालयस (→पालयते) दे$_4$ स्थितो पालयते ध्यय

२१ दे$_5$ ab ○ –b) दे$_{1\ 10}$ ते$_1$ जगत्सव° (→जय सव°) दे$_{7\ 11}$ स्थित (→स्थित) – ) दे$_{7\ 10\ 11}$ जय (→मय)

२२ –b) दे$_{11}$ °कृष्ण (→°हृष्ट) –c) दे$_{1\ 7}$ मुक्त° (→मुक्ति°) –d) दे$_7$ जादाजाहि° (?), दे$_7$ रणादि°, दे$_{11}$ दाणादि° (→°मादि°) दे$_7$ °पण, दे$_{11}$ °पणम् (→°पण)

२३ –a) दे$_1$ दुर्जेय, दे$_7$ दुर्गेय (→दुर्ज्ञेय) –b) दे$_{1\ 3\ 5}$ ते$_1$ जगस्मूल (→जयस्थूल); दे$_{10}$ °न्मयी (→°न्मय) –c) दे$_{1\ 3\ 7}$ जयस्थूला°, दे$_{10}$ जयमूलाति°, ते$_1$ जगत्स्थूला° (→जय सूक्ष्मा°); दे$_2$

३० २३ जय सूक्ष्मातिसूक्ष्म त्वं जयानिन्द्रिय सेन्द्रिय ॥ २३
जय स्वमायायोगस्थ शेषभोग जयाक्षर ।
जयैकदंष्ट्राप्रान्तेन समुद्धृतवसुंधर ॥ २४
नृकेसरिन् सुरारातिवक्षस्थलविदारण ।
साम्प्रतं जय विश्वात्मन् मायावामन केशव ॥ २५
निजमायापरिच्छिन्न जगद्धातर्जनार्दन ।
जयाचिन्त्य जयानेकस्वरूपैकविध प्रभो ॥ २६
वर्द्धस्व वर्धितानेकविकारप्रकृते हरे ।
त्वय्येषा जगतामीशे संस्थिता धर्मपद्धतिः ॥ २७
न त्वामहं न चेशानो नेन्द्राद्यास्त्रिदशा हरे ।
ज्ञातुमीशान मुनयः सनकाद्या न योगिनः ॥ २८
त्वं मायापटसंवीतो जगत्यत्र जगत्पते ।
कस्त्वां वेत्स्यति सर्वेश त्वत्प्रसादं विना नरः ॥ २९
त्वमेवाराधितो यस्य प्रसादसुमुख प्रभो ।
स एव केवलं देव वेत्ति त्वां नेतरो जनः ॥ ३०
तदीश्वरेश्वरेशान विभो वर्द्धस्व भावन ।
प्रभवायास्य विश्वस्य विश्वात्मन् पृथुलोचन ॥ ३१

लोमहर्षण उवाच ।⁂

एवं स्तुतो हृषीकेशः स तदा वामनाकृतिः ।
प्रहस्य भावगम्भीरमुवाचारूढसंपदम् ॥ ३२
स्तुतोऽहं भवता पूर्वमिन्द्राद्यैः कश्यपेन च ।
मया च वः प्रतिज्ञातमिन्द्रस्य भुवनत्रयम् ॥ ३३
भूयश्चाहं स्तुतोऽदित्या तस्याश्चापि मया श्रुतम् ।
यथा शक्राय दास्यामि त्रैलोक्यं हतकण्टकम् ॥ ३४

---

°सत्व च दे3 5 7 11 °सूक्ष्मस्त्व (→°सूक्ष्म त्व) –d) दे1 3 जयश्रयोप्य (तै1 °ह्य)तोंद्रिय मुवे जय योगीन्नतींद्रिय

२४ –a) दे5 °योगेश, दे11 °योगस्थे (→°योगस्थ) –b) तै1 शेषं (→शेष) दे3 भोगजयो° दे4 भोगेजया°, मुवे भोगद्वया (→ भोग जया°) –c) दे1 10-11 °दंष्ट्रा° (→°दंष्ट्र°) दे7 11 °भोत्तात (→ प्रातेन)

२५ –a) दे1 3 10 °केसरि दे7 केशरि (→ केसरिन्) दे5 जरा° दे7 11 जया° (→सुरा°) –b) तै1 °वक्ष स्थल° (→°वक्षस्थल°) दे2 °रणा (→°रण) –c) दे5 विश्वात्मा (→विश्वात्मन्) –d) दे 11 जय (→माया)

२६ a) दे 10-11 स्वमायापटल छन्न दे7 निजमाया पटछन्न –b) दे7 जगद्धाम (→जगद्धातर) –c) दे9 °शेष° (→°नेक°) –d) दे1 2 निधि दे5 विधे दे9 °विधि तै1 विभो (→ विध)

२७ दे5 २७ a–२८ a –नेक शानो ○ (द्र स) –a) दे1 बर्द्धिकानेका दे5 वर्धितो *7 (→वर्द्धितानेक) –b) दे10 11 विस्तर दे4 प्रकार (→ विकार) दे1 4 विकृते दे3 11 प्रकृतो (→प्रकृते) –c) दे1 3 °व-पा दे त्वय्येपा (→त्वय्येषा); दे 3 जगती नेष (दे1 °न) दे3 जगती चैषा दे 0 जगतीने तु, दे11 जगतामोश(→जगतामोशे) –d) दे तै1 °पद्धति (→°पद्धति)

२८ दे5 a ○ (द्र २७ पा वि) –b) दे1 इन्द्राद्य दे7 इन्द्राय (→इन्द्राद्या) तै1 सहन्ता (→त्रिदशा) दे 10 तै1 ऋषय दे 1 हृदय (→मुनय) दे1 ज्ञानमीशे* मुनय दे3 ज्ञातमोचेन मुनय –d) दे1 3 तै1 °काद्यै (→°काद्या) दे1 3 तै1 न योगिभि दे7 न गोचर. (→न योगिन)

२९ –a) दे4 त्वा दे7 त (→त्वं) दे9 °षट°, दे5 °पुट (→°पट°) दे3 °सवीजो दे4,7 °सवीते (→°संवीतो) –b) दे11 जगदामत्र (→जगत्यत्र) दे1 °त्पति (→°त्पते) –c) दे1 कस्त्वा (→कस्त्वां) दे7 सवश (→सर्वेश)

३० –a) दे7 यस्तु मुवे येन (→यस्य) –b) दे प्रसाद (प्रसाद) दे1 3 5 10 तै1 °सुमुख दे9 °सुमुखं (→°सुमुख) –c) दे 10 11 देव (→देव) –d) दे1 3 वेत्सि (→वेत्ति) दे3 नेतरे (→नेतरो)

३१ –a) दे1 नदीश्वरे° दे9 5 10 नदीश्वरे° दे7 स्वदीश्वरे° (→तदीश्वरे°) –b) दे10 वामन +भावन दे5 वामन (→भावन); दे1 3 विभो तद्वदत्स्वभावत दे7 विभो वद्धस्येश्वर वामन –c) दे7 प्रभावश्चास्य दे10 प्रभवयस्य (→प्रभवायास्य) –d) दे4 विश्वात्मन् प्रभुलोचन दे7 विश्वात्मा प्रतिलोचन दे10-11 विश्वस्यात्मन् त्रिलोचन

⁂ दे लोमहर्षण उ दे7 लोमहर्षणि

३२ –a) दे 11 °केश (→°केशः) –d) दे 10-11 उवाचाप्यरमुद्भवम्, दे7 उवाचा जसमुद्भवम्

३३ –a) दे11 सुतो (→स्तुतो) दे11 भवतां (→भवता) –c) दे1 3 7 तै1 वच दे 10-11 चास्य (→च वः)

३४ –a) दे भूतश्चाहं दे11 भूयस्त्वाहं (→भूयश्चाहं) दे1 3 तै1 ततो दे11 सुतो (→स्तुतो) दे3 4 दत्या दे -दित्यो (→-दित्या) –b) दे1 तस्यापि च (→तस्याश्चापि) –c) दे7 यथा° (य) (→यथा°)

सोऽहं तथा करिष्यामि यथेन्द्रो जगतः पति'।
भविष्यति सहस्राक्ष. सत्यमेतद् ब्रवीमि व. ॥ ३५
ततः कृष्णाजिनं ब्रह्मा हृषीकेशाय दत्तवान्।
यज्ञोपवीतं भगवान् ददौ तस्य बृहस्पति. ॥ ३६
आषाढमददाद् दण्ड मरीचिर्ब्रह्मण. सुतः।
कमण्डलु वसिष्ठश्च कौश चीरमथाङ्गिरा.।
आसनं चैव पुलह. पुलस्त्य. पीतवाससी ॥ ३७
उपतस्थुश्च तं वेदा. प्रणवस्वरभूषणा.।
शास्त्राण्यशेषाणि तथा सांख्ययोगोक्तयश्च याः ॥ ३८
स वामनो जटी दण्डी छत्री धृतकमण्डलुः।
सर्वदेवमयो देवो बलेरध्वरमभ्यगात् ॥ ३९

यत्र यत्र पदं विप्रा भूभागे वामनो ददौ।
ददाति भूमिर्विवरं तत्र तत्राभिपीडिता ॥ ४०
स वामनो जडगतिर्मृदु गच्छन् सपर्वताम्।
साब्धिद्वीपवतीं सर्वां चालयामास मेदिनीम् ॥ ४१
बृहस्पतिस्तु शनकैर्मार्गं दर्शयते शुभम्।
तथा क्रीडाविनोदार्थमतिजाड्यगतोऽभवत् ॥ ४२
तत. शेषो महानागो नि.सृत्यासौ रसातलात्।
साहाय्यं कल्पयामास देवदेवस्य चक्रिणः ॥ ४३
तदद्यापि च विख्यातमहेर्विलमनुत्तमम्।
तस्य संदर्शनादेव नागेभ्यो न भयं भवेत् ॥ ४४ वें ३

इति श्रीवामनपुराणे सरोमाहात्म्ये नवमोऽध्याय ॥९॥

---

३५ –b) दे$_{1}$ जग पति (→जगत पति) –d) दे$_{1\,3}$ ते$_{1}$ घ, दे$_{7}$ ते (→व)

३६ –a) दे$_{11}$ तथा (→तत) ते$_{1}$ ब्रह्म (→ब्रह्मा) –b) दे$_{4}$ ऋपी° (→हृपी°) ते$_{1}$ हृषीकेश *** वान् –d) दे$_{7}$ तस्मै (→तस्य)

३७ ते$_{1}$ b मरीचिब्रह्मण तथा ef पुल ससी खण्डितम् अत परमपि अध्यायान्त यावत् बहुत्र खडितम् –a) दे$_{1}$ अद * दृण्ड, दे$_{7}$ अन्ददृण्ड (→अददाद्दण्ड) –b) दे$_{7}$ ब्रह्मणस्वक (→ब्रह्मण सुत) – ) दे$_{1}$ ब्रह्म च (→वसिष्ठश्च) –d) दे$_{1\,3}$ कुशाश्चीर (दे$_{3}$ °रम्), दे$_{4}$ क दयची (दे$_{4}$ वी) रं ते$_{1}$ कुशचीर (→क श चीर) ते$_{1}$ अङ्गिर (→अ ङ्गरा) – ) दे$_{1}$ असन (→आसन) दे$_{7}$ पुलह, (→पुलह) –f) दे$_{7\,10\,11}$ सित° (→पीत°)

३८ ते$_{1}$ a c d खडितम् (द्र ३७ पा वि) –b) दे$_{1}$ ते (→त); दे$_{1}$ वेश दे$_{11}$ देवा (→वेदा) –b) दे$_{1}$ प्रणवश्चर°, दे$_{5\,10}$ प्रणवोच्चार° (→प्रणवस्वर°) दे$_{1}$ ते$_{1}$ °भूपण (→°भूपणा) –d) दे$_{7}$ °यागस (→°योगोक्तय) दे$_{7}$ तथा (→च या)

३९ ते$_{1}$ a-d खडितम् (द्र ३७ पा वि) – ) मुव °वेद° (→°देव°) दे$_{1}$ सवमयो देवदेवो

४० दे$_{1}$ cd ○; ते$_{1}$ bc खडितम् (द्र ३७ पा वि) –c) दे$_{4}$ भूमि (→भूमिर्) –d) दे$_{7\,11}$ [अ]ति, दे$_{7}$ ते$_{1}$ [अ]पि (→[अ]भि)

४१ दे$_{1}$ ○; ते$_{1}$ abc खडित (द्र ३७ पा वि) –a) दे$_{7}$ (व) स (→स) b) दे$_{7}$ गच्छत् (→गच्छन्) दे$_{5}$ °पवतान् (→°पवताम्) –c) दे$_{2\,4\,7}$ साद्रि° (→साब्धि°) दे$_{7\,4}$ °वना (→°वतो)

४२ ते$_{1}$ a c खडितम् (द्र ३७ पा वि) a) दे$_{11}$ सानकै (→शनकै) –b) दे$_{4}$ शुभा (→शुभम्) –c) दे$_{1\,3}$ तस्य (→तथा) –c) दे$_{10}$ °विनोन्गार्यै (→°विनोगाय) –d) दे$_{1}$ मतिजाड्यत(ग) तो भवत दे$_{2\,3}$ मतिजान्यम (दे$_{3}$ त) तो भवत् दे$_{4}$ अतिजाचगतो भवत दे$_{7\,10\,11}$ म (दे$_{10}$ ग) ति (दे$_{5}$ भि) जल गतिभवेत दे$_{7}$ मतिजाड्यगतिवभो मुवे गतिजगति साभवत्

४३ दे$_{10}$ ते$_{1}$ ○ खडितम् (द्र ३७ पा वि) दे$_{2\,3}$ cd○ –a) दे$_{4}$ °भागो दे$_{11}$ °नामो (→°नागो) –b) दे$_{7\,11}$ निसृत्या° (→नि सृत्या°) दे$_{7\,7}$ °तल (→°तलात्)

४४ दे$_{1}$ ○; ते$_{1}$ cd खडितम् (द्र ३७ पा वि) –a) दे $_{10\,11}$ ते$_{1}$ तत्स्या° (→तद्द्या°) दे विख्यात (→विख्यात) –b) दे$_{5\,10\,11}$ महाविपुलमुत्तमम्, दे$_{4}$ महावनमनुत्तम –d) दे$_{7}$ तस्य गन्धवाश नदीवनान् श्रावा पुर शभवेत् (?)

पुष्पिका दे$_{1}$ इति वामनपुराणे सरोमाहात्म्ये वामन प्रादुर्भावे दे $_{3\,5\,9\,10}$ इतिश्री (दे$_{3}$ [श्री]) वामन पुराणे स (दे सा ते$_{1}$ सु) रो माहात्म्ये दे$_{4}$ इति वामन सरामाहात्म्ये मुवे इति श्रीवामनपुराणे पुलस्त्यनारदसंवादे सरामाहात्म्ये अध्यायनाम दे$_{1\,5\,10}$ ते$_{1}$ ○ दे वामनप्रादुर्भावो नाम, दे$_{11}$ सरामाहात्म्य अध्यायसंख्या –दे $_{4\,5\,11}$ ते$_{1}$ ○, दे$_{1\,10}$ ॥३०॥ दे$_{3}$ त्रिंशत्तमाध्याय, दे$_{7}$ नवमाध्याय, मुवे त्रिंशाध्यायः.

# १०

लोमहर्षण उवाच ।❀

३१ १ सपर्वतवनामुर्वी दृष्ट्वा संक्षुभितां बलिः ।
पप्रच्छोशनसं शुक्रं प्रणिपत्य कृताञ्जलिः ॥ १
आचार्य क्षोभमायाति साब्धिभूमिधरा मही ।
कस्माच्च नासुरान् भागान् प्रतिगृह्णन्ति वह्नयः ॥ २
इति पृष्टोऽथ बलिना काव्यो वेदविदां वरः ।
उवाच दैत्याधिपतिं चिरं ध्यात्वा महामतिः ॥ ३
अवतीर्णो जगद्योनिः कश्यपस्य गृहे हरिः ।
वामनेनेह रूपेण परमात्मा सनातनः ॥ ४
स नूनं यज्ञमायाति तव दानवपुंगव ।
तत्पादन्यासविक्षोभादियं प्रचलिता मही ॥ ५
कम्पन्ते गिरयश्चेमे क्षुभिता मकरालयाः ।
नेयं भूतपतिं भूमिः समर्था वोढुमीश्वरम् ॥ ६

सदेवासुरगन्धर्वा यक्षराक्षसपन्नगा ।
अनेनैव धृता भूमिरापोऽग्निः पवनो नभः ।
धारयत्यखिलान् देवान् मनुष्यांश्च महासुरान् ॥ ७
इयमस्य जगद्धातुर्माया कृष्णस्य गह्वरी ।
धार्यधारकभावेन यया संपीडितं जगत् ॥ ८
तत्संनिधानादसुरा न भागार्हाः सुरद्विषः ।
भुञ्जते नासुरान् भागानपि तेन त्रयोऽग्नयः ॥ ९
शुक्रस्य वचनं श्रुत्वा हृष्टरोमाऽब्रवीद् बलिः ।
धन्योऽहं कृतपुण्यश्च यन्मे यज्ञपतिः स्वयम् ।
यज्ञमभ्यागतो ब्रह्मन् मत्तः कोऽन्योऽधिकः पुमान् ॥ १०
यं योगिनः सदोद्युक्ताः परमात्मानमव्ययम् ।
द्रष्टुमिच्छन्ति देवोऽसौ ममाध्वरमुपेष्यति ।
यन्मयाचार्य कर्त्तव्यं तन्ममादेष्टुमर्हसि ॥ ११

---

१०

[अस्मिन् अध्याये ते1 मध्ये बहुत्र खडितम्]

❀ ते1 खडित, दे2 लोमहर्पण उ दे7 लोमहर्पणि

१ ते1 a 'सव' cd खडित –d) दे11 सदु खितो (→संक्षुभिता) –c) दे5 11 पप्रच्छो° (→प्रप्रच्छो°)

२ दे7 ○ ते1 a आचार्य तया cd खडित –b) दे5 10 11 °भूभृद्वना (→°भूमिधरा) –d) दे7 वाह्य (→वह्नय)

३ दे7 ab ○ ते1 c 'दे ति खडितम् –b) दे4 कोन्यो (→काव्यो)

४ ते1 c वा ह खडितम् –a) दे5 °द्योनि (→°द्योनि) –c) दे4 इह वामन (→वामनेनेह)

५ –a) दे7 सभूतो (→स नून); दे7 °मा (तावं) याति (→°मायाति) –b) दे3 °पुगव (→°पुङ्गव) –c) ते1 * त् (→तत्) दे4 °व्यास° (→°न्यास°) दे7 10-11 यस्य पान (दे11 °द) प्रति (दे11 °वि) क्षपात्

६ –a) दे7 सर्वं, मुवे चैव (→चेमे) दे1 कम्पन्तेगिरि मय* –b) दे5 10 11 संक्षुब्धा (→क्षुभिता) दे5 °लया (→°लया) –c) दे5 नून, दे10-11 ने (दे11 नैं)न (→नेय)

७ –a) दे1 3 5 10 °गन्धर्व (→°गन्धर्वा) –c) ते1 °नैवि (→°नैव) दे5 पुसि (→भूमिर) –d) दे1 3 [–अ]नल (→नभ) –e) दे1 3 ते1 °ल देवो (दे1 वा) (→°लान् देवान्) –f) दे1 3 ते1 °सुर, दे4 °बल (→°सुरान्)

८ –b) दे5 10-11 दुरत्यजा (→गह्वरी) –d) दे1 3 5 10 11 ते1 यया (→यया) दे7 संपीडन (→संपीडितं)

९ –a) मुवे अधुना (→असुरा) –b) दे5 भागार्हा नासुरोत्तमा, दे10 भागाहारा सुरोत्तमा, दे11 भागहानि सुरोत्तमा, मुवे भागहारा सुरोत्तमा –c) दे11 भुज्यते (→भुञ्जते), दे7 भोगान् (→भागान्) –d) मुवे वै ते (→तेन) दे1 4 ते1 न हुत च तथाग्नय

१० –a) दे7 तस्या (→श्रुत्वा) –b) दे7 हृप° (→हृष्ट°) –c) दे1 °पुन्यश्च (→°पुण्यश्च) –d) दे1 5 10-11 यतो (→यन्मे) दे11 जगत्पति (→यज्ञपति) ते1 य*****य (→यज्ञपति स्वयं) –e) दे3 °भत्या° (→°भ्म्या°) –f) दे1 [अ]न्य, दे7 3 मान्य दे4 धन्य (→मत्त) ते1 न कोन्योऽप्यधिक पुमान्

११ –a) दे1 5 7 योगिन (→योगिन) दे1 3 11 सदायुक्ता (→सदोद्युक्ता) ते1 °गि ***द्यु° (→°गिन सदोद्यु°) –c) दे1 4 ते1 देवेशो (→देवोसौ) –d) दे2 ममाध्वरम्, दे4 ममध्वरम्, ते1 मामध्वरम् (→ममाध्वरम्) दे1 °अपोष्यति, दे7 11 ते1 उपैष्यति, दे10 °उपेक्ष्यति (→उपेष्यति) –e) ते1 तन्म° (→यन्म°) –f) दे2 ते1 मयाख्यातु°, दे3 4 ममाख्यातुम् (→ममादेष्टुम्)

शुक्र उवाच ।※

यज्ञभागभुजो देवा वेदप्रामाण्यतोऽसुर ।
त्वया तु दानवा दैत्य यज्ञभागभुजः कृताः ॥ १२
अयं च देवः सत्त्वस्थः करोति क्षितिपालनम् ।
विसृष्टं च तथाऽयं च स्वयमत्ति प्रजाः प्रभुः ॥ १३
भवांस्तु वन्दी भविता नूनं विष्णुः स्थितौ स्थितः ।
विदित्वैवं महाभाग कुरु यत् ते मनोगतम् ॥ १४
त्वयाऽस्य दैत्याधिपते स्वल्पकेऽपि हि वस्तुनि ।
प्रतिज्ञा नैव वोढव्या वाच्यं साम तथाऽफलम् ॥ १५
कृतकृत्यस्य देवस्य देवार्थं चैव कुर्वतः ।
अलं दद्यां धनं देवे त्वेतद्वाच्यं तु याचतः ।
कृष्णस्य देवभृत्यर्थं प्रवृत्तस्य महासुर ॥ १६

बलिरुवाच ।※

ब्रह्मन् कथमहं ब्रूयामन्येनापि हि याचितः ।
नास्तीति किमु देवस्य संसाराघापहारिणः ॥ १७
व्रतोपवासैर्विविधैर्यः प्रभुर्गृह्यते हरिः ।
स मे वक्ष्यति देहीति गोविन्दः किमतोऽधिकम् ॥ १८
यदर्थं सुमहारम्भा दमशौचगुणान्वितैः ।
यज्ञाः क्रियन्ते यज्ञेशः स मे देहीति वक्ष्यति ॥ १९
तत्साधु सुकृतं कर्म तपः सुचरितं च नः ।
यन्मां देहीति विश्वेशः स्वयमेव वदिष्यति ॥ २०
नास्तीत्यहं गुरो वक्ष्ये तमभ्यागतमीश्वरम् । वँ.

---

※ दे$_{2}$ 5 शुक्र उ, दे$_{7}$ शुक्र.

१२. –a) दे$_{11}$ °भुजौ (→°भुजो) –b) दे$_{1}$ देवप्र° (→वेदप्रा°), दे$_{2}$ 11 सुरा, दे$_{5}$ ते$_{1}$ सुर (→सुर) –c) दे$_{7}$ 11 दैत्या (→दैत्य)

१३ दे$_{7}$ O. –a) दे$_{4}$ देव (→देव) –c) दे$_{2}$ ते$_{1}$ विमृष्ट (→विसृष्ट) दे$_{1}$ 3 तया पश्च, दे$_{4}$ 5 10 11 तथैवान्ते (→तथाय च) –d) दे$_{1}$ स्व ● मत्ति, दे$_{3}$ स्वममत्ति, दे$_{3}$ स्वया मत्ति, दे$_{1}$ त्वयमत्ति (→स्वयमत्ति), दे$_{4}$ गुभा (→प्रभु)

१४ –a) दे$_{5}$ 10 त्वया तु वञ्चिता देवा (दे$_{5}$ [देवा]), दे$_{7}$-11 त्वयानुबद्धो भविता –b) दे$_{3}$ विष्णु, दे$_{4}$ 7 11 विष्णु (→विष्णु), दे$_{7}$ स्थिति (→स्थित) –c) दे$_{5}$ विदित्वैतन्, दे$_{7}$ विदित्वैवं, ते$_{1}$ विन्त्वैव (→विदित्वैवं); दे$_{5}$ 10 महाराज, ते$_{1}$ महामागा (→महाभाग) –d) दे$_{7}$ यत्न (→यत्ते)

१५ –a) दे$_{2}$ त्वया तु, दे$_{5}$ 11 त्वया च, दे 10 गत्वा च (→त्वयास्य); ते$_{1}$ °पति (→°पते) दे$_{3}$ त्वया दैत्याधिपतये –b) दे$_{7}$ °कोपि (→°केऽपि), –d) दे$_{1}$ वाच, दे$_{5}$ वाद्य (→वाच्य) दे$_{7}$ वाक्य तया, दे$_{11}$ सोमत्तया (→साम तथा)

१६ –a) दे$_{1}$ देवस्य O. –b) दे$_{10}$ चापि (→चैव) –c) दे$_{1}$ 5.10 11 नाल दातुमहं देव, दे$_{7}$ नाल दातु धनं(न?)देवे (वे?), ते$_{1}$ नाल दद्या धन देवो –d) दे 10 त्वया वाच्य, दे$_{5}$ तद्वाच्य, ते$_{1}$ त्वतद्वाच्य (→त्वेतद्वाच्य) –e) दे$_{7}$ भृत्यर्थं (→भृत्यर्थं) –f) दे$_{7}$ °सुर, ते$_{1}$ °सुरः (→°सुर)

१७ –b) दे$_{5}$ याचित, दे$_{11}$ याचत (→याचित) –c) ते$_{1}$ 'ना . कि' खण्डितम् दे$_{5}$ 10 देवेन, दे$_{7}$ देवेन, दे$_{11}$ देवेशे, मुवे देवेन (→देवस्य) –d) दे$_{1}$ संसारघ्याघहारिण, दे$_{5}$ स्वमारोधौघहारिणम्, दे$_{7}$ 10 11 ससाराघौघहारिणम् (दे$_{7}$ °णा, दे$_{11}$ °णो)

१८ –b) दे$_{1}$ ते$_{1}$ पुनर्ग्राह्यते, दे$_{4}$ 7 प्रभुर्ग्राह्यते (→प्रभुर्गृह्यते), ते$_{1}$ 'हरि' खण्डितम् –c) दे$_{5}$ 10 सचेद°, दे$_{11}$ सवैव°, ते$_{1}$ खण्डितम् (→समेव°) –d) दे$_{1}$ °धिक (→°धिकम्)

१९ ते$_{1}$ b, d खण्डितम् –a) दे$_{1}$ यदर्थं (→यदर्थं), ते$_{1}$ °रम्भ, (→°रम्भा), दे$_{5}$ 10 11 यत्प्रीतिकरणार्थंव, दे$_{7}$ यदर्थं राजसूयाद्या –b) दे$_{5}$-10-11 शुभि शौच, दे$_{7}$ सदृशौ च (→दम शौच) –c) दे$_{11}$ क्रयते (→क्रियन्ते); दे$_{4}$ 5 11 देवेश, दे$_{10}$ देवस्य, मुवे देवश्च (→यज्ञश) –d) दे$_{5}$ 10.11 मा (→मे)

२० ते$_{1}$ b 'तत् ·· ···तप' तथा cd 'मीश· ······ हरि. खण्डितम् –a) दे$_{1}$ तत्सा ●, दे$_{5}$ तशा तु (→तत्साधु), दे$_{11}$ स्व° (→सु°) –b) ते$_{1}$ ● या (→च न) –c) दे$_{5}$-10 11 यन्मया दत्तमीशश्च (दे$_{11}$ °श स) –d) दे$_{5}$ 10-11 स्वयमादा (दे$_{11}$ °धा) स्यते (दे$_{11}$ से) हरि.

२१ दे$_{10}$-11 cd O, ते$_{1}$, ab 'नास्ती ·· तम-', c 'त्याम ष्यामि' खण्डितम् . –a) दे$_{1}$ 4 गुरु (→गुरो) –b) दे$_{1}$ 5-10-11 स्वयमा° (→तमभ्या°) –c) मुवे °ष्यामि (→°क्ष्येऽहं) –d) दे$_{2}$ तनुं नास्ति जने क्वचित् , ते$_{1}$ न नास्तीति न मे क्वचित्

२१ श्लोकात्परं दे$_{5}$-10.11 मुवे अधिकम्—

102* तदेतद्वाञ्छितं प्राप्तं नूनमस्मद्धितं फलम् ।
यज्ञेऽस्मिन्यदि यज्ञेशो याचते मां जनार्दनः ॥
निजमूर्धानमप्यस्मै दास्याम्येवाविचारितम् ।
स मे वक्ष्यति देहीति गोविन्दः किमतोऽधिकम् ॥ ४

१ २२ प्राणत्याग करिष्येऽहं न तु नास्ति जने क्वचित् ॥ २१
नास्तीति यन्मया नोक्तमन्येषामपि याचताम् ।
वक्ष्यामि कथमायाते तदद्य चामरेऽच्युते ॥ २२
श्लाघ्य एव हि वीराणां दानाचापत्समागमः ।
न बाधाकारि यद्दानं तदङ्ग बलवत् स्मृतम् ॥ २३
मद्राज्ये नासुखी कश्चिन्न दरिद्रो न चातुरः ।
न दुःखितो न चोद्विग्नो न शमादिविवर्जितः ॥ २४
हृष्टस्तुष्टः सुगन्धी च तृप्तः सर्वसुखान्वितः ।
जनः सर्वो महाभाग स्थितास्ह सदा सुखी ॥ २५
एतद्विशिष्टमत्राहं दानबीजफलं लभे ।
विदितं मुनिशार्दूल मयैतत् त्वन्मुखाच्छ्रुतम् ॥ २६
मत्प्रसादपरो नूनं यज्ञेनाराधितो हरिः ।
मम दानमवाप्यासौ पुष्णाति यदि देवताः ॥ २७
एतद्बीजवरे दानबीजं पतति चेद् गुरौ ।
जनार्दने महापात्रे किं न प्राप्तं ततो मया ॥ २८
विशिष्टं मम तद्दानं परितुष्टाश्च देवताः ।
उपभोगाच्छतगुणं दानं सुखकरं स्मृतम् ॥ २९
मत्प्रसादपरो नूनं यज्ञेनाराधितो हरिः ।
तेनाभ्येति न संदेहो दर्शनादुपकारकृत् ॥ ३०

---

[च्यते –1) दे$_{5}$, (→वाञ्छित) मुवे मून चात्र न संशय (→मूनमस्मद्धित फलम्) –3) दे$_{5\ 11}$ °मभ्यद्य (→°मभ्यस्मै) दे$_{5}$ 10.11 तद्दास्याम्य° (→दास्याम्येवा°) ]

२२. ते$_{1}$ a 'नास्तीतिय' तथा b-d 'च ता च्युते' खण्डितम् –c) दे$_{5\ 11}$ °भायेति (→°मायाते) –d) दे$_{4}$ तदद्यावसमच्युते, दे$_{5}$ तदस्यावचसनेच्युते, दे$_{7}$ तदस्यानृतमुच्यने दे$_{10}$ तमेवाम्यागतेच्युते दे$_{11}$ तमेमभ्यागतेच्युतो ?

२३ ते$_{1}$ b-d 'श्वाप दग खण्डितम् –a) दे$_{11}$ एव (→एव) दे$_{5\ 10\ 11}$ धीराणा (→वीराणा) –b) दे$_{4}$ दानार्यार्थि दे$_{5}$ दानार्थं*, दे$_{7}$ दानादानात्, दे$_{11}$ दानयाव (→दानाच्चापत्स) दे$_{5}$ °गत , दे$_{7}$ °गमा, दे$_{11}$ °गता (→°गम) –c) दे$_{5\ 11}$ न चैवार्थं सम दान –d) दे$_{1\ 3}$ तदग ब्रह्म° (→तदङ्ग बल°) दे$_{5\ 11}$ तदागमभवत् कथम्, दे$_{7}$ तदन्ते फलवत्कथ, ते$_{1}$ **ग ब्रह्मणस्मृतम्

२४ ते$_{1}$ b-d 'न दरि °ग्नो नश खण्डितम् –a) दे$_{1}$ मद्राज्यं ना° दे$_{5}$ न मे राज्ये दे$_{11}$ न चेद्राज्ये (→मद्राज्ये ना°) b) दे$_{1}$ चासुर (→चातुर) –c) दे$_{5}$ 10.11 नाभूपितो दे$_{7}$ न दूषितो (→न दु खितो) –d) दे$_{5\text{-}7\ 10\ 11}$ प्रसाद° (→शमादि°)

२५ ते$_{1}$ a-c 'धी च महा खण्डितम् –a) दे$_{7}$ पुष्ट (→तुष्ट) –b) दे$_{1\ 3}$ दृप्त दे$_{4}$ दृष्ट (→तृप्त) दे$_{5\text{-}10}$ °गुणान्वित (→°सुखान्वित) –c) दे$_{1\ 4}$ यत, दे$_{5}$ जना (←जन) दे$_{10}$ °भोग (→°भाग)

२६ ते$_{1}$ a-c एत° विदित d मुखाच्छ्रुतम् खण्डितम् –a) दे$_{1\ 3}$ विशिष्टमानाह, , दे$_{5}$ विशिष्टयावास दे$_{7}$ विशिष्टपात्रोपि, दे$_{10}$ विशिष्टमत्रास, दे$_{11}$ विशिष्ट पात्रास (→विशिष्टमत्राह) –b) दे$_{2}$ °फल नसंप्रे, दे$_{4}$ °भह लभे, दे$_{5\ 10\ 11}$ °फल मया दे$_{7}$ °फल महत् (→°फल लभे) –c) दे$_{5}$ °शार्दूल (→°शार्दूल) –d) दे$_{5}$ 10.11 यथैतत् (→मयैतत्) दे$_{4}$ मुखात् च्युत (→मुखाच्छ्रुतम्)

२७ दे$_{4\ 5\ 10\ 11}$ ते$_{1}$ a-c खण्डितम् –a) दे$_{1\ 3}$ तद् (→मत्) दे$_{1\ 3}$ नित्य (→नून) –b) दे$_{7}$ यत्नना° (→यज्ञेना°) दे$_{1}$ यज्ञैर्नाराधिति मुनि –c) दे$_{3}$ °प्येप (→°प्यासौ) दे$_{1}$ ममन्गममकार्पप दे$_{2}$ तेनाप्यत्र न संदेहो –d) दे$_{1\ 3}$ यदि पुष्णाति देवता, दे$_{2}$ दर्शनादुपकारत्

२८ दे$_{1\ 3}$ ते$_{1}$ ○ –a) मुवे °वर (→°वरे) दे$_{11}$दान (→दान) –b) दे$_{10}$ पचति, दे$_{11}$ वपति (→पतति) दे$_{5\ 10}$ चेद् गुरो (→चेद्गुरौ)

२९ दे$_{2\ 4}$ ○ दे$_{1\ 3\ 7}$ ab ○ ते$_{1}$ a-d विशि सुख खण्डितम् –a) दे$_{10}$ ते दान दे$_{11}$ त दान (→तद्दानं) –b) दे$_{10}$ °तुष्टासि, दे$_{11}$ °पुष्णाति (→°तुष्टाश्च) –c) दे$_{1}$ °गुणा, दे$_{3}$ °गुणात (→°गुण) –d) दे$_{5}$ °तर मद्गत्, दे$_{10\ 11}$ °तर स्मृतम्, ते$_{1}$ °कर स्त्वहम् (→°कर स्मृतम्) दे$_{1\ 3}$ दाना श्लाघ्यतरस्त्वहम् दे$_{7}$ दान श्लाघ्यतर तत

दे$_{10}$ °ab, cd मध्ये अधिकम्–

10७* तामप्रसादपरो नित्य यन्नाराधितो हरि ।
मम दानमवाप्येष यदि पुष्णाति देवता ॥ (= २७)

३० दे$_{2}$ ○ ते$_{1}$ a-d 'त्यपज्ञ° शना' खण्डितम् –a) दे$_{1\ 3\ 4}$ तत् (→मत्) दे$_{1\ 3\ 4}$ नित्य, दे$_{11}$ सूत, ते$_{1}$ नि* (→नून) –b) दे$_{11}$ येते° (→यज्ञ°) –c) दे$_{1\ 3}$ तेनाप्यत्र, दे$_{11}$ तेनान्येन (→तेनाभ्येति) –d) दे$_{11}$ दशनो दूपकातकृत्

दे$_{4}$ ab, cd मध्ये अधिक—

104* मम दानमवाप्येष यदि पुष्णाति देवता । (= २७ cd)
उपभोगा च्छतगुणाद्दानाच्छाघ्यतरस्तुह ॥ (= २६ cd)
तत्प्रसादपरो नित्य यज्ञेनाराधितो हरि ।
तेनाभ्येति न संदेहो दर्शनादुपकारकृत् ॥ ४ (= ३०)

अथ कोपेन चाम्येति देवभागोपरोधतः ।
मां निहन्तुं ततो हि स्याद् वधः श्लाघ्यतरोऽच्युतात् ॥ ३१

एतज्ज्ञात्वा मुनिश्रेष्ठ दानविघ्नस्करेण मे ।
नैव भाव्यं जगन्नाथे गोविन्दे समुपस्थिते ॥ ३२

लोमहर्षण उवाच ।ꣳ

इत्येवं वदतस्तस्य प्राप्तस्तत्र जनार्दनः ।
सर्वदेवमयोऽचिन्त्यो मायावामनरूपधृक् ॥ ३३

तं दृष्ट्वा यज्ञवाटं तु प्रविष्टमसुराः प्रभुम् ।
जग्मुः प्रभावतः क्षोभं तेजसा तस्य निष्प्रभाः ॥ ३४

जेपुश्च मुनयस्तत्र ये समेता महाध्वरे ।
वसिष्ठो गाधिजो गर्गो अन्ये च मुनिसत्तमाः ॥ ३५

बलिश्चैवाखिलं जन्म मेने सफलमात्मनः ।
ततः संक्षोभमापन्नो न कश्चित् किंचिदुक्तवान् ॥ ३६

प्रत्येकं देवदेवेशं पूजयामास तेजसा ।
अथासुरपतिं प्रह्वं दृष्ट्वा मुनिवरांश्च तान् ॥ ३७ वें ३१

---

३१ ते1 a-c 'चाम्ये तो हि' खण्डितम् –a) दे1 कोप्येन (न) (→कोपेन) दे7 वाम्यति, दे11 वान्येति (→चाम्येति) –b) दे1 °भोगो-, दे7 10 11 °भागा (→°भागो) दे5-7 10 धितम् (→धत) –c) दे1 11 मा निहन्तु, दे7 मा हतु च (→मा निहन्तुं), दे7 हिस्यात (→हि स्याद्) –d) दे1 °परोम्यगात, दे2 3 ते1 °तरोम्यगात, दे7 °तमोऽच्युता, दे10-11 °तमोऽच्युतात् (दे11 °तान्) (→°तरोऽच्युतात्)

३१ श्लोकान्तर दे5.10.11 मुवे अधिकम्—

105 ● समाहन्तु हृषीकेश कथ वै समुपेष्यति ।

[दे7 समाहंतु, दे10 11 स मा हत (दे11 °तु) (→समाहन्तु)]

३२ ते1 bc 'म ष्य खडितम् –a) दे1 4 ते1 एव (→एतत्); दे3 मुनि श्रष्ठ (→मुनिश्रेष्ठ) b) दे5 °रे (णा) णं ते (→°रेण मे); दे10 न, दे11 ने (→मे) –c) दे1 नैव वाच्य, दे5 त्वया ● द्य, दे7 नैव भाव्ये, दे10 त्वया भाव्य, दे11 त्वया वाच्य (→नैव भाव्य), दे5 °नाथ (→°नाथे) –d) दे1 गोवि ●, दे7 गोविद (→गोविन्दे); दे4 °पागते (→°पस्थिते)

ꣳ दे1 लोमहर्षण उ ; दे7 लोमहर्षणिरुवाच

३३ ते1 a 'वन्तस्तस्य' खण्डितम् –b) दे5 मत्राप्य, दे7 प्राप्ते तत्र, दे10 चेतसा प्राप्त, ते1 ● ● ● त्र (→प्राप्तस्तत्र) दे7 °र्दने (→°र्दनः) –d) दे2 मया (→माया)

दे5-10 मुवे a, b मध्ये अधिकम्—

106 ● यज्ञवाटमुपागत ।

सहैवामरवृन्दे सबृहस्पतिपुरस्सरैः ।

बलि पुनरुवाचेद शुक्रं निजपुरोहितम् ।

मां च याचितुमभ्येति यतो गेहागतो हरि । [4]

स यथात्मेच्छया सर्वं ।

[–1) दे5.10 °गत (→°गत) –2) दे5 ● ● ● (→°वृन्दं स) –3) दे10 बलि, + बलि (→बलि) –4) दे7 11 समा, दे10स मां (→मां च), दे5 यतो, दे10-11 तात् (→यतो); दे7 गेह° (→गेहा°) –5) दे7 10 सर्व (→सर्वं)]

दे11 a, b मध्ये अधिकम्—

107 ● यज्ञवाटमुपागत ।

सहैवामरवृन्दस्य बृहस्पतिपुरःसर ।

यन्मया सर्वमेतच्चर प्राप्य तस्य विप्यसे ।

बलि पुनरुवाचेद शुक्र निजपुरोहितम् । [4]

समायाचितुमभ्येति तात गेहगतो हरि ।

स यथात्मेच्छया सर्वं ।

दे7 b, c मध्ये अधिकम्—

108 ● उवाच दैत्याधिपति चिर ध्यात्वा स भार्गव ।

अवतीर्णो जगद्योनि कश्यपस्य गृहे हरिः ।

वामनेनेह रूपेण परमात्मा सनातनः ।

स तूर्णं यज्ञमायाति तव दानवपुंगव । [4]

पुनश्च दे ३३ श्लोकान्तरं अधिकम्—

109 ● एव तु ब्रुवतस्तस्य प्राप्तस्तत्र जनार्दन ।

३४ ते1 a 'त दृष्ट्वा खण्डितम् –a) दे7 °वाटस्तु (→°वाट तु) –b) दे10 11 °रा (दे11 °र:) प्रभु (→°रा प्रभुम्) –c) दे7 प्रभाव ●, दे11 प्रभावा (→प्रभावत) –d) दे1 4 निस्सहा, ते1 निरसम (→निष्प्रभा)

३५ –a) दे1 वेपुश्च, दे2 वेपुश्च (→जेपुश्च) –b) दे3 °ध्वर (→°ध्वरे) –c) दे10 गर्ग्यो, मुवे गर्ग (→गर्गो) –d) दे1 ह्यन्ये तु, दे7 ये चान्ये, मुवे तथान्ये (→अन्ये च); दे4 °पुंगवा, दे11 °सत्तम (→°सत्तमा)

३६ –b) दे4 °मात्मना (→°मात्मनः)

३७ –b) दे7 चेतसा (→तेजसा) –c) दे2 प्र ●, दे11 दृष्ट्वा (→प्रह्वं) –d) दे1 दृष्ट्वा सुर°, दे11 तथा मुनि° (→दृष्ट्वा मुनि°)

दे10 a, b मध्ये अधिकम्—

110 ● न कश्चित् किंचिदुक्तवान् । (= ३६ d)

वें ३१ ४३ देवदेवपतिः साक्षाद् विष्णुर्वामनरूपधृक् ।
तुष्टाव यज्ञं वह्निं च यजमानमथार्चितः ।
यज्ञकर्माधिकारस्थान् सदस्यान् द्रव्यसंपदम् ॥ ३८

सदस्याः पात्रमखिलं वामनं प्रति तत्क्षणात् ।
यज्ञवाटस्थितं विप्राः साधु साध्वित्युदीरयन् ॥ ३९

स चार्घमादाय बलिः प्रोद्भूतपुलकस्तदा ।
पूजयामास गोविन्दं प्राह चेदं महासुरः ॥ ४०

बलिरुवाच ।※

सुवर्णरत्नसंघातो गजाश्वसमितिस्तथा ।
स्त्रियो वस्त्राण्यलंकारान् गावो ग्रामाश्च पुष्कलाः ॥ ४१

सर्वे च सकला पृथ्वी भवतो वा यदीप्सितम् ।
तद् ददामि वृणुष्वेष्टं ममार्थाः सन्ति ते प्रियाः ॥ ४२

इत्युक्तो दैत्यपतिना प्रीतिगर्भान्वितं वचः ।
प्राह सस्मितगम्भीरं भगवान् वामनाकृतिः ॥ ४३

ममाग्निशरणार्थाय देहि राजन् पदत्रयम् ।
सुवर्णग्रामरत्नादि तदर्थिभ्यः प्रदीयताम् ॥ ४४

बलिरुवाच ।※

त्रिभिः प्रयोजनं किं ते पदैः पदवतां वर ।
शतं शतसहस्रं वा पदानां मार्गतां भवान् ॥ ४५

श्रीवामन उवाच ।※

एतावता दैत्यपते कृतकृत्योऽस्मि मार्गणे ।
अन्येषामर्थिनां वित्तमिच्छया दास्यते भवान् ॥ ४६

---

३८ –d) दे4 °स्य चार्चित दे5 10.11 °मथ (दे11 °था) त्विज (दे5 °त) ते1 °मयाच्च्युत (→°मथार्चित) –e) दे1 3 ते1 °धिकारस्थ, दे5 10.11 °धिकारास्तान् (→°धिकारस्थान्) –f) दे3 सदस्य (→सदस्यान्) दे1 °सपदे, दे5 7 10 11 °सपद (दे11 °दा) (→°संपदम्)

३९ –a) दे4.10 सदस्य पात्रम् दे5 11 सदा (दे11 °दः) सजातम् दे7 सदस्य दानम् (→सदस्याः पात्रम्) –b) दे7 वामन स तु (→वामनं प्रति°) –c) दे4 10 °स्थिता दे5 11 °स्थितान् (→°स्थित); दे5 विद्वान्, दे11 विप्रान् (→विप्रा)

४० –a) दे1 3 11 ते1 सचाघ्य°, दे7 स्वचाध° (→स चार्घ°) –b) दे1 ते1 प्रोद्धूत° (→प्रोद्भूत°) दे1° पुल क, दे3 °पुलक (→°पुलक) दे1 10 तथा (→तदा) –c) दे11 गोविन्द (→गोविन्द) –d) दे10 चैन (→चेदं) दे1 5 °सुर (→°सुरः)

※ ते1 खण्डितम्.

४१ ४० श्लोकात्पर ७० श्लोक यावत् ते1 खण्डितम् –a) दे1 7 °संघात दे10 °संघातान् (→°संघातो) –b) दे1 गजाश्च (→गजाश्व) दे5 10 गजाश्च महिषास्तथा दे7 गजाश्च सहित तथा दे11 गजाश्वमहिषस्तथा –d) दे7 पुष्कलान् (→पुष्कला) दे1 गाव कग्रामपुष्कला दे4 ग्रामो ग्रामाश्च पुष्कला दे5 10 11 गाव कुप्य च पुष्कलम्

४२ ते1 खण्डितम् (द्र ४१ पा वि) –a) दे5 सर्वाश्च दे7 सर्वां च दे10 11 सर्वाश्च मुवे सर्वं च (→सर्वे च) दे1 3 सकला पृथ्वीं, दे5 7 10 11 सकलामुर्वी (→सकला पृथ्वी) –b) दे5 10 सव तोषाद° (→भवतो वा य°) –c) दे1 3 5 वृणु ष्वष्ठ, दे2 10 वृणु ष्वष्ठ, दे7 वृणुष्वष्व (→वृणुष्वेष्ट) –d) दे2 ममार्था, दे7 11 ममार्थी (→ममार्था) दे5 7 11 सतत प्रिय (दे5 °या) (→सन्ति ते प्रिया)

४३ ते1 ○ (द्र ४१ पा वि) –b) दे4 °पूर्वान्वित, दे5 °मान्नत्विद दे7 °गर्वान्वित दे10 °मानन्वित दे11 °मानत्विद, मुवे °गर्भमिद (→°गर्भान्वित) –c) दे1 सस्मित (→सस्मित)

४३ श्लोकात्पर दे4 अधिकम्—

वामन उवाच ।

४३ श्लोकात्पर दे7 11 अधिकम्—

111 * स्त्रियो वस्त्राण्यलंकारान् ग्रामांश्च विविधान्यपि ।
प्रयच्छ सकलामुर्वीं मन्येषां प्रति याचताम् ।

[–1) दे11 स्त्रिया (→स्त्रियो) दे7 वस्त्रा * (→वस्त्राणि) दे11 विविधा (→विविधानि) –2) दे11 पृथ्वीं (→उर्वीम)]

४४ ते1 ○ (द्र ४८ पा वि)

※ ते1 ○

४५ ते1 ○ (द्र ४१ पा वि) –a) दे1 त्रिभिश्च योजनं (→त्रिभि प्रयोजन) –b) दे5 पादं (→पदैं) –c) दे7 °सहस्राणां (→°सहस्र वा)

※ ते1 ○ दे1 श्रीवामन उ दे4 वामन उवाच दे7 वामन, दे11 श्रीभगवानुवाच

४६ ते1 ○ (द्र ४१ पा वि) –a) दे5 10.11 एतं पद (→एतावता) दे7 °पति (→°पते) –b) दे5 11 मागताम् (→मार्गणे) –c) दे11 °र्थिता (→°र्थिना)

एतच्छ्रुत्वा तु गदितं वामनस्य महात्मन. ।
वाचयामास वै तस्मै वामनाय महात्मने ॥ ४७
पाणौ तु पतिते तोये वामनोऽभूदवामन. ।
सर्वदेवमय रूप दर्शयामास तत्क्षणात् ॥ ४८
चन्द्रसूर्यौ तु नयने द्यौः शिरश्चरणौ क्षिति. ।
पादाङ्गुल्य. पिशाचास्तु हस्ताङ्गुल्यश्च गुह्यका. ॥ ४९
विश्वेदेवाश्च जानुस्था जङ्घे साध्याः सुरोत्तमा. ।
यक्षा नखेषु संभूता रेखास्वप्सरसस्तथा ॥ ५०
दृष्टिर्ऋक्षाण्यशेषाणि केशा. सूर्यांशव. प्रभो. ।
तारका रोमकूपाणि रोमेषु च महर्षयः ॥ ५१
बाहवो विदिशस्तस्य दिश. श्रोत्रे महात्मन. ।
अश्विनौ श्रवणे तस्य नासा वायुर्महात्मन. ॥ ५२

प्रसादे चन्द्रमा देवो मनो धर्मः समाश्रित. ।
सत्यमस्याभवद् वाणी जिह्वा देवी सरस्वती ॥ ५३
ग्रीवाऽदितिर्देवमाता विद्यास्तद्वलयस्तथा ।
स्वर्गद्वारमभून्मैत्रं त्वष्टा पूषा च वै भ्रुवौ ॥ ५४
मुखे वैश्वानरश्चास्य वृषणौ तु प्रजापति. ।
हृदय च पर ब्रह्म पुंस्त्वं वै कश्यपो मुनि. ॥ ५५
पृष्ठेऽस्य वसवो देवा मरुत. सर्वसन्धिषु ।
वक्षस्थले तथा रुद्रो धैर्ये चास्य महार्णव. ॥ ५६
उदरे चास्य गन्धर्वा मरुतश्च महाबला. ।
लक्ष्मीर्मेधा धृति कान्ति. सर्वविद्याश्च वै कटि. ॥ ५७
सर्वज्योतींषि यानीह तपश्च परम महत् ।
तस्य देवाधिदेवस्य तेजः प्रोद्भूतमुत्तमम् ॥ ५८ बं ३१

---

४७ ते1 ○ (द्र ४१ पा वि) –b) दे7 वचन (→गन्ति) –c) दे1 वव(थ?)या° (→वाचया°) दे5 10 11 दत्तो तस्मै महाबाहु, दे7 दापयामास तत्तरम –d) दे5 पदत्वं, दे7 10 11 पदत्रयम् (→महात्मने)

४८ ते1 ○ (द्र ४१ पा वि) –a) दे1 पति * (→पतिते) –b) दे2 3 भूतभावन (→[-अ]भूदवामन)

४९ ते1 ○ (द्र ४१ पा वि) –a) दे7 च (→तु) –c) दे4 च (→तु) –d) दे7 हस्ता (गुहस्ता) गुल्यश्च (→हस्ताङ्गुल्यश्च)

५० ते1 ○ (द्र ४१पा वि) –b) दे5 °त्तम (→°त्तमा) –c) दे3 यक्षा नखेषू, दे यज्ञाश्चागेषु, दे10 11 यक्षाश्चागेषु (→यक्षा नखेषु); दे3 सभूता, दे10 सभूता (→सभूता) –d) दे5 रेखाभ्या° दे7 रेखारस्व°, दे10 लेखास्व° दे11 विप्रास्त्व° मु३ लेखाभ्या° (→रेखास्व°)

५१ ते1 ○ (द्र ४१पा वि) –a) दे1 दृष्टिर्व्यण्य°, दे5 दृष्टिर्विरुण्याण्य°, दे7 दृष्टौ धिष्ण्या च (→दृष्टिर्ऋक्षाण्य°) –b) दे5, 11 प्रभा (→प्रभो); दे3 °भवस्तथा (→°शव प्रभो) –c) दे3 प्रभातारकरूपाणि –d) दे7 रोमेस्तु तु (→रोमेषु च)

५२ ते1 ○ (द्र ४१पा वि) –a) दे5 बाग्नो (→बाहवो); दे3 विन्दिस, दे5 11 विन्दिशा (→विदिशा) –d) दे10 नाना (→नासा); दे5-7 10 11 महाबल (→महात्मन)

५३ ते1 ○ (द्र ४१ पा वि) –a) दे1 धम सनाता दे5-10 11 धर्मसमाश्रिता (→धर्म समाश्रित)

५४ ते1 ○ (द्र ४१पा वि) –a) दे (धा)वाग्निर्दिर् । दे5 °तम (→°त्तमम्); दे7 दत्ज प्रोभूतमप्यर्य

(→ग्रीवाऽन्तिर) –b) दे4 विद्यामूर्त्यु°, दे10 11 विद्यास्तु व° (→विद्यास्तद्व°) दे तन्म (→तथा) दे1 विद्यास्त च वल तथा –c) दे1 मैत्रे, दे10 नेत्र (→मैत्र) –d) दे4 भ्रुवौ (→भ्रुवौ)

५५ ते1 ○ (द्र ४१पा वि) –a) दे1 मखे (→मुखे) –c) दे1 तु (→च) –d) दे5 11 स्व क (→पुंस्त्व) दे11 पश्यतो (→कश्यपो)

५६ ते1 ○ (द्र ४१ पा वि) –a) दे1 पृष्ठस्ये, दे10 पृष्ठोस्य दे11 पृष्टस्य (→पृष्ठेऽस्य) –b) दे1 3 मारुत (→मरुत) दे1 3 पव° (→सव°) –c) दे1 3-10 वक्षस्थने (→वक्षस्थले) दे10 रुग (→रुद्रो) –d) दे1 4 वीर्य दे5-10 धैर्यं (→धैर्ये) दे1 4 तस्य दे7 चास्य (→चास्य); दे1 4-7 महामन, दे10 महागवा (→महार्णव)

दे5 7 10-11 l, c मध्ये प्रक्षिप्तम्—

112* सत्त्वाख्यान्यो ज्योतिर्यॆतींषि विमनाप्रभा

[दे7 °नाक्षवरा (→°नाक्षान्यो) दे11 योनिर् (→ज्योतिर); दे10 प्रभो (→प्रभा)]

५७ ते1 ○ (द्र ४१पा वि) –a) दे11 चाष्टा (→चास्य) दे4 गधवा (→ गन्धर्वा) b) दे3 मार्ग (→मरु°) दे1 महामन दे5 महाबल (→महाबला) –c) दे1 3 कीर्ति (→कान्ति) –d) दे3 °वेद्याश्च (→°विद्याश्च)

५८. ते1 ○ (द्र ४१पा वि) –a) दे1 4 10 सवज्यो तिरसो देव (दे1 °वं), दे5-7 सवज्योतींषि (दे5 प) यानीहि (दे5 ह) –b) दे2 म, दे4 * हृ, दे11 महत् (→महत्) –c) दे1 3 देवाति° (→देवाधि°) –d) दे5 तेज, दे10 तेय (→तेजः)

वे. ३१ ६४ तनौ कुक्षिषु वेदाश्च जानुनी च महामखाः ।
इष्टयः पशवश्चास्य द्विजानां चेष्टितानि च ॥ ५९
तस्य देवमयं रूप दृष्ट्वा विष्णोर्महात्मनः ।
उपसर्पन्ति ते दैत्याः पतङ्गा इव पावकम् ॥ ६०
चिक्षुरस्तु महादैत्यः पादाङ्गुष्ठं गृहीतवान् ।
दन्ताभ्यां तस्य वै ग्रीवामङ्गुष्ठेनाहनद्धरिः ॥ ६१
प्रमथ्य सर्वानसुरान् पादहस्ततलैर्विभुः ।
कृत्वा रूपं महाकायं संजहाराशु मेदिनीम् ॥ ६२
तस्य विक्रमतो भूमिं चन्द्रादित्यौ स्तनान्तरे ।
नभो विक्रममाणस्य सक्थिदेशे स्थितावुभौ ॥ ६३
परं विक्रममाणस्य जानुमूले प्रभाकरौ ।
विष्णोरास्तां स्थितस्यैतौ देवपालनकर्मणि ॥ ६४
जित्वा लोकत्रयं तांश्च हत्वा चासुरपुंगवान् ।
पुरंदराय त्रैलोक्यं ददौ विष्णुरुरुक्रमः ॥ ६५
सुतलं नाम पातालमधस्ताद्वसुधातलात् ।
बलेर्दत्तं भगवता विष्णुना प्रभविष्णुना ॥ ६६
अथ दैत्येश्वरं प्राह विष्णुः सर्वेश्वरेश्वरः ।
यत् त्वया सलिलं दत्तं गृहीतं पाणिना मया ॥ ६७
कल्पप्रमाणं तस्मात् ते भविष्यत्यायुरुत्तमम् ।
वैवस्वते तथाऽतीते काले मन्वन्तरे तथा ॥ ६८
सावर्णिके तु संप्राप्ते भवानिन्द्रो भविष्यति ।
इदानीं भुवनं सर्वं दत्तं शक्राय वै पुरा ॥ ६९
चतुर्युगव्यवस्था च साधिका ह्येकसप्ततिः ।
नियन्तव्या मया सर्वे ये तस्य परिपन्थिनः ॥ ७०
तेनाहं परया भक्त्या पूर्वमाराधितो बले ।
सुतलं नाम पातालं समासाद्य वचो मम ॥ ७१
वसासुर ममादेशं यथावत्परिपालयन् ।
तत्र देवसुखोपेते प्रासादशतसंकुले ॥ ७२

---

५९ ते1 ○ (द्र ४१ पा वि) –a) दे2 7 10 स्तनो, दे5 11 स्तन (→तनौ) दे5 11 कुक्षिश्च (→कुक्षिषु) –c) दे5 7 10 11 पशुबन्धाश्च (→पशवश्चास्य)

६० ते1 ○ (द्र ४१पा वि) –b) दे11 रूप (→विष्णोर्) दे1 3 5 10 11 महाबला (दे5 °न) (→महात्मन) –c) दे1 3 5 10 नोपसर्पन्ति ते दे4 11 उप (दे4 °पा) सर्पं ततो (→उपसर्पन्ति ते) –d) दे11 पावका (→पावकम्)

६१ ते1 ○ (द्र ४१पा वि) दे5 ६१ a 'स्य' इत्यारभ्य ७२ a यावत् ○ –a) दे2 चि *, दे10 चक्षु° (→चिक्षु°) –c) दे1 3 दन्तास्य दे (त) दन्तास्य (→दन्ताभ्या) दे7 शीवा° (→ग्रीवा°)

६२ दे5 ○ (द्र ६१पा वि) ते1 ○ (द्र ४१पा वि) –c) दे7 °काय,+°काल (→°काय)

६३ दे5 ते1 ○ (द्र ६१ तथा ४१पा वि) –b) दे11 °नास्तरे (→°नान्तरे) –c) दे1 3 ततो, दे11 तस्य (→नभो) –d) दे2 वि * दशो स्थितौ वुभौ

६४ दे5 ते1 ○ (द्र ६१ तथा ४१ पा वि) –b) दे7 जातु° (→जानु°) –c) दे1 3 °रास महीपाला (दे2 °ल) दे4 °रास्था स्थितस्यैतौ दे7 °रास्ता महीपाल दे11 °रास्ता स्थितस्योभौ (→°रास्ता स्थितस्यैतौ) –d) दे7 यज्ञ° (→देव°)

६५ दे5 ते1 ○ (द्र ६१ तथा ४१ पा वि) –a) दे7 इद्य दे10 कृत्स्न, दे11 कृष्ण (→तांश्च) –b) दे1 हुत्वा (→हत्वा) –d) दे1 * पक्रमौ, दे2 3 °रुपक्रमौ (→°रुक्रम)

६६ दे5 ते1 ○ (द्र ६१ तथा ४१ पा वि) –a) दे1 3 भूतल (→सुतल) –b) दे11 °तलम् (→°तलात्) –d) दे1 प्रभु° (→प्रभ°)

६७ दे5 ते1 ○ (द्र ६१ तथा ४१ पा वि)

६८ दे1 3 5 7 ○; दे5 ते1 ○ (द्र ६१ तथा ४१ पा वि) –b) दे4 °त्वासुरोत्तम (→°त्यायुरुत्तमम्)

६९ दे5 ते1 ○ (द्र ६१ तथा ४१ पा वि) दे1 3-7 ab ○ –a) दे11 सु (→तु) दे10 सम्प्रात (→संप्राप्ते) –c) दे2 10 11 दत्त (→सर्वं) –d) दे7 10 11 सर्वं (→दत्त) दे10 तत, दे11 शत्र (?) भुवे तव (→पुरा)

७० दे5 ते1 ○ (द्र ६१ तथा ४१ पा वि) –a) दे1 चतुर्युग व्य°, दे4 चतुर्थगव्य°, दे11 चतुर्युगे व्या° (→चतुर्युगव्य°) –b) दे1 3 प्रा (दे3 प्र) दास्स ह्यक°, दे10 साधिकारत्रेक° (→साधिका ह्यक°) –c) दे11 ह्यते (→सर्वे) –d) दे7 एतस्य (→यै तस्य) दे2 पुर° (→परि°)

७१ दे5 ○ (द्र ६१ पा वि) –a) दे11 परमा (→परया) –d) दे4 10.11 °दाय (→°साद्य)

७२ दे5 ○ (द्र ६१ पा वि) –b) दे7 °लय (→°नयन्) –c) दे1 4 10 देवासुरो (दे4 °रौ) पेने दे7 देव सुखोपेतो, ते1 देवासुरा ये वे (→देवसुखोपेते) –d) दे11 प्रसादे शतशकुले

३७ ४ कुलोच्चारणमासाद्य तीर्थसेवी द्विजोत्तमः ॥ ४
कुलानि तारयेत् सर्वान् मातामहपितामहान् ।
शालिहोत्रस्य राजर्षेस्तीर्थे त्रैलोक्यविश्रुतम् ॥ ५
तत्र स्नात्वा विमुक्तस्तु कलुषैर्देहसंभवैः ।
श्रीकुञ्जं तु सरस्वत्यां तीर्थं त्रैलोक्यविश्रुतम् ॥ ६
तत्र स्नात्वा नरो भक्त्या अग्निष्टोमफलं लभेत् ।
ततो नैमिषकुञ्जं तु समासाद्य नरः शुचिः ॥ ७
नैमिषस्य च स्नानेन यत् पुण्यं तत् समाप्नुयात् ।
तत्र तीर्थं महाख्यातं वेदवत्या निषेवितम् ॥ ८
रावणेन गृहीतायाः केशेषु द्विजसत्तमाः ।
तद्वधाय च सा प्राणान् मुमुचे शोककर्शिता ॥ ९
*ततो जाता गृहे राज्ञो जनकस्य महात्मनः ।*

सीता नामेति विख्याता रामपत्नी पतिव्रता ॥ १०
सा हृता रावणेनेह विनाशायात्मनः स्वयम् ।
रामेण रावणं हत्वा अभिषिच्य विभीषणम् ॥ ११
समानीता गृहं सीता कीर्तिरात्मवता यथा ।
तस्यास्तीर्थे नरः स्नात्वा कन्यायज्ञफलं लभेत् ॥ १२
विमुक्तः कलुषैः सर्वैः प्राप्नोति परमं पदम् ।
ततो गच्छेत सुमहद् ब्रह्मणः स्थानमुत्तमम् ॥ १३
यत्र वर्णावरः स्नात्वा ब्राह्मण्यं लभते नरः ।
ब्राह्मणश्च विशुद्धात्मा परं पदमवाप्नुयात् ॥ १४
ततो गच्छेत सोमस्य तीर्थं त्रैलोक्यदुर्लभम् ।
यत्र सोमस्तपस्तप्त्वा द्विजराज्यमवाप्नुयात् ॥ १५
*तत्र स्नात्वाऽर्चयित्वा च स्वपितॄन् दैवतानि च ।*

---

स्नात्वा –c) दे7 ह्युत्तत्त्वम्, दे3 4 ह्यमृतत्वम् (→प्रमृतत्वम्) –d) दे1 11 °सेवि (→°सेवी) शा1 कारा का1 दे4 7 °त्तमा (→°त्तम)

५ –a) दे7-4 ते1 कुल तारयते सर्वं, दे7 कुलास्ता तारयेत् सर्वान् –b) दे7 4 ते1 °मह (→°महान्) –c) दे1 °ाल° (→शालि°) दे3 4 11 राजर्षे (→राजर्षेः)

६ –a) शा1 कारा का1 2 स्नायो (→स्नात्वा) कारा स्यात् (→तु) –b) ते1 देव° (→देह°) –c) का1 °राजस्तु, दे2 3 °कुम्भ च दे7 °कुञ्जे तु ते1 °कण्ठ च (→°कुञ्ज तु) शा1 कारा का1 2 सरस्वत्या दे7 समासाद्य (→सरस्वत्याः) –d) दे4 °पावन (→°विश्रुत) दे7 तीर्थसेवी नर शुचि

दे3 ab, cd मध्ये प्रथमेव श्लोक पूर्वार्धोत्तरार्धयोः व्यत्यासेन आवृत्त ।

७ दे7 ○ –b) शा1 दे4 ते1 ह्यग्नि° (→अग्नि°) – ) का2 ततो निमिषकुञ्ज तु, दे2 4 ते1 ततोऽथ (दे4 व) नैमिष कुड

८ –a) दे4 7 तु (→च) दे4 स्नाने तु (→स्नानेन) –b) दे3 ते1 तु (→तत) दे4 यत्फल तत्चाप्नुयात –c) शा1 तीर्थं महत्ख्यात, कारा का1 2 दे1 5 10 11 तीर्थ (दे11 °थ)महत्ख्यात दे 7 तीर्थमहाख्यात (→तीर्थं महाख्यात) –d) दे3 वेन्वती (→वेदवत्या)

९ –a) शा1 रावणे ह (→रावणेन); दे5 गृहीतया ते1 गर्हिताया (→गृहीताया) कारा गृहीतया रावणेन –b) दे1 5 11° सत्तम (दे1 °म) (→सत्तमा) दे7 4 7 च द्विजोत्तमा (→द्विजसत्तमा) –c)दे5 सत् (→सा) –d) शा1 वा॰ दे7 मुमोच दे2 4 ते1 अमुञ्चद (→मुमुचे) शा1 कारा का1 2 दे1 11 °कर्पिता (→°कर्शिता)

१० –a) दे7 गृहे जाता (→जाता गृहे) –d) दे3 पविव्रता (→पतिव्रता)

११ –a) शा1 दे7 हता (→हृता) शा1 कारा का1 2 दे1 5 10.11 °नैव (→°नेह) –b) दे2 4 7 ते1 तदा (दे4 °था), दे5 शिव (→स्वयम्) –c) दे2 रामे # (→रामेण) –d) दे2-4, 7 ते1 ह्यभिषिच्य (→अभिषिच्य)

१२ –a) शा1 कारा का1 2 सा सीता तु (→समानीता); शा1 कारा का1 7 नीता (→सीता) –b) का1 मुवे °वन, का2 °वता, दे7 °वत , (→°वता) दे2 तथा,+यथा, दे7 तया (→यथा) –c) दे3 4 ते1 तत्र (→तस्या) –d) दे1 11 कल्मा (ल्या ?) युक्ष (श्च ?), दे2 3 ते1 कन्यायाश्च (→कन्यायज्ञ), दे1 5 11 भवेत् (→लभेत्)

१३ –a) दे1 11 विमुक्त (→विमुक्त) –c) दे1 3 11 गच्छत् दे2 ते1 गच्छेद्धि, दे4 5 गच्छेच्च (→गच्छेत)

१४ –a) दे1 वर्गावर, दे7 3 10 ते1 वर्णांतर, दे5 वर्णापर (→वर्णावर) –b) शा1 ब्राह्मणं, दे3 ब्रह्मण्य (→ब्राह्मण्य); दे7 4 7 ते1 महद् (→नर) –c) शा1 ब्रह्मगश्च (→ब्राह्मणश्च)

१५ –a) 1 5 7 10 11 ते1 ततो (दे2 तत्र) गच्छेत्सोम तीर्थं –b) दे1 5 10 11 त्रैलोक्ये चापि, दे2 3 7 ते1 त्रैलोक्यस्यापि, दे4 त्रैलोक्येप्यति (→तीर्थ त्रैलोक्य) –d) दे2 °राजम्, (→°राज्यम्) का2 अवाप्तवान् (→अवाप्नुयात्) दे4 7 द्विजराजत्वमाप्तवान्

१६ –a) दे3 वं (→च) –b) दे3 7 ते1 स्वान् पितॄन् (→स्वपितॄन्) शा1 का1 2 देवतानि च, दे2 4 ते1 देवता अपि

निर्मलः स्वर्गमायाति कार्तिक्यां चन्द्रमा यथा ॥ १६
सप्तसारस्वतं तीर्थं त्रैलोक्यस्यापि दुर्लभम् ।
यत्र सप्त सरस्वत्य एकीभूता वहन्ति च ॥ १७
सुप्रभा काञ्चनाक्षी च विशाला मानसह्रदा ।
सरस्वत्योघनामा च सुवेणुर्विमलोदका ॥ १८
पितामहस्य यजतः पुष्करेषु स्थितस्य ह ।
अब्रुवन् ऋषयः सर्वे नायं यज्ञो महाफलः ॥ १९
न दृश्यते सरिच्छ्रेष्ठा यस्मादिह सरस्वती ।
तच्छ्रुत्वा भगवान् प्रीतः सस्माराथ सरस्वतीम् ॥ २०
पितामहेन यजता आहूता पुष्करेषु वै ।
सुप्रभा नाम सा देवी तत्र ख्याता सरस्वती ॥ २१

तां दृष्ट्वा मुनयः प्रीता वेगयुक्तां सरस्वतीम् ।
पितामहं मानयन्तीं ते तु तां बहु मेनिरे ॥ २२
एवमेषा सरिच्छ्रेष्ठा पुष्करस्था सरस्वती ।
समानीता कुरुक्षेत्रे मङ्कणेन महात्मना ॥ २३
नैमिषे मुनयः स्थित्वा शौनकाद्यास्तपोधनाः ।
ते पृच्छन्ति महात्मानं पौराणं लोमहर्षणम् ॥ २४
कथं यज्ञफलोऽस्माकं वर्तता सत्पथे भवेत् ।
ततोऽब्रवीन्महाभागः प्रणम्य शिरसा ऋषीन् ॥ २५
सरस्वती स्थिता यत्र तत्र यज्ञफलं महत् ।
एतच्छ्रुत्वा तु मुनयो नानास्वाध्यायवेदिनः ॥ २६　वे ३०

---

(→दैवतानि च) –c) शा$_1$ भा$_1$ ॰ दे$_{1\,5\text{-}10\text{-}11}$ निर्मुक्त कारा विमुक्त, दे$_{2\,3}$ ते$_1$ नैर्म (दे$_3$ °मा) ल्य (→निमल) दे$_3$ मायाति (→आयाति) –d) दे$_{1\,5\,10\text{-}11}$ वामन (→चद्रमा)

१७ –a) ते$_1$ तीर्थं (→तीथ) –b) दे$_7$ मोहन (→दुर्लभ) –c) शा$_1$ दे$_{1\,5\,11}$ °स्वत्या, दे$_7$ °स्वया (→°स्वत्य) –d) शा$_1$ एके° दे$_7$ एक° (→एकी°) शा$_1$ का$_2$ °भूवा दे$_3$ °भूत (→°भूता) दे$_3$ भवन्ति (→वहन्ति)

१८ –a) दे$_3$ सुप्रभा (→सुप्रभा) दे$_2$ काचनार्या च दे$_3$ काचनाथश्च, दे$_7$ काचनाक्षी तु ते$_1$ काचतोर्या च (→काञ्चनाक्षा च) –b) शा$_1$ कारा का$_{1\,2}$ दे$_{1\,5\,10\,11}$ ते$_1$ विमला (→विशाला) शा$_1$ कारा का$_1$ *मानसो*, *दे$_{2\,3\,5\text{-}11}$ मानस* (→मानस) दे$_{7\,10\text{-}11}$ ह्रदा (→ह्रदा) दे$_7$ विशाला सुमनोहरा –c) का$_2$ °स्वत्यघ नाशा च, दे$_{1\,5}$ °स्वत्तोयनाम्नी (दे$_5$ °मा) च, दे$_7$ °त्योघ्वनाशाय (→°स्वत्योघ नामा च) –d) शा$_1$ कारा का$_{1\,2}$ दे$_{1\,3\,10}$ ते$_1$ सुवर्णा, दे$_4$ सुवेणा (→सुवेणुर) दे$_{11}$ विमनाह्रदा (→विमलोदका)

१९ –b) शा$_1$ कारा का$_{1\,2}$ दे$_{10}$ °ष्वास्थितस्य (→°षु स्थितस्य) दे$_{2\,3\,7}$ ते$_1$ च, दे$_4$ तु (→ह) दे$_{11}$ सवतेष्व सितस्य ह –c) दे$_4$ मुनय (→ऋषय) –d) दे$_3$ महत् (→महा) दे$_{2\,3\,11}$ ते$_1$ °फल (→°फल)

२० ते$_1$ ○ दे$_{1\,5\,11}$ bcd ○ शा$_1$ का$_{1\,2}$ दे$_2$ cd ○ –a) शा$_1$ सरि (→सरित्); ते$_1$ पुण्यतोया (→सरिच्छ्रेष्ठा) –b) शा$_1$ कारा का$_{1\,2}$ पुष्करस्था, दे$_{3\,4}$ पुरस्था च (दे$_4$ तु) दे$_{10}$ पुरःस्था वै (→यस्मादिह) –d) दे$_3$ च (→[-अ]य)

कारा cd स्थाने—

134 * इति देववच श्रुत्वा ब्रह्मणावाहिता स्वयम्

२१ दे$_2$ ○; शा$_1$ कारा का$_{1\,2}$ ab ○ दे$_{1\,5\,11}$ a ○ –b) दे$_{3\,4\text{-}7\,10}$ ह्याहूता, ते$_1$ स्वाहूता (→आहूता); मुवे च (→वै) –c) कारा स्वप्रभा (→सुप्रभा) –d) दे$_3$ तत्रा (→तत्र)

२२ –a) दे$_5$ त (→ता); दे$_2$ प्रेता (→प्रीता) –b) दे वेद° (→वेग°) दे$_1$ °मुक्ता (→°युक्ता) –c) दे$_3$ पितामह (→पितामह) शा$_1$ दे $_{11}$ मानयन्ती, का$_1$ मानयन्त, दे$_2$ मानयतां (→मानयन्तीं) –d) शा$_1$ कारा का$_2$ कीर्तिता का$_1$ कीर्त्तिभि, दे$_{1\,5\,11}$ कीर्त्तित, दे$_7$ ते तु तद् (→ते तु ता)

२३ २३ cd तः ३० ab यावत् दे$_2$ ○ (द सं) –a) शा$_1$ सरि (→सरित्) –c) शा$_1$ का$_{1\,2}$ दे$_{1\,5\,10\text{-}11}$ °क्षत्र (→°क्षेत्र) –d) शा$_1$ दे$_1$ सक(शा$_1$ °का)णेन का$_2$ सकरेण दे$_{3\,10}$ मार्कण्डेन (→मकणेन)

कारा b, c मध्ये अधिकम्—

135 * स्वप्रभा नाम विमला सुप्रभादायिनी शिवा ।

२४ दे$_2$ ○ (द्र २३ पा वि) –a) शा$_1$ दे$_{1\,11}$ मुनय॰, दे$_5$ मुन * (→मुनय) –b) दे$_4$ °धना (→°धना) –d) दे$_{1\,5\,10\,11}$ पुराण (→पौराग) कारा रोम° (→लोम°)

२५ दे$_2$ ○ (द्र २३ पा वि) ते$_1$ d ○ –a) का$_1$ °फलोस्माक +वरोस्माक दे$_{3\,4}$ ते$_1$ °फल विद्वन् (→°फलोऽस्माक) *मुवे कथ न स्याद् यज्ञफल* –b) *शा$_1$ कारा का$_{1\,2}$ सफलो*, दे$_{1\,11}$ सत्पथो (→सत्पथे) दे$_{10}$ मुने (→भवेत्) दे$_{3\,4}$ ते$_1$ अस्माक वर्तता भवेत् –c) दे$_7$ [अ] ब्रुवन् (→[-अ]ब्रवीत्) शा$_1$ कारा का$_1$ दे$_{1\,5\,11}$ °भाग, दे$_{3\,4}$ ते$_1$ °भागान् (→°भाग) –d) शा$_1$ का$_1$ दे$_{1\,5\,11}$ ऋषि, कारा ऋषि, दे$_3$ मुनि (→ऋषीन्)

२६ दे$_7$ ○ (द्र २३ पा वि) ते$_1$ ○ –d) दे$_3$ ना * (→नाना) दे$_7$ °शास्त्रार्थ° (→°स्वाध्याय°)

३७ २७ समागम्य ततः सर्वे सस्मरुस्ते सरस्वतीम् ।
सा तु ध्याता ततस्तत्र ऋषिभिः सत्रयाजिभिः ॥ २७
समागता प्लावनार्थं यज्ञे तेषां महात्मनाम् ।
नैमिषे काञ्चनाक्षी तु स्मृता मङ्कणकेन सा ॥ २८
समागता कुरुक्षेत्रं पुण्यतोया सरस्वती ।
गयस्य यजमानस्य गयेष्वेव महाक्रतुम् ॥ २९
आहूता च सरिच्छ्रेष्ठा गययज्ञे सरस्वती ।
विशालां नाम तां प्राहुर्ऋषयः संशितव्रताः ॥ ३०
सरित् सा हि समाहूता मङ्कणेन महात्मना ।
कुरुक्षेत्रं समायाता प्रविष्टा च महानदी ॥ ३१
उत्तरे कोशलाभागे पुण्ये देवर्षिसेविते ।
उद्दालकेन मुनिना तत्र ध्याता सरस्वती ॥ ३२
आजगाम सरिच्छ्रेष्ठा तं देशं मुनिकारणात् ।
पूज्यमाना मुनिगणैर्वल्कलाजिनसंवृतैः ॥ ३३
मनोहरेति विख्याता सर्वपापक्षयावहा ।
आहूता सा कुरुक्षेत्रे मङ्कणेन महात्मना ।
ऋषेः संमाननार्थाय प्रविष्टा तीर्थमुत्तमम् ॥ ३४
सुवेणुरिति विख्याता केदारे या सरस्वती ।
सर्वपापक्षया ज्ञेया ऋषिसिद्धनिषेविता ॥ ३५
सापि तेनेह मुनिना आराध्य परमेश्वरम् ।
ऋषीणामुपकारार्थं कुरुक्षेत्रं प्रवेशिता ॥ ३६
दक्षेण यजता सापि गङ्गाद्वारे सरस्वती ।
विमलोदा भगवती दक्षेण प्रकटीकृता ॥ ३७
समाहूता ययौ तत्र मङ्कणेन महात्मना ।
कुरुक्षेत्रे तु कुरुणा यजिता च सरस्वती ॥ ३८

---

२७ दे$_{2}$ ○ (द्र २३ पा वि) ते$_{1}$ abc ○ –b) दे$_{1}$ स्मरम * तु, दे$_{3\ 5}$ सस्मरन्ति, दे$_{4}$ सस्मरुस्ता, दे$_{7}$ सस्मरस्ते, दे$_{11}$ सस्मतु (→सस्मरुस्ते) –c) दे$_{1\ 11}$ –नु (→तु) –d) कारा मुनिभि (→ऋषिभि)

२८ दे$_{2}$ ○ (द्र २३ पा वि) –a) दे$_{3}$ ते$_{1}$ °गत्या (→°गता), शा$_{1}$ कारा का$_{1\ 2}$ पावनार्थं, दे$_{3}$ प्लवेनार्थं, दे$_{7}$ ते$_{1}$ प्लवनार्थं (→प्लावनार्थं) –b) शा$_{1}$ कारा का$_{1\ 2}$ यज्ञ, दे$_{1\ 11}$ यक्ष (→यज्ञ) –c) दे$_{3\ 7}$ नैमिषात् (दे$_{3}$ °ष) (→नैमिषे) दे$_{3}$ ते$_{1}$ °नक्षेत्रे (→°नाक्षी तु) –d) शा$_{1}$ कारा का$_{1\ 2}$ दे$_{1\ 5\ 10\ 11}$ मङ्कणे (शा$_{1}$ °रे, काय °ने) न (शा$_{1}$ °ण) महौजसा

२९ दे$_{2}$ ○ (द्र २३ पा वि) दे$_{7}$ cd○ –a) दे$_{3\ 4}$ ते$_{1}$ °गस्य दे$_{10}$ °याता (→°गता) –b) दे$_{7}$ प्रणताय (→पुण्य तोया) –d) दे$_{4\ 10}$ ते$_{1}$ गयाया च, दे$_{11}$ गयेष्वेव (→गयेष्वेव) दे$_{1\ 5–11}$ °क्रतु दे$_{10}$ °क्रतौ (→°क्रतुम्)

३० दे$_{2}$ ab ○ (द्र २३ पा वि); दे$_{7}$ ab ○ –a) शा$_{1}$ सरि (→सरित्) –b) दे$_{3\ 4}$ ते$_{1}$ गयास्था या (→गययज्ञ) –c) शा$_{1}$ दे$_{1\ 11}$ विशाला, कारा का$_{2}$ दे$_{4}$ विमला, दे$_{7}$ विशाल (→विशाला) दे$_{7}$ –नाम्ना (→नाम) –d) दे$_{4}$ मुनय (→ऋषय) दे$_{10}$ शसित° (→सशित°)

३१ –a) दे$_{1\ 11}$ सरि (→सा हि) दे$_{1\ 11}$ आहूतो (→आहूता) –b) शा$_{1}$ मकरेण, कारा मकनेन दे$_{1\ 11}$ मकेणेन (→मकणेन) –c) का$_{2}$ समाहूता, दे$_{4}$ समाया (या ?) तो, (→समायाता) –d) दे$_{2\ 3}$ प्रति (दे$_{2}$ °ती)ष्ठा (→प्रविष्टा)

३२ –a) कारा दे$_{7}$ कोसला° (→कोशला°) –d) दे$_{11}$ ग्या (ज्ञा ?) ता (→ध्याता)

३३ –a) शा$_{1}$ सरि (→सरित) –b) दे$_{1\ 5\ 11}$ तद्दश (→तं देश)

३४ दे$_{10}$ मुद्रे ३४ b आरभ्य ३५ a इति यावत् ○ दे$_{7}$ cd अस्पष्टम् –a) शा$_{1}$ कारा का$_{1\ 2}$ °रमेति (→°हरेति); दे$_{1}$ वि (→वि) दे$_{7}$ °ख्यातो (→°ख्याता) –b) दे$_{11}$ °क्षयापहा, दे$_{7}$ °भयापहा (→°क्षयावहा) –c) शा$_{1}$ का॰ दे$_{11}$ °क्षेत्र (→°क्षत्रे) –f) दे$_{3}$ प्रतिष्ठा (→प्रविष्टा)

दे$_{7}$ ab, cd मध्ये अधिकम्—

136 * आहूता च सरिच्छ्रेष्ठा गययज्ञ सरस्वती ।
विशाला नाम ता प्राहु ऋषय शसितव्रता । (= ३०)

३५ का$_{2}$ cd ○ दे$_{10}$ a ○ (द्र ३४ पा वि) –c) दे$_{4}$ °क्षयकरी (→°क्षया ज्ञया) –d) का$_{1}$ दे$_{2\ 4}$ दे$_{10}$ मुनि° (→ऋषि°)

३६ का ○ –b) दे$_{4}$ ह्याराध्य, ते$_{1}$ स्वाराध्य (→आराध्य) –d) दे$_{2\ 4}$ ते$_{1}$ सरस्वत्या (→कुरुक्षेत्र) ते$_{1}$ प्रवेशत (→प्रवेशिता)

३७ का ab ○ दे$_{7}$ cd ○ –a) दे जयता दे$_{11}$ य * ता (→यजता) दे$_{2}$ चापि दे$_{3\ 4}$ ते$_{1}$ चापि, दे$_{7}$ पूर्व, दे$_{10}$ साति (→सापि) –d) दे$_{3}$ दक्षिणे (→दक्षेण) दे$_{1\ 11}$ प्रगटी°, दे$_{2}$ प्रकृष्टो° (→प्रकटी°)

३८ दे$_{7}$ ○ –a) दे$_{2}$ °हू* (→°हूता) –c) दे$_{2\ 3}$ °क्षेत्रेण, ते$_{1}$ °क्षत्र च (→°क्षेत्र तु) –d) शा$_{1}$ कारा का$_{1\ 2}$ दे$_{1\ 4\ 5\ 10\ 11}$ यजता, ते$_{1}$ यजिता (→यजिता) दे$_{4}$ तु (→च)

सरोमध्ये समानीता मार्कण्डेयेन धीमता ।
अभिष्टूय महाभागां पुण्यतोयां सरस्वतीम् ॥ ३९

यत्र मङ्कणकः सिद्धः सप्तसारस्वते स्थितः ।
नृत्यमानश्च देवेन शंकरेण निवारितः ॥ ४०

इति श्रीवामनपुराणे सरोमाहात्म्ये षोडशोऽध्यायः ॥१६॥

# १७

ऋषय ऊचुः ।ꣳ

कथं मङ्कणकः सिद्धः कस्माज्जातो महानृषिः ।
नृत्यमानस्तु देवेन किमर्थं स निवारित. ॥ १

लोमहर्षण उवाच ।ꣳ

कश्यपस्य सुतो जज्ञे मानसो मङ्कणो मुनिः ।
स्नानं कर्तुं व्यवसितो गृहीत्वा वल्कलं द्विजः ॥ २

तत्र गता ह्यप्सरसो रम्भाद्याः प्रियदर्शनाः ।
स्नायन्ति रुचिराः स्निग्धास्तेन सार्धमनिन्दिताः ॥ ३

ततो मुनेस्तदा क्षोभाद्रेतः स्कन्नं यदम्भसि ।
तद्रेत. स तु जग्राह कलशे वै महातपाः ॥ ४ वे. ३८

---

३९ –a) शा$_{1}$ का$_{1}$ सरमध्ये, दे$_{4}$ समाराध्य (→सरोमध्ये) –b) दे$_{2\ 3.7}$ ते$_{1}$ मार्कण्डेन महात्मना (दे$_{7}$ * ); दे$_{4}$ मार्कण्डे * न धीमता –c) शा$_{1}$ अभिभूय, का$_{1\ 2}$ दे$_{1.5\ 11}$ अभिस्तूय, दे$_{4}$ प्रविष्टूय (→अभिष्टूय); दे$_{2\ 3}$ ते$_{1}$ महाभाग (→महाभागा) –d) शा$_{1}$ दे$_{1.2.4.7.10\ 11}$ °तोया (→°तोयां); दे$_{1\text{-}4\ 7\ 10\ 11}$ सरस्वती (→सरस्वतीं).

४०. दे$_{2\ 5\ 7\text{-}10}$ वे$_{1}$·cd ○. –b) शा$_{1}$ °सारस्वती, दे$_{3\text{-}4}$ °सारस्वतो (दे$_{2}$ °त ) (→°सारस्वते), दे$_{5}$ स्थिता (→स्थित ) –d) दे$_{1\text{-}11}$ मकणो वि (→शंकरेण).

पुष्पिका—शा$_{1}$ का$_{1\ 2}$ दे$_{2\ 3\ 10}$ ते$_{1}$ इति श्रीवामनपुराणे सरोमाहात्म्ये, कारा दे$_{1\ 11}$ इति वामनपुराणे सरोमाहात्म्ये, दे$_{4}$ इति वामने सरोमाहात्म्ये, दे$_{5}$ वामनपुराणे सरोमाहात्म्ये, दे$_{7}$ श्री वामनपुराणे सरोमाहात्म्ये, मुवे, इति श्रीवामनपुराणे पुलस्त्यनारदसंवादे सरोमाहात्म्ये अध्यायनाम—शा$_{1}$ का$_{1.2}$ दे$_{1\ 5\text{-}7\text{-}10\text{-}11}$ ते$_{1}$ ○, कारा. सप्तसारस्वत नाम अध्यायसंख्या– दे$_{2.5\text{-}10}$ ○, शा$_{1}$ सप्तविंशोध्याय ॥२७॥, कारा. षट्त्रिंशत्तमोध्याय , का$_{1}$ अष्ट,+सप्तविंशोऽध्याय , का$_{2}$ अष्टविंशोध्याय. ॥२८॥, दे$_{1}$ अ ॥३५॥; दे$_{3}$ ॥३७॥, दे$_{7}$ चतुर्दशोध्याय , दे$_{11}$ अध्याय ॥३५॥, वे$_{1}$ एकोनचत्वारिंशोध्याय ॥३६॥, मुवे सप्तत्रिंशोऽध्याय

१७

ꣳ शा$_{1}$ दे$_{7}$ ऋषय .

१. –a) कारा. मक्नक , दे$_{7}$ मकर्णक (→मङ्कणक.). –b) दे$_{4}$ ते$_{1}$ महानृपे (दे$_{4}$ °व ), दे$_{7}$ महामुनि (→महानृषि ). –c) दे$_{2\ 4}$ ते$_{1}$ नृत्य कुर्वन् शंकरेण. –d) दे$_{7}$ सन्नि° (→स नि°).

ꣳ शा$_{1}$ लोमहर्पण ; दे$_{5}$ लोमश उवाच, दे$_{7}$ लोमहर्षणि .

२ –a) दे$_{2\text{-}4\ 7}$ ते$_{1}$ कश्यपाच (→कश्यपस्य), का$_{2}$ दे$_{2.5}$ यज्ञे (दे$_{5}$ °ते) (→जज्ञे). –b) दे$_{4}$ नाम्ना सो (→मानसो); कारा. मङ्कनो (→मकणो). –c) दे$_{3}$ स्नानं कर्तृं- (→स्नान कर्तुं); शा$_{1}$ विव° (→व्यव°) –d) दे$_{2.3}$ द्विजा (→द्विज ).

३. –a) कारा अप्स°, दे$_{2\ 4.7}$ ते$_{1}$ चाप्स° (ह्यप्स°). –b) दे$_{1\ 11}$ र(अ?) स्लाघ्या (→रम्भाद्या ), दे$_{1\text{-}7.11}$ °दर्शना, दे$_{2}$ °दर्शन (→°दर्शना ). –c) दे$_{2\ 4}$ स्नात्ये (दे$_{2}$ °वे) व, दे$_{3}$ स्नात्वो च, ते$_{1}$ स्नान्त्येव (→स्नायन्ति); दे$_{4.5\text{-}11}$ रुधिरा- (→रुचिरा ); दे$_{1\text{-}5\ 11}$ -दिग्धा , दे$_{2\ 4\text{-}10}$ वे$_{1}$ -चारा (→स्निग्धा), का$_{1}$ रुचिराकारा (→रुचिरा स्निग्धा ), दे$_{7}$ स्नापयन्ति रुचिराकारा. –d) दे$_{2\text{-}4.10}$ ते$_{1}$ मुक्तवस्त्रा (→तेन सार्धम्), दे$_{2\ 4}$ वे$_{1}$ ह्यनि (वे$_{1}$ °स) न्दिता (→अनिन्दिता ); दे$_{7}$ दिग्वासो ह्यनन्दिता .

४. –a) दे$_{7}$ तदा (→ततो). –b) का$_{1}$ दे$_{7}$ रेतस्कन्नं; दे$_{1\ 11}$ रेत सेक (→रेत स्कन्नं), का$_{1\ 2}$ दे$_{1\ 5\text{-}10\text{-}11}$ तदम्भसि, कारा दे$_{7}$ तदाम्भसि (→यदम्भसि). –c) दे$_{2}$ तपेते, दे$_{5}$ तद्रता (→तद्रेत ) दे$_{2.3}$ ते$_{1}$ समनुग्रह्य (→स तु जग्राह), दे$_{7}$ तद्रेतस तु जग्राह, मुवे व्याघो जग्राह तद्रेत . –d) शा$_{1}$ कलुषे (→कलशे); का$_{2}$ च (→वै), दे$_{2\text{-}3}$ समाक्षिपद, ते$_{1}$ समाक्षिपद (→महातपा ), दे$_{7}$ प्राक्षिपद् कलशे मुनि , मुवे. कलशे न्यक्षिपत्तथा.

। ३८ ५ सप्तधा प्रविभागं तु कलशस्थं जगाम ह ।
तत्रर्षयः सप्त जाता विदुर्यान् मरुतां गणान् ॥ ५
वायुवेगो वायुबलो वायुहा वायुमण्डलः ।
वायुज्वालो वायुरेतो वायुचक्रश्च वीर्यवान् ॥ ६
एते ह्यपत्यास्तस्यर्षेर्धारयन्ति चराचरम् ।
पुरा मङ्कणकः सिद्धः कुशाग्रेणेति मे श्रुतम् ॥ ७
क्षतः किल करे विप्रास्तस्य शाकरसोऽस्रवत् ।
स वै शाकरसं दृष्ट्वा हर्षाविष्टः प्रनृत्तवान् ॥ ८
ततः सर्वं प्रनृत्तं च स्थावरं जङ्गमं च यत् ।
प्रनृत्तं च जगद् दृष्ट्वा तेजसा तस्य मोहितम् ॥ ९
ब्रह्मादिभिः सुरैस्तत्र ऋषिभिश्च तपोधनैः ।
विज्ञप्तो वै महादेवो मुनेरर्थे द्विजोत्तमाः ॥ १०
नायं नृत्येद् यथा देव तथा त्वं कर्तुमर्हसि ।
ततो देवो मुनिं दृष्ट्वा हर्षाविष्टमतीव हि ॥ ११
सुराणां हितकामार्थं महादेवोऽभ्यभाषत ।
हर्षस्थानं किमर्थं च तवेदं मुनिसत्तम ।
तपस्विनो धर्मपथे स्थितस्य द्विजसत्तम ॥ १२
ऋषिरुवाच ।❀
किं न पश्यसि मे ब्रह्मन् कराच्छाकरसं स्रुतम् ।
यं दृष्ट्वाऽहं प्रनृत्तो वै हर्षेण महताऽन्वितः ॥ १३
तं प्रहस्याब्रवीद् देवो मुनिं रागेण मोहितम् ।
अहं न विस्मयं विप्र गच्छामीह प्रपश्यताम् ॥ १४

---

५. –a) शा1 सप्तदा, ते1 सदाधा (→सप्तधा) का1 तत (→तु) –d) दे2 3 ते1 ज्ञाताश्च (→विदुर्यान्), शा1 का1 दे1 7 11 मरुतान्, कारा दे10 मरुतो (→मरुता), दे9 3 ते1 गणा (→गणान्)

६ –b) दे7 वसुप° (→वायुम°) –c) दे1 5.10 11 °कालो (दे5 °ले) दे9 3 ते1 °ज्वाला, दे7 °ज्वरो (→°ज्वालो), का9 दे1 4 5 7 10-11 °रेता (→°रेतो) –d) दे4 °वक्षश्च, दे11 °चक (?)श्च (→°चक्रश्च)

७ –a) दे1 11 जयन्त, दे2 4 तनया, दे7 च पुत्रा (→ह्यपत्या), दे10 ते1 तस्यर्षेस्तनया एते –b) दे5 धारय * (→धारयन्ति) –c) कारा मङ्कतक, दे2 10 ते1 मङ्कणग (→मङ्कणक) –d) शा1 कारा का1 2 कुठारेणेति मे श्रुत, दे1 5 11 ते1 कौमारेणेति विश्रुत

८ –a) दे1 4 11 ते1 क्षतात (→क्षत) दे9 3 ते1 करतले (→किल करे) शा1 का2 विप्र (→विप्रास्) –b) दे2 ते1 ह्यभूत, दे7 [ श्र] श्रवत् (→[ स्र] स्रवत्) –c) शा1 सर्वं (→स वै) –d) दे4 हर्षात (→हर्षा-) शा1 वृष्ट, दे4 धृष्ट (→विष्ट) शा1 कारा का1 2 च, दे1 10 11 स (→प्र)

९ –a) दे1 11 सर्वं, दे7 सर्व- (→सर्वं) कारा प्रवृत्त हि, दे2 ते1 प्रनृत्ताद्वै, दे3 प्रनृत्तस्थं, दे7 * नृत्त वै (→प्रनृत्त च) –b) दे9 ते1 यं (→यत्) –c) शा1 का1 ते1 प्रवृत्त (→प्रनृत्त) दे9 वं, दे7 त (→च) दे3 ते1 जगम (→च जगद्) –d) शा1 का1 2 मोहित जगत, कारा मोहितं तत, दे7 तस्य मोहितं (→तस्य मोहितम्)

१० –a) दे2 देवै (→सुरै); दे3 4 ते1 तत्र ब्रह्मादिभिर्देवैः –b) कारा दे4 मुनिभि (→ऋषिभि) –d) शा1 कारा का1 9 प्रर्थं, दे3 प्रर्थो (→प्रर्थे)

११. दे5 ab देव तथा ○ (द्र स ), दे7 ११ cd १२ ef ○ –a) दे7 न हि (→नाय) ते1 वृत्ते दथा (→नृत्येद्यथा) –b) दे3 वक्तुम् (→कर्तुम्) –c) दे9 4 देवा (→देवो) –d) ते1 हर्ष° (→हर्षा°), दे9 3 ते1 प्रनु (दे3 °भू) त्तर, दे4 अनन्तर, मुने -मति तदा (→मतीव हि)

१२ दे7 ○ (द्र ११ पा वि ) –a) दे5-11 °कार्यार्थं (→कामार्थं) –b) दे3 [ अ] त्य° ( →[ भ]ाय° ). –c) दे3 ते1 °ज्ञान (→°स्थान) दे9 हर्ष (प ?) तात (→हर्षस्थानं) –d) दे1 11 त चैव, दे2 3 ते1 तदिद, दे9 10 तवैव (→तवेद) दे1 11 °सतम, दे5 °सत्तम (→°सत्तम) –e) दे1 5 11 °पथि दे2 3 ते1 °पथ (→°पथे)

१२ श्लोकात्पर कारा अधिकम्—

137 * ऋषिरुवाच त देव शकर लोकशकरम्

❀ कारा ○ दे7 ऋषि

१३ –b) शा1 कर स्था° (शा ?), का1 करात शाक, °+ करशाक°, का9 करशाक°, दे1 5 11 क्षता छाक° (→कराच्छाक°) दे4 °रस (→°रस) शा1 श्रुत,+सुत, दे2 ° 7 ते1 भूत, दे5 स्थित (→स्रुत) –c) शा1 कारा का1 9 दे1 5 10-11 च (→[ अ]ह) कारा प्रनृतोह, दे7 प्रनृत्त च, दे11 प्रनृत्तो वं, ते1 प्रवृत्तो वै (→प्रनृत्तो वै) –d) दे3 ते1 च समन्वित, दे4 तु समन्वित (→महतान्वित )

१४ –b) दे3 मुनि- (→मुनिं) शा1 मुनिराङ्गण, का1 मुनिराट् राज ,+मुनि मा गच्छ (→मुनिं रागेण) का1 मोहितं,+ °तां (→मोहितम्) –d) शा1 प्रपञ्च ता (?), दे1 3 7 10-11 ते1 प्रपश्य माम् (→प्रपश्यताम्)

एवमुक्त्वा मुनिश्रेष्ठं देवदेवो महाद्युतिः ।
अङ्गुल्यग्रेण विप्रेन्द्राः स्वाङ्गुष्ठं ताडयद् भवः ॥ १५
ततो भस्म क्षतात् तस्मान्निर्गतं हिमसन्निभम् ।
तद् दृष्ट्वा व्रीडितो विप्रः पादयोः पतितोऽब्रवीत् ॥ १६
नान्यं देवादहं मन्ये शूलपाणेर्महात्मनः ।
चराचरस्य जगतो वरस्त्वमसि शूलधृक् ॥ १७
त्वदाश्रयाश्च दृश्यन्ते सुरा ब्रह्मादयोऽनघ ।
पूर्वस्त्वमसि देवानां कर्ता कारयिता महत् ॥ १८
त्वत्प्रसादात् सुराः सर्वे मोदन्ते ह्यकुतोभयाः ।
एवं स्तुत्वा महादेवमृषिः स प्रणतोऽब्रवीत् ॥ १९

भगवंस्त्वत्प्रसादाद्धि तपो मे न क्षयं व्रजेत् ।
ततो देवः प्रसन्नात्मा तमृषिं वाक्यमब्रवीत् ॥ २०

ईश्वर उवाच ॥❀

तपस्ते वर्द्धतां विप्र मत्प्रसादात् सहस्रधा ।
आश्रमे चेह वत्स्यामि त्वया सार्द्धमहं सदा ॥ २१
सप्तसारस्वते स्नात्वा यो मामर्चिष्यते नरः ।
न तस्य दुर्लभं किञ्चिदिह लोके परत्र च ॥ २२
सारस्वतं च तं लोकं गमिष्यति न संशयः ।
शिवस्य च प्रसादेन प्राप्नोति परमं पदम् ॥ २३　वं. ३८

इति श्रीवामनपुराणे सरोमाहात्म्ये सप्तदशोऽध्यायः ॥१७॥

---

१५ –a) दे$_{11}$ उक्ता (→उक्त्वा); ते$_1$ मुनिं (→मुनि); दे$_{1\text{-}2\text{-}4.11}$ °श्रेष्ठ (दे$_4$ °ष्ठो) (→°श्रेष्ठं). –b) दे$_1$ °मुनि (→°द्युति) –c) दे$_{1.11}$ °लाग्रेण (→°ल्यग्रेण); दे$_{1\text{-}5.11}$ विप्रर्षे (→विप्रेन्द्रा) –d) दे$_{1\ 3\ 5\text{-}10}$ ते$_1$ स्वाङ्गुष्ठ, दे$_2$ साङ्गुष्ठ (→स्वाङ्गुष्ठं); शा$_1$ का$_{1\text{-}2}$ ताडयेद्भव, दे$_{1\ 5\text{-}7\text{-}10\text{-}11}$ ताडितोभवत्, दे$_4$ समताडयत् (→ताडयद् भवः).

१६. –a) दे$_7$ छ (क्ष?) रत (→क्षतात्). शा$_1$ का$_{1.2}$ तस्य (→तस्मात्). –b) शा$_1$ निर्जित, का$_2$ विस्मृत (→निर्गतं) –c) शा$_1$ का$_1$ दे$_{1.2\ 5\text{-}7\ 11}$ ते$_1$ त (→तद्), दे$_3$ पीडितो (→व्रीडितो) दे$_5$ विप्रा (→विप्र). –d) दे$_{2\ 4.7}$ ते$_1$ पादयोरग्रत स्थित.

१७ –a) दे$_{1\ 5.7\text{-}10}$ नान्यद्, दे$_2$ नाय (→नान्यं). –b) दे$_{2\text{-}4\ 7}$ ते$_1$ रुद्रात् परतर महत् –c) दे$_{3.7}$ ते$_1$ सुरासुरस्य (→चराचरस्य), दे$_7$ मारुतो (→जगतो) –d) दे$_{1\ 5\ 11}$ पर, दे$_{2\ 3}$ ते$_1$ गुरु (→वर), कारा का$_2$ शूलधृत् (→शूलधृक्)

१८. –a) दे$_7$ त्वयाश्रयाय, दे$_{11}$ च्च (चि ?) दाश्रयाश्च (→त्वदाश्रयाश्च); दे यदृश्यन्ते (→च दृश्यन्ते) –b) दे$_7$ देवादयो (→ब्रह्मादयो), शा$_1$ का$_2$ दे$_{1\ 5\ 11}$ मही, कारा ग्रप्यमो, का$_1$ मही,+ह्यमो (→[-अ] नघ) –c) शा$_1$ कारा का$_{1\ 2}$ दे$_{1\ 4\ 7}$ ते$_1$ सर्वस् (दे$_7$ °र्वं) (→पूर्व) शा$_1$ त्वमस्य (→त्वमसि) –d) कारा दे$_{1\ 3\ 4\ 11}$ महान् (→महत्)

१९. दे$_1$ ते$_1$ मुवे. cd इत्यारभ्य २० d यावत ○ –) दे$_2$ तद° (→त्वत°); दे$_{1\ 5\text{-}11}$ °प्रसादा (→प्रसादात्) –b) दे$_7$ हा° (→ह्य°) –c) दे$_{11}$ श्रुत्वा (→स्तुत्वा). –d) दे$_7$ ऋषिभि (→ऋषि स); दे$_{2.3}$ [-अ]भवत् (→[अ]ब्रवीत्)

१९श्लोकस्य ab, अनन्तर ते$_1$ मुवे अधिकम्—
138 * सुरासुरस्य चाधीश न तपो मे क्षरेन्महत् ।

[ दे$_{2.3.10}$ अय अधिकश्लोक २० श्लोकस्यानन्तरमधिकरूपेण आगत —1) दे$_{10}$ ते$_1$ जगतो (→चाधीश) ]

२०. दे$_1$ ते$_1$ ○; दे$_7$. cd ○. –a) दे$_7$ प्रसादेन (→प्रसादाद्धि). –b) दे$_7$ अक्षय, दे$_{11}$ स्तपता (→न क्षय); दे$_7$ भयो मे न करोत् महत्.

❀ कारा दे$_{1\ 4\ 7}$ ते$_1$. ○. दे$_7$ ईश्वर उ मुवे लोमहर्षण उवाच.

२१. –c) दे$_7$ वक्ष्यामि (→वत्स्यामि) –d) दे$_{1\text{-}11}$ इद, दे$_2$ अय (→अह), दे$_4$ तदा (→सदा)

२२. –b) दे$_7$ नरं (→नर) –c)दे$_4$ दुर्बल (→दुर्लभ)

२३ का$_1$ cd○. –a) दे$_{7\ 11}$ सारस्वते (→सारस्वत) शा$_1$ कारा का$_2$ दे$_{1\ 5\text{-}10\ 11}$ ते$_1$ ते लोक, दे$_7$ ये लोका (→त लोक) –b) कारा का$_2$ दे$_{1\ 4\ 10\ 11}$ ते$_1$, गमिष्यन्ति (→गमिष्यति) –c) दे$_3$ तु (→च). –d) कारा प्राप्नुवत्ति पर पदम्, दे$_7$ प्राप्नुया त्परमा गतिम्

पुष्पिका—शा$_1$ कारा का$_{1\ 2}$ दे$_{2\ 3}$ ते$_1$ इति श्रीवामनपुराणे स (दे$_3$ °सा) रोमा (शा$_1$ °म) हात्म्ये, दे$_{1\ 11}$ इति वामनपुराणे सरोमाहात्म्ये, दे$_4$ इति वामने सरोमाहात्म्ये, दे$_7$ श्रीवामनपुराणे सरोमाहात्म्ये, मुवे इति श्रीवामनपुराणे पुलस्त्यनारदसंवादे सरो-माहात्म्ये. अध्यायनाम—कारा मङ्कनसिद्धिर्नाम अन्येषु नास्ति. अध्यायसंख्या—दे$_{2\ 4\ 5}$. ○. शा$_1$ अष्टाविंशोध्याय, कारा सप्तत्रिंशत्तमोध्याय, का$_{1\ 2}$ एकोनत्रिंशोध्याय, दे$_1$ अ॥३६॥, दे$_3$, ॥३६॥, दे$_{11}$ अध्याय ॥३६॥, दे$_7$ पंचदशोध्याय, ते$_1$ चत्वारिंशो-ध्यायः, मुवे. अष्टात्रिंशोऽध्याय.

# १८

लोमहर्षण उवाच ।ꕥ

र ३६.१ ततस्त्वौशनसं तीर्थं गच्छेत्तु श्रद्धयान्वितः ।
उशना यत्र संसिद्धो ग्रहत्वं च समाप्तवान् ॥ १
तस्मिन् स्नात्वा विमुक्तस्तु पातकैर्जन्मसंभवैः ।
ततो याति परं ब्रह्म यस्मान्नावर्तते पुनः ॥ २
रहोदरो नाम मुनिर्यत्र मुक्तो बभूव ह ।
महता शिरसा ग्रस्तस्तीर्थमाहात्म्यदर्शनात् ॥ ३

ऋषय ऊचुः ।ꕥ

कथं रहोदरो ग्रस्तः कथं मोक्षमवाप्तवान् ।
तीर्थस्य तस्य माहात्म्यमिच्छामः श्रोतुमादरात् ॥ ४

लोमहर्षण उवाचꕥ

पुरा वै दण्डकारण्ये राघवेण महात्मना ।
वसता द्विजशार्दूला राक्षसास्तत्र हिंसिताः ॥ ५
तत्रैकस्य शिरश्छिन्नं राक्षसस्य दुरात्मनः ।
क्षुरेण शितधारेण तत् पपात महावने ॥ ६
रहोदरस्य तल्लग्नं जङ्घाया वै यदृच्छया ।
वने विचरतस्तत्र अस्थि भित्त्वा विवेश ह ॥ ७
स तेन लग्नेन तदा द्विजातिर्न शशाक ह ।
अभिगन्तुं महाप्राज्ञस्तीर्थान्यायतनानि च ॥ ८
स पूतिना विस्रवता वेदनार्तो महामुनिः ।

---

१८

ꕥ दे$_5$ ○, शा$_1$ लोमश ; दे$_2$ लोमहर्षण उ दे$_7$ लोमहर्षणि

१ –a) शा$_1$ का$_{1\ 2}$ ततस्तूशनस, दे$_{1\ 10}$ ततश्चैशनस, दे$_3$ ततस्त्रौशोनस, दे$_4$ तत (?) श्रोशनसं, दे$_5$ ततस्त्योशनस, ते$_1$ तत उशानस (→ततस्त्वौशनस) कारा गच्छत (→तीर्थ) –b) शा$_1$ का$_1$ ॰ गच्छेच्च कारा तीर्थं त च दे॰ 3 ते$_1$ गच्छद्धि, दे$_7$ गच्छेत (→गच्छेत्तु) दे$_{1\ 11}$ गच्छ (दे$_1$ ग्र ?) श्रद्धासमन्वित, दे$_{4\ 5}$ गच्छेत (दे$_5$ °छ) श्रद्धा समन्वित –c) दे$_3$ सशुद्धो, दे$_7$ ससिद्धे (→ससिद्धो) –d) शा$_1$ शुहृत्व दे$_3$ ग्र ꕥ त्व (→ग्रहत्व) कारा समवाप्तवान्, दे$_{2\ 4}$ ते$_1$ च समाप्नुयात (→च समाप्तवान्)

२ –a) दे$_4$ °क्तश्च (→°क्तस्तु); शा$_1$ कारा का$_{1\ 2}$ दे$_{1\ 5\ 10\ 11}$ तस्मिन्पुण्ये कुरुक्षेत्र –b) का$_1$ मल° (→जन्म°) –c) शा$_1$ कारा का$_{1\ 2}$ दे$_{1\ 5\ 10\ 11}$ मुक्तो (→ततो) शा$_1$ का$_1$ ॰ ब्रह्मन् (→ब्रह्म) –d) शा$_1$ का$_1$ ॰ दे$_3$ ते$_1$ तस्मान्ना°, दे$_{10}$ यतो ना° (→यस्मान्ना )

३ शा$_1$ कारा का$_1$ ॰ दे$_{1\ 4\ 5\ 10\text{-}11}$ हरो° (→रहो°) –b) दे$_1$ युक्तो (→मुक्तो) दे$_4$ बभूव ꕥ (→बभूव ह) –c) शा$_1$ का$_1$ ॰ एकस्य कारा रक्षस दे$_{2\ 3}$ महसा दे$_{11}$ महात (→महता) दे$_5$ पस्त (→ग्रस्त ) –d) दे$_3$ °महाशक्य (?) (→°माहात्म्य°) ते$_1$ °दशन (→°दर्शनात्)

ꕥ शा$_1$ ऋषय दे$_7$ ऋषि

४ शा$_1$ कारा का$_2$ दे$_{1\ 4\ 5\ 10\text{-}11}$ हरो° (→रहो°) –b) दे$_{2\ 3}$ ते$_1$ मोह (→मोक्ष) का$_1$ दे$_{2\ 3}$ ते$_1$ अवाप्नुयात् (→अवाप्तवान्) –c) दे$_{1\ 11}$ च (→तस्य) –d) शा$_1$ कारा का$_1$ ॰ दे$_{1\ 5\ 7\ 10\ 11}$ श्रोतुमिच्छामहे वयम्

ꕥ शा$_1$ लोमश दे$_7$ लोमहर्षणि

५ –b) का$_1$ °वेन,+°वेण, का$_2$ °वेन (→°वेण); दे$_7$ राक्षसेन कृतात्मना –c) दे$_5$ दर्शनाद् (→वसता) दे$_{1\ 3\ 4\ 7\ 10\text{-}11}$ °शार्दूल (→°शार्दूला) –d) का॰ संहिता (→हिंसिता ) दे$_4$ निहतास्तत्र राक्षसा , दे$_7$ राक्षसास्त्र हि महावने

६ –a) दे$_4$ एवैकस्य (→तत्रैकस्य) –c) शा$_1$ का$_1$ दे$_4$ क्षुरेण शत° (दे$_4$ सित) दे$_{2\ 3}$ ते$_1$ सहस्तशत°, दे$_7$ खड्गेन शित° (→क्षुरेण शित°)

७ –a) शा$_1$ कारा का$_{1\ 2}$ दे$_{1\ 4\ 5\ 10\ 11}$ हरोदरस्य, दे$_3$ रहो वल्लस्य (→रहोदरस्य) –b) दे$_{2\ 4\ 7}$ जघायां च (दे$_4$ तु) दे$_3$ ग्रहाया च दे$_5$ जघा ꕥ वै दे$_{10}$ ग्रीवायां वै, ते$_1$ जघायां च (→जङ्घाया वै) दे$_1$ जघा भा नेम इच्छया –c) दे$_3$ वि (ज) चर°, दे$_4$ वि ꕥ र° (→विचर°) दे$_{2\ 5\ 7}$ ते$_1$ तस्य (→तत्र) –d) दे॰ $_4$ ते$_1$ ह्यस्थि भित्त्वा, दे$_3$ ह्यस्ति भित्त्वा, दे$_7$ भस्थि तित्त्वा (→अस्थि भित्त्वा)

८ –a) दे$_7$ ते(गे)न (→तेन); दे$_{1\ 5\ 11}$ पुरा (→तदा) –b) शा$_1$ कारा का$_{1\ 2}$ दे$_{1\ 5\ 10\text{-}11}$ विहर्त्तुं (→द्विजातिर्) –c) शा$_1$ कारा का$_{1\ 2}$ दे$_1$ ॰ $_{5\ 10\text{-}11}$ अभिगम्य (→अभिगन्तु) दे$_3$ तथा (→महा )

९ –a) दे$_{1\ 11}$ °वतो (→°वता) शा$_1$ का$_1$ ॰ न स्वपिति न विश्रमि(का$_2$ म)ति कारा न स्वपिति विश्राम्यति, दे$_{2\ 3}$ ते$_1$ स तु तेनापि स्रवता, दे$_4$ स पूतिनापि स्रवता, दे$_{10}$ स तु तेनापि स्रवता

जगाम सर्वतीर्थानि पृथिव्यां यानि कानि च ॥ ९
ततः स कथयामास ऋषीणां भावितात्मनाम् ।
तेऽब्रुवन् ऋषयो विप्रं प्रयाह्यौशनसं प्रति ॥ १०
तेषां तद्वचनं श्रुत्वा जगाम स रहोदरः ।
ततस्त्वौशनसे तीर्थे तस्योपस्पृशतस्तदा ॥ ११
तच्छिरश्चरणं मुक्त्वा पपातान्तर्जले द्विजाः ।
ततः स विरजो भूत्वा पूतात्मा वीतकल्मषः ॥ १२
आजगामाश्रमं प्रीतः कथयामास चाखिलम् ।
ते श्रुत्वा ऋषयः सर्वे तीर्थमाहात्म्यमुत्तमम् ।
कपालमोचनमिति नाम चक्रुः समागताः ॥ १३
तत्रापि सुमहत्तीर्थं विश्वामित्रस्य विश्रुतम् ।
ब्राह्मण्यं लब्धवान् यत्र विश्वामित्रो महामुनिः ॥ १४

तस्मिंस्तीर्थवरे स्नात्वा ब्राह्मण्यं लभते ध्रुवम् ।
ब्राह्मणस्तु विशुद्धात्मा परं पदमवाप्नुयात् ॥ १५
ततः पृथूदकं गच्छेन्नियतो नियताशनः ।
तत्र सिद्धस्तु ब्रह्मर्षी रुषङ्गुर्नाम नामतः ॥ १६
जातिस्मरो रुषङ्गुस्तु गङ्गाद्वारे सदा स्थितः ।
अन्तकालं ततो दृष्ट्वा पुत्रान् वचनमब्रवीत् ।
इह श्रेयो न पश्यामि नयध्वं मां पृथूदकम् ॥ १७
विज्ञाय तस्य तद्भावं रुषङ्गोस्ते तपोधनाः ।
तं वै तीर्थे उपानिन्युः सरस्वत्यास्तपोधनम् ॥ १८
स तैः पुत्रैः समानीतः सरस्वत्यां समाप्लुतः ।
स्मृत्वा तीर्थगुणान् सर्वान् प्राहेदमृषिसत्तमः ॥ १९
सरस्वत्युत्तरे तीर्थे यस्त्यजेदात्मनस्तनुम् । वे ३

---

–b) दे$_{1}$ वेदनाभौं, दे$_{3}$ देवनार्त्तो (→वेदनार्त्तो) –d) शा$_{1}$ च (त), का$_{2}$ दे$_{2,7}$ $_{10}$ -चित् (→च)

१०. –b) दे$_{4}$ मुनीनां (→ऋषीणा), का$_{2}$ °त्मवान्,+त्मनाम्, दे$_{1}$ $_{11}$ °त्मना (→°त्मनाम्) –c) दे$_{4}$ मुनयो (→ऋषयो) दे$_{1.5\text{-}11}$ विप्राः, दे$_{2}$ $_{3}$ $_{10}$ ते$_{1}$ विप्र (→विप्र) –d) दे$_{1}$ $_{2}$ $_{11}$ प्रवाह्यौश°, दे$_{3}$ प्रयात्वोश°, दे$_{4}$ प्रयातोन°, दे$_{7}$ प्रयाहि श्रौश° (→प्रयाह्यौश°)

११ –b) शा$_{1}$ कारा का$_{1}$ $_{2}$ दे$_{1}$ $_{4}$ $_{10}$ $_{11}$ हृरोदर (→रहो दर.) –c) शा$_{1}$ का$_{2}$ ततश्चौशनसं तीर्थं, कारा प्राप्तश्चौशनस तीर्थं, का$_{1}$ तत श्रौशनस तीर्थं, दे$_{1}$ $_{5}$ $_{11}$ तज्जोशनस तीर्थं, दे$_{2}$ ते$_{1}$ तथा (ते$_{1}$ तस्य) श्रै शनस तीर्थे, दे$_{3}$ तया श्रोशोनसे ** दे$_{4}$ तत श्रोशनसे तीर्थे, दे$_{10}$ तस्य श्रोनस तीय –l) शा$_{1}$ कारा का$_{1}$ $_{2}$ ते$_{1}$ तस्याप (→तस्योप) दे$_{2}$ °स्पृस्यत, दे$_{3}$ °स्पृश(त)त (→°स्पृ शत); दे$_{4}$ तथा (→तदा)

१२ –a) दे$_{4}$ तच्छिरो जघन, दे$_{7}$ ते छिरश्चरग, मुवे तच्छिर शरर्ग (→तच्छिरश्चरण) –b) दे$_{4}$ जगामा° (→पपाता°), शा$_{1}$ का$_{1}$ दे$_{4}$ $_{5}$ ते$_{1}$ द्विज (→द्विजा) – ) दे$_{1}$ $_{5}$ $_{11}$ ततो (→तत). दे$_{1}$ $_{3}$ $_{5}$ $_{10}$ $_{11}$ ते$_{1}$ विरजा (→विरजो) कारा भूत (→भूत्वा) d) दे$_{5}$ पूता त्वावीत°, ते$_{1}$ पूतो विगत° (→पूतात्मा वीत°)

१३ –c) दे$_{2}$ $_{3}$ ते$_{1}$ श्रुत्वा ते ऋषय, दे$_{4}$ श्रुत्वा ते मुनय, दे$_{7}$ तच्छ्रुत्वा ऋषय (→ते श्रुत्वा ऋषय) दे$_{5}$ तीर्थे (→सर्वे) –d) दे$_{5}$ सर्वे (→तीर्थ-) –e) दे$_{3}$ °लोचनम् (→°मोचनम्) f–) का$_{1}$ समागत, +°गता, दे$_{4}$ समाहिता, दे$_{7}$ समागत (→समागता)

१४ –b) दे$_{1}$ $_{11}$ वि श्रुत, दे$_{7}$ सस्थितं (→विश्रुतम्) –c) दे$_{4}$ ब्राह्मग (→ब्राह्मण्य) –d) दे$_{4}$ विश्वामित्र सुविश्रुत

१५ –a) दे$_{7}$ तीर्थं नर (→तीर्थवरे) –c) दे$_{11}$ ब्राह्मग सुचि° (→ब्राह्मणस्तु वि°) –d) दे$_{4}$ वर (→पर)

१६ –b) दे$_{5}$ °ताशना (→°ताशन) –c) कारा यत्र, दे$_{2}$ $_{4}$ ते$_{1}$ यत (→तत्र) दे$_{3}$ सिद्धिस्तु (→सिद्धस्तु). शा$_{1}$ का$_{1}$ $_{2}$ दे$_{1}$ $_{7}$ $_{10}$ $_{11}$ ते$_{1}$ ब्रह्मपि, दे$_{2}$ $_{3}$ $_{5}$ ब्रह्मर्पिर् (दे$_{2}$ $_{3}$ °र्पि), दे$_{4}$ विप्रर्पिर् (→ब्रह्मर्पी) –d) दे$_{1}$ $_{11}$ सुपङ्गुर्नाम, दे$_{2}$ $_{5}$ ते$_{1}$ ऋषगुर्नाम, दे$_{7}$ रुपगो नाम, मुवे ऋषङ्गुरिति (→रुषङ्गुर्नाम)

१७ दे$_{3}$ ते$_{1}$ c–f ○ दे$_{10}$ मुवे ef ○ –a) शा$_{1}$ जातिस्मर (→जातिस्मरो) दे$_{1}$ $_{11}$ वपगुस्तु, दे$_{2}$ $_{4}$ ऋषग (दे$_{4}$ °गु) स्तु, दे$_{3}$ ऋषि गत्वा, दे$_{5}$ रुपगस्तु, ते$_{1}$ रियगुस्तु (→रुषङ्गुस्तु) –b) दे$_{4}$ °द्वार, दे$_{7}$ °द्वार (→°द्वारे), दे$_{3}$ ते$_{1}$ समास्थित, दे$_{4}$ समाश्रित, दे$_{5}$ $_{11}$ सन्नास्थिता (→सन्नास्थित) –c) दे$_{2}$ $_{7}$ °काले (→°काल) c–) शा$_{1}$ श्रेयो नु (→श्रयो न) –f) कारा का$_{1}$ न युद्ध (→नयध्व)

१८ दे$_{3}$ $_{10}$ ते$_{1}$ मुवे ○ –a) दे त तन्नाघात, दे$_{4}$ तस्य त भाव, दे$_{7}$ त तथा यात (→तस्य तद्भाव) –b) कारा का$_{1}$ रुपगास्ते, दे$_{2}$ उपगु ते, दे$_{4}$ रोशगास्ते, दे$_{7}$ नुपग ते (→रुषगोस्ते) –c) दे$_{2}$ ते (→त) –d) दे$_{1}$ $_{2}$ $_{4}$ $_{5}$ $_{7}$ °धन (→°धना)

१९ दे$_{3}$ $_{10}$ ते$_{1}$ मुवे ab ○ –a) दे$_{2}$ सहासीन, दे$_{7}$ समासीन (→समानीत) –b) शा$_{1}$ कारा का$_{1}$ समा (शा$_{1}$ म) प्लुता (→समाप्लुत) –d) शा$_{1}$ °मुत्तम, का$_{1}$ सत्तमा, दे$_{1}$ $_{5}$ $_{11}$ °सत्तमान् (→°सत्तम)

२०. दे$_{2}$ cd. ○ –a) कारा कूले, का$_{2}$ तीरे (→तीर्थे),

३६.१६ पृथूदके जप्यपरो नूनं चामरतां व्रजेत् ॥ २०
तत्रैव ब्रह्मयोन्यस्ति ब्रह्मणा यत्र निर्मिता ।
पृथूदकं समाश्रित्य सरस्वत्यास्तटे स्थितः ॥ २१
चातुर्वर्ण्यस्य सृष्ट्यर्थमात्मज्ञानपरोऽभवत् ।
तस्याभिध्यायतः सृष्टिं ब्रह्मणोऽव्यक्तजन्मनः ॥ २२
मुखतो ब्राह्मणा जाता बाहुभ्यां क्षत्रियास्तथा ।
ऊरुभ्यां वैश्यजातीयाः पद्भ्यां शूद्रास्ततोऽभवन् ॥ २३
चातुर्वर्ण्यं ततो दृष्ट्वा आश्रमस्थं ततस्ततः ।
एवं प्रतिष्ठितं तीर्थं ब्रह्मयोनीति संज्ञितम् ॥ २४
तत्र स्नात्वा मुक्तिकामः पुनर्योनिं न पश्यति ।
तत्रैव तीर्थं विख्यातमवकीर्णेति नामतः ॥ २५
यस्मिन् तीर्थे बको दाल्भ्यो धृतराष्ट्रममर्षणम् ।
जुहाव वाहनैः सार्धं तत्राबुध्यत् ततो नृपः ॥ २६

ऋषय ऊचुः ।❀

कथं प्रतिष्ठितं तीर्थमवकीर्णेति नामतः ।
धृतराष्ट्रेण राज्ञा च स किमर्थं प्रसादितः ॥ २७

लोमहर्षण उवाच ।❀

ऋषयो नैमिषेया ये दक्षिणार्थं ययुः पुरा ।
तत्रैव च बको दाल्भ्यो धृतराष्ट्रमयाचत ॥ २८

दे1.5.11 सरस्वत्यास्तु तीरे यं. –b) दे1.5.11 सत्यजेद् (→यस्त्यजेद्) –c) दे1 °कोनय° (→°के जप्य°), शा1 °पुरो (→°परो). –d) दे1.11 तेनास्य शरण भवेत्, दे3.10 नैतस्य मरणं भवेत्, दे4 5 न तस्य (दे5 तेनास्य) मरण भवेत्, दे7 नैन स्वमरणं भवेत्.

२१. दे2. O. –a) दे4 °योनीति, दे7 °योन्यस्तु (→°योन्यस्ति). –b) का1 यत्तु (→यत्र), कारा. निर्मितम्, का2 दे3.4.7 ते1 वै पुरा (→निर्मिता). –c) दे4 समासाद्य, दे7 समास्रत्य (→समाश्रित्य). –d) दे7 सरस्वत्या (→सरस्वत्या); का1.2 स्थिता, दे3.4 स्थितम् (→स्थित).

२२ –a) शा1 दे1.11 °वर्गस्य (→°वर्ण्यस्य). –b) दे1.11 आत्मदान°, दे5 चात्मज्ञान°, दे7 सात्मज्ञान° (→आत्मज्ञान°), दे4 भवेत् (→[-ऽ] भवत्). –c) दे1 5.7.11 तस्यापि ध्यायत (दे5 °त) (→तस्याभिध्यायत), दे7 तस्यासिध्ययत सृष्टि –d) शा1 °जन्मना (→°जन्मन).

२३. –a) दे2 याता (→जाता). –b) दे1 11 बाहुभ्यो (→बाहुभ्या), दे2 क्षत्रिया स्थिता, दे3 ते1 क्षत्रियास्थिता (→क्षत्रियास्तथा) –c) दे4 °जातीया (→°जातीया). –d) दे3 शूद्र (→शूद्रा), का2 दे3 ते1 ततोभवत् (→ततोऽभवन्)

२४ –a) दे1 11 चातुर्वर्णं (→चातुर्वर्ण्यं) –b) कारा. आश्रमस्थ विधिस्तत, दे1 7 आश्रमा स्थापितास्तत, दे2 4 ते1 आश्रमाणा स्थिति त (ते1 य) था, दे5 आश्रमस्थ पितास्तत. –c) दे7 प्रतिस्थित (→प्रतिष्ठित) –d) दे1 11 ब्रह्मनामेति संज्ञितम्, दे2 3 ते1 ब्रह्मयो (दे2 वो ?) निविसर्पित, दे4 ब्रह्मयानिरिति स्थित, दे7 ब्रह्मयानिस्तु ब्राह्मणा.

२५ –a) शा1 कारा. का1 2 दे1 5 11 °कामो (→°काम) –b) शा1 कारा का2 मुनिर्योनि, दे5 7 पुनर्योनि (→पुनर्योनिं)

२५ श्लोकात्पर शा1 अधिकम्—

139 * धृतराष्ट्रेण राज्ञा च............ ।

२५ श्लोकात्पर कारा. अधिकम्—

140 * धृतराष्ट्रेण राज्ञा च बकदाल्भ्य प्रसादित ।

२५ श्लोकात्पर का1 अधिकम्—

141 * धृतराष्ट्रेण राज्ञा च नियकर्महतात्मना ।

२६. –a) दे4 ते1 तस्मिन् (→यस्मिन्); कारा. बकदाल्भ्यो, दे1 चकेदाल्भ्यो, ते1 वाको दार्वो (→बको दाल्भ्यो) –b) दे2.3 ते1 राष्ट्रं वै चित्य (दे3 चित्य) धर्षणात्, दे4 धृतराष्ट्रं विचित्य वै, दे7 राष्ट्रं वैचित्रिधर्मिण, दे10 धृतराष्ट्राच्चित्यधर्पणम्, मुवे. राष्ट्रं वैचित्यधर्पणात्. –c) दे2-4 10 ब्राह्मणै (→वाहनै), दे1 11 जुहाव हव्यवाहन, ते1 जुहाव ब्राह्मणा (सर्वे) सार्धं. –d) शा1 का1.2 तत्र शुद्ध ततो नृप, कारा. तत श्राद्ध नृपेण च, दे1.11 मना बुध्येत सो नृप, दे4 तत्राबुध्य ततो नृप, दे7 तमयुज्यत्ततो नृप.

❀ शा1 ऋषय ; दे7 ऋषि.

२७. –a) दे7 प्रतिस्थित (→प्रतिष्ठित). –b) दे1.5 11 अनुकीर्णेति, दे7 अवकीर्णाति (→अवकीर्णेति). –c) का1 दे2 4 10 ते1 राज्ञा स, दे1 11 राज्ञा (स) च (→राज्ञा च), दे7 हुते राष्ट्रे द्विजो राज्ञा. –d) का1 दे2 4 10 ते1 किमर्थं न, दे7 कथ तेन (→स किमर्थं).

❀ शा1 लोमहर्षणा ; दे7 लोमहर्षणि.

२८. शा1 कारा का1 2 दे1.5 7.10 11 नै (दे5 नि) मिषेयाश्च ऋषयो. –b) दे7 दक्षिणार्थमुपाययु –c) शा1 का1 2 बकदाल्भ्योपि (→च बको दाल्भ्यो), कारा तत्रापि बकदाल्भ्योपि –d) शा1 कारा. का1 2 दे1 5.11 मथाब्रवीत्, दे4 अयाचित (→अयाचत).

का1. cd स्थाने पाठ—

142 * धृतराष्ट्र महीपालं महर्द्धिविहिताध्वरम् ।
तत्रैव चव को दाल्भ्यो मुनिमध्य उपाश्रित ।
क्षेम किमिति राजेन्द्र धृतराष्ट्रमथाब्रवीत् ।

तेनापि तत्र निन्दार्थमुक्तं पञ्चनृत तु यत् ।
तत क्रोधेन महता मामभ्युत्कृत्य तत्र ह ॥ २९
पृथूदके महातीर्थे अवकीर्णेति नामत ।
जुहाव धृतराष्ट्रस्य राष्ट्रं नरपतेस्तत ॥ ३०
हूयमाने तदा राष्ट्रे प्रवृत्ते यज्ञकर्मणि ।
अक्षीयत ततो राष्ट्रं नृपतेर्दुष्कृतेन वै ॥ ३१
तत स चिन्तयामास ब्राह्मणस्य विचेष्टितम् ।
पुरोहितेन सयुक्तो रत्नान्यादाय सर्वश ॥ ३२
प्रसादनार्थं विप्रस्य ह्यवकीर्णं ययौ तदा ।
प्रसादित स राजा च तुष्ट प्रोवाच त नृपम् ॥ ३३
ब्राह्मणा नावमन्तव्या पुरुषेण विजानता ।
अवज्ञातो ब्राह्मणस्तु हन्यात् त्रिपुरुषं कुलम् ॥ ३४
एवमुक्त्वा स नृपतिं राज्येन यशसा पुन ।
उत्थापयामास ततस्तस्य राज्ञो हिते स्थित ॥ ३५
तस्मिंस्तीर्थे तु य स्नाति श्रद्दधानो जितेन्द्रिय ।
स प्राप्नोति नरो नित्य मनसा चिन्तित फलम् ॥ ३६
तत्र तीर्थं सुविख्यात यायात नाम नामत ।
यस्येह यजमानस्य मधु सुस्राव वै नदी ॥ ३७
तस्मिन् स्नातो नरो भक्त्या मुच्यते सर्वकिल्बिषै ।
फल प्राप्नोति यज्ञस्य अश्वमेधस्य मानव ॥ ३८
मधुस्रव च तत्रैव तीर्थं पुण्यतमं द्विजाः ।
तस्मिन् स्नात्वा नरो भक्त्या मधुना तर्पयेत् पितॄन् ॥ ३९

३६.३६ तत्रापि सुमहत्तीर्थं वसिष्ठोद्वाहसंज्ञितम् । तत्र स्नातो भक्तियुक्तो वासिष्ठं लोकमाप्नुयात् ॥ ४०

इति श्रीवामनपुराणे सरोमाहात्म्ये अष्टादशोऽध्यायः ॥१८॥

# १९

ऋषय ऊचुः ॥❀
वसिष्ठस्यापवाहोऽसौ कथं वै संबभूव ह ।
किमर्थं सा सरिच्छ्रेष्ठा तमृषिं प्रत्यवाहयत् ॥ १
लोमहर्षण उवाच ॥❀
विश्वामित्रस्य राजर्षेर्वसिष्ठस्य महात्मनः ।
भृशं वैरं बभूवेह तपःस्पर्द्धाकृते महद् ॥ २
आश्रमो वै वसिष्ठस्य स्थाणुतीर्थे बभूव ह ।
तस्य पश्चिमदिग्भागे विश्वामित्रस्य धीमतः ॥ ३
यत्रेष्ट्वा भगवान् स्थाणुः पूजयित्वा सरस्वतीम् ।
स्थापयामास देवेशो लिङ्गाकारां सरस्वतीम् ॥ ४
वसिष्ठस्तत्र तपसा घोररूपेण संस्थितः ।
तस्येह तपसा हीनो विश्वामित्रो बभूव ह ॥ ५
सरस्वतीं समाहूय इदं वचनमब्रवीत् ।
वसिष्ठं मुनिशार्दूलं स्वेन वेगेन आनय ॥ ६
इहाहं तं द्विजश्रेष्ठं हनिष्यामि न संशयः ।
एतच्छ्रुत्वा तु वचनं व्यथिता सा महानदी ॥ ७

---

४०. दे5. abc ⊙. –a) दे3 °महत्तोर्थं (→°महत्तीर्थं). –b) दे2 वसिष्ठ वाह°, दे3 4 तै1 वसिष्ठोवाह°, दे7 वसिष्ठावाह° (→वसिष्ठोद्वाह°); कारा. वसिष्ठस्यापवाहकम्. –c) का1 2 दे3 10 °युतो (→°युक्तो). –d) दे1 3 11 वसिष्ठ (दे3[ष्ठ]) (→वासिष्ठ).

पुष्पिका—शा1 कारा. का1.2 दे1-3.7 10.11 तै1 इति श्री (कारा. दे1.11 तै1 {श्री}) वामनपुराणे सरोमाहात्म्ये, दे4 इति वामने सरोमाहात्म्ये, दे5 वामनपुराणे सरोमाहात्म्ये, मुवे. इति श्रीवामनपुराणे पुलस्त्यनारदसंवादे सरोमाहात्म्ये. अध्यायनाम—कारा. तीर्थयात्रानाम, अन्यत्र अध्यायनाम न वर्तते. अध्यायसंख्या—दे4 5-10.○, शा1 का1.2 त्रिशोध्याय, कारा. अष्टत्रिंशत्तमोध्याय, दे1 2 अ. ॥३७॥, दे3 ॥३८॥, दे7 षोडषोध्याय, दे11 अध्याय ॥३७॥ तै1 एकचत्वारिंश, मुवे एकोनचत्वारिंशोध्याय.

१९

१. १b 'बभूवह' इत्यस्यानन्तर c चरणमारभ्य 'बभूवह' २b इति यावत् शा1. ⊙. (द्र. सं.) –a) दे5 वसिष्ठस्य (→वसिष्ठस्या-); का2 °वादोसो, दे1.11 °वासाह्यो, दे4 °वाहो वै (→°वाहोऽसौ) –b) दे1-5.11 हिम (दे1 स) वेगो, दे7 किमर्थं तु, दे2-4.10 तै1 महावेगो (→कथं वै सं-).

❀ शा1.○ (द्र. १पा वि.), दे7 लोमहर्षणि.

२. शा1. ⊙ (द्र. १पा वि.); दे4. d ○. –a) दे3 राजर्षि (→राजर्षे) –c) दे4 बभूव ह, दे11 बभूवेह (→बभूवेह). –d) कारा. तपसैव, का1 2 तपस्ये (का2 स्ये) व, दे1 11 तपस्ये च, दे3 तपस्यार्थ-, दे7 तप सिद्धो (→तप स्पर्धा-); दे7 -कृत (→-कृते), का1.2 महान् (→महत्).

३. शा1. ab○ (द्र. १पा. वि); दे4 ab○. –a) दे2 अय (अ?) मे, दे7 तै1 आश्रमे (→आश्रमो); दे2 वशिष्ठस्य, दे7 वशिष्ठस्य (→वसिष्ठस्य) –b) दे2.3 5 तै1 °तीर्थं (→°तीर्थे), दे1 11 थाणुतीर्थं (→स्थाणुतीर्थे). –c) दे5 °भामे (→°भागे). –d) शा1 धीमता दे3 धी ❀ त, (→धीमत)

४. दे5.7. cd ⊙ (द्र. स) –a) शा1 यत्रैव, कारा यत्रेशो (→यत्रेष्ट्वा)

५ –b) दे11 त स्थित, दे2 सस्थितं (→संस्थित). –c) दे1.5 तस्येहस्यं (दे5. °स्य), दे3 तस्येह (→तस्येह). –d) दे3 विश्वामित्र (त्रो?) (→विश्वामित्रो)

६. –b) दे2 4 तै1 त्विद (→इद) –a) दे3 वसिष्ठे, दे5 ❀ शिष्ठ (→वसिष्ठ) –d) शा1 कारा. दे2 4.7.10 तै1 चानय (→आनय)

७. –a) दे1-11 इहाह्वान, दे2 3 तै1 इहानीतं, दे10 इहायान्त, मुवे. इहायात (→इहाहं त). दे10 मुनि° (→द्विज°). –d) शा1 कारा. का1 2 दे1-5.10.11 नदी किल (→महानदी).

तथा तां व्यथितां दृष्ट्वा वेपमानां महानदीम् ।
विश्वामित्रोऽब्रवीत् क्रुद्धो वसिष्ठं शीघ्रमानय ॥ ८
ततो गत्वा सरिच्छ्रेष्ठा वसिष्ठं मुनिसत्तमम् ।
कथयामास रुदती विश्वामित्रस्य तद् वचः ॥ ९
तपःक्रियाविशीर्णां च भृशं शोकसमन्विताम् ।
उवाच स सरिच्छ्रेष्ठां विश्वामित्राय मां वह ॥ १०
तस्य तद् वचनं श्रुत्वा कृपाशीलस्य सा सरित् ।
चालयामास तं स्थानात् प्रवाहेणाम्भसस्तदा ॥ ११
स च कूलापहारेण मित्रावरुणयोः सुतः ।
उह्यमानश्च तुष्टाव तदा देवीं सरस्वतीम् ॥ १२
पितामहस्य सरसः प्रवृत्ताऽसि सरस्वति ।
व्याप्तं त्वया जगत् सर्वं तवैवाम्भोभिरुत्तमैः ॥ १३
त्वमेवाकाशगा देवी मेघेषु सृजसे पयः ।
सर्वास्त्वापस्त्वमेवेति त्वत्तो वयमधीमहे ॥ १४
पुष्टिर्धृतिस्तथा कीर्त्तिः सिद्धिः कान्तिः क्षमा तथा ।
स्वधा स्वाहा तथा वाणी तवायत्तमिदं जगत् ॥ १५
त्वमेव सर्वभूतेषु वाणीरूपेण संस्थिता ।
एवं सरस्वती तेन स्तुता भगवती तदा ॥ १६
सुखेनोवाह तं विप्रं विश्वामित्राश्रमं प्रति ।
न्यवेदयत्तदा खिन्ना विश्वामित्राय तं मुनिम् ॥ १७
तमानीतं सरस्वत्या दृष्ट्वा कोपसमन्वितः ।
अथान्विषत् प्रहरणं वसिष्ठान्तकरं तदा ॥ १८ वं. ४०

८. दे2.5.ab⊙; दे1.11 cd○. –b) दे3 वेगमान-, दे7 वेप्यमाना, दे11 वय (°ह?) माना (→वेपमाना). –c) शा1 दे5.10 [-अ] वदत् (दे5 °दत्) मुद्धो, का1 [-अ] भवे (व?) त्क्रुद्धो, दे2 महाक्रुद्धो, दे7 [-अ] ब्रवीत् क्षुद्धो (→ [-अ] ब्रवीत्क्रुद्धो).

९. दे1.11.ab○ ⊙ –a) शा1 सरि (→सरित्) –c) दे3 रुदतीं, दे7 तुदती (→रुदती).

१०. –a) दे1 11 तपे, दे3.7 तत (→तप.-), का2 दे1.5.10.11 कृशा (दे5 ° शा), दे7 कृपा- (→-क्रिया-), का1 -विशीर्णश्च, दे1.10 11 -विवर्णां च, दे5 वितुणा च, दे7[-अ] वकीर्णाङ्ग (→-विशीर्णां च); दे2 3 ते1 तां कूर्मग्राह वि (ते1 °स) कीर्णां, दे4 ता कूर्मसाहस्रकीर्णां. –b) दे2 4.7 ते1 चिता-, दे11 भृशां (→भृशं); का1 दे7 °मन्वित (→°मन्विता) –c) शा1 सा, का2 दे2-4.7 10 ते1 ता (→स). –d) दे3 माहवे, दे5 मावह (→मा वह).

११. –c) शा1 कारा. का1 2 दे1.5.10.11 प्लावयामास (→चालयामास); दे10 तत् स्थान (→त स्थानात्) –d) शा1 का1.2 दे1.5.7.11 °नाम्भस, ते1 °णाम्भसां (→°णाम्भस); दे5 तथा (→तदा).

१२. –a) शा1 कारा. का1 सर्व- (→स च). –b) दे1 मैत्रावरुणि गृह्यत, दे2 3 ते1 मैत्रावरुणमप्युत (दे3 °ता) दे4 7 मैत्रावरुणिरो (दे7 °रो) ह्यत (दे4 °त). –c) दे1-3 5.7 वहमानश्च, दे4 वाह्यमानश्च, ते1 वाह्यमानश्च (→उह्यमानश्च). –d) दे5 देवी (→देवीं); दे5 सर ● ती (→सरस्वतीं)

१३. शा1 कारा. ab ⊙. –a) का1.2 शिरस, दे5 यशस्य (→सरस). –b) का2 °स्वती,+°स्वति, दे1.3 7.11 °स्वती, दे4 °स्वती (→°स्वति). –c) दे5 तथा (→त्वया). –d) दे1.11 तवैवाम्भो°, दे2 पूजिताम्भो°, दे3 ते1 पूरिताम्भो°, दे7 तत्रैवाम्भो° (→तवैवाम्भो°).

१४. –a) शा1 कारा. का1.2 दे1.10.11 कामगा, दे5 वरदा (→[-आ] काशगा); दे1 3 5.11 देवि (→देवी). –b) दे3 मघेषु (→मेघेषु); दे3 सृजते, दे5.7 सृजये (दे7 °त) (→सृजसे); दे1.11 जल, दे5 य (म?) प (→पयः). –c) दे2-5 ते1 चाप. (दे3 °पत्) (→त्वाप); शा1 कारा का1.2 सर्वान् स्नापयसि प्रीत्या, दे7 सर्वाश्चान्वत्वमेवेति. –d) दे7 त्वया (→त्वत्तो); शा1 वयोमहो (हि?), मुने वहामहे (→अधीमहे); दे2 त्वत्तो ये (मं) चाधी म(न्य)हे, दे3 ते1 त्वत्तो य मामधीवहेव.

१५ –a) शा1 का1.2 बुद्धि, दे5 तुष्टि (→पुष्टि); ते1 तदा (→तथा); कारा तुष्टि पुष्टिर्मतिर्वृत्तिः. –b) दे2.3 ते1 क्षान्तिस्मा, दे4 क्षान्ति समा, दे7 कान्तिस्मा (→कान्ति क्षमा); कारा. गति (→तथा) –c) शा1 का2 स्वाहा सुधा, का1 स्वाहा स्वधा (→स्वधा स्वाहा); कारा कीर्त्ति स्वाहा स्वधा धागी. –d) का2 त्वय्यायत्तम् (→तवायत्तम्).

१६. –a) दे5 मपेव (→त्वमेव). –d) दे1.11 तथा (→तदा).

१७ –c) शा1 निवेदयत्, दे7 नावेदयत् (→न्यवेदयत्); दे2 3 [-अ] चित्वा, दे4 गत्वा, ते1 चिन्ता (→खिन्ना).

१८ –a) शा1 कारा. का1 दे1.5.11 समा° (→तमा°) –b) दे4 कोप° (→कोप°); दे1.11 °न्विताः, दे5 °न्वितं (→°न्वित). –c) शा1 का2 ततोऽन्वेक्ष्य (शा1 °क्ष), कारा. का1 ततोन्वेक्ष्य, दे2 3 ते1 तदा पैक्षत्, दे4 मयान्वैदत्, दे7 मन्वर्षेदत् (→मयान्विषत्).

४० १९ तं तु क्रुद्धमभिप्रेक्ष्य ब्रह्महत्याभयान्नदी ।
अपोवाह वसिष्ठं तं मध्ये चैवाम्भसस्तदा ।
उभयोः कुर्वती वाक्यं वञ्चयित्वा च गाधिजम् ॥ १९
ततोऽपवाहितं दृष्ट्वा वसिष्ठमृषिसत्तमम् ।
अब्रवीत् क्रोधरक्ताक्षो विश्वामित्रो महातपाः ॥ २०
यस्मान्मा सरिता श्रेष्ठे वञ्चयित्वा विनिर्गता ।
शोणितं वह कल्याणि रक्षोग्रामणि संयुता ॥ २१
ततः सरस्वती शप्ता विश्वामित्रेण धीमता ।
अवहच्छोणितोन्मिश्रं तोयं संवत्सरं तदा ॥ २२
अथर्षयश्च देवाश्च गन्धर्वाप्सरसस्तदा ।
सरस्वतीं तदा दृष्ट्वा बभूवुर्भृशदुःखिताः ॥ २३
तस्मिंस्तीर्थवरे पुण्ये शोणितं समुपावहत् ।
ततो भूतपिशाचाश्च राक्षसाश्च समागताः ॥ २४
ततस्ते शोणितं सर्वे पिबन्तः सुखमासते ।
तृप्ताश्च सुभृशं तेन सुखिता विगतज्वराः ।
नृत्यन्तश्च हसन्तश्च यथा स्वर्गजितस्तथा ॥ २५
कस्यचित्त्वथ कालस्य ऋषयः सतपोधनाः ।
तीर्थयात्रां समाजग्मुः सरस्वत्यां तपोधनाः ॥ २६
तां दृष्ट्वा राक्षसैर्घोरैः पीयमानां महानदीम् ।
परित्राणे सरस्वत्याः परं यत्नं प्रचक्रिरे ॥ २७
ते तु सर्वे महाभागाः समागम्य महाव्रताः ।
आहूय सरितां श्रेष्ठामिदं वचनमब्रुवन् ॥ २८
किं कारणं सरिच्छ्रेष्ठे शोणितेन ह्रदो ह्ययम् ।
एवमाकुलतां यातः श्रुत्वा वेत्स्यामहे वयम् ॥ २९

---

१९ दे4 ○ –a) शा1 कारा का1 ° त मुद्ध समभि प्रश्य, दे3 त तु क्रोधामर्ति प्रेक्ष्य –c) ते1 अपोवा (व?) हत् (→अपोवाह) कारा का1 दे1 3 5.10.11 ते1 च (→त) –d) कारा नैवाम्भस, दे1 11 तस्थौ त स (त ?), दे° 3 ते1 न पयस, दे7 चाम्भसस (→चैवाम्भस), दे1 5 11 तत (→तदा) वा1 दे3 मध्येन स्वाम्भसस्तत –f) कारा वञ्चयन्ती (→वञ्चयित्वा) दे4 तु (→च)

२०. –a) शा1 ततो प्र°, कारा त चाप° (→ततोऽप°) –c) दे2 4 ते1 अगपत् (→अब्रवीत्)

२१ दे2 3 ते1 cd ○ –a) दे2 3 यस्मात्तस्मात्सरिच्छ्रे –b) दे° °र्गतो (→°र्गता) –c) दे4 कल्यागी, दे5 कल्यानि (→कल्याणि) –d) का2 रक्षोग्रा श्रेष्ठसयुता, दे4 ग्रामगी राक्षसीयुत, दे7 रक्षोगणनिपविता, मुवे रक्षोग्रामसयुता

२२ दे2 3 ते1 ab○ –c) दे5 क्षावहत् (→अवहत) –d) शा1 सवत्सरे 2 4 ते1 स (दे4 सा) त्वरित (→संवत्सर) शा1 का1 2 तथा (→तदा)

२३ –b) शा1 कारा दे° तथा (→तदा) –ab) दे7 अथ सरस्वती शप्ता विश्वामित्रेण धीमता –c) दे1 7 11 तथा दे5 तत्र (वृथा) (→तदा) –d) दे2.3 ते1 दुःखिता य (ते1 °स्त) था, दे4 दुःखिता भृश (→भृशदुःखिता)

दे7 ab, cd मध्ये अधिकम्—

143 * यक्ष देवाश्च यक्षाश्च गन्धर्वाप्सरसस्तदा ।

२४ दे4 'समुपा° शोणित २४b-२५a ○(ह स) –a) दे2 * ष्ये, दे10 रम्ये (→पुण्ये) –b) दे1 11 समुदावहम्, दे1 समुदावहत्, (→समुपावहत्) –d) का1 दे3 ते1 समुपागता (→च समागता)

२५ दे4 a ○ (द २४पा वि) b–) दे1 11 पिबत, दे2 पिबन्ते, दे10 पिबन्ति (→पिबन्त) दे2 * सते (→°मासते) –c) मुवे हृष्टाश्च (→तृप्ताश्च) दे3 4 ते1 तु (→च) शा1 कारा का1 ° दे1 5 10 11 तेन सुभृश (→सुभृश तेन) –d) शा1 कारा का1 2 सुखिनो (→सुखिता) –e) दे2 तत्तमश्च, दे3 नृत्ततश्च (→नृत्यतश्च) –f) दे3 वर्ग° (→स्वर्ग°), दे3 त्वया (→तथा)

२६ दे1 11 bcd ○ –b) दे2 4 ते1 मुनय (→ऋषय); दे° 7 तु, दे3 ते, दे3 च, ते1 सु (→स) दे10 शतयोजनात् (→सतपोधना) –d) कारा सरस्वत्या (→सरस्वत्या) दे7 शुचिव्रता (→तपोधना)

२७ दे1 11 abc○ –b) दे4 सरस्वतीं, दे5 महानदी (→महानदीम्) –c) दे° 4 ते1 परित्रातु (→परित्राणे) शा1 का2 सरस्वत्या, दे4 महानद्या (→सरस्वत्या) –d) दे3 यस्य (→पर); शा1 यत्न (→यत्न)

२८ –c) मुवे आश्रित्य (→आहूय) शा1 सरिता (→सरिता) –d) का2 दे° 4 अब्रवीत् (→अब्रुवन्)

२९ –b) शा1 का2 वृतो ह्यय का1 वृतो ह्यय,+वृतासि कं, दे3 हृतोत्यय, दे5 हृदो स्वय, दे11 हृदोह्य (→हृदो ह्यय) कारा शोणितेनावृता ह्यसि दे° सेविता नोदरस्य च दे4 सेविता नादर स्वय, ते1 सेविता नो धरस्यच –c) शा1 का1 2 ते1 याता, कारा दे3 याता, दे1 5 11 यात, दे2.7 या (दे7 जा) ता, दे4 याती, दे10 यात ,+जात (→यात) –d) शा1 का° पश्यामहे, कारा का1 दे° 4 10 ते1 पृच्छामहे, दे7 वक्ष्यामहे, (→वेत्स्यामहे)

ततः सा सर्वमाचष्ट विश्वामित्रविचेष्टितम् ।
ततस्ते मुनयः प्रीताः सरस्वत्यां समानयन् ।
अरुणां पुण्यतोयौघां सर्वदुष्कृतनाशनीम् ॥ ३०
दृष्ट्वा तोयं सरस्वत्या राक्षसा दुःखिता भृशम् ।
ऊचुस्तान् वै मुनीन् सर्वान् दैन्ययुक्ताः पुनः पुनः ॥ ३१
वयं हि क्षुधिताः सर्वे धर्महीनाश्च शाश्वताः ।
न च नः कामकारोऽयं यद् वयं पापकारिणः ॥ ३२
युष्माकं चाप्रसादेन दुष्कृतेन च कर्मणा ।
पक्षोऽयं वर्धतेऽस्माकं यतः स्मो ब्रह्मराक्षसाः ॥ ३३
एवं वैश्याश्च शूद्राश्च क्षत्रियाश्च विकर्मभिः ।
ये ब्राह्मणान् प्रद्विषन्ति ते भवन्तीह राक्षसाः ॥ ३४

योषितां चैव पापानां योनिदोषेण वर्द्धते ।
इयं संततिरस्माकं गतिरेषा सनातनी ॥ ३५
शक्ता भवन्तः सर्वेषां लोकानामपि तारणे ।
तेषां ते मुनयः श्रुत्वा कृपाशीलाः पुनश्च ते ॥ ३६
ऊचुः परस्परं सर्वे तप्यमानाश्च ते द्विजाः ।
क्षुतकीटावपन्नं च यच्चोच्छिष्टाशितं भवेत् ॥ ३७
केशावपन्नमाधूतं मारुतश्वासदूषितम् ।
एभिः संसृष्टमन्नं च भागं वै रक्षसां भवेत् ॥ ३८
तस्माज्ज्ञात्वा सदा विद्वान् अन्नान्येतानि वर्जयेत् ।
राक्षसानामसौ भुङ्क्ते यो भुङ्क्ते अन्नमीदृशम् ॥ ३९ वें ४०

---

३०. –a) दे3 4 ते1 थाचष्ट (→आचष्ट) –b) कारा विश्वामित्रस्य चेष्टित –d) दे1 5 10 11 सरस्वत्या, दे3 ते1 सरस्वतीं (→सरस्वत्या) दा1 का1 दे3 समानयत, दे10 समागमम (→समानयन्) –e) दे4 अरुण्यां (→अरुणां) –f) दा1 कारा का1 दे2 °नाशिनोम् (→°नाशनीम्)

३१. –b) दे5 दुःकृता (→दुःखिता) दा1 दुःखिता भृशम् (→दुःखिता भृशं) –c) दे2 3 ते1 ताश्च (→तान् वै) दे2 4 ते1 दैत्या (→सर्वान्) –d) दा1 कारा का1 2 दे10 दैत्य दे1 11 दैत्ये, दे7 नित्य (→दैन्य) दे7 °तृप्ता (→°युक्ता); दे2 4 ते1 भ युक्तास्ते पुन पुन

३२. –a) दे4 च (→हि) –c) दा1 कारा का1 2 न चन्य, दे3 वचन, दे5 न4नु, दे7 न च तत, ते1 न च व (→न च न) –d) दे5 कार्म° (→पाप°) दे4 °चारिण (→°कारिण)

३३. –a) दा1 कारा का1 2 दे1 5 10-11 ते1 च (→चा) –b) दे1 2 4 5 7 11 दुःकृतेन (→दुष्कृतेन) –c) ना1 पक्षि (→पक्षो), दे7 यक्षो गान्धर्वं (→पक्षोऽयं वर्ध) –d) दा1 का1 2 यतो (का1 °त) स्म, दे1 11 यय च, दे2-4 ते1 यत स्यु, दे5-10 यतश्च, दे7 यतस्माद् (→यत स्मो); दा1 °राक्षस (→°राक्षसा)

३४. –b) दे3-4 ते1 चेति (→च वि) –c) दा1 कारा प्रदु (कारा °दु) ष्यन्ति (→प्रद्विषन्ति) दे 4 7 ते1 ब्राह्मणान् ये (दे7 वै) द्विषन्तीह (दे7 ये) –d) दा1 ये (→ते) दा1 का2 हि, दे1 [-इ]ह (च) (→[इ]ह).

३४ श्लोकान्तर दे1 5.10-11 ते1 अधिकम् —
144*आचार्यं मातरं चैव पितरं ये द्विषन्ति ह ।
वृद्धानामवमानेन ते भवन्तीह राक्षसाः ।

[1–) दे11 आचार्य (→आचार्यं) दे2 4 ते1 जननीं (→मातरं) दे3 ते1 हि (→ह), दे4 पापानि यानि दोषाद् भवन्तिह –2) दे3 अन° (→अव°), दे11 भवति हि (→भवन्तीह) ]

३५ ना1 कारा का2 दे1 5 7 10.11 ते1 cd ○ –b) दे7 योषिद्° (→योनि°) दे7 वर्धता (→वर्धते)

३६ –b) दे7 भव (→अपि) –d) दे7 ये (→ते)

३७ दे10 cd○ –a) कारा का1 सर्वे (→सर्वे) –b) दे2 4 7 यजमाना (दे7 °न) श्च, ते1 यजमानस्य (→तप्यमानाश्च) c) दा1 का2 दे1 11 क्षत, कारा का1 क्षुत, दे2 कृत, दे7 क्षुर (→क्षुत) ना1 °श्वपन्न (→°वपन्न) –d) दे1 11 यच्चोच्छिष्टानि°, दे4 यच्चोद्दिष्टोपि°, मुद्रे यच्चाशिष्टानि° (→यच्चोच्छिष्टानि°)

३८ ना1 कारा ab○ दे10 a ○ –a) का2 केशा, दे2 काशा (→केशा) दे3 थाधूत, दे7 साधूत (→आधूत) –b) का1 2 °श्वासमुद्भव दे1 11 °श्वानवद्भवेत (→°श्वासदूषित) दे2 4 ते1 मा (दे3 म) रुतापि च यद्भवेत, दे7 मानुष्यमपि यद् भवत –c) दा1 कारा का1 2 पुभि, दे10 एतैं (→एभिः); कारा का1 दे2 3 5.7 10 ते1 संसृष्ट° (→संसृष्ट°); दे7 यद् (→च) –d) दे2 4 7 10 ते1 भागो (→भागं) दा1 कारा का1 दे2 राक्षस, का दे4 10 राक्षसो (→रक्षसां)

३९ –a) कारा का1 ज्ञात, दे1 ज्ञाता, ते1 यत्नाद् (→ज्ञात्वा); दे7 विप्रा (→विद्वान्) –b) दा1 का2 सतोन्येतानि, का1 सतोन्येतानि, +अन्नान्येतानि दे1 10 ते1 तान्येतानि वि (ते1 च) (→अन्नान्येतानि) –c) का2 दे4-7 राक्षसान्नं (→राक्षसानाम्); दे2-4 ते1 राक्षसान् वै भोजयते –d) दा1 कारा का1 2 चान्नं दे2-4-7 10 ते1 ह्यन्नम्, दे5-अन्नम्, मुद्रे स्वयं (→अन्नम्)

जरायुजाण्डजाश्चैव स्वेदजोद्भिदजाश्च ये ।
त्वमेव देवदेवेश भूतग्रामश्चतुर्विधः ॥ १०६
स्रष्टा चराचरस्यास्य पाता हन्ता तथैव च ।
त्वामाहुर्ब्रह्म विद्वांसो ब्रह्म ब्रह्मविदां गतिम् ॥ १०७
मनसः परमज्योतिस्त्वं वायुर्ज्योतिषामपि ।
हंसवृक्षे मधुकरमाहुस्त्वां ब्रह्मवादिनः ॥ १०८
यजुर्मयो ऋङ्मयस्त्वामाहुः साममयस्तथा ।
पठ्यसे स्तुतिभिर्नित्यं वेदोपनिषदां गणैः ॥ १०९
ब्राह्मणाः क्षत्रिया वैश्याः शूद्रा वर्णावराश्च ये ।
त्वमेव मेघसंघाश्च विद्युतोऽशनिगर्जितम् ॥ ११०
संवत्सरस्त्वमृतवो मासो मासार्धमेव च ।
युगा निमेषाः काष्ठाश्च नक्षत्राणि ग्रहाः कलाः ॥ १११
वृक्षाणां ककुभोऽसि त्वं गिरीणां हिमवान् गिरिः ।
व्याघ्रो मृगाणां पततां तार्क्ष्योऽनन्तश्च भोगिनाम् ॥ ११२
क्षीरोदोऽस्युदधीनां च यन्त्राणां धनुरेव च ।
वज्रं प्रहरणानां च व्रतानां सत्यमेव च ॥ ११३
त्वमेव द्वेष इच्छा च रागो मोहः क्षमाक्षमे ।
व्यवसायो धृतिर्लोभः कामक्रोधौ जयाजयौ ॥ ११४ ह. ४७

---

१०६. –a) कारा. जरायुजो-, दे1 3.7.10 ते1 जरायुजा, दे3 जरा युजा (→जरायुजा-). दे1 3.5.10 चाण्डजाश्च, दे7 चैव ●● (→–ण्डजाश्चैव). –b) दे1 3 स्वेदोद्भिजाय ते नम, दे4 स्वेदजा उद्भिदाश्च ये, दे5 10 स्वेदोद्भिजाश्च ते नम, दे7 स्वेदोद्भुद जाश्चैव अण्डजा, ते1 स्वेदोदभवाय नम. –d) दे5 °विधा (→°विध); दे7 भूतग्राम चतुर्विधम्

१०७. –b) कारा दे11 हर्ता (→हन्ता); दे4 हन्ता पाता, दे7 प्रतिहर्त्ता (→पाता हन्ता) –c) दे7 ब ●●●● (→ब्रह्म-विद्वांसो). –d) दे1 4 10 ते1 पर (दे2 3°र) ब्रह्मविदा गतिः, दे7 ●●●● विदां गति, दे5 11 त्वं च ब्रह्मविदा गति.

१०८. –a) कारा मानस, दे4 तमसा (→मनस); शा1 दे7 11 परमा, का2 दे1 2 ते1 परमं (दे2 °म) (→परम-). दे7 योनि (→ज्योति). –b) दे1 5 10-11 ते1 ज्योतित्व ज्योतिषामपि (दे5-11 °षि), दे7 सभायुर्ज्योतिषामपि –c) शा1 का2 दे4 7 11 ते1 हसो, कारा हंसं (→हंस) शा1 का दे 4 7 10-11 ते1 वृक्षो, कारा वृक्षं, दे1 2 वृक्षा, ते1 वृक्ष्यो (→-वृक्षे) मुवे मधुकर (→मधुकर). –d) मुवे प्राहु (→माहु)

१०८ श्लोकात्परं कारा. का2 दे8 अधिकम्—

184 * गायन्ति त्वा सुरश्रेष्ठ सामगा ब्रह्मवादिनः ।

१०९. –a) दे1-3 ते1 यजोष्टक- (ते1 °र), दे4 5-10-11 यजोष्टका (→यजुर्मयो)। दे1 3 10 ते1 धेष्टकश्च, दे4 षेष्टकस्य, दे5 षिष्टकश्च (→ऋङ्मयस्त्वाम्); कारा. का1 यजुर्मय-मृङ्मयंस्त्वा, दे7 यजुर्मयो ऋग्मयश्च –b) कारा का1 साममय (→साममयस्)। दे1-4 ते1 त्वामाहुर्मुनयस्तथा, दे5 10-11 त्वमाहु-तिमयस्तथा, दे7 सामस्तुतिमयस्तथा. –c) दे7 मध्यमे, ते1 यदा स (→पठ्यसे); दे5-11 प्रार्थ्यते (दे5 °से) स्तुतिभिर्नित्य (दे °त्वां) –d) दे5-11 व (दे5 च) स्वयो° (→वेदो°)

१०९ परं दे2 ab, cd मध्ये अधिकम्—

185 * यजुर्मयोऽऋङ्मयश्च क्षमाक्षितिमयस्तथा ।

११० –b) शा1 कारा. का1 दे4 5-11 -नराश्च, दे2 नराश्च (→-वराश्च), दे7 तथा (→च ये) –d) का1 विद्युते (°तो) शनि-, दे1-3 ते1 विद्युच्चैव तु, दे7 विद्युत्स्तनित-(→विद्युतोशनि-).

१११ –a) दे7 ऋतवो (→ऋतवो). –b) दे4 मासा (→मासो); दे5 मासार्द्ध- (→मासार्द्ध), दे4 तु (→च) –c) दे5-11 युगादिमेषा (दे11 °षा), दे7 युगानिमेष- (→युगा निमेषा), दे7 काष्ठानि (→काष्ठाश्च) –d) दे7 ग्रहास्तथा, ते1 महावला, मुवे. ग्रहा बला (→ग्रहा कला)

१११ श्लोकात्परं कारा अधिकम्—

186 * क्षणोमुहूर्त्तोऽहोरात्र विषुव सङ्क्रमस्तथा ।

११२ –a) शा1 कारा का1 2 ककुदोसि, दे3 ककुतोसि, दे11 ककुम्भासि (→ककुभोऽसि). –b) ते1 हि भवान् (→हिमवान्). –c) दे7 व्याघ्रो मृगमृगाणा (ना) च –d) शा1 कारा. का1 तार्क्षो, दे1-3 तक्षो (→तार्क्ष्यो); दे2 भोगिन (→भोगिनाम्), दे4 तार्क्ष्यो नागश्च भोगिनाम्

११३. दे3.cd○ a) शा1 कारा. का1.2 क्षीरोदश्चो°, दे3 क्षीरोदाम्बु°, दे5 ते1 क्षीरोदो ह्यु°, दे11 क्षीरोदोम्बु° (→क्षीरोदोस्यु°), कारा त्वं, दे4 तु (→च) –b) दे3 यथाना, ते1 मन्त्राणां (→यन्त्राणां); दे4 तु, दे वा (→च) –c) शा1 कारा का1 2 चक्र, दे2 वज्र, ते1 चन्द्रा (→वज्र); कारा त्व, दे4 तु (→च). –d) दे2 मेतानां (→व्रतानां) दे1 तु (→च).

११४ –a) दे4 तमेवा दे11 त्वमेवा- (→त्वमेव); दे4 त्वमेव च द्वेष इच्छा. –b) शा1 दे4.10 ते1 मोहः, दे1 2.3.5 मोह- (दे7 °हो) (→मोह); कारा. -क्षमा, का1.2 क्षया, दे3 -क्षम, दे11 -क्षमो (मो ?) (→ -क्षमे)

११४ त्वं शरी त्वं गदी चापि खट्वाङ्गी च शरासनी ।
छेत्ता भेत्ता प्रहर्ताऽसि मन्ता नेता सनातनः ॥ ११५
दशलक्षणसंयुक्तो धर्मोऽर्थः काम एव च ।
समुद्राः सरितो गङ्गा पर्वताश्च सरांसि च ॥ ११६
लतावल्ल्यस्तृणौषध्यः पशवो मृगपक्षिणः ।
द्रव्यकर्मगुणारम्भः कालपुष्पफलप्रदः ॥ ११७
आदिश्चान्तश्च वेदानां गायत्री प्रणवस्तथा ।
लोहितो हरितो नीलः कृष्णः पीतः सितस्तथा ॥ ११८
कद्रुश्च कपिलश्चैव कपोतो मेचकस्तथा ।
सवर्णश्चाप्यवर्णाश्च कर्ता हर्ता त्वमेव हि ॥ ११९
त्वमिन्द्रश्च यमश्चैव वरुणो धनदोऽनिलः ।
उपप्लवश्चित्रभानुः स्वर्भानुर्भानुरेव च ॥ १२०
शिक्षाहौत्रं त्रिसौपर्णं यजुषां शतरुद्रियम् ।
पवित्रं च पवित्राणां मङ्गलानां च मङ्गलम् ॥ १२१
तिन्दुको गिरिजो वृक्षो मुद्गं चाखिलजीवनम् ।
प्राणाः सत्त्वं रजश्चैव तमश्च प्रतिपत्पतिः ॥ १२२
प्राणोऽपानः समानश्च उदानो व्यान एव च ।
उन्मेषश्च निमेषश्च क्षुतं जृम्भितमेव च ॥ १२३
लोहितान्तर्गतो दृष्टिर्महावक्त्रो महोदरः ।
शुचिरोमा हरिश्मश्रुरूर्ध्वकेशश्चलाचलः ॥ १२४

---

११५ –a) शा1 कारा का1 2 रथी, दे3 5 शरीर (→शरी) –b) शा1 कारा का1 ॰ त्व (→च) दे5 वरासनी (→शरासनी); दे7 खटवाङ्गी भर्थरी रथी –c) दे4 भर्त्ता, दे5 भेता (→भेत्ता), दे7 भेत्ता छेत्ता (→छेत्ता भेत्ता) दे1 3 ते1 प्रहर्त्ता च (→प्रहर्त्तासि) –d) शा1 का1 भर्त्ता भर्त्ता, कारा भर्त्ता धर्त्ता, का2 भोक्ता भर्त्ता (→मन्ता नेता)

११६ –a) दे10 °लक्षग (→°लक्षण) –b) शा1 दे1 2 7 11 ते1 धर्मार्थ, का॰ धर्मार्थौ, दे5 धमाया (→धर्मोर्थ) दे7 काम (→काम) –c) शा1 सरिता (→सरितो) –d) दे4 पर्वता स, दे7 पल्वलानि (→पर्वताश्च)

११७ –a) दे1 °वल्या, दे5 °वल्य, ते1 °वल्लि (→°वल्य) शा1 दे5 10 तृणौपध्या, ते1 तृ ••• (→तृणौषध्य) –b) दे5 °पक्षिग (→°पक्षिण-) –c) दे1 4 10 ते1 पृथु, दे5 द्रव्य (→द्रव्य) कारा -वेश्म (→-कर्म) –d) शा1 कारा का1 2 दे10 ते1 काल (→काल) शा1 दे11 प्रग, दे7 प्र॰ (→प्रद)

११८ –a) दे5 चान्तस्य (→चान्तश्च), दे11 देवाना (→वेदाना) –b) ते1 तदा (→तथा) –c) दे4 रोहितो (→लोहितो) दे7 रोहितो (→हरिता) –d) कारा सितोसित (→सितस्तथा)

११९ –a) शा1 कारा का1 ॰ कबुर, दे3 कद्रुश्च, दे4-5 11 कद्रुश्च (दे4 °र्थ), दे7 विभुश्च (→कद्रुश्च) –b) दे1 मावक्स् (→मेचकम) शा1 का1 2 कपातासि वक्स्तथा, कारा कपोतोसि बक दुक. –c) कारा का1 2 दे5 11 सु (का॰ स्व) वर्णन् (→सवर्ण); दे चाय (→चाप्य) –d) दे7 वर्णकर्त्ता (→कर्त्ता हर्त्ता); दे7 च (→हि)

१२० –b) दे11 • रुणो (→वरुणो) दे7 11 धनदो-नल (→धनदोनिल) –c) दे1 3 10 ते1 तत्र भानु, दे4 चात्र भानु (→चित्रभानु) शा1 उपप्लुतश्चित्रभानु –d) दे5 •• रेव (→भानुरेव)

१२१ दे1 3 ते1 १२१a–१२३b यावत् ○ (द्र स) –a) शा1 का1 शिक्ष्या, दे10 शिष्या (→शिक्षा) कारा दे5 10 होत्र (→हौत्र) शा1 कारा का1 त्रिसोवर्णं (→त्रिसौपर्णं); दे7 शिक्षा हि त्व च सोपर्गं –b) दे4 याजुष (→यजुषा)

१२२ दे1 3 ते1 ○ (द्र १२१ पा वि) –a) दे5 दक्षो (→वृक्षो) दे7 टिङ्कुको गिरिको वृक्ष –b) शा1 का1 मुद्ग वा, दे7 मुद्गलो (→मुद्गं चा); शा1 दे5 जीविनाम्, दे7 -जीवक, दे11 -जीविनम् (→-जीवनम्) –c) दे7 प्राण (→प्राणा) दे4 11 सत्त्व- (→सत्त्व) –d) शा1 का1 ॰ दे5 प्रतिपद्यते (दे5 °पद्यति), कारा प्रतिपठ्यसे दे॰ प्रतिमुच्यते, दे11 प्रतिपद्युति (→प्रतिपत्पति)

१२३ दे1-3 ते1. ab ○ (द्र १२१ पा वि) दे॰ cd ○ –a) दे5 7 11 प्राणोपान (→प्राणोपान) –b दे5 उनान, दे10 11 उनान (→उदानो) शा1 व्यानमेव (→व्यान एव) –c) ते1 उन्मेषस्य (→उन्मेषश्च). –d) ते1 •• (→क्षुत) शा1 का1 ॰ वा (→च)

१२४ –a) शा1 कारा का2 लोहिता (कारा त) र्गतो (का1 °त, कारा °गो) दृष्टिर्, दे7 लोहितागतोद्दृष्टिर्, दे10 लोहितान्तर्गता दृष्टि, ते1 लाहितान्तर्गतो दृष्टिर् –b) दे7 महावक्त्रो (→महावक्त्रो) –c) शा1 कारा का1 ॰ शाव°, दे2 10 सूची°, दे3 5 शुची°, दे4 सूची° (→शुचि°) ते1 •••• (→हरिश्मश्रुर्)

गीतवादित्रनृत्यज्ञो गीतवादित्रकप्रियः ।
मत्स्यो जालो जलौकाश्च कालः केलिकला कलिः ॥ १२५

अकालश्च विकालश्च दुष्कालः काल एव च ।
मृत्युश्च मृत्युकर्त्ता च यक्षो यक्षभयंकरः ॥ १२६

संवर्त्तकोऽन्तकश्चैव संवर्त्तकबलाहकः ।
घण्टो घण्टी महाघण्टी चिरी माली च मातलिः ॥ १२७

ब्रह्मकालयमाग्नीनां दण्डी मुण्डी त्रिमुण्डधृक् ।
चतुर्युगश्चतुर्वेदश्चातुर्होत्रप्रवर्त्तकः ॥ १२८

चातुराश्रम्यनेता च चातुर्वर्ण्यकरस्तथा ।
नित्यमक्षप्रियो धूर्त्तो गणाध्यक्षो गणाधिपः ॥ १२९

रक्तमाल्याम्बरधरो गिरिको गिरिकप्रियः ।
शिल्पं च शिल्पिनां श्रेष्ठः सर्वशिल्पप्रवर्त्तकः ॥ १३०

भगनेत्राङ्कुशश्चण्डः पूष्णो दन्तविनाशनः ।
स्वाहा स्वधा वषट्कारो नमस्कारो नमो नमः ॥ १३१

गूढव्रतो गुह्यतपास्तारकास्तारकामयः ।
धाता विधाता संधाता पृथिव्या धरणोऽपरः ॥ १३२ वं. ४७.

१२५. –a) दे$_{11}$ गति- (→गीत-), शा$_{1}$ -वाद्यत्र (→-वादित्र-), का$_{1}$ दे$_{11}$ ते$_{1}$ नृत्तज्ञो (→-नृत्यज्ञो) –b) दे$_{3}$ वादित्रब (→-वादित्रक-), दे$_{1.3}$ $_{10}$ ते$_{1}$ -प्रिय (→ प्रिय), दे$_{7}$ गिरिवादनकप्रिय. –c) शा$_{1}$ का$_{1}$ मत्स्या, ते$_{1}$ मच्छो (→मत्स्यो) दे$_{4.7.10}$ ते$_{1}$ जलो, दे$_{5}$ जला (→जालो); शा$_{1}$ कारा. का$_{1}$ $_{2}$ दे$_{4}$ $_{5.11}$ जलं का (का$_{2}$ °का) च (→जलौकाश्च) दे$_{7}$ मत्स्यो जाला जले याज्यो –d) शा$_{1}$ कल, दे$_{7}$ नल, दे$_{10}$ काल- (→काल); शा$_{1}$ कोलि-, कारा का$_{1.2}$ दे$_{1}$ $_{2}$ ते$_{1}$ केलि, दे$_{3}$ कोल, दे$_{4}$ किलि- (→केलि-). का$_{2}$ कल, दे$_{4}$ ꣹ ता-, दे$_{7}$ किला (→ -कला), शा$_{1}$ कारा कल, का$_{1.2}$ किल, दे$_{4}$ रव (→कलि)

१२६ –a) दे$_{3}$ अकामश्च (→अकालश्च). दे$_{7}$ अकालश्चापि कालश्च –b) शा$_{1}$ दुष्काल-, दे$_{5.11}$ दु काल-, दे$_{1.3.4}$ $_{7}$ दु काल (→दुष्काल), दे$_{7}$ कालनाशन (→काल एव च) –c) दे$_{1}$ मृत्युमृत्युश्च कर्त्ता च, दे$_{5}$꣹꣹꣹ मृत्यु का (क ?)र्ता च, दे$_{7}$ मृत्यु मृत्युश्च कृत्यश्च, दे$_{11}$ मृत्युश्च मृत्युकान्ता च –d) शा$_{1}$ कारा पक्षो (शा$_{1}$ °क्षे) (→यक्षो) दे$_{1}$ $_{2}$ $_{5}$ $_{10}$ ते$_{1}$ यज्ञो यज्ञ(दे$_{5}$°क्ष)भयङ्कर.

१२७ दे$_{2}$ ते$_{1}$ d ○. –a) दे$_{7}$ संवर्त्तकोन्तकश्चैव –b) शा$_{1}$ दे$_{11}$ °बलाहका, दे$_{1-3.7}$ °बलाहकै (→°बलाहक). –c) शा$_{1}$ घण्टाघण्टो?, कारा का$_{1}$ $_{2}$ घण्टाघण्टो, दे$_{1.7}$ घटोघटा, दे$_{3}$ घण्टा घण्टा, ते$_{1}$ ꣹꣹꣹ घट (→घण्टोघण्टी); दे$_{3}$ ते$_{1}$ महाघण्टा, दे$_{4}$ ꣹꣹꣹꣹ (→महाघण्टी). –d) कारा वेग-, का$_{1}$ वीरो, मुत्रे. चरो (→चिरी); शा$_{1}$ का$_{2}$ चिरा (का$_{2}$ °री) मालीव मातलि, दे$_{1}$ घण्टारावस्वमेव हि, दे$_{7}$ चारमं लिवनावलि.

१२८. –a) दे$_{2}$ ꣹꣹꣹꣹, दे$_{7}$ °ययामिन (?) (→°यमाग्नीनां). –b) दे$_{2}$ ꣹꣹꣹꣹ (→दण्डी मुण्डी); शा$_{1}$ कारा का$_{1}$ $_{2}$ त्रिदण्डधृक् (कारा °धृत), दे$_{5}$ त्रिदण्डधृक् दे$_{7}$ त्रिशूलभृत्, दे$_{11}$ त्रवर्गधृक् (→त्रिमुण्डधृक्) –c) शा$_{1}$ कारा का$_{1}$ $_{2}$ चतुर्योगश्च, ते$_{1}$ ꣹꣹꣹ गश् (→चतुर्युगश्), शा$_{1}$ कारा का$_{1.2}$ चतुर्थं (शा$_{1}$- °र्थो, कारा. °र्था) हश् (→चतुर्वेदश्). –d) दे$_{2.3.7}$ चतुर्° (→चातुर्°), शा$_{1}$ °प्रवर्त्तका, दे$_{5}$ °प्रवर्त्तक (→°प्रवर्त्तक).

१२९ –a) शा$_{1}$ कारा. का$_{1}$ चतुराश्रम्य°, दे$_{7.11}$ च (दे$_{11}$ चा°) तुराश्रम° (→चातुराश्रम्य°). –b) शा$_{1}$ कारा. का$_{1}$ $_{2}$ चातुर्होत्र°, दे$_{4}$ $_{5.10}$ $_{11}$ चातुर्वर्ण° (दे$_{11}$ °र्णा) (→चातुर्वर्ण्य°) –c) दे$_{1-3}$ $_{10}$ ते$_{1}$ नित्यलक्ष°, दे$_{4}$ नित्यलक्ष (ण°) दे$_{5}$ नित्यभक्त°, दे$_{7}$ नित्यक्रम° (→नित्यमक्ष°); शा$_{1}$ कारा. का$_{1}$ $_{2}$ मूर्त्तिर्, दे$_{1}$ $_{5.10}$. ते$_{1}$ मूर्त्तो (→धूर्त्तो) –d) दे$_{5}$ गणाधिकं (पर) (→गणाधिप).

१३०. –a) ते$_{1}$ °माल्याम्ब ꣹꣹꣹ (→°माल्याम्बरधरो). –b) शा$_{1}$कारा. का$_{1.2}$ गिरीशो, दे$_{4}$ गैरिको, ते$_{1}$ ꣹꣹꣹ (→गिरिको). कारा. दे$_{1}$ $_{2}$ $_{10}$ गैरिक-, दे$_{4}$ गैरिक ते$_{1}$ गौरक- (→गिरिक-); –c) शा$_{1}$ शल्पं च (?), दे$_{7}$ शिल्पिव, दे$_{11}$ शिल्पीकै (?), मुद्रे. शिल्पी च (→शिल्पं च), शा$_{1}$ शल्पिना, दे$_{11}$ शिल्पिका (→शिल्पिना); दे$_{5}$ श्रेष्ठ, दे$_{11}$ श्रेष्ठ (→श्रेष्ठ) –d) दे$_{3.7}$ ते$_{1}$ °शिल्पि° (→°शिल्प°). शा$_{1}$ कारा का$_{1}$ $_{2}$ °प्रबोधक (→°प्रवर्त्तक).

१३१ –a) दे$_{1}$ $_{3}$ शम्भु (→चण्ड), दे$_{4}$ भाजनशंकुशश्च, ते$_{1}$ भगनेत्रा ꣹꣹꣹꣹ –b) का$_{2}$ पूष्णोर्-, दे$_{4}$ पूर्णा (→पूष्णो), दे$_{7}$ -दक° (→दन्त°) दे$_{11}$ °विनाशन (→°विनाशन) –c) दे$_{1}$ $_{3}$ स्वाहाकार (→स्वाहा स्वधा-), ते$_{1}$ °कारं (→°कारो). –d) ते$_{1}$ नमस्कार (→नमस्कारो)

१३२. –a) दे$_{1-3}$ मूढव्रतो, दे$_{7}$ गूढघातो, ते$_{1}$ ꣹꣹꣹ तो (→गूढव्रतो), शा$_{1}$ कारा. का$_{1.2}$ दे$_{7}$ गूढतपास् (→गुह्यतपास्). –b) दे$_{1}$ $_{3}$ स्मारकस् (→तारकास्) –d) शा$_{1}$ का$_{1}$ $_{2}$ दे$_{7}$ पृथिव्यां (→पृथिव्या), शा$_{1}$ का$_{2}$ °धरणो यमा (का$_{2}$ °म), कारा. का$_{1}$ धरणोरम, दे$_{3.4.10}$ ते$_{1}$ धरणो पर (दे$_{4}$ °म), दे$_{5.11}$ धरणोरम (दे$_{11}$ °म) (→धरणोपर.)

१३२ ब्रह्मा तपश्च सत्यं च व्रतचर्यमथार्जवम् ।
भूतात्मा भूतकृद् भूतिर्भूतभव्यभवोद्भवः ॥ १३३
भूर्भुवः स्वर्ऋतं चैव ध्रुवो दान्तो महेश्वरः ।
दीक्षितोऽदीक्षितः कान्तो दुर्दान्तो दान्तसंभवः ॥ १३४
चन्द्रावर्त्तो युगावर्त्तः संवर्त्तकप्रवर्त्तकः ।
बिन्दुः कामो ह्यणुः स्थूलः कर्णिकारस्रजप्रियः ॥ १३५
नन्दीमुखो भीममुखः सुमुखो दुर्मुखस्तथा ।
हिरण्यगर्भः शकुनिर्महोरगपतिर्विराट् ॥ १३६
अधर्महा महादेवो दण्डधारो गणोत्कटः ।
गोनर्दो गोप्रतारश्च गोवृषेश्वरवाहनः ॥ १३७
त्रैलोक्यगोप्ता गोविन्दो गोमार्गो मार्ग एव च ।
स्थिरः श्रेष्ठश्च स्थाणुश्च विक्रोशः क्रोश एव च ॥ १३८
दुर्वारणो दुर्विषहो दुःसहो दुरतिक्रमः ।
दुर्द्धर्षो दुष्प्रकाशश्च दुर्दर्शो दुर्जयो जयः ॥ १३९
*शशाङ्कानलशीतोष्णः क्षुत्तृष्णा च निरामयः ।*
आधयो व्याधयश्चैव व्याधिहा व्याधिनाशनः ॥ १४०
समूहश्च समूहस्य हन्ता देवः सनातनः ।
शिखण्डी पुण्डरीकाक्षः पुण्डरीकवनालयः ॥ १४१
त्र्यम्बको दण्डधारश्च उग्रदंष्ट्रः कुलान्तकः ।
विषापहः सुरश्रेष्ठः सोमपास्त्वं मरुत्पते ।

---

१३३. –b) दे$_5$ व्रतचर्याम् (→व्रतचर्यम्) ते$_1$ अथा हविम् (→मथार्जवं) –c) दे$_4$ तातात्म (भूतात्म ?) (→भूतात्मा), दे$_{10}$ भूति° (→भूत°), शा$_1$ कारा का$_{1\,2}$ दे$_{11}$ भूमिर्, दे$_7$ भूतो (→भूतिर्) –d) दे$_4$ °भवोद्भव (→°भवोद्भव )

१३४ –a) दे$_{5\,11}$ भुवश्च(→भुव स्वर्); दे$_4$ श्रुत, दे$_5$ कृत (→ऋतं) –b) दे$_{1\,3}$ ते$_1$ भुवो (→ध्रुवो), दे$_7$ [ उ] दतो, ते$_1$ दान्ति (→दान्तो); दे$_5$ महीश्वर. (→महेश्वर ) –c) दे$_4$ दक्षिणतो (→दीक्षित ); शा$_1$ कारा का$_{1\,2}$ दे$_{4\,5\,11}$ दक्षिग (का$_1$ °णा) (→[-अ]दीक्षितो), दे$_{2\,5}$ कोतो (→कान्तो) –d) दे$_7$ सशय (→-सभव )

१३५ –a) शा$_1$ कारा का$_{1\,2}$ दे$_{5\,7}$ चण्डावर्त्तो (→चन्द्रावर्त्तो), ते$_1$ युग ** (→युगावर्त्त ) –b) का$_2$ दे$_{1\,3\,7\,10}$ ते$_1$ संवर्त्त स, ते$_1$ *** क- (→सवर्त्तक) –c) शा$_1$ कारा का$_{1\,2}$ भिक्षु, दे$_2$ विन्दु (→बिन्दु ) दे$_7$ काम्यो (→कामो); शा$_1$ दे$_1$ ह्यणु (→ह्यणु ) दे$_7$ स्थूल (→स्थूल ) –d) दे$_{3\,7}$ कणिकार (→कर्णिकार ) शा$_1$ कारा का$_{1\,2}$ -धर- (→-स्रज )

१३६ ते$_1$ a 'नन्दिमुखो भी-' तथा b 'दुर्मुख इति खण्डितम् –a) शा$_1$ दे$_2$ नन्दि° (→नन्दो°) –b) शा$_1$ कारा मोहोरग° (→महोरग°)

१३७ ते$_1$ a 'धधर्महाम' d खण्डितम् –a) शा$_1$ का$_1$ धर्महा देवदेवोह, कारा का$_2$ धर्महादेवदेवश्च –b) दे$_7$ दण्डधार (→दण्डधारो) –c) शा$_1$ कारा का$_{1\,2}$ दे$_7$ गोनन्दो दे$_3$ गोनर्न (→गोनर्दो) शा$_1$ कारा का$_{1\,2}$ गोप्रतोरश्च, दे$_7$ गाप्रचारश्च (→गोप्रतारश्च)

१३८ ते$_1$ abc ○ –a) दे$_2$ गोविन्दो (→गोविन्दो) –b) शा$_1$ गोमार्गा-, दे$_1$ गो **, दे$_5$ * मार्गा (→गोमार्गो), दे$_4$ तु (→च); दे$_{10}$ गो ** माग एव च (?) –c) दे$_{3\,7\,11}$ स्थिर (→स्थिर); दे$_4$ तथा स्थाणुर् (→च स्थाणुश्च) –d) शा$_1$ कारा का$_{1\,2}$ विक्रोश क्रोष्टु (कारा °ष्टुर्) एव च, दे $_{10}$ वि (दे$_7$ नि ) कोप कोप एव च

१३९ ते$_1$ a 'रणो षहो'; d 'जय' खण्डितम् –a) शा$_1$ का$_2$ दुर्च्चारणो, कारा का$_1$ दुश्चारणे (का$_1$ °णो) (→दुर्वारणो); दे$_4$ दुर्विषयो (→दुर्विषहो) –b) दे$_7$ रतिविक्रम (→दुरतिक्रम ) –c) दे$_3$ दुर्द्दर्षो (र्शो ?) दे$_7$ दुद्धरा, ते$_1$ उद्धरो (→दुर्द्धर्षो); शा$_1$ कारा का$_{1\,2}$ दे$_7$ दुष्प्रकम्पश्च, दे$_{11}$ दु प्रकाश्यश्च (→दुष्प्रकाशश्च) –d) दे$_7$ -दुर्द्दशो (→दुर्दर्शो) शा$_1$ कारा का$_1$ दुर्जनो (कारा °ना) नय (→दुर्जयो जय )

१४० दे$_4$ cd ○, ते$_1$ a 'शशाङ्का', d 'व्याधिनाशन' खण्डितम् –a) शा$_1$ कारा का$_{1\,2}$ दे$_{3\,5}$ °शीतोष्ण (→°शीतोष्ण ); दे$_7$ शशाङ्क समनीतोष्ण. –b) कारा का$_1$ क्षुद् (→क्षुत् ); दे$_4$ तृष्णाद्य, दे$_{5\,10}$ तृष्णाश्च, दे$_7$ तृष्णर् (?) (→तृष्णा च) शा$_1$ जरा मयाः कारा का$_{1\,2}$ दे$_{10.11}$ जरामय, दे$_1$ निरामया, दे$_4$ जरापह, दे$_5$ * रामया, दे$_7$ जरामर (→निरामय ) –d) शा$_1$ कारा का$_{1\,2}$ व्याधिदो (शा$_1$ °तो), दे आधिदो, दे$_{11}$ ***, मुद्रे आधिहा (→व्याधिहा), दे$_7$ व्याधिप्रत्याधि मा (ना?) शन

१४१ दे$_1$ ○ –a) दे$_{1\,3}$ समूहस्य, ते$_1$ ** हस्य, दे$_7$ स महापि (→समूहश्च) दे$_5$ समूहस्य ****, मुद्रे समूहश्चासमूहश्च –b) कारा का$_1$ हर्त्ता, दे$_1$ हता (→हन्ता) –d) दे$_7$ घनालय (→-वनालय )

१४२ –a) कारा त्वम् (→च) –b) दे$_{1\,4\,7}$ ते$_1$ उग्र दण्ड (दे$_{2\,4}$ °ण्ड), दे$_5$ उग्रदग्र (→उग्रदंष्ट्र ) –c) शा$_1$ विषाय प, का$_2$ विषाय प, दे$_{1\,2\,4\,10}$ ते$_1$ विषापम्य (दे$_1$ °श्य) प, दे$_3$ विषापशीर्ष, दे$_7$ विषाप्रयस्त्व, दे$_{11}$ विषाग्नय (→विषापह ) –d) दे$_{1\,2.4\,7\,10.11}$ सुरश्रेष्ठ (→सुरश्रेष्ठ), दे$_{5\,7\,10.11}$ सोमपाम्

अमृताशी जगन्नाथो देवदेव गणेश्वरः ॥ १४२
मधुश्च्युतानां मधुपो ब्रह्मवाक् त्वं घृतच्युतः ।
सर्वलोकस्य भोक्ता त्वं सर्वलोकपितामहः ॥ १४३

हिरण्यरेताः पुरुषस्त्वमेकः
त्वं स्त्री पुमांस्त्वं हि नपुंसकं च ।
बालो युवा स्थविरो देवदंष्ट्रा
त्वत्तो गिरिर्विश्वकृद् विश्वहर्ता ॥ १४४

त्वं वै धाता विश्वकृतां वरेण्यस्
त्वां पूजयन्ति प्रणताः सदैव ।
चन्द्रादित्यौ चक्षुषी ते भवान् हि
त्वमेव चाग्निः प्रपितामहश्च ।
आराध्य त्वां सरस्वतीं वाग्लभन्ते
अहोरात्रे निमिषोन्मेषकर्ता ॥ १४५

न ब्रह्मा न च गोविन्दः पौराणा ऋषयो न ते । वें ४७

---

(→सोमपास्), शा$_1$ का$_{1\ 2}$ दे$_7$ मरुत्पति, दे$_3$ मरुच्च ते, दे$_{1\ 2}$ ते$_1$ मरुच्च(दे$_3$ °च)ते (→मरुत्पते) कारा सोमपो मरुता पति –e) शा$_1$ का$_1$ अमृतास्यो, कारा का$_2$ अमृताशो, दे$_{5\ 11}$ अमृता श्री (शी ?), दे$_7$ अमृतपो (→अमृताशी) –f) शा$_1$ कारा का$_{1,2}$ देवदेवो, मुवे वेददेव (→देवदेव), दे$_4$ गणेश्वर (→गणेश्वर)

१४२ श्लोकात्पर दे$_{2\ 7}$ °मुवे अधिकम्—

187 * विषाग्निपा सोमपाश्च क्षीरपा आज्यपास्तथा ।

[दे$_2$ अयमधिकांश cd, ef चरणयोर्मध्ये आगत –1) दे$_7$ विषाग्रपा, (→विषाग्निपा)]

१४३ दे$_7$ ○, शा$_1$ का$_2$ दे$_{5\ 11}$ d ○ –a) मुवे मधुपा (→मधुपो) दे$_4$ मधुच्युताना मधुपस् –b) शा$_1$ कारा का$_1$ त्वमेव धृतिरच्युत, का$_2$ त्वमेव घृतमच्युत, दे$_3$ ब्रह्मवान् (वाक) त्व घृतच्युत, दे$_{4\ 11}$ त्वमेव तु घृतच्युत (दे$_{11}$ °त), दे$_5$ त्वमेवघृत ? श्च्युत, दे$_{10}$ त्वमिव च घृतच्युत, ते$_1$ *** त्व घृतच्युत –d) का$_1$ सर्वलोकस्य पालक . –cd) कारा सवस्य लोकस्य च पालकस्त्वम्

१४३ श्लोकस्य स्थाने दे$_7$

188 * मधुच्युतानामग्रयणस्त्वमेव सर्वस्य लोकस्य चराचरस्य ।

१४३ श्लोकात्पर का$_1$ अधिकम्—

189 * सर्वप्रभुरनन्तस्त्व सर्वेश सर्वदर्शन ।

१४४ –a) शा$_1$ हिरण्यरेता, कारा हिरण्यगर्भ, ते$_1$ ***** (→हिरण्यरेताः); शा$_1$ दे$_1$ पुरुष (→पुरुषस्) कारा स्वमेव, का$_1$ पुराण, का$_2$ त्व ** (→त्वमेकस्) –b) दे$_1$ त्व (→च) शा$_1$ का$_1$ त्व स्त्रीपुंसौ त्व हि नपुसकं च, कारा त्व स्त्रीपुमांसौ हि नपुसकस्त्व का$_2$ * स्त्रीपुंसौ त्व हि नपुसक च दे$_4$ स्त्रीपुमानिह, दे$_7$ त्व स्त्री पुमांश्चैव नपुंसकश्च, दे$_{11}$ स्त्रीपुंसास्त्वं हि न पुंसक वा –c) दे$_{3\ 7}$ स्थावरो (दे$_3$ °र) (→स्थविरो), कारा विश्ववक्त्र, दे$_{1\ 3\ 7\ 10}$ जीर्णदंष्ट्रस् (दे$_{3\ 10}$ °ष्ट्रा), दे$_5$ लोकदर्ग, ते$_1$ ** दष्ट्र (→देवदंष्ट्रा) –d) कारा त्व वै गिरीशो विश्वकृद् विश्वहर्त्ता, दे$_{1\ 3}$ ते$_1$ त्वत्तो (दे$_2$ °न्तो) गिरिर्विश्वकर्त्ता त्वमेव, दे$_{4\ 5\ 7\ 10}$ त्वत्तो (दे$_{10}$ °त्ता) गि (दे$_{10}$ °गा) रि विश्वकृद्विश्वकर्त्ता, मुवे त्वन्ते गिरिर्विश्वकृद्विश्वकर्त्ता

१४५ –a) दे$_7$ त्व विश्वकृद् (→त्व वै धाता); दे$_{1\ 3\cdot5}$ ते$_1$ विश्वकृतो, दे$_{10}$ विश्व * तो (→विश्वकृता), शा$_1$ का$_{1\ 2}$ दे$_2$ वरेण्य (→वरेण्यस्) b) दे$_2$ * जति (→पूजयन्ति), दे$_{1,3}$ प्रणता स्म देव, दे$_2$ प्रणतोस्मि देव, ते$_1$ *** स्म देव (→प्रणता सदैव) –c) ते$_1$ चक्षुषा मे (→चक्षुषी ते) शा$_1$ भवन कारा भवेता, का$_1$ ज्वलन्तौ, दे$_{1\ 3\ 10}$ भवान्हि, दे$_2$ भवाग्नि, दे$_5$ ते$_1$ भवानी, दे$_7$ हि देव (→भवान् हि) –d) शा$_1$ का$_2$ हृ (का$_2$ [-अ]) दय त्वमेवाग्नि परितो महाश्च, कारा हृदग्निस्त्व परितस्त्व महाश्च, का$_1$ त्वमेवाग्नि परिता ? पा महश्च, दे$_2$ ***** प्रपितामहश्च, दे$_5$ त्वमेवाग्नि प्रपितामहश्च, दे$_7$ हृदय तवाग्निश्च पितामहश्च, दे$_{11}$ हृदय त्वमेव चाग्नि प्रपितामहाश्च, ते$_1$ त्वमेव चाग्निश्च पितामहाश्च –e) शा$_1$ कारा का$_1$ स (कारा सा) रस्वता, का$_2$ सरस्वत्या (→सरस्वतीं); शा$_1$ या स ? भर्त्ते, कारा भजन्ते, का$_{1\ 2}$ वास व (का$_2$ °भ) र्त्ते, दे$_3$ वाच लभन्ते, दे$_4$ चालभन्ते (→वाग् लभन्ते), दे$_2$ आराध्य त्वा सरस्वता ****, दे$_7$ सरस्वती वाग्बलमुत्तमा, ते$_1$ आरा **** स्वतीं वाचा लभते, मुवे सरस्वतो वाग्बलमूलभूता –f) शा$_1$ का$_{1\ 2}$ निमेषो (का$_2$ °मिषो) प्रत्येक त्वा (→निमिषोन्मेषकर्त्ता); कारा प्रत्यक्ष त्वा कालकलाविहीनम्, दे$_7$ अहोरात्रावुन्मिषोन्मेषकर्मा

१४६ –a) शा$_1$ त्व, कारा त्वा, दे$_3$ तत्र (→न); का$_2$ दे$_7$ त्वा (दे$_7$ न) च ब्रह्मा न च गोविन्द –b) शा$_1$ दे$_4$ पौराणं, कारा दे$_{7\ 11}$ पौराणाम्, का$_1$ पौरणम्,+पुराणा, दे$_{10}$ पौराणा, ते$_1$ पौरात्म्या (→पौराणा) –c) दे$_7$ महात्म्य (→माहात्म्यम्); कारा दे$_{11}$ विदित, दे$_3$ विदित्वतु (→वेदितुम्); दे$_{4\ 11}$ शक्त्या, ते$_1$ शक्तो (→शक्ता), शा$_1$ माहात्म्य विदित्व शक्ता –d) शा$_1$ कारा.

७ १४६ माहात्म्यं वेदितुं शक्ता याथातथ्येन शंकर ॥ १४६
पुंसां शतसहस्राणि यत्समावृत्य तिष्ठति ।
महतस्तमसः पारे गोप्ता मन्ता भवान् सदा ॥ १४७
यं विनिद्रा जितश्वासाः सत्त्वस्थाः संयतेन्द्रियाः।
ज्योतिः पश्यन्ति युञ्जानास्तस्मै योगात्मने नमः ॥ १४८
या मूर्तयश्च सूक्ष्मास्ते न शक्या यानि दर्शितुम् ।
ताभिर्मां सततं रक्ष पिता पुत्रमिवौरसम् ॥ १४९
रक्ष मा रक्षणीयोऽहं तवानघ नमोऽस्तु ते ।
भक्तानुकम्पी भगवान् भक्तश्चाहं सदा त्वयि ॥ १५०
जटिने दण्डिने नित्यं लम्बोदरशरीरिणे ।
कमण्डलुनिषङ्गाय तस्मै रुद्रात्मने नमः ॥ १५१
यस्य केशेषु जीमूता नद्यः सर्वाङ्गसन्धिषु ।
कुक्षौ समुद्राश्चत्वारस्तस्मै तोयात्मने नमः ॥ १५२
सम्भक्ष्य सर्वभूतानि युगान्ते पर्युपस्थिते ।
यः शेते जलमध्यस्थस्तं प्रपद्येऽम्बुशायिनम् ॥ १५३
प्रविश्य वदनं राहोर्यः सोमं पिबते निशि ।
ग्रसत्यर्कं च स्वर्भानुः रक्षितस्तव तेजसा ॥ १५४
ये चात्र पतिता गर्भा रुद्रगन्धस्य रक्षणे ।

---

का1 2 दे11 यथातथ्येन (→याथातथ्येन) का1 श कर, दे1 ° 11 शकर (→शंकर)

१४७ दे7 ○ [१४७ १४८ श्लोकौ १५० श्लोकानन्तर भागतौ] —a) दे4 पुसा पञ्चशतस्त्राणि —b) शा1 कारा तिष्ठसि दे2 ति ●●, ते1 ●●● (→तिष्ठति) दे4 समावृत्य तु तिष्ठति —c) दे11 पारो (→पारे) —d) का2 भर्ता (→मन्ता); दे11 भवेद्गा (→भवान् सदा)

१४८ दे7 ○ (द १४७ पा वि) —a) का° ये दे5 11 त (→य); का2 जितश्वास, दे1 3 ते1 विनि (दे1 3 °नि) श्वासा, दे4 7 11 जित (?) श्वासा (→जितश्वासा) ते1 स ●● (→सत्त्वस्था) का1 सयतेन्द्रि,+या, दे° 4 10 सजितेन्द्रिया, दे7 समदर्शिन (→सयतेन्द्रिया) —c) दे1 ज्योतिः पश्यति दे2 ज्वतिपश्यन्ति, दे7 ज्योतिषा पति (→ज्योति पश्यन्ति) ते1 युञ्जान (→युञ्जाना)

१४८ श्लोके दे5 a b मध्येऽधिकम्—

190 ● सत्त्वस्था पुसा दासत्वस्या ।

१४९ —a) दे7 या मूर्तय सुसूक्ष्मा ते ते1 या मूर्त [यश्च सू°] क्ष्मास्ते —b) शा1 ये न का1 ° ये नि दे4 वै नि (→या नि); दे7 न मह्य यानि दर्शनम् —c) शा1 कारा का° दे1 11 अहिसा (का सा) का1 भ्रमिर्मां (?) दे1 तर्मिमं ते1 ताभिर्मा (→ताभिर्मां) —d) ना1 °मिवौरसां दे2 °मिकौरसा (?) (→°मिवौरसम्)

१५० —a) शा1 का1 ° रक्षणीयोह भवता, कारा रक्षणीयोहं भगवन्, ते1 रक्ष ●●●●● ह, मुवे रक्षमा रक्ष णीयो य —b) शा1 तवानुग, दे1 3 भवानघ (दे3 °घ) दे5 नवनघ ते1 भवनेघ? (→तवानघ) —c) दे1 भक्तानुगामी (→भक्तानु कम्पी) दे3 भगवन् (→भगवान्) —d) दे° अह च (→अहं), स° (→स°)

१५०श्लोकात् पर दे7 अधिकम्—

191 ● पुसा शतसहस्राणि य समासृत्य तिष्ठति ।
महतस्तमस पारे गोप्ता मे सोस्तु नित्यदा ।
य विनिद्रा जित श्वासा सत्त्वस्था समदर्शिन ।
ज्योतिषा पति युञ्जानास्तस्मै योगात्मने नम ।
( = १४७, १४८)

१५१ —a) शा1 कारा का1 ° नन्दिने, दे5.11 घटिले ते1 ज ●● (→जटिने) ते1 ●● ने (→दण्डिने) —b) दे10 शत क्रतो ते1 शरीरिणम्?, मुवे तथा क्रतो (→शरीरिणे) —c) दे1 ते1 कमण्डलु (→कमण्डलु) ते1 निरङ्गाय (→निषङ्गाय); दे10 दीर्घजिह्व महाप्रभ

१५२ शा1 का cd○; दे10 ○ —a) ते1 के श्रौं खण्डितम् दे3 7 जीमूता (→जीमूता) —b) दे3 घना (→नद्य); ना1 कारा का1 °सन्धिता (ना1 °ते) (→°सन्धिषु) —d) कारा तस्मै विश्वात्मने नम का1 तस्म ते मूर्तये नम

१५३ शा1 कारा का1 ° ○ —a) दे1 सत्य (→सम्भ क्ष्य); दे1 सर्व एतानि, ते1 ●●● तानि (→सर्वभूतानि) —b) दे7 समुपस्थिते (→पर्युपस्थिते) —c) ते1 यमेते? (→य शेते); दे11 °मध्यस्तु (→°मध्यस्थस्) —d) ते1 प्रपद्येभु° (→प्रपद्येम्बु°)

१५४ —a) कारा का दे5 सन्त (→वदनं), कारा का1 राहुर्, दे7 रा (रा ?) होर् (→राहोर्) —c) दे5 ग्रसत्यर्कं, दे5 ग्रसत्र्यक (→ग्रसत्यर्क) दे° सोमसत्यकस्वर्भानुः —d) शा1 दे1 2 रक्षतस्, ते1 भगतस (→रक्षित); का1 दे1 ° 10 ते1 ते च (→तव), दे7 भूत्वा सोमाभिरक्षतु

१५५ —a) दे1 3.7 10 ते1 चानु (→चात्र) दे10 गर्भास (→गर्भा) —b), शा का1 2 °गर्भस्य दे° ८ यस्य दे10 °सोतस्य (→°गन्धस्य) दे1 4 ते1 रक्षिणे (→रक्षणे) कारा रुद्रगभस्य रक्षन, दे7 पुन रुद्रस्य रक्षिता, मुवे रुद्रलोकस्य रक्षणे —c) दे 11

नमस्तेऽस्तु स्वधा स्वाहा प्राप्नुवन्ति तदद्भुते ॥ १५५

येऽङ्गुष्ठमात्रा: पुरुषा देहस्था: सर्वदेहिनाम् ।

रक्षन्तु ते हि मां नित्यं ते मामाप्याययन्तु वै ॥ १५६

ये नदीषु समुद्रेषु पर्वतेषु गुहासु च ।

वृक्षमूलेषु गोष्ठेषु कान्तारगहनेषु च ॥ १५७

चतुष्पथेषु रथ्यासु चत्वरेषु सभासु च ।

हस्त्यश्वरथशालासु जीर्णोद्यानालयेषु च ॥ १५८

ये च पञ्चसु भूतेषु दिशासु विदिशासु च ।

चन्द्रार्कयोर्मध्यगता ये च चन्द्रार्करश्मिषु ॥ १५९

रसातलगता ये च ये च तस्मात् परं गता: ।

नमस्तेभ्यो नमस्तेभ्यो नमस्तेभ्यश्च नित्यश: ॥ १६०

येषां न विद्यते संख्या प्रमाणं रूपमेव च ।

असंख्येयगणा रुद्रा नमस्तेभ्योऽस्तु नित्यश: ॥ १६१

प्रसीद मम भद्रं ते तव भावगतस्य च ।

त्वयि मे हृदयं देव त्वयि बुद्धिर्मतिस्त्वयि ॥ १६२

स्तुत्वैवं स महादेवं विरराम द्विजोत्तम: ॥ १६३ वे ४७

इति श्रीवामनपुराणे सरोमाहात्म्ये षड्विंशोऽध्याय ॥२६॥

---

नमस्तेभ्य (→नमस्तेऽस्तु), दे$_{7}$ $_{3}$ सुधा (→स्वधा) –d) दे$_{7}$ प्राप्नुवन्तु (→प्राप्नुवन्ति) शा$_{1}$ का$_{1}$ ततद्भुते (का$_{1}$ °त) कारा का$_{2}$ दे$_{1}$ $_{4}$ ते$_{1}$ तद (दे$_{2}$ °दा) द्भुत, दे$_{7}$ नदन्तु ते, दे$_{10}$ मुद तु ते (→तदद्भुते)

१५६ –a) दे$_{2}$ °मात्र (→°मात्रा), दे$_{7}$ $_{7}$ पुरुषो (दे$_{7}$ °ष) (→पुरुषा) –b) दे$_{5}$ तदह ?, ते$_{1}$ देहिस्था (→देहस्था), दे$_{1}$ 5-10-11 ते$_{1}$ वरदेहिनाम् (→सर्वदेहिनाम्) –c) दे$_{4}$ रक्षन्ते (→रक्षन्तु), दे$_{1}$ $_{4}$ $_{10}$ ते$_{1}$ देहिला (दे$_{4}$ °न) (→ते हि मा) –d) का$_{1}$ दे$_{2}$ 4 5 10-11 ते$_{1}$ ममा°, दे$_{7}$ समा° (→मामा°) कारा का$_{2}$ च, दे$_{5}$ $_{11}$ ते, दे$_{7}$ व (→वै)

१५७ –d) दे$_{4}$ कान्तारे गहने वने

१५८ –b) शा$_{1}$ चतुरेषु (→चत्वरेषु) शा$_{1}$ सत्रासु का$_{1}$ सवासु,+सभासु (→सभासु)

१५९ शा$_{1}$ का$_{?}$ 'चन्द्राक° १५६ d इत्यारम्य 'ये च' १६० a पर्यन्त○ (द सं), कारा का$_{1}$ 'ये च १५६ d इत्यारम्य 'ये च' १६० a पर्यन्त○ (द स) –a) दे$_{7}$ येषु (→ये च) –c) शा$_{1}$ चन्द्रार्कमध्यगता ये च, कारा, का$_{1}$ चन्द्रार्कमध्यगा ये च

१६०. शा$_{1}$ कारा का$_{1}$ $_{2}$ a○ –d) कारा दे$_{3}$ तम्यस्तु (→तेभ्यश्च)

१६१. दे$_{4}$ १६१a 'विद्यते' इत्यारम्य १६२ b पर्यन्त नास्ति –b) दे$_{3}$ प्रमाग (→प्रमाण) शा$_{1}$ कारा का$_{1}$ $_{2}$ दे$_{7}$ $_{11}$ वा (→च) –c) दे$_{5}$ असख्या ये (→असंख्येय) शा$_{1}$ कारा का$_{2}$ दे$_{7}$ $_{11}$ गुणा (→ गणा) –d) दे$_{1}$ तेभ्य सु, दे$_{7}$ तेभ्यो हि, दे$_{10}$ तेभ्यस्तु (→तेभ्योस्तु)

१६२ दे$_{4}$ ab ○ (द्र १६१ पा वि) –a) शा$_{1}$ का$_{2}$ प्रसाद (→प्रसीद) –b) दे$_{7}$ भव (→तव), कारा का$_{1}$ भागवतस्य च, दे$_{7}$ भावगतश्च मे (→भागवतस्य च)

१६२श्लोकान्तर कारा अधिकम्—सनत्कुमार उवाच

१६३ –a) गा$_{1}$ दे$_{11}$ स्तुत्वैव (→स्तुत्वैव), दे$_{1}$ $_{3}$ ते$_{1}$ स्तुत्वैव (ते$_{1}$ °व) त्व (ते$_{1}$ त) (→स्तुत्वैव स), दे$_{1}$ $_{3}$ महाभाव, ते$_{1}$ महाभाग (→महादेव) –b) दे$_{3}$ विरराज (→विरराम) दे$_{1}$ 5-11 द्विजोत्तम (→द्विजोत्तम)

पुष्पिका शा$_{1}$ कारा का$_{1}$ $_{2}$ दे$_{2}$ 3 5 10-11 ते$_{1}$ इति श्री वामनपुराणे सरोमाहात्म्ये, दे$_{1}$ $_{4}$ इति वामनपुराणे सरोमाहात्म्ये, दे$_{7}$ श्रीवामनपुराणे सरोमाहात्म्ये अध्यायनाम—शा$_{1}$ का$_{1}$ $_{2}$ दे$_{2}$ 5-10-11 ते$_{1}$, ○$_{3}$ कारा वेणुस्तुतिर्नाम, दे$_{1}$ वेनस्तुतिर्नाम, दे$_{7}$ महादेवस्तुतिर्नाम अध्यायसंख्या—शा$_{1}$ दे$_{1}$ $_{5}$ ○, कारा सप्तचत्वारिंशत्तमोऽध्याय, का$_{1}$ ॥३७॥, का$_{2}$ अष्टत्रिंशोऽध्याय, दे$_{1}$ 3-10 ॥४७॥, दे$_{?}$ ॥४४॥, दे$_{7}$ चतुर्थोऽध्याय, दे$_{11}$ अध्याय ॥४३॥, ते$_{1}$ एकोनपञ्चाशत्तमोऽध्याय ।

# २७

सनत्कुमार उवाच ।꣱

१.४८.१ अथैनमब्रवीद् देवस्त्रैलोक्याधिपतिर्भवः ।
आश्वासनकरं चास्य वाक्यविद् वाक्यमुत्तमम् ॥ १
अहो तुष्टोऽस्मि ते राजन् स्तवेनानेन सुव्रत ।
बहुनाऽत्र किमुक्तेन मत्समीपे वसिष्यसि ॥ २
उषित्वा सुचिरं कालं मम गात्रोद्भवः पुनः ।
असुरो ह्यन्धको नाम भविष्यसि सुरान्तकृत् ॥ ३
हिरण्याक्षगृहे जन्म प्राप्य वृद्धिं गमिष्यसि ।
पूर्वाधर्मेण घोरेण वेदनिन्दाकृतेन च ॥ ४
साभिलाषो जगन्मातुर्भविष्यसि यदा तदा ।
देहं शूलेन हत्वाहं पावयिष्यामि समार्बुदम् ॥ ५
तत्राप्यकल्मषो भूत्वा स्तुत्वा मां भक्तितः पुनः ।
ख्यातो गणाधिपो भूत्वा नाम्ना भृङ्गिरिटिः स्मृतः ॥ ६
मत्सन्निधाने स्थित्वा त्वं ततः सिद्धिं गमिष्यसि ।
वेनप्रोक्तं स्तवमिमं कीर्तयेद् यः शृणोति च ॥ ७
नाशुभं प्राप्नुयात् किंचिद् दीर्घमायुरवाप्नुयात् ।
यथा सर्वेषु देवेषु विशिष्टो भगवाञ्छिवः ॥ ८
तथा स्तवो वरिष्ठोऽयं स्तवानां वेननिर्मितः ।

---

## २७

꣱ ते$_{1}$ सनत्कुमार.

१. -a) ते$_{1}$ मबैतम् (→अथैनम्) -b) ते$_{1}$ मृड (→भव) -c) दे$_{1}$ माश्वास°, दे$_{2}$ काश्वास्त° (?), दे$_{11}$ अभ्यास° (→आश्वास°), शा$_{1}$ कारा. का$_{1.2}$ दे$_{7}$ वाक्य (→चास्य) -d) कारा. वाग्विशारद, दे$_{7}$ नाक्यसत्तम (→वाक्यमुत्तमम्)

१ श्लोकात्पर मुवे. अधिकम्—शिव उवाच

२. -a) ते$_{1}$ हा आ- (?) (→अहो) -b) दे$_{2}$ सुवत (→सुव्रत). -d) दे$_{3}$ वशिष्यसि, दे$_{7}$ भविष्यसि (→वसिष्यसि)

३. दे$_{2}$ 3 ३-४ b ○ (द. स). -a) दे$_{7}$ स्थित्वा तु (→उषित्वा). -b) दे$_{1.4}$ गोत्रोद्भव, दे$_{5}$ गात्रोद्भुव, दे$_{7}$ नेत्राचक, ते$_{1}$ मो (?) त्रोद्भव (→गात्रोद्भव); का$_{1}$ पुरा,+पुन (→पुन) -c) दे$_{7}$ अंधको नाम असुरो. -d) दे$_{1}$ ते$_{1}$ भविष्यति (→भविष्यसि); शा$_{1}$ कारा. का$_{1}$ 2 सुरान्य (कारा का$_{1}$ 2 °न्त) क (→सुरान्तकृत्).

४. दे$_{7}$ ab. ○ (द. २ पा. वि) -a) दे$_{7}$ पुष्टि (→जन्म); दे$_{3}$ यमिष्यसि (→गमिष्यसि) -c) दे$_{7}$ तत्रा° (→पूर्वा°). -d) दे$_{4}$ तु (→च)

५. -a) दे$_{10}$ यदा (→जगत्-). -b) दे$_{7}$ सदा (→यदा) -c) शा$_{1}$ का$_{1.2}$ दे$_{5}$ देहे, दे$_{7}$ अह (→देह), दे$_{3}$ तु त्वाह (?), दे$_{7}$ त्वां भित्वा, दे$_{11}$ हत्वाह (→हत्वाह). -d) शा$_{1}$ कारा का$_{1}$ 2 दे$_{3}$ पाव(दे$_{3}$ °च)यिष्यामि, दे$_{7}$ पविष्यामि (→पावयिष्यामि); शा$_{1}$ कारा. का$_{1}$ साध्वि(शा$_{1}$ °स्वि)दम्, का$_{2}$ सान्त्विदम्,+त्वां स्वयम्, दे$_{1}$ 4 मावुंदम् दे$_{11}$ सावंदम्, ते$_{1}$ ⁎⁎⁎ दम् (→समार्बुदम्), दे$_{1}$ °पातयिष्ये समार्बुदम्

६ -a) शा$_{1}$ तत्रापि, दे$_{11}$ तत्राय (→तत्राप्य-); दे$_{1}$ 3 ते$_{1}$ तत्रापि कल्प सभूत्वा; दे$_{4}$ तत्रापि कलुषो भूत्वा, दे$_{7}$ तत्र *निष्कल्मषीभूत; दे$_{10}$ तत्रापि कल्मष त्यक्त्वा* -b) दे$_{10}$⁎⁎, मुवे. दृष्ट्वा (→स्तुत्वा); का$_{1}$ पुरा,+पुन (→पुन) -c) शा$_{1}$ का$_{1}$ 2 प्राप्तोऽसि गा (का$_{1}$ ग) णाधिपत्य (का$_{2}$ °त्व), कारा गणाधिपत्य प्राप्तोसि -d) शा$_{1}$ °रटि स्मृत, का$_{2}$ °रिति,+°टि स्मृत, दे$_{4}$ °रिति श्रुति, दे$_{11}$ °रिटिस्मृत (→°रिटि स्मृत)

७. -a) दे$_{4}$ गत्वा (→स्थित्वा) -b) दे$_{2}$ ⁎ते (→तत); दे$_{3-4}$ 11 °ष्यति (→°ष्यसि). -c) शा$_{1}$ कारा. का$_{1.2}$ त्वया, दे$_{4}$ चैत्य-, दे$_{5}$.11 वैण्य-, दे$_{7}$ वेणु-, ते$_{1}$ वेण- (→वेन-); ते$_{1}$ इद (→इम). -d) दे$_{11}$ कीर्तयेति (→कीर्तयेद्); शा$_{1}$ कारा. का$_{1.2}$ दे$_{4}$ 5-7 11 वा (→च).

८. -a) दे$_{11}$ नाशु ⁎ (→नाशुभ). -b) दे$_{4}$ °प्तवान् (→°प्नुयात्). -c) दे$_{2}$ 4 ते$_{1}$ तथा (→यथा); दे$_{4}$ वेदेषु (→देवेषु). -d) दे$_{4}$ 7 वसि (दे$_{7}$ °रि) ष्टो (→विशिष्टो).

९. -a) दे$_{1}$ वसिष्ठा (→वरिष्ठो). -b) ते$_{1}$ स्तवान (→स्तवाना); शा$_{1}$ कारा का$_{1}$ 2 मो वि°, दे$_{4}$ देव°, दे$_{7}$ बह्म°, ते$_{1}$ स (?) न° (→वेन°); का$_{1}$ °निर्दित +°निमित, दे$_{2-5}$ °निर्मित (दे$_{5}$ °ते) (→°निर्मित) -c) शा$_{1}$ का$_{2}$ °सुमेर्वस्तु (→°शुर्भवर्य-); दे$_{2}$ यशोराजासुखीआपि. -d) शा$_{1}$ कारा. का$_{2}$ दे$_{3}$ °मानार्य- (दे$_{3}$ °य) (→°मानाय); का$_{1}$ यनमानार्थकीर्तित,+ वर्शिभि, दे$_{5.11}$ धा (दे$_{11}$ ष) नमाना ⁎ (दे$_{11}$ °ष) °कीर्तिता

यशोराज्यसुखैश्वर्यधनमानाय कीर्तितः ॥ ९
श्रोतव्यो भक्तिमास्थाय विद्याकामैश्च यत्नतः ।
व्याधितो दुःखितो दीनश्चौरराजभयान्वितः ॥ १०
राजकार्यविमुक्तो वा मुच्यते महतो भयात् ।
अनेनैव तु देहेन गणानां श्रेष्ठतां व्रजेत् ॥ ११
तेजसा यशसा चैव युक्तो भवति निर्मलः ।
न राक्षसाः पिशाचा वा न भूता न विनायकाः ॥ १२
विघ्नं कुर्युर्गृहे तत्र यत्रायं पठ्यते स्तवः ।
शृणुयाद् या स्तवं नारी अनुज्ञां प्राप्य भर्तृतः ॥ १३
मातृपक्षे पितुः पक्षे पूज्या भवति देववत् ।
शृणुयाद् यः स्तवं दिव्यं कीर्तयेद् वा समाहितः ॥ १४
तस्य सर्वाणि कार्याणि सिद्धिं गच्छन्ति नित्यशः ।
मनसा चिन्तितं यच्च यच्च वाचाऽनुकीर्तितम् ॥ १५
सर्वं संपद्यते तस्य स्तवनस्यानुकीर्तनात् ।
मनसा कर्मणा वाचा कृतमेनो विनश्यति ।
वरं वरय भद्रं ते यत्त्वया मनसेप्सितम् ॥ १६

वेन उवाच ।

अस्य लिङ्गस्य माहात्म्यात् तथा लिङ्गस्य दर्शनात् ।
मुक्तोऽहं पातकैः सर्वैस्तव दर्शनतः किल ॥ १७
यदि तुष्टोऽसि मे देव यदि देयो वरो मम ।
देवस्वभक्षणाज्जातः श्वयोनौ तव सेवकम् ॥ १८
एतस्यापि प्रसादं त्वं कर्तुमर्हसि शंकर ।
एतस्यापि भयान्मध्ये सरसोऽहं निमज्जितः ॥ १९
देवैर्निवारितः पूर्वं तीर्थेऽस्मिन् स्नानकारणात् ।
अयं कृतोपकारश्च एतदर्थं वृणोम्यहम् ॥ २०
तस्यैतद् वचनं श्रुत्वा तुष्टः प्रोवाच शंकरः ।

---

(दे₁₁ °भिः), दे₇ नित्यं धर्मार्थकीर्तिभिः दे₁₀ धनमानायकांक्षिभिः.

१० –a) श₂ दे₇ स्तोतव्यो (→श्रोतव्यो) –c) दे₇ धावितो (→व्याधितो), दे₇ व्याधितो (→दुःखितो); ना₁ पीन, दे₁ –नीन (→दीन) –d) दे₇ °ग्रस्तो, दे₁₁ °राजा (→°राज); दे₇ भयान्वित (→भयान्वित)

११ –a) श₁₃ राजा (→राज); दे₇ °विनिमुक्तो, दे₁₁ °वि(नि)र्मुक्तो वा (→°विमुक्तो वा) –b) दे₇ मुच्यता (→मुच्यते) –d) मु₃ वर्णानां (→गणानां), दे समतां (→श्रेष्ठतां)

१२ –b) दे₁ ते₁ मुक्तो (→युक्तो); ते₂ निर्मला दे₃ निमला (→निर्मल) –c) ना₁ श₁₃ श₁ • दे पिशाचादय (दे₃ °नां) (→पिशाचा वा) –d) ना₁ श₁₃ श₁ वनिता वा₁ वेताला (→न भूता); दे ₃ °यज (→°यकाः)

१३ ते₁ १३cd–१४ab ○ (द्र सं) –a) दे₁₁ विघ्नं (→विघ्नं); ना₁ कुर्युः (→गृहे); दे₇ तस्य दे यत्र (→तत्र) –b) ते₁ पठितं (→यत्रायं) d) दे₁₁ प्राप (→प्राप्य); श₁ भक्ति,+गुरु, दे सहित (→भर्तृतः)

१४ ते₁ ab ○ (द्र १३ पा वि) –a) श₁ मातृ°, +भर्तृ°, दे पितृ (→मातृ°) ना₁ श₁₃ श₁ • दे₁ पितृ, दे₇ भर्तृ (→पितुः) –b) दे₁ पूजा (→पूज्या) ते₃ भव (→भवति), दे₁ ₂ देववत्, दे₁ सारवता दे₁₀ देवित्व (→देववत्) –c) ना₁ दे₁₀.₁₁ या (→यः), दे₇ स्तवं, दे₁₁ स्तवन (→°व्यं)

१५ –b) दे₇ [ध] धीमतः (→नित्यशः) –d) ना₁ वाचां° (→वाचा°)

१६ ना₁ श₁₃ श₁ • दे₁ ₅ ₁₁ १६ cd–२२ cd ○ –b) ना₁ श₁₃ श₁ • दे ₄ ₇ ₁₁ स्तवस्यास्य (→स्तवनस्य) दे °कीर्ति° (→°कीर्त°) –d) दे₇ कृते (→कृतं) दे₁ ₁₀ ते₁ ह्यनो (→एनो) –f) दे₁ ₃ ₁₀ ते₁ मनसोप्सितं (→मनसेप्सितम्)

०ना₁ श₁₃ श₁ • दे₁ ₅ ₁₁ ○ (द्र १६ पा वि), दे₁ वेन उ॰ दे₇ वेन उ

१७ ना₁ श₁₃ श₁ • दे₁ ₅ ₁₁ ○ (द्र १६ पा वि)

१८ ना₁ श₁₃ श₁.₂ दे₁ ₅ ₁₁ ○ (द्र १६ पा वि) –a) मु₃ देवेन (→मे देव) –b) दे₇ ते₁ वरोत्तम (ते₁ °मम्) (→वरो मम) –c) दे₁ जात (→जातः) –d) दे₁ ₂ ₇ स्व (दे₃ श्व) योनि (→श्वयोनौ)

१९ ना₁ श₁₃ श₁ • दे₁ ₅ ₁₁ ○ (द्र १६ पा वि) –a) दे₁ ₃ प्रसा° (दे₇ °दे) (→प्रसादं) –b) दे₁ शंकर, दे₇ शंकरम् (→शंकर) –c) दे₁ • भयोन्मध्ये दे₁ भयान्मध्ये (→भयान्मध्ये) –d) ते₁ सरोहं मनिमज्जन

२० ना₁ श₁₃ श₁ • दे₁ ₅ ₁₁ ○ (द्र १६ पा वि) –a) दे₁₇ °रिता (→°रितः) –d) दे₂ ते₁ एतन्पर्थे (ते₁ °र्थं) (→एतदर्थं)

२१ ना₁ श₁₃ श₁ • दे₁ ₅ ₁₁ ○ (द्र १६ पा वि)

वे ।

१८ २१ एषोऽपि पापनिर्मुक्तो भविष्यति न संशयः ॥ २१
प्रसादान्मे महाबाहो शिवलोकं गमिष्यति ।
तथा स्तवमिमं श्रुत्वा मुच्यते सर्वपातकैः ॥ २२
कुरुक्षेत्रस्य माहात्म्यं सरसोऽस्य महीपते ।
मम लिङ्गस्य चोत्पत्तिं श्रुत्वा पापैः प्रमुच्यते ॥ २३

सनत्कुमार उवाच ।ॐ

इत्येवमुक्त्वा भगवान् सर्वलोकनमस्कृतः ।
पश्यतां सर्वलोकानां तत्रैवान्तरधीयत ॥ २४
स च श्वा तत्क्षणादेव स्मृत्वा जन्म पुरातनम् ।
दिव्यमूर्तिधरो भूत्वा तं राजानमुपस्थितः ॥ २५
कृत्वा स्नानं ततो वैन्यः पितृदर्शनलालसः ।
स्थाणुतीर्थे कुटीं शून्यां दृष्ट्वा शोकसमन्वितः ॥ २६
दृष्ट्वा वेनोऽब्रवीद् वाक्यं हर्षेण महताऽन्वितः ।
सत्पुत्रेण त्वया वत्स त्रातोऽहं नरकार्णवात् ॥ २७
त्वयाभिषिञ्चितो नित्यं तीर्थस्थपुलिने स्थितः ।
अस्य साधोः प्रसादेन स्थाणोर्देवस्य दर्शनात् ॥ २८
मुक्तपापश्च स्वर्लोकं यास्ये यत्र शिवः स्थितः ।
इत्येवमुक्त्वा राजानं प्रतिष्ठाप्य महेश्वरम् ॥ २९
स्थाणुतीर्थे ययौ सिद्धिं तेन पुत्रेण तारितः ।
स च श्वा परमां सिद्धिं स्थाणुतीर्थप्रभावतः ॥ ३०
विमुक्तः कलुषैः सर्वैर्जगाम भवमन्दिरम् ।
राजा पितृऋणैर्मुक्तः परिपाल्य वसुन्धराम् ॥ ३१
पुत्रानुत्पाद्य धर्मेण कृत्वा यज्ञं निरर्गलम् ।
दत्त्वा कामांश्च विप्रेभ्यो भुक्त्वा भोगान् पृथग्विधान् ॥ ३२
सुहृदोऽथ ऋणैर्मुक्त्वा कामैः संतर्प्य च स्त्रियः ।
अभिषिच्य सुतं राज्ये कुरुक्षेत्रं ययौ नृपः ॥ ३३

---

दे$_7$ काय° (→पाप°)

२२ शा$_1$ कारा का$_{1\ 2}$ दे$_{4.5\ 11}$ ○ (द्र १६ पा वि) –c) ते$_1$ मथा (→तथा), दे· तवम् (→स्तवम्)

२३ शा$_1$ कारा का$_1$ · दे$_{4.5.11}$ ○ (द्र १६ पा वि) –b) ते$_1$ °यते (→°पते)

ॐ शा$_1$ सनत्कुमार, ते$_1$ सनत्कुमार. उवाच

२४ –c) दे$_{1\ 4}$ ते$_1$ देवाना (→लोकाना)

२५ –a) शा$_1$ कारा का$_1$ · स च स्वा (कारा का$_1$ · स्वं), दे$_4$ विवस्वान् (→स च श्वा) –c) दे$_{2.3}$ °मूर्तिध (दे· °व) रो (→°मूर्तिधरो) –d) दे$_5$ स्थित (→°स्थित)

२६ शा$_1$ कारा का$_1$ · cd○ –a) शा$_1$ कारा वेणु, का$_1$ · वेण (का· °न) दे$_{7\ 11}$ वैण्य (→वन्य) –b) शा$_1$ कारा का$_1$ · पुत्र, दे$_1$ · 5-10-11 ते$_1$ पितुर्· (→पितृ) –c) दे$_{11}$ °तीर्थ-(→°तीर्थे), दे· कुटि (→कुटी) –d) दे लोक° (→शोक°)

२७ शा$_1$ कारा का$_1$ · ○; दे$_4$ ab ○ –a) दे$_1$ . ते$_1$ ततोऽब्रवीत दे$_{10}$ [-अ]ब्रवीत्ततो (→वेनोऽब्रवीद्); दे श दृष्ट्वानुब्रवीत्पुत्र –b) दे$_5$ °ता•• (→°तान्वि°) दे राजा हर्षसमन्वित.. –c) दे$_7$ सुपुत्रेण (→सत्पुत्रेण); दे$_7$ तात (→वत्स)

२८ शा$_1$ कारा का$_{1\ 2}$ ○; दे$_7$ २८ c–२९ b ○ (द्र प.) –a) दे$_4$ °षेचितो (→°षिञ्चितो); दे$_5$ नित्यो (→नित्यं); दे$_7$ त्वयाभिषिक्तो नित्यं च –b) दे$_{1\ 3}$ तीर्थस्य (दे· $_3$ °स्य) (→तीर्थस्य) दे$_5$ स्थित (→स्थित). –c) ते$_1$ प्रसाद्येन (→अस्य साधो) –d) दे$_{5.11}$ लिंगस्य (→देवस्य)

२९ शा$_1$ कारा का$_{1\ 2}$ ○, दे$_7$ ab○ (द्र २८ पा वि) –b) दे$_4$ मास्ये (?) तत्र (→यास्ये यत्र) –c) दे$_{11}$ उक्ता (→उक्त्वा) –d) दे$_7$ °स्थाप्य (→°ष्ठाप्य)

३० दे$_1$ ○ –b) दे$_5$ तत (→तेन) –c) शा$_1$ सर्वश्वा, कारा सर्वश्व, का$_1$ प्राङ्श्व, का· दे$_4$ स चाग, दे$_7$ स गत्वा (→स च श्वा); दे$_{3\ 7}$ परमा (दे$_7$ °म) (→परमां) –d) दे$_{11}$ °तीर्थ (→°तीर्थ)

३१ दे$_1$ ab ○ –a) कारा विमुक्ता, दे$_5$ विमुक्ता (→विमुक्त) –c) दे$_7$ वैण्य (→राजा); कारा °ऋणोन्मुक्त, दे$_4$ दे$_4$ °ऋणैर्मुक्ता, दे$_{11}$ °स (पि) र्णैमुक्त (→°ऋणैर्मुक्त) –d) दे$_7$ परिणीय (→परिपाल्य)

३२ –a) दे$_{11}$ धर्मेण (→धर्मेण) –b) दे$_7$ यज्ञान् (→यज्ञं); दे$_7$ निरर्गलान् (→निरर्गलम्) –c) दे$_7$ स (→च) –d) दे$_1$ मुक्त्वा (→भुक्त्वा), दे$_{11}$ कामान् (→भोगान्)

३३ –a) शा$_1$ दे$_5$ सुहृदोप ऋणैर्मुक्तान्, कारा का$_1$ सुहृदो (कारा °दां) च ऋणैर्मुक्त, का· सुहृदोप ऋणैर्मुक्ता, दे$_{1\ 3\ 10}$ सुहृदो द्रविणैर्मुक्ता (दे$_{10}$ °क्तान्), दे$_4$ सुहृदोऽनृणं कृत्वा दे$_7$ ऋणरभ्यर्च्य सुहृद, ते$_1$ सुहृदो द्रविणं दत्वा –b) दे$_3$ चा, दे$_4$ तु (→च); ते$_1$ का (मै ?) संतर्प्य वसूप. –c) दे$_{4\ 10}$ अभिषिच्य (दे$_{10}$ °षिच्य) (→अभिषिच्य)

तत्र तप्त्वा तपो घोरं पूजयित्वा च शंकरम् ।
आत्मेच्छया तनुं त्यक्त्वा प्रयातः परमं पदम् ॥ ३४
एतत्प्रभावं तीर्थस्य स्थाणोर्यः शृणुयान्नरः ।
सर्वपापविनिर्मुक्तः प्रयाति परमां गतिम् ॥ ३५

इति श्रीवामनपुराणे सरोमाहात्म्ये सप्तविंशोऽध्यायः ॥ २७ ॥

# २८

मार्कण्डेय उवाच ।❀
चतुर्मुखानामुत्पत्तिं विस्तरेण ममानघ ।
पृथ्वीश्वराणां च तथा श्रोतुमिच्छा प्रवर्तते ॥ १
सनत्कुमार उवाच ।❀
*शृणु सर्वमशेषेण कथयिष्यामि तेऽनघ ।*
ब्रह्मणः स्रष्टुकामस्य यद् वृत्तं पद्मजन्मनः ॥ २
उत्पन्न एव भगवान् ब्रह्मा लोकपितामहः ।
ससर्ज सर्वभूतानि स्थावराणि चराणि च ॥ ३
पुनश्चिन्तयतः सृष्टिं जज्ञे कन्या मनोरमा ।
नीलोत्पलदलश्यामा तनुमध्या सुलोचना ॥ ४
तां दृष्ट्वाभिमतां ब्रह्मा मैथुनायाजुहाव ताम् ।
तेन पापेन महता शिरोऽशीर्यत वेधसः ॥ ५
*तेन शीर्णेन स ययौ तीर्थं त्रैलोक्यविश्रुतम् ।*
सान्निहत्यं सरः पुण्यं सर्वपापक्षयावहम् ॥ ६
तत्र पुण्ये स्थाणुतीर्थे ऋषिसिद्धनिषेविते ।
सरस्वत्युत्तरे तीरे प्रतिष्ठाप्य चतुर्मुखः ॥ ७ वं.१

---

३४ –a) दे7 तप (→तत्र) –b) दे3 4 तु (→च) –c) दे4 आत्मज्ञानात्, दे7 आत्मेसु या (→आत्मेच्छया)

३५ –a) दे4 एव (→एतत्) –c) दे5 °निर्मुक्ते (→°निर्मुक्त) –d) दे7 ते1 °म पदम् (°मा गतिम्)

पुष्पिका—शा1 कारा. का1 2 दे1 3-5 7 10 11 ते1 इति श्री (दे1.5.11 [श्री]) वामनपुराणे सरोमाहात्म्ये, मुवे इति श्रीवामन पुराणे सरोमाहात्म्ये पुलस्त्यनारदसंवादे अध्यायनाम—कारा वेणसिद्धिर्नाम. अन्य पुस्तकेषु नास्ति अध्यायसंख्या—शा1 दे7 4 5 .○. कारा. अ१I- चत्वारिंशोध्याय, का1 ॥ ३८ ॥, का2 एकोन चत्वारिंशाध्याय ॥ ३६ ॥, दे1 3 10 ॥ ४८ ॥, दे7 पञ्चमाध्याय, दे11 ॥ ४४ ॥ ते1 पञ्चशो (त्वाशो ?) ध्याय ॥ ५० ॥, मुवे. अष्टचत्वारिंशाध्याय.

## २८

❀दे1○1 शा1 मार्कण्डेय 1 का1 2 दे3 मार्कण्डेय उवाच दे1 मार्कण्डेय उ1 ते1 श्री मार्कण्डेय

१. दे4 ○. (द्र अध्याय ४६ श्लो० ३५ पा वि) –a) ते1 °मुंखस° (→°मुंखाना°) –b) शा1 कारा का2 दे10 ते1 विस्तीर्णेन, का1 विस्तीर्णं,+र्णं च (→विस्तरेण) –c) दे1 3 10 ते1 पृथ्वी (दे3 कृष्णी, दे3 विश्वि, दे10 ते1 विष्णो) श्वराणां च तथा, दे7 तथा ब्रह्माणगणां च. –d) दे3 प्रवर्तत (→प्रवर्तते).

❀दे4 .○. शा1 ते1 सनत्कुमार., दे1 सनत्कुमार उ.

२ –c) शा1 स्रष्टुम्, दे4 7 सृष्टिम् (→स्रष्टुम्)

३ –b) शा1 °पितामहा (→°पितामह). –d) दे4 तु (→च)

४. –a) दे4.5 चिन्तयत (→चिन्तयत) –b) दे7 कन्य°- (→कन्या). शा1 °रमा (→°रमा) –d) दे4 वक्ष°, दे7 वक्र° (→तनु°); दे5 11 °लोचना. (दे11 °न) (→°लोचना)

५ –a) दे4 क्षुभितो (→[-अ] भिमता) –c) दे3 11 °थुनाय (→°थुनाया) –d) दे7 शिर., दे11 शिरा (→शिरो-); दे1 तस्य वै (→वेधस)

६. दे5. cd 'पुण्य ' वहम्' खण्डितम् –a) दे7 ततः (→तेन); शा1 शीर्येन, दे1 शीर्षेण (→शीर्णेन) –b) दे11 तीर्थं (→तीर्थं) –c) कारा का1 दे11 सान्निहित्य, का2 दे1.7 सान्निहत्य (का2 °त्य), ते1 सान्निहत्य (→सान्निहत्य) –d) दे11 सर्व (→सर्व-)

७ –a) दे4.7 पुण्यतमे (→पुण्ये स्थाणु-). –b) दे4 सिद्धर्षिमुनिसेविते –c) दे4 °त्तमे तीर्थे (→°त्तरे तीरे). –d) शा1 प्रविष्टानि, दे7 प्रतिस्थाप्य (→प्रतिष्ठाप्य), दे1 3.5.7.11 °मुखं, दे10 °मुंख (→°मुंख).

४६ ८ आराधयामास तदा धूपैर्गन्धैर्मनोरमैः ।
उपहारैस्तथा हृद्यै रौद्रसूक्तैर्दिने दिने ॥ ८
तस्यैवं भक्तियुक्तस्य शिवपूजापरस्य च ।
स्वयमेवाजगामाथ भगवान् नीललोहितः ॥ ९
तमागतं शिवं दृष्ट्वा ब्रह्मा लोकपितामहः ।
प्रणम्य शिरसा भूमौ स्तुतिं तस्य चकार ह ॥ १०

ब्रह्मोवाच ।※

नमस्तेऽस्तु महादेव भूतभव्य भवाश्रय ।
नमस्ते स्तुतिनित्याय नमस्त्रैलोक्यपालिने ॥ ११
नमः पवित्रदेहाय सर्वकल्मषनाशिने ।
चराचरगुरो गुह्यगुह्यानां च प्रकाशकृत् ॥ १२
रोगा न यान्ति भिषजैः सर्वरोगविनाशन ।
रौरवानिनसंवीत वीतशोक नमोऽस्तु ते ॥ १३
वारिकल्लोलसंक्षुब्धमहाबुद्धिविघट्टिने ।
त्वन्नामजापिनो देव न भवन्ति भवाश्रयाः ॥ १४
नमस्ते नित्यनित्याय नमस्त्रैलोक्यपालन ।
शंकरायाप्रमेयाय व्याधीनां शमनाय च ॥ १५
परायापरिमेयाय सर्वभूतप्रियाय च ।
योगेश्वराय दक्षाय सर्वपापक्षयाय च ॥ १६
नमः स्थाणवे सिद्धाय सिद्धवन्दिस्तुताय च ।
भूतसंसारदुर्गाय विश्वरूपाय ते नमः ॥ १७
फणीन्द्रोक्तमहिम्ने ते फणीन्द्राङ्गदधारिणे ।

---

८ –b) दे$_{4}$ पुष्पधूपै°, दे$_{11}$ धूपैर्दीपै° (→धूपैर्गन्धै°) दे$_{1\ 3}$ °हरे (→°रमै) दे$_{7}$ धूपपुष्पादिभि शुभ –c) दे$_{5\ 11}$ उपकारै (→उपहारै) ते$_{1}$ तदा (→तथा) ते$_{1}$ हृष्यै (→हृद्यै) –d) दे$_{2\ 4\ 7\ 10}$ रुद्र° (→रौद्र°)

९ –a) दे$_{11}$ तस्यैव (→तस्यैवं] दे$_{7}$ वर्तमानस्य (→भक्तियुक्तस्य) –b) का$_{1}$ दे$_{3\ 4\ 7\ 10}$ °रतस्य (→°परस्य) दे$_{4}$ तु (→च) –c) दे$_{4}$ स्वयमेव जगन्नाथो –d) शा$_{1}$ °लोहिता (→°लोहित)

१० –b) दे$_{4}$ ब्रह्म (→ब्रह्मा) शा$_{1}$ °महा, दे$_{5}$ °मह (→°मह)

※दे$_{1}$ ○ दे$_{10}$ ब्रह्मा उवाच

११ दे$_{7}$ bcd ○ –b) शा$_{1}$ कारा का$_{1}$॰ °या (कारा का$_{2}$ °वा) श्रय (गा$_{1}$ य), दे॰$_{5\ 11}$ °वाय च, ते$_{1}$ °वाश्रय (→°वाश्रय) –c) कारा °स्तेऽस्त्विति दे$_{4}$ °स्तेसु च (→°स्ते स्तुति) –d) गा$_{1}$ कारा का$_{1}$॰ °पावन दे$_{1.2}$ °पालने, दे$_{5}$ °पाणिने (→°पालिने)

१२ दे$_{7}$ a ○ –a) ते$_{1}$ °देवाय (→°देहाय) –b) गा$_{1}$ कारा का$_{1\ 2}$ दे$_{7}$ °नाशन, दे॰$_{3}$ °नाशने (→°नाशिने) –c) दे$_{1}$ °पुरो (→°गुरो) दे$_{2}$ गुह्य (→गुह्य) –d) दे$_{1\ 7}$ °गुह्यकानुतसे वित (दे$_{7}$ °समुत)

१३ –a) दे$_{5}$ भिषजे, दे$_{7}$ भिषज (→भिषजै); दे$_{4}$ रोगात कादिभेषजे –b) दे$_{5}$ °रोगैर् (→°रोग); दे$_{7\ 11}$ °नाशन, दे$_{1}$ °नाशिने, दे$_{10}$ °नाशना (→°नाशन) –c) दे$_{1}$ गौरवा (→रौरवा°) –d) गा$_{1}$ कारा का$_{1\ 2}$ वीतलोक, दे$_{4}$ शोकघ्न, दे$_{10}$ वीताशोक (→वीतशोक)

१४ ते$_{1}$ cd ○ –a) का॰ °संक्षुब्धे, दे$_{4}$ °सलुब्ध, दे$_{10}$ °स(क्षु?)॰धा, दे$_{11}$ °सकुष्ट, ते$_{1}$° संमोह (→°संक्षुब्ध) –b) शा$_{1}$ का$_{1}$ -महाम्बुज, दे$_{7}$ इहाबुधि (→-महाबुद्धि); दे$_{3}$ °विघाग्निने, दे$_{10}$ °विघट्टने, मुवे °विघट्टन (→°विघट्टिने) का॰ महाबुधिनिघाट्टते दे$_{3}$ महाबुधि विपदिते –c) दे$_{4}$ °ध्यायिनो (→°जापिनो) –d) का$_{2}$ भयाश्रया, दे$_{5\ 11}$ भवाश्रया (दे$_{11}$ °य) (→भवाश्रया)

कारा ab, cd मध्ये अधिकम्—

192 ※ त्रैलोक्य दाहमाणाद्य भूतिभूष नमोस्तु ते ।

१५. ते$_{1}$ ab ○ –a) गा$_{1}$ कारा का$_{1}$॰ नमो नमस्ते नित्याय –b) का$_{1}$ दे$_{11}$ °पावन दे$_{1\ 3}$ °नाशिने, दे$_{7}$ °पालिने, दे$_{10}$ °नाशन (→°पालन) –c) का$_{1}$ दे$_{1\ 3\ 11}$ °प्रमेयाय (→°प्रमेयाय) –d) गा$_{1}$ कारा का$_{1}$॰ दे$_{1}$ व्यापिने दे$_{5}$ व्याधाना, (→व्याधीनां) शा$_{1}$ का$_{1}$ नमनाय च, कारा ते दमाय च का॰ दे$_{7}$ शमनाय च (→शमनाय च) दे$_{4}$ व्यापिने परमात्मने

१६ दे$_{4}$ cd ○ –a) कारा का$_{1}$॰ दे$_{5\ 11}$ परायापरिणामाय, दे$_{7\ 10}$ ते$_{1}$ पराय परिमेयाय

१७ गा$_{1}$ का$_{1}$॰ दे$_{4\ 5.11}$ ab ○ –a) कारा दे$_{2.10}$ नम स्थाणवे प्रसिद्धाय, दे$_{3}$ निस स्थाणेव सिद्धाय (?), दे$_{7}$ नमस्था नाय सिद्धाय ते$_{1}$ नम स्थाणु च सिद्धाय –b) ते$_{1}$ श्रद्धे (→सिद्ध) –c) दे$_{7}$ धुत° (→भूत°) –d) दे$_{1\ 3}$ विरूपाय (→विश्वरूपाय)

१८ दे$_{5}$ ab ○ शा$_{1}$ फनीन्द्रो°, दे$_{4}$ फणिन्द्रो°, ते$_{1}$ मणीन्द्रो° (→फणीन्द्रो°); दे$_{1}$ °म्नेव (→°म्ने ते) दे फणिप्रोक्तमहिम्न

४६.२८ स भक्ष्यमाणस्त्राणार्थी पितामहमुपाद्रवत् ॥ २८
अथासां च महावृत्तिः प्रजानां संविधीयताम् ।
दत्तं ताभ्यस्त्वया ह्यन्नं स्थावराणां महौषधीः ॥ २९
जङ्गमानि च भूतानि दुर्बलानि बलीयसाम् ।
विहितान्नाः प्रजाः सर्वाः पुनर्जग्मुर्यथागतम् ॥ ३०
ततो ववृधिरे सर्वाः प्रीतियुक्ताः परस्परम् ।
भूतग्रामे विवृद्धे तु तुष्टे लोकगुरौ त्वयि ॥ ३१
समुत्तिष्ठन् जलात् तस्मात् प्रजाः संदृष्टवानहम् ।
ततोऽहं ताः प्रजा दृष्ट्वा विहिताः स्वेन तेजसा ॥ ३२
क्रोधेन महता युक्तो लिङ्गमुत्पाट्य चाक्षिपम् ।

तत् क्षिप्तं सरसो मध्ये ऊर्ध्वमेव यदा स्थितम् ॥ ३३
तदा प्रभृति लोकेषु स्थाणुरित्येष विश्रुतः ।
सकृद् दर्शनमात्रेण विमुक्तः सर्वकिल्बिषैः ॥ ३४
प्रयाति मोक्षं परमं यस्मान्नावर्तते पुनः ।
यश्चेह तीर्थे निवसेत् कृष्णाष्टम्यां समाहितः ॥ ३५
स मुक्तः पातकैः सर्वैरगम्यागमनोद्भवैः ।
इत्युक्त्वा भगवान् देवस्तत्रैवान्तरधीयत ॥ ३६
ब्रह्मा विशुद्धपापस्तु पूज्य देवं चतुर्मुखम् ।
लिङ्गानि देवदेवस्य ससृजे सरमध्यतः ॥ ३७
आद्यं ब्रह्मसरः पुण्यं हरिपार्श्वे प्रतिष्ठितम् ।

(यि?)ष्वो राजन्, दे$_{10}$ जिघत्सवस्तदा वह्मासन्, मुद्रे जिघत्सवस्त दा ब्रह्मन् –b) कारा दे$_{1\ 5\ 7\ 10}$ ते$_{1}$ तदा (→तथा) –c) दे$_{1\ 5\ 7\ 10}$ ते$_{1}$ स (दे$_{7}$ प्र) भक्ष्य° (दे$_{1}$ क्ष), दे$_{11}$ स सिक्ष्य° (→स भक्ष्य°), ते$_{1}$ °मागान् प्रा° (→°माणस्त्रा°)

२९ –a) शा$_{1}$ आद्या महीमतो, कारा अद्यामहेऽमु नो, का$_{1}$ पितामह् यतो, का$_{2}$ अद्यामहे ततो, दे$_{4\ 7}$ आसा (दे$_{7}$ °द्या) महामते, दे$_{5}$ अद्यासन्मा महा°, दे$_{11}$ अद्य सन्मा महा° (→अथासां च महा°) का$_{2}$ °वृत्ति (→°वृत्तिः) –b) दे$_{3}$ शं (→स); शा$_{1}$ का$_{1\ 2}$ °धीयते (→°धीयताम्) –c) शा$_{1}$ का$_{1\ 2}$ दत्तास्ता° (→दत्तं ता°); शा$_{1}$ हित, कारा. हित्वा, का$_{1\ 2}$ हृत, दे$_{7}$ चान्न (→ह्यन्न) दे$_{4}$ तत ताभ्योऽन्नमसृजद् –d) शा$_{1}$ कारा का$_{1\ 2}$ °व्यन्नम °, दे$_{7}$ °णि च **, दे$_{11}$ °णां महो° (→°णा महो°) दे$_{4}$ ओषधिस्थावराणि तु.

३०. –a) दे$_{4}$ तु (→च); दे$_{7}$ जङ्गमाना च भूताना –b) दे$_{11}$ दुर्घना° (→दुर्बला°); दे$_{7}$ बलीयसो (→बलीयसाम्) –c) शा$_{1}$ का$_{1\ 2}$ दे$_{7}$ °हितास्ता, दे$_{3\ 11}$ ते$_{1}$ °हितान्न (ते$_{1}$ °न्नि) (→विहितान्ना)

३१ –b) दे$_{3\ 10}$ प्रति° (→प्रीति°) शा$_{1}$ कारा का$_{1\ 2}$ तदो (कारा °थो) पधो (→परस्परम्) –c) शा$_{1}$ कारा का$_{1\ 2}$ भूतग्रामश्च ववृधे, दे$_{5\ 11}$ भूतग्रामे विवृध्दे तु –d) दे$_{11}$ दृष्टे (→तुष्टे) दे$_{7}$ °गुरो (→°गुरौ) शा$_{1}$ त्वयि (→त्वयि)

३२ –a) दे$_{4}$ उदति° (→समुत्ति°) –b) शा$_{1}$ कारा का$_{1\ 2}$ ससृष्टवान्, दे$_{4}$ दर्शितदान्, दे$_{5}$ सुदृष्टवान्, दे$_{11}$ सतिष्टवा (→संदृष्टवान्); दे$_{11}$ °हनम् (→°नहम्) –c) शा$_{1}$ हर्ता, दे$_{11}$ हन्ता (→°हं ता) –d) शा$_{1}$ का$_{1}$ सहिता स्वेन, कारा सहिता स्वेन, का$_{2}$ सहुता स्वेन, दे$_{3}$ ते$_{1}$ विहि (ते$_{1}$ हृ) तास्तेन, दे$_{5\text{-}11}$ विहितान्येन (→विहिता स्वेन)

३३ –b) शा$_{1}$ का$_{1\ 2}$ दे$_{11}$ उत्पाद्य (का$_{1}$ त्य,+ट्य), (→उत्पाट्य) शा$_{1}$ कारा का$_{1\ 7}$ दे$_{10}$ ते$_{1}$ ग्रा (का$_{1}$ या दे$_{10}$ ते$_{1}$ चा) क्षिपन् (का$_{1}$ ते$_{1}$ त) दे$_{7}$ विचक्षिपम्, दे$_{11}$ व्यत्तियम् (→चाक्षिपम्) –c) दे$_{4\ 7}$ सक्षिप्य (दे$_{7}$ °स) (→तत्क्षिप्तं) शा$_{1}$ सारसो का$_{2}$ च सरो (→सरसो) –d) का$_{1}$ ध्रुव, दे$_{4\ 7}$ ऊर्ध्वं (→ऊर्ध्वं) दे$_{4\ 7}$ पुरा (दे$_{7}$ °र) स्थित (→यदा स्थितम्)

३४ दे$_{3}$ d ○ –a) दे$_{10}$ लोकेऽस्मिन् (→लोकेषु) –b) शा$_{1}$ कारा का$_{1\ 7}$ दे$_{3\ 5\ 11}$ ते$_{1}$ °रित्येव (→°रित्येष); शा$_{1}$ कारा का$_{1\ 2}$ दे$_{7}$ विश्रुतम् (दे °ते) (→विश्रुत) –d) दे$_{4}$ °पातकै (→°किल्बिषैः)

३४ श्लोकानन्तर दे$_{1}$ अधिकम्—
194 * प्रयाति मोक्षं परम यस्मान्नावर्तते पुन ।
यश्चेह तीर्थे निवसेत्कृष्णाष्टम्या समाहित ।

३५ दे$_{3}$ ○ –c) दे$_{7}$ प्रयान्ति (→प्रयाति); कारा दे$_{4\ 10}$ परम मोक्षं (दे$_{4}$ स्थान) (→मोक्ष परम) –b) दे$_{5.11}$ नायान्ति ते (→नावर्तते) –c) दे$_{4}$ यस्येह (→यश्चेह) –d) शा$_{1}$ समाहिता, दे$_{7}$ विशेषत (→समाहित)

३६ –a) दे$_{1\ 3\ 7}$ विमुक्त (दे$_{7}$ °क्तैः) (→स मुक्त); दे$_{7}$ घोरै (→सर्वै) b) शा$_{1}$ कारा दे$_{11}$ [म]गम्य° (→[म] गम्या°] –c) शा$_{1}$ इत्युक्ता (→इत्युक्त्वा); दे$_{7}$ देव (→देव).

३७ –a) दे$_{1}$ ब्रह्म (→ब्रह्मा) –b) दे$_{1\ 3}$ ते$_{1}$ °विध (ते$_{1}$ °धा) (→°र्मुखम्) –d) शा$_{1}$ ससृजे (→ससृजे); दे$_{1\ 3}$ ते$_{1}$ सरो°, मुद्रे शर° (→सर°) दे$_{3}$ °मध्यम (→°मध्यत)

३८ –a) दे$_{3}$ अद्य (→आद्य) –b) दे$_{1\ 3}$ दे$_{10}$ हरे, दे$_{5}$ हरिः, ते$_{1}$ हर° (→हरि°) –c) दे$_{4\ 5}$ °सन्ने (दे$_{5}$ °सि) (→°सदन) –d) दे$_{1\ 4.11}$ हा (दे$_{4}$ षा, दे$_{11}$ सा) धर्म,

द्वितीयं ब्रह्मसदनं स्वकीये श्वाश्रमे कृतम् ॥ ३८
तस्यैव पूर्वदिग्भागे तृतीयं च प्रतिष्ठितम् ।
चतुर्थं ब्रह्मणा लिङ्गं सरस्वत्यास्तटे कृतम् ॥ ३९
एतानि ब्रह्मतीर्थानि पुण्यानि पावनानि च ।
ये पश्यन्ति निराहारास्ते यान्ति परमां गतिम् ॥ ४०
कृते युगे हरेः पार्श्वे त्रेतायां ब्रह्मणाश्रमे ।
द्वापरे तस्य पूर्वेण सरस्वत्यास्तटे कलौ ॥ ४१
एतानि पूजयित्वा च दृष्ट्वा भक्तिसमन्विताः ।
विमुक्ताः कलुषैः सर्वैः प्रयान्ति परमां गतिम् ॥ ४२

सृष्टिकाले भगवता पूजितस्तु महेश्वरः ।
सरस्वत्युत्तरे तीरे नाम्ना ख्यातश्चतुर्मुखः ॥ ४३
तं प्रणम्य श्रद्दधानो मुच्यते सर्वकिल्बिषैः ।
लोलासंकरसंभूतैस्तथा वै भाण्डसंकरैः ॥ ४४
तथैव द्वापरे प्राप्ते स्वाश्रमे पूज्य शंकरम् ।
विमुक्तो राजसैर्भावैर्वर्णसंकरसंभवैः ॥ ४५
ततः कृष्णचतुर्दश्यां पूजयित्वा तु मानवः ।
विमुक्तः पातकैः सर्वैरभोज्यस्यान्नसंभवैः ॥ ४६

शा1 का1 2 तृतीय वासव कृतम्, कारा स्वकीये वासवाचितम्, दे5 तृतीय चाश्रमेऽधिकम्, दे7 सरस्वत्याश्रमे कृतम्

३९. दे5. ab ○. –a) दे7 तस्यैव (→तस्यैव) –c) दे7 चतुर्थ- (→चतुर्थं); का1 दे1 3 7 ते1 ब्रह्मणो (→ब्रह्मणा) –d) दे10 स्थितम् (→कृतम्)

४०. –a) दे10 कृत एतानि (→एतानि ब्रह्म), दे7 पुण्या ण्या (स्या ?) पतनानि च, ते1 पु (ण्या ?) त्पुण्यतराणि च,+ पुण्याण्यु- (ण्यु ?) पवनानि च

४१. –a) दे7 कृते (→कृते), का2 हरे (→हरे) –b) कारा ब्राह्मणा°, दे7 विजया°, दे4 11 ब्रह्मणो° (→ब्रह्मणा°), दे11 °श्रम (→°श्रमे) –d) दे7 कृतौ (→कलौ)

४२ –a) दे4 5 ते1 तु (→च) –b) कारा दे1 3 4 7 11 ते1 समन्वित (→समन्विता) –c) शा1 कारा का2 दे1 4 7 विमुक्त (→विमुक्ता) –d) दे1 सर्वे (→सर्वैं); दे4.7 परमं पदम् (→परमां गतिम्)

४३ –a) दे4 स्वयभुवा सृष्टिकाले –b) दे1 ^ ते1 पूजितश्च, दे7 पूजितास्तु (→पूजितस्तु), दे1 महश्वर (→महेश्वर) –c) शा1 पार्श्वे (→तीरे) –d) शा1 तेना°, कारा का1 2 नाना- (→नाम्ना)

४३ श्लोकानन्तर दे1 7 10 11 मुत्रे अधिकम्—

195 * त पूजयित्वा यत्नेन सोपवासो जितेन्द्रिय ।
अगम्यागमनैर्दोषै मुच्यते नात्र सशय ।
ततस्त्रेतायुगे प्राप्ते स्थाणोर्देवसमीपता ।
पूजित सुमहल्लिंगं तत्रापि च चतुर्मुखम् । [4]

[ –1) दे11 स्वं (→त). –3) दे4.7 11 तत्र (→तत); दे4. 7.10.11 °समीपत (→°समीपता). –4) दे4 तु (→च)].

४४ –a) दे7 प्रणम्य त (→त प्रणम्य), दे4 प्रगम्य श्रद्दधानस्तु –b) दे4 °पातकै (→°किल्बिषै) –c) कारा लोलै सकर° का1 दे1 3 5 11 लो (दे11 लो) लाशक्र°, दे2 10 लाला शंकर°, दे4 लालसकर°, दे7 नाना सकर°, ते1 लोलाशर्कर° (→लोलासकर°) दे3 5 -सभूते (दे5 ते), मुत्रे -सभूत (→संभूतै) –d) दे4 तथैव, दे7 तथैव (→तथा वै), दे1 3 5 10 ते1 भानु (→भाण्ड); शा1 कारा का1 दे1 3.5 7 10 ते1 -शकरै, मुत्रे शकरम् (→-सकरै)

४४ श्लोकस्य ab, cd मध्ये दे1 अधिकम्—

196 * सर्वे प्रयान्ति परमां गति किल्बिषै ।

४५ दे10 ab ○ –a) कारा तत्रैव, दे2 3 ते1 तथा वै (→तथैव), ते1 वैश्वानरे (→वै द्वापरे) –b) दे7 (स) त्वाश्रम, दे11 स्वाश्रम (→स्वाश्रमे); दे1 3 ते1 पूर्वं, दे4 प्राप्य, मुत्रे प्राच्यं (→पूज्य) –c) कारा विमुक्ता, दे3 विमुक्त (→विमुक्तो) –d) दे1 3 ते1 प्राप्य वा° (→वगस°)

४५ श्लोकानन्तर दे अधिक—

197 * त पूजयित्वा यत्नेन सोपवासो जितेन्द्रिय ।
अ(म?)गम्यासम्भवैर्दोषैर्मुच्यते नाऽत्र संशय ।
तत्र त्रेतायुगे प्राप्त स्थाणोर्देवसमीपत ।
पूजित सुमहल्लिङ्ग तत्रापि च चतुर्मुखम् । [4]

४६ –a) दे2 चतुःकृष्ण°, दे7 तत्रैव च (→तत कृष्ण°); दे7 चतुर्न्दश्या (→चतुर्दश्या) –b) शा1 दे3 तु मानवा (दे3 °व), कारा का1 च मानव, दे1 च वामन (→तु मानव). –c) दे3 ते1 विमुक्ता (→विमुक्त) –d) शा1 °स्यानुसम्भवै, दे4 °तरसंभवै (→°स्यान्नसंभवै); कारा दे7 अभोज्यान्नसमुद्भवै, दे2 रसोह्यस्यान्नसभवै.

६. ४६ कलिकाले तु संप्राप्ते वसिष्ठाश्रममास्थितः ।
चतुर्मुखं स्थापयित्वा ययौ सिद्धिमनुत्तमाम् ॥ ४७
तत्रापि ये निराहाराः श्रद्दधाना जितेन्द्रियाः ।
पूजयन्ति महादेवं ते यान्ति परमं पदम् ॥ ४८
इत्येतत् स्थाणुतीर्थस्य माहात्म्यं कीर्त्तितं तव ।
यच्छ्रुत्वा सर्वपापेभ्यो मुक्तो भवति मानवः ॥ ४९

इति श्रीवामनपुराणे सरोमाहात्म्ये अष्टाविंशोऽध्यायः ॥२८॥

समाप्तं सरोमाहात्म्यम् ।

---

४७. –a) दे$_{2}$ कालि° (→कलि°) –b) दे$_{5}$ -सस्थित, दे$_{7}$ -समर्वे, दे$_{10}$ मास्थिता (→मास्थित); शा$_{1}$ कारा का$_{1\ 2}$ वसिष्ठ स्वाश्रमे स्थित, दे$_{11}$ वसिष्ठा स्वाश्रमाश्रिता. –c) दे$_{5\ 11}$ स्थापयति (→स्थापयित्वा). –d) दे$_{5,11}$ मनुत्तमम् (→मनुत्तमाम्).

४८. दे$_{1}$. द्विरावृत्तम्. –a) दे$_{7}$ यो (→ये) –b) दे$_{4}$ °धानो (→°धाना). –d) दे$_{5.7\ 11}$ °मा गतिम् (→°मं पदम्).

४९. –a) कारा इत्येव (→इत्येतत्), शा$_{1}$ कारा. का$_{1}$ स्थानु° (→स्थाणु°). –b) दे$_{4}$ तव कीर्तितम् (→कीर्तितं तव). –c) शा$_{1}$ कारा. का$_{1}$ य, दे$_{5}$ ते$_{1}$ तत् (→यत्). –d) शा$_{1}$ दे$_{1}$ मानवा॰, दे$_{10}$ मानव (→मानवः).

पुष्पिका—शा$_{1}$ का$_{1.2}$ दे$_{1\ 5\text{-}11}$ ते$_{1}$ इति श्री (का$_{2}$ दे$_{1\text{-}4\text{-}11}$ [श्री]) वामनपुराणे, कारा दे$_{7.10}$ इति श्री (कारा. [श्री]) इति श्रीवामनपुराणे सरोमाहात्म्ये अध्यायनाम—शा$_{1}$ का$_{1\text{-}3}$ दे$_{1\text{-}5\text{-}7\text{-}10\text{-}11}$ ○, कारा. चतुर्मुखेश्वरमहिमा नाम, ते$_{1}$ सरोमाहात्म्यसमाप्तिर्नाम. अध्यायसंख्या—शा$_{1}$ दे$_{4.5\text{-}11}$. ○, कारा. एकोनपञ्चाशत्तमोध्याय, का$_{1}$ ॥३६॥, का$_{2}$ ॥४०॥, दे$_{1\ 3.10}$ ॥४६॥, दे$_{2}$ ॥४६॥, दे$_{7}$ षष्ठोऽध्याय, ते$_{1}$ एकपञ्चाशोध्यायः, मुद्रे एकोनपञ्चाशत्तमोऽध्याय .

अत पर शा$_{1}$ का$_{1.2}$ दे$_{1\text{-}5\text{-}11}$ अधिकम्—॥ सरोमाहात्म्यं समाप्तम् ॥

# २४

देवदेव उवाच ॥❀

एवं पृथूदको देवाः पुण्यः पापभयापहः ।
तं गच्छध्वं महातीर्थं यावत् संनिधिनोधितम् ॥ १
यदा मृगशिरोऋक्षे शशिसूर्यौ बृहस्पतिः ।
तिष्ठन्ति सा तिथिः पुण्या त्वक्षया परिगीयते ॥ २
त गच्छध्वं सुरश्रेष्ठा यत्र प्राची सरस्वती ।
पितॄनाराधयध्वं हि तत्र श्राद्धेन भक्तितः ॥ ३
ततो मुरारिवचनं श्रुत्वा देवाः सवासवाः ।
समाजग्मुः कुरुक्षेत्रे पुण्यतीर्थे पृथूदकम् ॥ ४
तत्र स्नात्वा सुराः सर्वे बृहस्पतिमचोदयन् ।
विशस्व भगवन् ऋक्षमिमं मृगशिरं कुरु ।
पुण्या तिथिं पापहरा तत्र कालोऽयमागतः ॥ ५ वे ५

---

२४

[ अत्र सरोमाहात्म्यानन्तर वामनपुराणस्य चतुर्विंशाध्याय मारम्य अवशिष्टांश प्रारभ्यते ]

प्रथमश्लोकात्पूर्वं गा1 कारा का1 2 दे1 5 7 9 11 वे1 न1 पुस्तकेपु अधिकम्— सनत्कुमार उवाच ।

198 ❀ ततोऽब्रवीद् देवरस्तु तीर्थं
यस्माद् भवानेकभया प्रयाति ।
पृथूदकेत्येव च नाम तुभ्य
भविष्यते तीर्थवर. पृथिव्याम् । [4]

[ दे9 न1 सनत्कुमार उवाच ○; दे1 सनत्कुमार उ दे7 वे1 सनत्कुमार.

–1) दे11 देव ❀ र सुतीर्थं (→देववरस्तु तीर्थं) –2) धा1 यस्माद् भवानेक प्रतिप्रयाति का1 यस्माद् भवाभाव प्रतिप्रयाति का॰ यस्माद् भवाशाकपति प्रयाति दे1 3 5 9 11 यस्माद् भवानेकतया प्रयाति (दे॰ 3 10 °न्ति) दे4 यस्मिन् भवो न्व्यितया प्रयाति, न1 भवानेक्यतया प्रयाति –3) दे1 तस्य (→तुभ्य) –4) दे1 भविष्यती (→भविष्यते), दे1 4 9 11 वे1 तीर्थवर (→तीर्थवर.) दे1 3 5 7 10 11 पृथिव्या (→पृथिव्यां) ]

❀ दे1 5 7 9 10 वे1 न1 ○; कारा श्रीभगवानुवाच

१ –a) दे1 एकं (→एवं); धा1 कारा का1.2 दे1 5.7 10-11 वे1 पृथूदकं (→पृथूदको); ब1 देव (→देवा) –b) धा1 कारा का1 2 ब1 दे1 5 9-11 वे1 पुण्य, दे7 पुण्या (→पुण्य:); धा1 कारा का1 2 दे1 5.9-11 वे1 °भयापह (→°भयापह:) –c) दे4 न1 सद् (→तं), दे7 महत्तीर्थं (→महातीर्थं) –d) का1 यावत्संनिधिबोधितं,+या तिथिस्तां निबोधत, का2 यावत्सति विबोधितं, ब1 यया तु नियथावत्तु निबोन्धत(?), दे1 3.10 वे1 यावित्यन्तो निबोधत, दे4 यावता तन्निबोधत, दे3 11 यद् विख्यात निबोधत दे7 यद्वत् सा तन्निबोधत, दे9 याचस्वैनां निबोधत, न1 या रसा ता निबोधत

२ –a) कारा दे2 10 मृगशिरस्यृक्षे, का1 मृगशिरो ऋक्षे, +मृगशिरर्क्षे तु, दे1 मृगशिर ऋक्षे, दे5 9 11 मृगशिरे ऋक्षे, दे7 मृगशिरर्क्षे तु वे1 मृगशिरस्त्वर्क्षे (→मृगशिरो ऋक्षे) दे4 यद्यसौम्ये हि नक्षत्रे –b) दे3.4.10 शशि सूर्यो दे7 चन्द्रसूर्यो, (→शशिसूर्यौ) –c) भुवे पूर्वा (→पुण्या) –d) दे1 3[-अ] वक्षया दे5 मत्त्वया, दे7 चाक्षया, वे1 याक्षया (→त्वक्षया) दे9 परिगण्यते (→परिगीयते)

३ –b) दे9 पुण्या (→प्राची) –c) दे1 3 वे1 प्राराधय त्व (→आराधयध्व) धा1 कारा का1॰ दे1 3.5 10 11 वे1 च (→हि)

३ श्लोकानन्तर दे9 अधिकम्—पुलस्त्य

४ –a) गा1 कारा का1 ते मुरारिवच श्रुत्वा, दे5 11 मुरारि वचन श्रुत्वा –b) धा1 कारा का1 2 सर्वे, दे1 3 10 दृष्ट्वा, दे9 श्रुत्वा,+दृष्ट्वा (→श्रुत्वा) दे7-11 देवा सर्वे (→श्रुत्वा देवा); दे7 श्रुत्वा देवा समाययु –c) न1 कुरुक्षेत्रं (→कुरुक्षेत्र) दे7 कुरुक्षेत्रे पुण्यतमे –d) धा1 कारा का1॰ ब1 दे॰ 5 7 10 पुण्य (→पुण्य) दे1 9 -तीर्थं (→ -तीर्थे)

५ –a) ब1 दे4 7 9 न1 तस्मिन् (→तत्र) –c) धा1 कारा का1 2 विवेश, ब1 विनाशम, दे1 3 10 वे1 विवस्वन्, दे॰ 7 विन्वेश (दे2 र्श) दे5 विश्वस्वर् (→विशस्व); धा1 ब1 दे॰ 7 10-11 भगवान् (→भगवन्); दे7 दन्गम्, दे3 अद्य (→ऋक्षम्) –d) ब1 मम, दे1 3 7 10 वे1 इन, दे9 ऋक्षं (→इमं); ब1 दे4 5-7 9 वे1 न1 मृगशिर (→मृगशिरं), धा1 का1॰ तन (→कुरु); दे1 3 कुरु शिर (→शिरं कुरु) –e) का1 2 पुण्या तिथि पापहरा; दे4

१० ७ प्रवर्तते रविस्तत्र चन्द्रमाऽपि विशत्यसौ ।
त्वदायत्त गुरो कार्यं सुराणां तत् कुरुष्व च ॥ ६
इत्येवमुक्तो देवैस्तु देवाचार्योऽब्रवीदिदम् ।
यदि वर्षाधिपोऽह स्या ततो यास्यामि देवताः ।
बाढमूचु. सुराः सर्वे ततोऽसौ प्राक्रमन्मृगम् ॥ ७
आषाढे मासि मार्गर्क्षे चन्द्रक्षयतिथिर्हि या ।
तस्यां पुरदरः प्रीतः पिण्ड पितृषु भक्तित. ॥ ८
प्रादात् तिलमधून्मिश्रं हविष्यान्नं कुरुष्वथ ।
तत. प्रीतास्तु पितरस्ता प्राहुस्तनया निजाम् ॥ ९
मेना देवाश्च शैलाय हिमयुक्ताय वै ददु. ।
ता मेना हिमवॉल्लब्ध्वा प्रसादाद् दैवतेष्वथ ।
प्रीतिमानभवच्चासौ रराम च यथेच्छया ॥ १०
ततो हिमाद्रिः पितृकन्यया सम
समर्पयन् वै विषयान् यथेष्टम् ।
अजीजनत् सा तनयाश्च तिस्रो
रूपातियुक्ता. सुरयोषितोपमा. ॥ ११

इति श्रीवामनपुराणे चतुर्विंशोऽध्याय ॥२४॥

---

तीर्थ पापहरा पुण्या –f) शा1 का1 2 दे4.5 11 तस्य (→तव) दे1 3 ते1 तव काल समागत

६ –b) का1 विशत्वसौ, ब1 वदत्यसो दे4 7 व्रजत्यसौ दे10 चरत्यसौ (→विशत्यसौ) ते1 ○ –c) शा1 का1 2 दे1 3 5 11 तदायत्त, ब1 तत्रायत्त न1 त्वया यत्न (→तदायत्तं) दे9 तत्र यत्न परा कार्या –d) ब1 दे4 तु दे7 त्व (→तत्); ब1 दे1 व दे4 7 तत्, दे11 [-अ] थ (→च)

७ –a) दे4 *** (→देवैस्त) –b) न1 देवान् भूयोऽब्रवीदिद –c) दे5 7 स्यात् (→स्याम्) –d) न1 देवता (→देवता·) –f) दे1 11 प्रकमन् (→प्राक्रमन्)

८ –a) दे9 आषाढमासे, ते1 आषाढमासि (→आषाढ मासि) दे11 मार्गक्ष (→मार्गर्क्षे) दे9 °तिथीपरा (→°तिथिर्हि या) –c) दे4 प्रीति (→प्रीत); न1 *** (→भक्तित) दे11 तस्मात्पुरदरप्रीत

९ –a) दे1 3 ते1 प्रादात्तिलविमिश्र च दे4 7 प्रादान्मधु तिलैर्मिश्र मुवे प्रादात्तिलमधून्मिष्ट –b) शा1 दे1 3 5 ते1 कुरुष्व च ब1 दे9 11 न1 गुरुष्वय दे॰ कुरु च य दे7 कुशेष्वय (→कुरुष्वय) –d) का1 तान् (→ता) शा1 का1 2 प्रोचु, न1 ददु (→प्राहु) शा1 का1 2 तनयाभिजान्, दे3 तनय निज (→तनयां निजां)

१० –a) दे7 देवास्तु (→देवाश्च) दे9 मनो देवाय शैलाय न1 मेना शैलाय देवाश्च –b) दे ददौ (→ददु) –d) शा1 ब1 प्रमादात् (→प्रसादात्) शा1 दैवतेषु च का1 देवतेष्वथ दे4 दैवतादथ (→दवतेष्वथ) –f) ब1 अगमच्च, दे1 4 10 रेमे स तु दे2 3 ते1 रेमे सा तु दे7 रमयच्च (→रराम च); दे7 यथेप्सित (→यथेच्छया)

११ –b) ब1 दे1 5 7 10 ते1 सन्तर्पयन् (→समर्पयन्); दे5 11 यथेप्सितान्, दे7 यथेष्टान् (→यथेष्टम्) शा1 का1 ॰ समर्पयद्वै विषयान् यथेच्छया –c) शा1 तनयाश्च ब1 दे5 7 तनयास्तु, दे3 तनयाच दे9 तनयास्तु न1 तनया हि, (→तनयाश्च) शा1 का1 2 दे5 11 मेना (→तिस्रो) –d) शा1 कारा का1 2 तथानियुक्ता, दे7 कायाभियुक्ता (रूपातियुक्ता); दे1 3 10 ते1 °योषितस्तु, दे7 °योषितोहिया (→°योषितोपमा·)

पुष्पिका—शा1 का1 इतिश्रीवामनपुराणे उमासंवादे का2 दे1 इतिश्री (दे1 [श्री]) वामनपुराणे उमासभवे कुरुक्षेत्रमाहात्म्ये ब1 दे2 5 7 9 10 ते1 न1 इति श्री (दे4.5 11 [श्री]) वामनपुराणे उमासभवे दे11 इति वामनपुराणे सरोमाहात्म्ये अध्यायनाम—का2 ब1 दे1 4 7 11 ○; शा1 का1 दे2 3 5 कुरुक्षेत्रमाहात्म्यं दे9 10 ते1 न1 कुरुक्षेत्रमाहात्म्य नाम अध्यायसख्या—शा1 दे ○; का1 ॥४०॥ का एकचत्वारिंशोध्याय ब1 द्वितीयोध्याय, दे1 3.10 ॥५०॥ दे॰ ॥४७। दे4 प्रथमोध्याय दे7 सप्तमोध्याय, ते1 द्विपञ्चाशोध्याय ॥ दे9 न1 त्रयोविंशोऽध्याय मुवे पञ्चाशत्तमोध्याय ।

# २५

पुलस्त्य उवाच ।❀
मेनायाः कन्यकास्तिस्रो जाता रूपगुणान्विताः ।
सुनाम इति च ख्यातश्चतुर्थस्तनयोऽभवत् ॥ १
रक्ताङ्गी रक्तनेत्रा च रक्ताम्बरविभूषिता ।
रागिणी नाम संजाता ज्येष्ठा मेनासुता मुने ॥ २
शुभाङ्गी पद्मपत्राक्षी नीलकुञ्चितमूर्धजा ।
श्वेतमाल्याम्बरधरा कुटिला नाम चापरा ॥ ३
नीलाञ्जनचयप्रख्या नीलेन्दीवरलोचना ।
रूपेणानुपमा काली जघन्या मेनकासुता ॥ ४
जातास्ताः कन्यकास्तिस्रः षडब्दात् परतो मुने ।
कर्तुं तपः प्रयातास्ता देवास्ता ददृशुः शुभाः ॥ ५
ततो दिवाकरैः सर्वैर्वसुभिश्च तपस्विनी ।
कुटिला ब्रह्मलोकं तु नीता शशिकरप्रभा ॥ ६
अथोचुर्देवताः सर्वाः किं त्वियं जनयिष्यति ।
पुत्रं महिषहन्तारं ब्रह्मन् व्याख्यातुमर्हसि ॥ ७
ततोऽब्रवीत् सुरपतिर्नेयं शक्ता तपस्विनी ।
शार्वं धारयितुं तेजो वराकी मुच्यतां त्वियम् ॥ ८
ततस्तु कुटिला क्रुद्धा ब्रह्माणं प्राह नारद ।
तथा यतिष्ये भगवन् यथा शार्वं सुदुर्द्धरम् ॥ ९
धारयिष्याम्यहं तेजस्तथैव शृणु सत्तम ।

---

२५

❀ ना1 दे9 न1 पुलस्त्य

१ –a) बा1 मेनया +मेनाया ब1 3 दे1 3 10-11 वे1 न1 मेनाया (→मेनाया); दे1 3 वे1 °का जाता (दे3 ता) (→°कास्तिस्रो) –b) बा1 जात +जाता का॰ दे10 जाता, दे1 3 वे1 तिस्रो (→जाता) –c) दे3 सुनाल (→सुनाम) ब1 दे7 11 वे1 विख्यात, दे2 चाख्याता (→च ख्यात) ब3 रूपनाम इति ख्यात दे9 न1 सुता जगति विख्याता –d) दे1 तनय शुभ (→तनयोऽभवत्)

२ –a) ना1 रक्ताङ्ग, दे1 रक्तागा (→रक्ताङ्गी) दे4 °नेत्रा तु, दे9 °नेत्राता (→°नेत्रा च) –b) कारा भूपणा ब2 °भूपता दे3 °भूपत (→°भूषिता) –c) ना1 कारा का1॰ °राग (→°नाम); दे10 संभूता (→संजाता)

३ –a) ना1 शुभांगे, ब1 श्वेतांगी दे1 7 9 न1 श्वेतांगी (→शुभाङ्गी) दे1 3 °नेत्राक्षी (→°पत्राक्षी) –b) दे1 °मूधजा (→°मूर्धजा); दे3 नीलकूची तनूरुहा

४ –a) दे1 च प्रख्याता दे5 ● यो प्रख्या (→चय प्रख्या) –c) ना1 काले (→काली) –d) दे11 जघन्या (क) (→जघन्या) ब1॰ मेनया (→मेनका)

५ दे1 –a) 'जातास्ता खण्डितम् –b) ना1 षडनु कारा षड्न्, का1 षड्न्वे ब1 दे9 षडब्दा, दे3 षडब्दा (→षडब्दात्); का॰ पुरतो (→परतो) –c) का2 प्रिया तास्ता, ब3 दे1 4 7 10 वे1 प्रयाताश्च (दे7 चै) (→प्रयातास्ता) –d) दे9 न1 देवास्तु (→देवास्ता)

६ –a) दे9 न्विाकरै सवर्देश्च –b) दे2 पु(सु?)नाभिश्च (→वसुभिश्च) दे3 तपस्विभि दे11 तपोधनै (→तपस्विनी) –c) ब1 3 दे9 °लोकस्तु (→°लोकं तु) –d) न1 हिम° (→शशि°) –

७ –a) दे3 मथो(च)तुर, दे7 अब्रुवन् (→मथोचुर) –b) कारा किन्विय दे3 वे1 किल्वियं, दे9 कन्याय (→किं त्विय); ब॰ जन ॰॰, दे1 3.10 वे1 जनयिष्यते (→जनयिष्यति) –c) दे4 महिषं (→महिष) का2 °हर्तारं (→°हन्तार) –d) दे4 माख्यातु (→व्याख्यातु)

८ –a) ब1 2 वे1 °धक्षा (→°पति) –b) ना1 का1 नाय का2 नय +नाय, ब2 स्वेयं (→नेय); दे5 शक्तो (→शक्ता); ब1 तपस्विद (→तपस्विनी) –c) दे2 वे1 सर्वं, दे5 धर्वं (→शार्व); ब3 ततो दे10 तेजा (→तेजो)

९ –a) दे1 कुटिला' खण्डितम् –b) ब1 ब्राह्मणं, दे3 ब्रह्माह (→ब्रह्माणं) ना1 कारा का1 2 सा तन, दे7 नारद॰ (→नारद) –c) ब1 3 दे3 11 भगवान्, दे7 [-म]हं ब्रह्मन् (→भगवन्) –d) का2 सर्वं +शार्वं, ब॰ दे5 धर्वं, दे1 सार्वं, दे7 सर्वां (→शार्वं); का1 सुदुस्तर (→सुदुर्धरम्)

१० –b) ना1 का1 तस्तैव ब2 दे2 तथैव च, दे4 तथैतद् (→तथैव); दे5 सत्तम (→सत्तम) –c) ब3 समाराध्य, दे11 सु सप्तेन (→सुतप्तेन) –d) ब3 सुतप्तेन, दे11 समारम्य (→समा

१ १० तपसाहं सुतप्तेन समाराध्य जनार्दनम् ॥ १०
यथा हरस्य मूर्धानं नमयिष्ये पितामह ।
तथा देव करिष्यामि सत्यं सत्यं मयोदितम् ॥ ११

पुलस्त्य उवाच ।ॐ

ततः पितामहः क्रुद्धः कुटिलां प्राह दारुणाम् ।
भगवानादिकृद् ब्रह्मा सर्वेशोऽपि महात्मने ॥ १२

ब्रह्मोवाच ।ॐ

यस्मान्मद्वचनं पापे न क्षान्तं कुटिले त्वया ।
तस्मान्मच्छापनिर्दग्धा सर्वा आपो भविष्यसि ॥ १३
इत्येवं ब्रह्मणा शप्ता हिमवद्दुहिता मुने ।
आपोमयी ब्रह्मलोकं प्लावयामास वेगिनी ॥ १४
तामुद्वृत्तजलां दृष्ट्वा प्रबबन्ध पितामहः ।
ऋक्सामाथर्वयजुभिर्वाङ्मयैर्बन्धनैर्दृढम् ॥ १५
सा बद्धा संस्थिता ब्रह्मन् तत्रैव गिरिकन्यका ।
आपोमयी प्लावयन्ती ब्रह्मणो विमला जटाः ॥ १६
या सा रागवती नाम सापि नीता सुरैर्दिवम् ।
ब्रह्मणे तां निवेद्यैवं तामप्याह प्रजापति. ॥ १७
सापि क्रुद्धाब्रवीन्नूनं तथा तप्स्ये महत्तपः ।

---

राध्य) दे$_{1}$ 11 जनार्द्दन (→जनार्द्दनम्)

११ –a) ब$_{3}$ दे$_{2}$ रहस्य (→हरस्य) दे$_{7}$ मूर्द्धन्य (→मूर्धान) –b) ब$_{1\ 3}$ नर्मयिष्यो, दे$_{4}$ न गमिष्ये, दे$_{7}$ गमयिष्ये, दे$_{9}$ भगयिष्ये (→नमयिष्ये); दे$_{1\ 3}$ ते$_{1}$ पितामह (→पितामह) –c) दे$_{11}$ घरि° (→करि°) –d) दे$_{5}$ मयोदिते, दे$_{11}$ भयोदितम् (→मयोर्दितम्).

ॐशा$_{1}$ का$_{1}$ दे$_{7\ 9}$ न$_{1}$ पुलस्त्य दे$_{1}$ पुलस्त्य उ

१२ –a) न$_{1}$ तथा (→तत) –b) दे$_{4}$ कुटिला (→कुटिला), कारा दे$_{1\ 7\ 10}$ प्राह दारुण ब$_{3}$ प्रीतिदारुण (→प्राह दारुगाम्) –c) दे$_{3}$ मादि कृद्धर्मो दे$_{9}$ मादिशद् ब्रह्मा (→मादिकृद् ब्रह्मा) –d) दे$_{7}$ सशापेना (→सर्वेशोपि)

ॐ कारा दे$_{5}$ ○, दे$_{9}$ न$_{1}$ ब्रह्मा

१३ दे$_{5}$ ○ –b) का$_{1}$ क्षत,+क्षात (→क्षान्त), दे$_{3}$ कु (ल) टिले (→कुटिले) –c) न$_{1}$ यस्मात् (→तस्मात्) –d) कारा स वा मापो, ब$_{1\ 2}$ सा त्वमापो, ब$_{3}$ दे$_{9}$ न$_{1}$ सर्वमापो, दे$_{7}$ सर्वाचापो, मुवे. सर्वास्वापो (→सर्वा आपो) कारा दे$_{1\ 3\ 10}$ °ष्यति (→°ष्यसि)

१४ दे$_{5}$ ab ○ –b) दे$_{11}$ 'मवद्दुहि' खण्डितम् –c) शा$_{1}$ कारा का$_{2}$ ब$_{3}$ दे$_{1\ 5\ 7\ 10.11}$ न$_{1}$ आपोमया (→आपोमयी), का$_{1}$ °लोके (→°लोक) –d) ते$_{1}$ 'मा　नी' खण्डितम्' शा$_{1}$ कारा का$_{1\ 2}$ मेदिनीम् (→वेगिनी)

१४ श्लोकान्तर दे$_{4}$ अधिकम्—

199 ● तत समभ्येत्य सुरा रागिणीं प्राहुराकुला'
देवि पश्यस्व का जानि कुटिला मन्मयीं स्थिता ।
शापाद्विरिञ्चस्तस्यास्त्व प्रतिकुरुष्व मा चिरम् ।
इति श्रुत्वा देववचो रागिणी कविता ययौ । [4]
विद्याबलेन तत्तोय शोषयामास नारद

१५ दे$_{4}$ १५ १८ ○, दे$_{10}$ ab ○ –a) शा$_{1}$ कारा का$_{1\ 2}$ ब$_{1\ 3}$ दे$_{1\ 3\ 11}$ तामुद्वृत° (ब$_{2}$ दे$_{3}$ °त्त), दे$_{9}$ तामुत्थित° (→तामुद्वृत्त°) –b) न$_{1}$ बबन्ध प्रपितामह –d) शा$_{1}$ वाङमयो (→वाङ्मयैः) ब$_{1\ 3}$ वाङमयैर्ब्राह्मणैर्दृढम्, दे$_{1\ 3}$ ते$_{1}$ ब्राह्मणैः सर्वतोदृढम्, दे$_{2\ 7\ 10}$ बन्धनैः सर्वतो दृढम्, दे$_{5}$ बन्धनैः *** दृढा

१६ दे$_{4}$ ○ (द्र १५पा वि) –a) शा$_{1}$ कारा का$_{1}$ साच वै, का सा चैव, ब$_{2}$ ते$_{1}$ सा वद्दा, दे$_{11}$ सा ब्रह्मा (→सा बद्धा); दे$_{2\ 3}$ सस्थितो, दे$_{7}$ सस्तुता, दे$_{11}$ स स्थिता, न$_{1}$ शमिता (→सस्थिता) –b) दे$_{7\ 9}$ तत्रैव (→तत्रैव) दे$_{5}$ लोक ****** –c) दे$_{5}$ 'अपोमयी खण्डितम्' शा$_{1}$ कारा का$_{2}$ दे$_{1\ 2\ 10}$ आपोमया (→°आपोमयी) दे$_{7}$ मापो चा ● ह्लादयती –d) का$_{1}$ ब्रह्मणे, +ब्रह्मणो (→ब्रह्मणो) दे$_{1\ 3\ 5\ 10}$ ते$_{1}$ विमलालयम्, दे$_{9}$ विमला भसा (→विमला जटा) दे$_{7}$ ब्रह्मलोकमगावसा

१७ दे$_{4}$ ○ (द्र १५पा वि) –a) दे$_{7}$ या स, ते$_{1}$ यासो (→या सा) दे$_{3}$ भगवती (→रागवता) –b) ब$_{1}$ ● दिवि (→दिवम्) –c) दे$_{9}$ न$_{1}$ ब्रह्मणस्ता (→ब्रह्मणे ता) शा$_{1}$ कारा का$_{1}$ निवो-द्यैव (कारा °व), का ब$_{1\ 3}$ दे$_{1\ 3\text{-}5\ 7\ 10\text{-}11}$ निवेद्यैव (→निवेद्यव) ते$_{1}$ ब्रह्मा न ता निरोधैव –d) ब$_{2}$ तामप्याय, ते$_{1}$ तामयाह (→तामप्याह)

१८ दे$_{4}$ ○ (द्र १५पा वि) –a) शा$_{1}$ का$_{1}$ सापि क्रुद्धा भवे (का$_{1}$ °व) न्नून, कारा न$_{1}$ सापि क्रुद्धब्रवीन्नून, ब$_{2\ 3}$ दे$_{7}$ सापि क्रुद्धाब्रुवन्नून, दे$_{5}$ सापि क्रुद्धाब्रवीभूत (?), दे$_{9}$ सापि क्रुद्धाब्रवीद् वाक्य, दे$_{10}$ सापि क्रुद्धाब्रवीत्वैन –b) ब$_{1}$ तप्स्या महत्तप', ब$_{2\ 3}$ तप्स्याम्यह तप, दे$_{1\ 9\ 11}$ तस्ये (दे$_{9}$ °प्ये) महत्तप', न$_{1}$ तप्स्ये महातप (→तप्स्ये महत्तप') –c) दे$_{9}$ यथा मनो स (→यथा मन्नाम) दे$_{7}$ यथा स कामसततो –d) ते$_{1}$ महिषस्यो (→महि-

यथा मन्नामसंयुक्तो महिषघ्नो भविष्यति ॥ १८
तामप्यथाशपद् ब्रह्मा सन्ध्या पापे भविष्यसि ।
या मद्वाक्यमलङ्घ्यं वै सुरैर्लङ्घयसे बलात् ॥ १९
सापि जाता मुनिश्रेष्ठ सन्ध्या रागवती तत. ।
प्रतीच्छत् कृत्तिकायोगं शैले या विग्रहं दृढम् ॥ २०
ततो गते कन्यके द्वे ज्ञात्वा मेना तपस्विनी ।
तपसो वारयामास उमेत्येवाब्रवीच्च सा ॥ २१
तदेव माता नामास्याश्चक्रे पितृसुता शुभा ।
उमेत्येव हि कन्यायाः सा जगाम तपोवनम् ॥ २२
ततः सा मनसा देवं शूलपाणिं वृषध्वजम् ।
रुद्रं चेतसि सधाय तपस्तेपे सुदुष्करम् ॥ २३
ततो ब्रह्माऽब्रवीद् देवान् गच्छध्वं हिमवत्सुताम् ।
इहानयध्वं तां कालीं तपस्यन्तीं हिमालये ॥ २४
ततो देवाः समाजग्मुर्ददृशुः शैलनन्दिनीम् ।
तेजसा विजितास्तस्या न शेकुरुपसर्पितुम् ॥ २५
इन्द्रोऽमरगणै. सार्द्धं निर्द्धूतस्तेजसा तया ।
ब्रह्मणोऽधिकतेजोऽस्या विनिवेद्य प्रतिष्ठित. ॥ २६
ततो ब्रह्माऽब्रवीत् सा हि ध्रुवं शंकरवल्लभा ।
यूय यत्तेजसा नून विक्षिप्तास्तु हतप्रभाः ॥ २७
तस्माद् भजध्वं स्व स्वं हि स्थानं भो विगतज्वराः ।    वें ५

पन्नो) दे$_{7}$ भविष्यसि (→भविष्यति)

१९ —a) का$_{\circ}$ तामप्यर्थशपद् ब्रह्मा, ब$_{1\,3}$ ब्रयोऽपद् ब्रह्मा, दे$_{1\,3\,11}$ ता स व्ययोऽपद् ब्रह्मा दे$_{4}$ तामुद्दृत्य अना दृष्ट्वा, दे$_{5}$ तामयोशप * ह्मा, दे$_{7}$ तामप्यभापद् ब्रह्मापि, दे$_{10}$ ता स चाथोऽशपद् ब्रह्म, ते$_{1}$ तासवश्चारा यद्ब्रह्मा —b) ब$_{2}$ दे$_{1\,3\,10}$ ते$_{1}$ सध्यारागो, दे$_{7}$ व्यगापापे, दे$_{9}$ पडापापे (→सन्ध्या पापे) का$_{2}$ ब$_{3}$ दे$_{1\,3\,5\,9\,10}$ ते$_{1}$ भविष्यति (→भविष्यसि) —c) न$_{1}$ यन्मे वाक्य (→या मद्वा क्य) का$_{2}$ दे$_{7}$ ग्रनर्ध्यैव, ते$_{1}$ उल्लङ्घ्य वै (→मलघ्य वै) —d) ब$_{1}$ समुल्लङ्घ (→सुरलङ्घ ); ब$_{2}$ बला, दे$_{4}$ मुधा (→बलात् ) दे$_{9}$ सुरलंघ यधेबलात्

२० दे$_{4}$ ते$_{1}$ cd○ —a) दे$_{1\,3}$ ते$_{1}$ सुरश्रेष्ठ (दे$_{3}$ °ष्ठा) दे$_{9}$ मुनिश्रष्ठा (→मुनिश्रेष्ठ) —b) दे$_{5}$ सध्या रागवती * यत् (?) —c) शा$_{1}$ का$_{2}$ ब$_{1\,3}$ दे$_{1\,2\,5\,10}$ न$_{1}$ प्रतीच्छन्, दे$_{7\,11}$ प्रतीच्छ (→प्रतीच्छत् ) ब$_{1\,3}$ कृत्तिका राग, दे$_{1\,3\,5\,10\,11}$ कृत्तिकाभाग, दे$_{2\,7}$ कृत्तिका स (दे$_{2}$ सा?) ग दे$_{9}$ भूमिगावाम (?) न$_{1}$ भूमिका याग, मुरे कृत्तिकाभागे (→कृत्तिकायोग) —d) ब$_{1\,3}$ दे$_{2\,3\,10}$ ते$_{1}$ न$_{1}$ शैलेय्या (दे$_{3}$ °ष्या) दे$_{1}$ शैलेस्या (य्या ?), दे$_{5}$ शौ तया दे$_{7}$ सा शैला (→शैलेया) दे$_{9}$ शैलस्यापि गृह दृढम्

२१ —a) दे$_{4}$ मृते (→गते) कारा द्व कन्यके गते नात्वा —b) शा$_{1}$ ज्ञात्वा मेना कारा मेनावाली दे$_{1\,5}$ आत्मापेना (दे$_{5}$ °ना), ते$_{1}$ यच्चा मेना (→ज्ञात्वा मेना) शा$_{1}$ कारा ते$_{1}$ तपस्विनाम्, दे$_{9}$ भवस्विनी (→तपस्विनी) —d) दे$_{7}$ ता (→सा)

२२ —a) दे$_{7}$ तदैव दे$_{11}$ तदेवो (→तदेव); ब$_{1}$ नाम्नास्याश्, दे$_{5\,7\,9\,11}$ मामास्य (→नामास्याश) —b) दे$_{5\,11}$ शक्तो (→चक्रे) दे$_{4\,7}$ पुष्या (→पितृ ) ब$_{\circ\,3}$ दे$_{1}$ श्रुता शुभा दे$_{2}$ -सुता शुभा, दे$_{4}$ शु (शु ?) भानना, दे$_{7}$ -स्वशवत , न$_{1}$ -मताच्छुभा (→सुता शुभा) —c) शा$_{1}$ कारा का$_{1\,2}$ दे$_{11}$ उमेत्येवं (→उमेत्येव) शा$_{1}$ का$_{1}$ ब$_{2}$ दे$_{11}$ कन्याया (→कन्यायाः ) —d) का$_{1}$ स,+सा, दे$_{1\,3}$ स (→सा) ब$_{1}$ तपोधन, दे$_{7}$ ततोवन (→तपो वनम्)

२३ —b) दे$_{\circ\,11}$ °पाणि (→°पाणिं) —c) दे$_{1\,3\,5\,10}$ ते$_{1}$ सधार्य, दे$_{7}$ सधाया (→सधाय) —d) ब$_{1\,3}$ दे$_{3}$ सुदुश्चर, दे$_{4}$ सुदुस्तपं, दे$_{7\,9}$ सुदुस्तर (→सुदुष्करम्)

२४ —a) दे$_{1}$ देवो (→देवान्) —c) ब$_{1\,3}$ दे$_{1\,3\,5\,10}$ तत्काली (दे$_{1\,5}$ ली) ब$_{2}$ तद्काल, दे$_{2}$ तत्कान (→तां कालीं) दे$_{9}$ इहानय तत कालात् —d) दे$_{1\,3\,4\,9}$ तपस्यन्ती (→तपस्यन्तीं) ब$_{1\,3}$ महालये, दे$_{4\,9}$ हिमाचले (→हिमालये)

२५ —c) का$_{2}$ दे$_{7}$ तस्या , दे$_{4}$ तस्य ? (→तस्या)

२६ —a) ब$_{1\,3}$ दे$_{1\,4\,9\,10}$ ते$_{1}$ मरुद्गणै (→[-अ]मरगणै ) —b) ब$_{2}$ निघृतस्, दे$_{2}$ जितस्ते, दे$_{9}$ निघृंतत् (→निर्द्धूतस्); का$_{2}$ दे$_{9\,11}$ तथा, दे$_{4\,7}$ तदा (→तया) —c) दे$_{4\,9}$ न$_{1}$ ब्रह्मणे (दे$_{4}$ °णो)ऽभ्येत्य , दे$_{1\,3}$ ब्रह्माप्यधिक , दे$_{7}$ ब्रह्मणोगत्य, ते$_{1}$ प्रभाप्य धिक (→ब्रह्मणोधिक ); शा$_{1}$ का$_{1}$ -तेजसा, कारा का$_{2}$ -तेजा सा (→तेजोस्या ) —d) शा$_{1}$ का$_{1\,2}$ प्रतिष्ठितम् (का$_{1}$ °ता), दे$_{5.7}$ प्र(दे$_{7}$ सु)तिष्ठिता (→प्रतिष्ठित ) कारा निवेदिता प्रतिष्ठिता ब$_{1\,3}$ निवेद्य प्रतिविष्ठित , दे$_{9}$ निवेद्याथ प्रतिष्ठित , न$_{1}$ कथयामासुरुद्भटम्

कारा ab, cd मध्ये अधिकम्—

200 ततो देवा ययु सर्वे ब्रह्मण सन्न तदा ।

२७ दे$_{9}$ cd ○ —a) न$_{1}$ 'ब्रह्मा' खण्डितम्; दे$_{4\,7}$ देवान् (→सा हि) —c) शा$_{1}$ का$_{2}$ यूय यत्त (शा$_{1}$ °स्ते)जसा यूय, दे$_{4\,7}$ यस्यास्तु तेजसा पूर्वं (दे$_{7}$ यूय) दे$_{5\,10}$ यूय यत्तजतो नून, न$_{1}$ ख्यातायास्तेजसा यूय, मुत्रे यूय स तेजसो नून —d) दे$_{1\,3\,11}$ ते$_{1}$ सु, दे$_{7}$ च (→तु ) वे$_{1}$ हित , दे$_{2}$ (-म)हत (→-हत )

२८ शा$_{1}$ कारा का$_{1}$ न$_{1}$ cd ○ —a) शा$_{1}$ कारा का$_{\circ}$ दे$_{4\,7\,9\,11}$ न$_{1}$ व्रजध्व (→भजध्व); दे$_{5}$ स्वस्तं हि, दे$_{9}$ स्वस्या हि

५१.२८ सतारकं हि महिषं विद्ध्वं निहतं रणे ॥ २८
इत्येवमुक्ता देवेन ब्रह्मणा सेन्द्रकाः सुराः ।
जग्मुः स्वान्येव धिष्ण्यानि सद्यो वै विगतज्वराः ॥ २९
उमामपि तपस्यन्तीं हिमवान् पर्वतेश्वरः ।
निवर्त्य तपसस्तस्मात् सदारो ह्यनयद् गृहान् ॥ ३०
देवोऽप्याश्रित्य तद्रौद्रं व्रतं नाम्ना निराश्रयम् ।
विचचार महाशैलान् मेरुप्राग्र्यान् महामतिः ॥ ३१
स कदाचिन्महाशैलं हिमवन्त समागत. ।
तेनार्चितः श्रद्धयाऽसौ तां रात्रिमवसद्धरः ॥ ३२
द्वितीयेऽह्नि गिरीशेन महादेवो निमन्त्रितः ।
इहैव तिष्ठस्व विभो तपःसाधनकारणात् ॥ ३३
इत्येवमुक्तो गिरिणा हरश्चक्रे मतिं च ताम् ।
तस्थावाश्रममाश्रित्य त्यक्त्वा वासं निराश्रयम् ॥ ३४
वसतोऽप्याश्रमे तस्य देवदेवस्य शूलिन. ।
तं देशमगमत् काली गिरिराजसुता शुभा ॥ ३५
तामागता हरो दृष्ट्वा भूयो जाता प्रियां सतीम् ।
स्वागतेनाभिसपूज्य तस्थौ योगरतो हरः ॥ ३६
सा चाभ्येत्य वरारोहा कृताञ्जलिपरिग्रहा ।

(→स्व स्व हि) –b) ब2 स्वानन्तो, दे7 स्थान वो (→स्थान भो) दे5 विगते (→विगत ) –c) ब1 2 सतारका (→सतारक) दे1 पुरुष (→महिष) –d) ब2 विध्वध्वं, दे3 विदध्व, दे4 7 बुध्यध्व, दे9 विवृध्वं (→विदध्व); न1 महिष (→निहत), दे3 गणो (→रणे) दे11 विदधेहि निहतरा

२९ शा1 कारा का1 दे10 ○ –a) का2 °मुक्त्वा (→°मुक्ता), दे11 इत्येवमुक्तो (→इत्येवमुक्ता) –b) दे3 ब्रह्मणा (→ब्रह्मणा); दे4 ब्रह्मणा सत्ययोनिना –c) दे7 स्वामे° (→स्वान्ये°) ब1 धिष्ठानि (→धिष्ण्यानि) –d) का? ब1 3 दे11 न1 सर्वे (→सद्यो) दे4 सर्वे मुदितमानसा

३० –a) दे4 उमांतु प्रा, दे7 उमा तप (प ?) (→उमामपि) –b) ब2 पवतेस्वर, दे5 पवतेश्वरा, दे7 पर्वे (तपस )तेश्वरे (→पर्वतेश्वर ) –c) दे3 विवर्त्य तपसात्तस्मात् –d) शा1 कारा का1 2 दे5 गृह (→गृहान्) दे4 ग्राश्वास्थायानयन गृह (?), दे9 न1 आश्रमाद (न1 °दा) नयद् गृह

दे7 cd स्थाने इत्थं वर्तते—

201* निवर्त्यस्तस्मादानयामास ता गृह ।

३० श्लोकात्पर दे10 अधिकम्—

202* देवोप्याश्रित्यवद्रौद्रव्रत नाम निरोह्यनयद् गृहान् ।

३१ –a) शा1 कारा का1 देवोप्यतप्यस्यत्, दे3.4 देवोत्स्या (दे4 °थ्या)श्रित्य दे7 देवोपासृत्य, दे10 देवेप्याश्रित्य (→देवोप्याश्रित्य) –b) का2 व्रजन् (→व्रत); ब1 दे4.10 नाम (→नाम्ना) कारा का1 दे1 3 °श्रमम् (→°श्रयम्) –c) का2 दे10 °शैलात् (→°शैलान्) –d) कारा मेरो प्राग्रयो, का1 मेरु प्राप्य, ब1 2 दे9 मेरुप्रा (ब2 °प्र)थ्यान्, ब3 मेरुप्राप्रान्, दे4 7 न1 मेरु (दे4 °रु) प्राधान्, दे5 मेरु चाग्रधान् (→मेरुप्राग्र्यान्) ब1 2 महाद्युति, दे9 महीं प्रति (→महामति )

३२ ब1 2 cd ○ –b) दे2 °गति (→°गत ) –c) दे7 ततोर्चित (→तेनार्चित ) –d) दे5 त (→ता) का1 दे3 11 वर, दे4 शिव (→हर )

३३ –a) ब1 3 तेनार्चित (ब1 °तो) (→द्वितीयेऽह्नि) ब3 गिरीन्द्रेन (→गिरीशेन) –b) ते1 °देव (→°देवो) –c) शा1 तिष्ठसु (→तिष्ठस्व) –d) ब? दे1 °कारणा (→°कारणात् )

३४ दे9 ३४–३६ ○ दे4 ३४ c 'ममा' इत्यारभ्य ३५ c काली इत्यन्त नास्ति –b) दे3 हृत (→हर.) ब1 3 मतिसुरा (ब? °रान्) दे7 न1 मति तदा (→मतिं च ताम्) –c) शा1 तथा वाश्रम, कारा का1 तत्रै (का1 °त्रै)वाश्रम, दे1 तया च ताम्र (?), दे? 3 5 10-11 ते1 तया चाश्रम, न1 तस्थौ चाश्रम (→तस्थावाश्रम) –d) दे1 3 5 10 ते1 त्यक्त्वा स स्व (दे? 3 °स्व), दे7 श्रुत्वा रुद्रो, न1 त्यक्त्वा रुद्रो (→त्यक्त्वा वासं) शा1 °श्रमा , कारा का1 दे1 3 5 10 ते1 °श्रमम्, का? °श्रम (→°श्रयम्)

३४ श्लोकात्पर कारा अधिकम्—

इति वामनपुराणे उमातप शाऽन नाम द्विपचाशत्तमोऽध्याय ।

पुलस्त्य उवाच ।

३५ दे9 ○ (द्र ३४ पा वि ) दे4 abc ○ (द्र ३४ पा वि ) –a) शा1 कारा का1 दे10 [ अ] थ, ते1 हि (→[अ] पि); शा1 कारा का1 ? दे1 7 11 न1 तत्र (→तस्य) –c) शा1 का1 दे7 देशमागमत् (→देशमगमत् ) –d) शा1 कारा का1 ? गिरिराजस्य वै गृहात्

३६ दे9 ○ (द्र ३४ पा वि ) –a) ब2 न1 हरेर् (→हरो) –b) दे1 5 11 जाता प्रिया (दे1 °या) (→जाता प्रिया); दे7 भूयो जातप्रिया सती –d) दे1 योग रतो, दे7 योगगतो, ते1 जागरतो (→योगरतो)

३७ –a) दे4 त चाभ्ये, दे7 त चाभ्येत्य, दे9 वा चाभ्येत्य (→सा चाभ्येत्य) दे4 वरामाह, न1 वरारोह (→वरारोहा) –b)

ववन्दे चरणौ शैवौ सखीभिः सह भामिनी ॥ ३७
ततस्तु सुचिराच्छर्वः समीक्ष्य गिरिकन्यकाम् ।
न युक्तं चैवमुक्त्वाऽथ सगणोऽन्तर्दधे ततः ॥ ३८
साऽपि शर्ववचो रौद्रं श्रुत्वा ज्ञानसमन्विता ।
अन्तर्दुःखेन दह्यन्ती पितरं प्राह पार्वती ॥ ३९
तात यास्ये महारण्ये तप्तुं घोरं महत्तपः ।
आराधनाय देवस्य शंकरस्य पिनाकिनः ॥ ४०
तथेत्युक्तं वचः पित्रा पादे तस्यैव विस्तृते ।
ललितारया तपस्तेपे हराराधनकाम्यया ॥ ४१

तस्याः सख्यस्तदा देव्याः परिचर्यां तु कुर्वते ।
समित्कुशफलं चापि मूलाहरणमादितः ॥ ४२
विनोदनार्थं पार्वत्या मृन्मयः शूलधृग् हरः ।
कृतस्तु तेजसा युक्तो भद्रमस्त्विति साऽब्रवीत् ॥ ४३
पूजां करोति तस्यैव तं पश्यति मुहुर्मुहुः ।
ततोऽस्यास्तुष्टिमगमच्छ्रद्धया त्रिपुरान्तकृत् ॥ ४४
बटुरूपं समाधाय आषाढी मुञ्जमेखली ।
यज्ञोपवीती छत्री च मृगाजिनधरस्तथा ॥ ४५
कमण्डलुव्यग्रकरो भस्मारुणितविग्रहः । वं. ५१

ब2 °प्रहा, दे2 °भ्रहा, दे9 °ग्रह (→°प्रह्वा). –c) ब2 3 ववन्द (→ववन्दे); दे1 3 देवौ, दे7 न1 चैव, ते1 शैले (→शैवौ). –d) दे4-11 सखिभि, दे9 सडिभि (→सखीभि), ब1-2 भाविनी (→भामिनी); ब3 सखीभि मृदुभाषिणी.

३८. –a) दे9 सुचिर पर्व, न1 सुचिरं सर्वं (→सुचिराच्छर्वं). –b) दे11 समाक्षर- (→समीक्ष्य). –c) ब1 न मुक्तश्चैव, दे5 न युक्ता चैवं, न1 न युक्तमेव (→न युक्त चैव); दे9 न युक्तमेवं गृह्णाय. –d) ब3 सगणोऽन्तर्दधे शिव, दे7 समन्तर्दधे तत, दे9 न1 सगणोंतर्द्दधौ (दे9 °धे) हर., दे10 सगणोंतर्द्दधे (ह) तत .

३९. –a) शा1 कारा. का1 शार्वं, का2 सर्वं, दे3 शर्वा, दे2.5 ते1 सर्व- (→शार्व-), दे4 सापि सर्वगत रुद्र, दे7 सापि सर्वत्र रुद्रं तु –b) दे7-11 °न्वितं (→°न्विता) –c) का1 अन्तर्मुखेन (→अन्तर्दुःखेन); कारा. दहती, दे5 दह्यती, दे9 मुह्यती (→दह्यन्ती)

४०. –a) दे3 तात दास्ये (→तात यास्ये); शा1 कारा का1-2 दे4-7 न1 °रण्यं (→°रण्ये) –b) ब1-3 दे7 तप्त्वा, दे4 तप्त (→तप्तु), दे3 महत्तम, दे7 तपो महत्, दे9 महातपा (→महत्तप). –d) दे7 महात्मन, दे11 पिनाकिना (→पिनाकिन), ते1 पिनाकिन शङ्करस्य च

४१. –a) का2 तस्येत्युक्त, ब2 तथेत्युक्ता, ते1 तथेत्युक्त्वा (→तथेत्युक्त); दे11 पित्र्या (→पित्रा). –b) ब3 तस्यापि (→तस्यैव); दे1.3 विस्तृत, दे2 हि (वि?) स्तृते (→विस्तृते); दे7 पादे चैकेन सस्थिता –d) दे2 11 °काम्यया (→°काम्यया)

४२. –a) शा1 कारा. का1 2 ता स्म, दे1 तस्या, दे5 11 न1 तास्म (न1 स्म), दे9 प्रिय- (→तस्या); दे4 ततो देव्य, न1 सदा देव्या (→तदा देव्या); ब1 ता सत्य शुभदा देवा, ब2 3 ता सत्यश्च तदा देवा, दे7 उमायाश्च ततो देवा . –b) ब1 2 °चर्यां स्म, ब3 °चर्या (श्च) स्म, दे3 °चर्यं तु, दे7 °चर्यास्म, दे11 °चर्या च, न1 °चर्या तु (→°चर्यां तु) –c) शा1 कारा. का1 समित्कुशं, दे3 समित्कुच- (→समित्कुश-); कारा फल वारि-, ब1-पलासश्च, ब2 3 फलश्चापि, दे4 -फलौघादि-, दे9-फलाश्रादि-, न1 फलाम्लादि- (→फल चापि) –d) दे11 मूलाहारणम् (→मूलाहरणम्), शा1 नादित (→मादित)

४३ –a) शा1 कारा. का1 2 विनोदनार्थं, दे4 विनोदार्थं तु (→विनोदनार्थं). –b) शा1 कारा का1.2 मृण्मय (→मृन्मय); कारा ब3 दे4-7 °भृद्धर, ब1 2 दे1 9 10 न1 °धृग्वर, दे2 3 5 11 ते1 °धृक्पर (→°धृग्हर) –c) ब1-3 दे5 7 11 न1 कृत स (दे5 11 न1 °स्तु) तेजो युक्तश्च (दे7 °स्तु), दे1-3 ते1 कृतस्तु तेजोयुक्तस्य, दे4 कृत स तेनो (जो ?) युक्तस्तु, दे9 ततश्च तेजोयुक्तश्च, दे10 कृतश्च तेजोयुक्तश्च d) ब3 रुद्रो मस्त्विति (?) दे1 रुद्रा मेस्त्विति, दे2 4 10 ते1 रुद्रो मे (ते1 मा) स्त्विति, दे7 रुद्र साविति, दे11 नद्रम सिति (?), न1 भ्रम मे त्विति (→रुद्रो मे स्त्विति), दे7 9-11 न1 चा-, दे4 सो (→सा), दे5 रुत्रमिति न द्रमस्त्विति चाब्रवीत् (?)

४४ –a) दे7 पूजा (→पूजां) –b) दे7 पश्यन्ति, दे9 पश्यन्ती (→पश्यति), दे10 ** (→°मुहुः) –c) का2 ततो सा, दे9 नतोस्या (→ततोस्या), शा1 कारा का1 2 हष्टिम् (→तुष्टिम्); दे11 तस्योतोस्यास्तुष्टिमयमत् –d) शा1 कारा का1 2 दे4.7 °रातक (→°रान्तकृत्)

४५ –a) दे4 5 ते1 वटु° (→वटु°); शा1 कारा समादाय, दे4 7 9 न1 समास्थाय (→समाधाय) –b) का2 आषाढ (→आषाढी), दे9 न1 मुञ्जिमेखला (दे9 °ली) (→मुञ्ज मेखली) –c) दे11 यतो° (→यज्ञो°), दे9 °वीति- (→°वीती), शा1 क्षत्रे (→छत्री). –d) ब1 3 दे7 -धरी, दे3 °धरा (→°धर); शा1 का2 तदा, का1 तदा,+था (→तथा)

४६ –a) दे2 3 °व्यग्रकर (र.?), दे5 °अपकरो, दे9 °प्रोतकरो (→°व्यग्रकरो) –b) दे1 3 ते1 तस्या (दे3 °स्मा ?) रुणित°, दे9

१.४६ प्रत्याश्रमं पर्यटन् स तं काल्याश्रममागतः ॥ ४६
तमुत्थाय सदा काली सखीभिः सह नारद ।
पूजयित्वा यथान्यायं पर्यपृच्छदिदं ततः ॥ ४७

उमोवाच ॥

कस्मादागम्यते भिक्षो कुत्र स्थाने तवाश्रमः ।
क्व च त्वं प्रतिगन्तासि मम शीघ्रं निवेदय ॥ ४८

भिक्षुरुवाच ॥

ममाश्रमपदं बाले वाराणस्यां शुचिव्रते ।
अथातस्तीर्थयात्रायां गमिष्यामि पृथूदकम् ॥ ४९

देव्युवाच ॥

किं पुण्यं तत्र विप्रेन्द्र लब्धासि त्वं पृथूदके ।
पथि स्नानेन च फलं केषु किं लब्धवानसि ॥ ५०

भिक्षुरुवाच ॥

मया स्नानं प्रयागे तु कृतं प्रथममेव हि ।
ततोऽथ तीर्थे कुब्जाम्रे जयन्ते चण्डिकेश्वरे ॥ ५१
बन्धुवृन्दे च कर्कन्धे तीर्थे कनखले तथा ।
सरस्वत्यामग्निकुण्डे भद्रायां तु त्रिविष्टपे ॥ ५२
कोनटे कोटितीर्थे च कुब्जके च कृशोदरि ।

---

भस्माकुण्ठित° (→भस्मारुणित°) –c) दे5 °श्रय (→°श्रम); शा1 कारा का1 2 पर्यटन्वै, दे2 पर्यटन, दे11 न1 पर्यटन् स (→पर्यटन् स) दे7 प्रत्यासमन्यपंटस (?). –d) कारा का1 2 दे2 सकाल्याश्रम, ब1 3 कन्याश्रम स-, दे1 3 10 ते1 * का (दे3 ते1 क?) ल्याश्रम-, दे9 न1 काल्या आश्रम (→त काल्याश्रम) शा1 °गता (→-°गत), दे4 * काल्या आश्रमागत, दे7 सतस्या पार्श्वमागत, दे11 * कालाज्ञाश्रममागत

४७ –a) ब1 समुत्थाय, दे7 प्रत्युत्थाय (→तमुत्थाय) –b) शा1 कारा सादरा, का1 2 सान्र (का? °र), दे1 5 नारद (→नारद) –c) ब1 तया° (→यथा°). –d) दे1 यव, दे2 तत्व(?), दे3 तन (?) (→तत), दे7 पर्यपृच्छति भिक्षुक, दे11 मये(?) पृच्छमिदतत

❀ कारा ○, शा1 दे4 उमा उवाच; न1 उमा

४८ –a) दे11 भिक्ष्ये (→भिक्षो) –b) ब1 3 दे1 7 9 न1 कस्मिन् (→कुत्र), दे7 त्वदाश्रम (→तवाश्रम) –c) ब2 3 यत्र वा त्व (ब2 त), दे4 किं स्थान, दे7 त्व च क्व, न1 क्व चि (?) त्व, मुवे कुतस्त्वं (→क्व च त्व), का2 ब2 3 दे1-3-10 ते1 न1 परि° (→प्रति°) –d) दे9 समं (→मम); दे11 प्रतिवेदय (→निवेदय)

❀ दे7 भिक्षुक, न1 भिक्षु

४९ ब1 ○ –a) दे4 ममाश्रमं द्विजातीरि, दे7 ममाश्रमं पद यान्ये, दे11 ममाश्रम ?? वार –b) दे4 ते1 °स्मिा (→°व्रते) –c) कारा अथार, ब1 तयेत, ब? यरेय, दे1 अथैव, दे3 5 ते1 न1 अथैतत, दे4 प्रस्थित, दे3 10 अथित, दे11 अथ्येत (→अथात); दे? अथैतस्तीर्थं यत्राया, दे7 अर्थितस्तीर्थं यात्राय –d) दे4 गमिष्यहं (→गमिष्यामि)

❀ ब1.○, दे1 उमोवाच; दे2 ते1 श्रीदेव्युवाच; न1 देवी

५०. ब1 ○ –a) दे2 तव, न1 तस्य (→तत्र) –b) शा1 कारा का1 2 लप्स्यसि त्व, ब1 2 दे10 ते1 यदा (ब2 य?) सि त्व, दे7 यद् गतासि (→लब्धासि त्व); दे4 पृथूदकं (→पृथूदके) –c) शा1 कारा का1 पृथुस्थानेषु, का2 पृथुस्नानेषु, दे1 3 4 11 पथिस्नातेन, दे3 पथिस्नानेषु, न1 प्रतिस्नानेन (→पथि स्नानेन). –d) शा1 कारा क1 2 त्व (→किं); दे2 °भरि (→°नसि)

❀ ब3 ○; दे1 भिक्षुरु, दे7 भिक्षुक, दे9 न1 भिक्षु

५१. –a) शा1 कारा का1 दे11 ते1 मया स्नात (दे11 त?), ब3 गया स्नान, दे2 7 माघस्नान (→मया स्नान); दे9 हि (→तु) –b) ब2 जन्मनि (→एव हि); दे7 कृत प्रथमं कृत (हं?) हि, दे9 न1 नैमिषे कृतमेव हि –c) शा1 का2 ततोसु, कारा. तत सु, ब1 ततोग्र, ब2 ततोह्र, ब3 ततोऽप्या, दे3 न1 ततोस्व- (→ततोऽथ); ब3 कुब्जाख्ये, दे1 3 कुब्जाम्रे, न1 कन्नाख्ये (→कुब्जाम्रे), दे4 स्वतीर्थे तु ततो देवि, दे5 ततोपर्वतीयेब्जाम्रे (?), दे7 ततोम्बतीर्थे च जपं, दे9 ततश्च तीर्थे शापे च, दे11 ततार्थ कुश- तीर्थे कुत्ता ते (कुब्जाम्रे ?) –d) ब3 जयन्य, दे2 न1 जयन्ती, दे4 जयत, दे9 जपते (→जयन्ते); शा1 कारा का1 चणिकेश्वरे, दे9 चडकेश्वरे, न1 चडिकेश्वरि (→चण्डिकेश्वरे)

५२ –a) शा1 कारा का1 2 °वृन्दे चक्रतीर्थे, ब1.2 °वृन्देन कर्त- व्यां (ब2 °र्त्तु यां), ब3 °वर्गे च कर्त्तर्यां, दे4 °वृन्दे तु कन्याया, दे7 °वृन्दे च कर्त्तव्यं, दे9 न1 °वृन्दे च क (न1 का) र्त्तायां, दे11 °वृन्दे च कर्तुया(?) (→°वृन्दे च कर्कन्धे); दे5 कन्नुजं देव कुर्तु * –b) शा1 °खलोतथा, दे4 °खले शुभे, दे5 °खलेषुया, दे9 न1 °खले तथा, ते1 °खलेपि• (→°खले तथा) –c) ब1 3 दे4 सरस्वत्यग्निकुण्डे च (दे4 तु) –d) ब1 2 दे7 9 भद्रायां च, दे11 भद्रा तु (→भद्रायां तु), ब1 त्रिपिष्टपे (→त्रिविष्टपे)

५३ दे11 ○. –a) शा1 दे10 कोनटे, कारा का1 2 कौनके, ब1 2 कोनाटे, ब3 कोनचे, दे1 3 ते1 कं तटे (दे? °तुटे), दे4 काटटे, दे5 कौनटे, दे9 कोनटे (→कोनटे), दे4 तु (→च) –b) दे1 3

निष्कामेन कृतं स्नानं ततोऽभ्यागां तवाश्रमम् ॥ ५३
इहस्थां त्वा समाभाष्य गमिष्यामि पृथूदकम् ।
पृच्छामि यदहं त्वां वै तत्र न क्रोद्धुमर्हसि ॥ ५४
अहं यत्तपसात्मानं शोषयामि कृशोदरि ।
बाल्येऽपि संयततनुस्तत्तु श्लाघ्यं द्विजन्मनाम् ॥ ५५
किमर्थं भवती रौद्रं प्रथमे वयसि स्थिता ।
तपः समाश्रिता भीरु संशयः प्रतिभाति मे ॥ ५६
प्रथमे वयसि स्त्रीणां सह भर्त्रा विलासिनि ।
सुभोगा भोगिताः काले व्रजन्ति स्थिरयौवने ॥ ५७
तपसा वाञ्छयन्तीह गिरिजे सचराचराः ।
रूपाभिजनमैश्वर्यं तच्च ते विद्यते बहु ॥ ५८
तत् किमर्थमपास्यैतानलङ्कारान् जटा धृताः ।
चीनांशुकं परित्यज्य किं त्वं वल्कलधारिणी ॥ ५९

पुलस्त्य उवाच ।❀

ततस्तु तपसा वृद्धा देव्याः सोमप्रभा सखी ।
भिक्षवे कथयामास यथावत् सा हि नारद ॥ ६०

सोमप्रभोवाच ।❀

तपश्चर्या द्विजश्रेष्ठ पार्वत्या येन हेतुना ।   वे ५१

---

तै1 ताम्रके च दे7 10 तक्षके च दे4 कुब्जाया तु, दे5 कुरुक्षेत्रे, दे7 कुब्जाम्र च दे9 कुब्जामेन न1 कुब्जाग्र तु (→कुब्जके च) –c) ब3 नित्यमेतत्, दे1 निष्कातेन (→निष्कामेन) शा1 स्नाने (→स्नान) –d) शा1 दे3 तताम्याग, ब1 3 दे10 ततोम्यागात्, दे1 ततो भागा (→ततोऽभ्यागा) शा1 तु वा श्रमम्, दे1 3 तमाश्रमम्, न1 नताश्रमम् (→तवाश्रमम्)

५४ दे4 cd ○ –a) ब2 इहस्त त्वा, दे4 इद च त्वा, दे7 11 इहस्था त्वा (→इहस्था त्वा); दे3 °कृष्य (→°भाष्य) –b) दे7 पृथूदका (→पृथूदकम्) –c) शा1 यदह त्वात्रै दे9 यदहं त्वा ह (?), दे11 यन्हत्वा वै (→यन्हं त्वा वै) –d) दे2 तन, दे11 तन (→तत्र) ब3 प्रर्हति (→अर्हसि)

५५ दे4 ○ –a) ब3 दे3 5 यस्तपसा (→यत्तपसा) दे3 स्थान (→[-आ[त्मान) –b) दे3 शोप° (→शोष°) –c) दे9 न1 सयत (→सयत) दे9 न1 तस्तु, दे11 ननु (→तनु) –d) दे1 3 तै1 तप (दे5 °प), दे5 10 तत, दे11 तत्र (→तत्तु) ब1 2 सत् ? (ब2 तच) श्लाघ्य त्वग्रजन्मनाम्, दे7 यश्लाघ्य त्वग्रजन्मना, दे9 न1 श्लाघ्य नस्त्वग्रजमनाम्

५६ दे1 ○ –a) दे11 भवता (→भवती) –b) दे1 3 तै1 यथो मे (→प्रथमे); दे1 वपुप्रस्थिता, दे11 वयसि स्थिते (→वयसि स्थिता) –c) दे 11 तपा, दे10 तप (→तप) दे3 सत्वास्थिता (→समाश्रिता) शा1 भीन (?) दे11 भानु (→भीरु) –d) शा1 सश्रिय (→संशय) दे2 मे महत् (→भाति मे)

५७ –b) ब1 सहमर्त्रा, दे1 3 तै1 भर्त्ता सह (→सह भर्त्रा), दे1 °सिना, दे2 °सिनि, दे9 °सिनी, दे11 °सिना (→°सिनि) –c) दे11 'सु ता' खण्डितम् का° सुभोगा, ब सुभागा, ब3 सुभोगो, दे7 सभोगा, दे9 सुभोग्या, तै1 प्रभोगा (→सुभोगा); शा1 दे1 10 भोगिता, का2 भोगिता, दे2 5 9 भोगिना, दे4 न1 भोगिन, दे7 भोगिभि तै1 भोगिका (→भोगिता) ब1 2 कामा ब3 काला, दे1 5 9 10 तै1 न1 काला (दे5 °ल), दे7 कालो दे11 कालो (→काले) –d) दे9 वस्थिति स्थित° (→व्रजन्ति स्थिर°)

५८ –a) दे2 ध्वाञ्छयन्तीह, दे1 वा क्षपतीह, दे11 वा तु यन्तीह (→वाञ्छयन्तीह) –b) शा1 °घरा, दे° तै1 °चर, दे5 9 न1 °चरे (→°चरा) –c) दे11 ऐश्वर्यं (→ऐश्वर्यं) –d) दे9 तत्र (→तच्च) का2 वित्तं (द्य?) ते दे7 ***, दे10 वसते (→विद्यते)

५९ –a) शा1 अपस्यंतान्, दे4 व्युन्स्यतान्, दे9 अपास्यैवम्, तै1 मयास्यंतान् (→अपास्यंतान्) –b) दे9 [-अ] लकार (→अलकारान्) शा1 कारा का2 ब3 दे1 3 11 जटाधृता, ब1 2 जटावृता (ब2 °तान्), दे4 न1 जटावृता, दे9 पटावृति (→जटा धृता) –c) दे1 नीचा°, दे5 चित्रा° (→चीना°) –d) शा1 कि त्वे, दे2 कि च दे4 त्व कि, न1 तत्कि (→किं त्व) दे4 न1 °धारिणीं (→°धारिणी)

❀ शा1 न1 पुलस्त्य; दे1 पुलस्त्य उ° दे9 श्रीपुलस्त्य उवाच

६० –a) का1 तपसा +वयसा (→तपसा) ब1 2 वृद्धया (→वृद्धा) –b) दे4 न1 देव्या दे11 देवा (→देव्या) –c) दे11 भिक्षुके (→भिक्षवे), –d) ब1 3 सापि (→सा हि) शा1 कारा का1 2 सादरम्, दे7 नारद (→नारद)

❀ कारा ○ शा1 न1 सोमप्रभा का1 2 दे2 4 10.11 सोमप्रभा उवाच दे5 सोमप्रभा उ

६१. –a) शा1 तपश्चार्या, ब1 दे1 तै1 तपश्चर्यां, दे3 तपश्चाय (→तपश्चर्या) –b) तै1 पार्वत्यापि न (→पार्वत्यायेन) –c) शा1 त श्रृणुष्व, ब3 दे7 तच्छृणुष्व, दे9 त श्रृणु त्वम्

१ ६१ त मृणुष्व त्विय काली हर भर्तारमिच्छति ॥ ६१

पुलस्त्य उवाच ।※

सोमप्रभाया वचन श्रुत्वा सकम्प्य वै शिर ।
विहस्य च महाहास भिक्षुराह वचस्त्विदम् ॥ ६२

भिक्षुरुवाच ।※

वदामि ते पार्वति वाक्यमेव
कन प्रदत्ता तव बुद्धिरेषा ।
कथ कर पल्लवकोमलस्ते,
समेष्यते शार्वकर ससर्पम् ॥ ६३
तथा दुकूलाम्बरशालिनी त्व
मृगारिचर्माभिवृतस्तु रुद्र ।
त्व चन्दनाक्ता स च भस्मभूषितो
न युक्तरूप प्रतिभाति मे त्विदम् ॥ ६४

पुलस्त्य उवाच ।※

एव वादिनि विप्रेन्द्र पार्वती भिक्षुमब्रवीत् ।
मा मैव वद भिक्षो त्व हर सर्वगुणाधिक ॥ ६५
शिवो वाप्यथवा भीम सधनो निर्धनोऽपि वा ।
अलकृतो वा दवेशस्तथा वाप्यनलकृत ॥ ६६
यादृशस्तादृशो वापि स मे नाथो भविष्यति ।
निवार्यतामय भिक्षुर्विवक्षु स्फुरिताधर ।
न तथा निन्दक पापी यथा शृण्वन् शशिप्रभे ॥ ६७

पुलस्त्य उवाच ।※

इत्येवमुक्त्वा वरदा समुत्थातुमथैच्छत ।

---

(→त शृणुष्व) गा1 का 2 स्वय दे1 3 10 तै1 महा दे9 इय (→त्विय) –d) दे9 भर्तार हरमिच्छति

※ दे9 न1 ○ शा दे7 पुलस्त्यः दे1 पुलस्त्य उ

६२ दे4 ○ –a) शा1 वचने (→वचन) b–) ब1 दे9 सङ्कल्प्य वै ब3 सङ्कम्पयन् (→सकम्प्य वै) दे7 श्रुत्वासौ गर्वित यथा –c) शा1 कारा का1 ब1 2 दे 11 सु (→च)

※ कारा दे4 9 ○ शा1 दे7 न1 भिक्ष

६३ –a) ब1 वमा (दा?) दि (मि?) ते वन्त (द?) न्ति (→वन्दामि) शा1 पावस्य (?) दे2 पावती दे4 पार्वति (→पार्वति) शा1 कारा का1 * दे4 7 9 वाक्यमेव ब3 वाच्य मेव न1 चारुगात्रे (→वाक्यमेव) –b) गा1 का कि ते कारा क वा का1 कि च (→केन) कारा प्रवृत्ता का1 प्रन्त्ता + प्रतत्ता दे9 प्रदाता (→प्रन्त्ता) दे11 नव (→तव) – ) शा1 कारा का1 2 कदा (→कथ) दे1 4 तै1 न1 कोमलपल्लवस्ते (→पल्लवकोमलस्ते) दे7 कथं मृदुस्ते भुज एव एव –d) गा समेष्यते दे4 सामाप्स्यते (→समेष्यते) दे4 9 सर्व° दे5 11 शाव (→शार्व°) दे1 स● प्प दे11 समधम् (→ससर्पम्)

६४ –a) शा कारा का दुगूला° (→दुकूला°) दे 3 10 °शालिनि दे9 °वासिनी (→°शालिनी) दे स्त्व (→त्व) –b) दे1 मृगारि° दे3 1 मृगाभि° दे4 7 मृगद° (→मृगारि°) दे1 °वृत दे9 °रत (→°वृत) ब3 न1 च दे 1 स (→त) – ) दे7 चन्दनाका (→चन्दनाक्ता); दे9 तु (→च); ब1 3 दे4 9 °रूपितो (दे4 °त) (→°भूषितो) –d) ब 4 युक्तरूपं दे9 न युक्तिरूप दे11 न (च) भक्तिरूपं (→न युक्तरूपं); न1 प्रतिभाति (→प्रतिभाति); दे4 नरित्वद, दे7 मेघुना दे9 मे हि (→मे त्विदम्)

※ न1 ○ गा1 दे7 9 पुलस्त्य, दे1 2 पुलस्त्य उ

६५ –a) दे9 वदति न1 ब्रुवति (→वादिनि); शा1 कारा का दे5 9 10 विप्रन्द्र दे7 देवर्षे दे 1 विप्रन्द्रे (→विप्रेन्द्र) –b) दे4 भिक्षुक अब्रवीत (→भिक्षुमब्रवीत्) –c) शा1 मैव (→मैव) दे7 भिक्षोस्त्व (→भिक्षो त्व) –d) ब3 °धित (→°धिक)

६६ –a) दे9 शिवा (→शिवो) दे7 –वा भीम (न) दे9 वा ईश (→–वा भीम) –b) दे 10 [–अ] प वा (→[–अ] पि वा) –c) दे9 न सालङ्कृतो (→अलङ्कृतो) दे3 (देवा) देवेन दे4 दिग्वासा (→देवेन) –d) गा1 दे7 त्वथा वा का1 ब1 3 न1 त्वथवा (→तथा वा) दे4 सन्त यश्यो मम प्रिय

६७ ते cf ○ –a) ब1 2 या स (→वापि) –b) ब दे7 9 भर्त्ता (→नाथो) दे11 भविष्यसि (→भविष्यति) –c) ब1 भद्रा (→भय) दे9 भीरु (→भिक्षु) –1) दे11 °धरा (→°धर) –e) दे11 निन्दका (→निन्दक) शा1 कारा का1 * पापो (→पापी) f) दे3 तथा (→यथा) दे4 7 9 10 न1 श्रोता (→शृण्वन्) ब1 °प्रभा दे 7 10 11 °प्रभो (→°प्रभे); दे5 यथा पशु शृण्वन् शशिप्रभो

※ दे7 तै1 ○ शा1 न1 पुलस्त्य, दे पुलस्त्य उ० दे9 श्रीपुलस्त्य

६८ तै1 ○ –a) दे3 प्रत्येवमुक्त्वा दे4 न1 इत्येवमुक्तो दे5 11 इत्येवमुक्त (दे11 °क्ता) (→इत्येवमुक्त्वा), ब1 वचन दे4 न1 वरदे (न1 °द) (→वरदा) –b) गा1 कारा समुत्था (कारा °था) तुमथोद्गत (शा1 °त) का1 * समुत्थातुमथोद्य (का2 °त्थि)ता (का °त) ब3 समुत्थातुमथाकम्पेत दे समुत्था त्वं पार्थैच्छत दे9 समुत्थाय श्येप सा दे11 समुत्थातुमतिष्ठसि न1

ततोऽत्यजद् भिक्षुरूपं स्वरूपस्थोऽभवच्छिवः ॥ ६८

भूत्वोवाच प्रिये गच्छ स्वमेव भवनं पितुः ।
तवार्थाय प्रहेष्यामि महर्षीन् हिमवद्गृहे ॥ ६९

यच्चेह रुद्रमीहन्त्या मृन्मयश्चेश्वरः कृतः ।
असौ भद्रेश्वरेत्येवं ख्यातो लोके भविष्यति ॥ ७०

देवदानवगन्धर्वा यक्षाः किंपुरुषोरगाः ।
पूजयिष्यन्ति सततं मानवाश्च शुभेप्सवः ॥ ७१

इत्येवमुक्ता देवेन गिरिराजसुता मुने ।
जगामाम्बरमाविश्य स्वमेव भवनं पितुः ॥ ७२

शंकरोऽपि महातेजा विसृज्य गिरिकन्यकाम् ।
पृथूदकं जगामाथ स्नानं चक्रे विधानतः ॥ ७३

ततस्तु देवप्रवरो महेश्वरः
पृथूदके स्नानमपास्तकल्मषः ।
कृत्वा सनन्दिः सगणः सवाहनो
महागिरिं मन्दरमाजगाम ॥ ७४

आयाति त्रिपुरान्तके सह गणैर्ब्रह्मर्षिभिः सम्भि-
रारोहत्पुलको बभौ गिरिवरः संहृष्टचित्तः क्षणात् ।
चक्रे दिव्यफलैर्जलेन शुचिना मूलैश्च कन्दादिभिः
पूजां सर्वगणेश्वरैः सह विभोरद्रिस्त्रिनेत्रस्य तु ॥ ७५ वें. ५१

इति श्रीवामनपुराणे पञ्चविंशोऽध्याय. ॥२५॥

---

समुत्थातुमियेष स. –c) ब$_{3}$ ततस्त्यजत्, दे$_{4}$ ततोऽव्रजत (→ततोऽत्यजत्). –d) घ$_{1}$ स्वरूपो, दे$_{4}$ सुरूपस्थो (→स्वरूपस्थो-); दे$_{1}$ भव (→[-अ]भवत्); ब$_{1\ 3}$ दे$_{4.9}$ न$_{1}$ हर, दे$_{7}$ भव (→शिव).

दे$_{11}$ ab, cd मध्ये पुनरावृत्तम्—

203 ❀ निवार्यतामय भिक्षु ✱✱✱स्फुरिताधरा ।

६९. –a) ब$_{2}$ हरोवाच, दे$_{9}$ ते$_{1}$ न$_{1}$ ततो (दे$_{9}$ °दो) वाच (→भूत्वोवाच); दे$_{3.11}$ प्रियोगच्छ, दे$_{7}$ प्रिया शश्वत्, दे$_{9}$ प्रिया गछ (→प्रिये गच्छ). –b) दे$_{4\ 10}$ भुवन (→भवन); ब$_{3}$ स्वयमेव भवत्पितु. –c) दे$_{3}$ तदार्थाय, ते$_{1}$ तवार्थेय (→तवार्थाय), शा$_{1}$ कारा का$_{1.2}$ प्रशे°, दे$_{5}$ प्रह्°, दे$_{9}$ प्रह्ल°, न$_{1}$ प्रहि° (→प्रहे°). –d) शा$_{1}$ कारा. का$_{1\ 2}$ दे$_{3}$ न$_{1}$ °गृह (→°गृहे), दे$_{9}$ महर्षीनिव मद्गृहे

७०. –a) कारा का$_{1.2}$ ब$_{1\ 2}$ यश्चेह, ब$_{3}$ ययेह, दे$_{4.7}$ न$_{1}$ यश्चैव, दे$_{9}$ यस्त्वेषा, (→यच्चेह); दे$_{9}$ भद्र, दे$_{10}$ रुद्र,+भद्रं (→रुद्र), शा$_{1}$ कारा. का$_{1.2}$ मा कृत्वा, दे$_{7}$ ईहत्या, ते$_{1}$ मा हत्या, न$_{1}$ ईहत्यात्र (→ईहन्त्या) –b) शा$_{1}$ कारा. का$_{1}$ ते$_{1}$ मृण्मय, ब$_{2}$ मृन्मया (→मृन्मय), शा$_{1}$ स्तेश्वर, दे$_{9}$ न$_{1}$ त्वीश्वर (→चेश्वर), दे$_{5}$ छा (→कृत) –c) शा$_{1}$ भद्रश्वरेत्येवो, ब$_{2}$ भद्रश्वरोत्येव दे$_{4}$ भद्रेश्वर इति, न$_{1}$ भद्रेश्वरश्चेति (→भद्रश्वरेत्येव)

७१. दे$_{1}$. cd ○. –a) न$_{1}$ °गधर्व (→°गन्धर्वा) –b) ब$_{1}$ दे$_{1\ 5}$ यक्ष, दे$_{11}$ यक्षा (→यक्षाः), दे$_{5}$ °रग (→°रगा) –c) दे$_{11}$ पूजयाम्यन्ति (?) (→पूजयिष्यन्ति), दे$_{4}$ समन (→सतत). –d) शा$_{1}$ कारा. का$_{1\ 2}$ ममेप्सव, दे$_{3}$ ममेशव (→शुभेप्सव)

७२. –a) ब$_{2}$ उक्त्वा (→उक्ता) –b) दे$_{9}$ न$_{1}$ शुभा (→मुने). –c) शा$_{1}$ जगाम वरम् (→जगामाम्बरम्); ब$_{1}$ -आश्रित्य (→-आविश्य). –d) दे$_{4.11}$ स्व(य)मेव (→स्वमेव); दे$_{3}$ भुवन (→भवन).

७३. –a) शा$_{1}$ °तेज (→°तेजा). –b) ब$_{2}$ विसृज्या, ब$_{3}$ विसृत्य, दे$_{7}$ न$_{1}$ विसर्ज्य दे$_{9}$ विस्मृत्य, (→विसृज्य) –c) दे$_{4}$ ततो गत्वा (→जगामाथ); कारा. पृथूदके जगामात्र.

७४ –a) दे$_{2}$ °प्रवरो (→°प्रवरो). –b) दे$_{4.5.7.9}$ पृथूदक- (→पृथूदके), दे$_{4}$ निरस्त° (→अपास्त°); दे$_{3}$ 'स्ना......ष.' खण्डितम्, दे$_{1\ 2}$ ते$_{1}$ कृत ते (ते$_{1}$ अ) न तदा स्नानमपास्त (ते$_{1}$ स्ते) सर्वकिल्बिष (ते$_{1}$ °षं) –c) दे$_{5}$ श्वनादी, दे$_{11}$ आनावि, न$_{1}$ सनन्दी (→सनन्दि). –d) दे$_{1}$ सवाहो (→सवाहनो); दे$_{7}$ °गिरि (→°गिरिं); दे$_{7}$ -मन्दिरम् (→मन्दरम्).

७५. –a) शा$_{1}$ आयान्ति, दे$_{1}$ अयाति, दे$_{4}$ आयाते, दे$_{7.9}$ न$_{1}$ आयाते (→आयाति); दे$_{5}$ त्रिपुरान्तकै, ते$_{1}$ त्रिपुरान्तिके (→त्रिपुरान्तके), दे$_{1\ 3.10}$ पर्यायुतै, दे$_{4\ 7\ 9}$ वर्पायुतै, ते$_{1}$ पार्थपुत्रै, मुवे पर्यायत (→ब्रह्मर्षिभि) –b) कारा न$_{1}$ सरोहत्, दे$_{4}$ ध्यानार्हो, दे$_{9}$ सहोनत् (?) (→आरोहत्); दे$_{4}$ मनसाधिक, दे$_{9}$ पुन (ल ?) को वहे (→पुलको बभौ). दे$_{1}$ °चित्तं (→°चित्त); दे$_{7}$ हं(?)वादुत्थितवहृष्टपुलक सहृष्टचित्त क्षणात्. –c) दे$_{9}$ पर्व्वं (→चक्रे); दे$_{9}$ जनेन (→जलेन), दे$_{1}$ पूलैं, दे$_{11}$ तूलैं. (→मूलैं), दे$_{4\ 7}$ सकन्दा°, न$_{1}$ स्वकन्दा° (→च कन्दा°). –d) शा$_{1}$ पूजा, का$_{1}$ पूज,+पूजा (→पूजा), दे$_{4}$ विभो रुद्रे त्रिनेत्रे तु स, दे$_{9}$ कृत विभो रुद्रस्य नेत्रस्य तु (→विभोरद्रिस्त्रिनेत्रस्य तु).

# २६

पुलस्त्य उवाच ।❀

२२ १. ततः संपूजितो रुद्रः शैलेन प्रीतिमानभूत् ।
सस्मार च महर्षींस्तु अरुन्धत्या समं तत ॥ १

ते संस्मृतास्तु ऋषयः शंकरेण महात्मना ।
समाजग्मुर्महाशैलं मन्दरं चारुमन्दरम् ॥ २

तानागतान् समीक्ष्यैव देवस्त्रिपुरनाशनः ।
अभ्युत्थायाभिपूज्यैतानिदं वचनमब्रवीत् ॥ ३

धन्योऽयं पर्वतश्रेष्ठः श्लाघ्यः पूज्यश्च दैवतैः ।
धूतपापस्तथा जातो भवतां पादपङ्कजैः ॥ ४

स्थीयतां विस्तृते रम्ये गिरिप्रस्थे समे शुभे ।
शिलासु पद्मवर्णासु श्लक्ष्णासु च मृदुष्वपि ॥ ५

पुलस्त्य उवाच ।❀

इत्येवमुक्ता देवेन शंकरेण महर्षयः ।
सममेव त्वरुन्धत्या गिरिशः शैलसानुनि ॥ ६

उपविष्टेषु ऋषिषु नन्दी देवगणाग्रणीः ।
अर्घ्यादिना समभ्यर्च्य स्थित. प्रयतमानसः ॥ ७

ततोऽब्रवीत् सुरपतिर्धर्म्यं वाक्यं हितं सुरान् ।

---

पुष्पिका—शा1 का1 2 दे1 4 9 10 न1 इति श्री (दे1 [श्री]) वामनपुराणे उमासभत्रे, कारा ब3 दे7 1 ते1 इति श्री (कारा ब3 [श्री]) वामनपुराणे, ब1 2 इति श्री (ब1[श्री]) वामनपुराणे उमाविवाहे, दे5 श्री वामनपुराणे, दे7 वामनपुराणे उमासभत्रे, दे11 इति वामनपुराणे सरोमाहात्म्ये मुत्रे इतिश्रीवामनपुराणे पुलस्त्यनारदसंवादे उमासभत्रे अध्यायनाम—शा1 का1 2 दे1 3 9 11 ते1 मन्दरगिरिप्रवेशो नाम, कारा उमावरप्रदान मन्दरगिरिप्रवेशो नाम; ब1 3 दे4 7. ○, दे5 उमामन्दरगिरिप्रवेशो, नाम न1 मन्दरप्रवेशो नाम अध्यायसख्या—शा1 दे5○, कारा त्रिपञ्चाशत्तमोध्याय, का1 ॥४१॥, का2 द्विचत्वारिंशोध्याय, ब1 3 तृतीयोऽध्याय, दे1 ॥५२॥, दे2 अध्याय ॥४८॥, दे3 अध्याय ॥५१॥, दे4 द्वितीयोध्याय, दे7 नवमोध्याय, दे10 ॥२१॥, दे11 ॥४७॥, ते1 त्रिपञ्चाशोध्याय, न1 चतुर्विंशोध्याय, मुत्रे एक पञ्चाशत्तमोध्याय

## २६

❀ शा1 न1 पुलस्त्य, दे1 7 पुलस्त्य उ, दे9 श्री पुलस्त्य उवाच

१ —a) दे11 सपूजिते (→संपूजितो), दे5 रुद्र, दे11 मूढा (→रुद्र) —b) दे1 शीतेन, दे7 शोचेन (→शैलेन) —c) शा1 संसार च, ब3 (अम्यु) तस्मार च, दे4 सस्मार तु, ते1 सस्मारश्च (→सस्मार च) दे1 महर्षेस्तु, दे4 महर्षीन् स, न1 महर्षींश्च (→महर्षींस्तु)। दे1 स सस्मार च महर्षीं, दे9 स सस्मार महर्षींश्च —d) दे4 न1 समन्विताम्, दे7 समावृतान् (→समं तत)

२. —a) शा1 ते संस्मृता तु, ब1 ते (न) सस्मृता तु, ब3 ते सस्तुतास्तु, मुत्रे संस्मृतास्ते तु (→ते संस्मृतास्तु)। दे4 मुनय (→ऋषय), दे7 ते स्मृता ऋषय सर्वे. —c) शा1 °शैले (→°शैलं)

३ —a) दे5 तावागतान्, दे7 मागतास्तान् (→तानागतान्)। दे5 समाक्ष्यैव (→समीक्ष्यैव) —b) दे3 देवास् (→देवस्) शा1 दे3 °नाशना (→°नाशन) —cd) ब1 3[-अ]भिपूज्यैतानिद, दे9 [-अ]पि पूज्य इद, न1 [-अ] थ सपूज्य इद (→[-अ] भिपूज्यैतानिद)

४ —a) दे1 4 धन्योह (→धन्योय)। दे4 पर्वतश्रेष्ठा, दे7 पितर श्रेष्ठ, दे11 अस्पष्टम् (→पर्वतश्रेष्ठ) —b) शा1 कारा का1 2 श्लाघनीयश्च (→श्लाघ्य पूज्यश्च) —c) न1 पूत° (→धूत°), ब2 °पापा (→°पाप)

५ —a) दे1 स्थावता (→स्थीयतां) शा1 विस्तृता (→विस्तृते) —b) दे1 °प्रस्थ, दे7 °पृष्ठ (→°प्रस्थे) —c) दे1 3 ते1 शालासु (→शिलासु) —d) शा1 का2 श्लक्ष्णासु, ब1 शुक्लेसु च (→श्लक्ष्णासु च)। शा1 का2 ब1 3 दे3 7 मृदुषु च, का1 दे10 मृदूषु च, कारा दे1 3 न1 मृदुष्वथ दे4 सभासु च, दे7 मृदुषु वा (→मृदुष्वपि)

❀ दे4,9 ○, शा1 का1 न1 पुलस्त्य, दे1 7 पुलस्त्य उ

६. शा1. d अस्पष्टम् —a) शा1 का2 दे 10 -उ क्त्वा (→उक्ता) —c) शा1 दे9 समभेत्र °न्व (दे7 हा), ब1 3 दे1 7 समवेत्य त्व° (→सममेव त्व°) —d) दे7 °सान(नु ?)नु न1 °मूर्धनि (→°सानुनि) दे9 विविधुर्धसूर्धनि

७ —a) दे4 मुनिषु (→ऋषिषु) दे7 सप्तर्षिषूपविष्टेषु —b) ब3 नन्दिदेव, दे9 नान्दिदेवो (→नन्दी देव) —c) शा1 का2 पद्यादिना, का1 पद्यो,+°द्यादिना, ब1 दे2 पद्यान्ना, ब1 3 दे5.11 मध्यादिभि (→अर्घ्यादिना) —d) दे7 प्रेमार्द्र° (→प्रयत°)

८. ब3 cd○ —b) का1.2 ते1 धर्मं वाक्यं, ब1 3 दे11 धर्म वाक्य, दे3 धर्मं वाक्यं, दे4 वाक्य धर्म्यं, दे7 वर्च वाक्यं (→धर्म्यं वाक्यं), दे1 (त्रि) हितं, दे3 हिते (→हितं); दे4 शुभं, दे7 सुरे, दे7 न1 हरा

• १२ विश्वावसोः शीलगुणोपपन्ना
आसीत्सुरंध्रीषु वरा त्रिलोके ।
लावण्यराशिः शशिकान्तितुल्या
मदालसा नाम मदालसैव ॥ १२

तां नन्दने देवरिपुस्तरस्वी
संक्रीडतीं रूपवतीं ददर्श ।
पातालकेतुस्तु जहार तन्वीं
तस्यार्थतः सोऽध्वरः प्रदत्तः ॥ १३

हत्वा च दैत्यं नृपतेस्तनूजो
लब्ध्वा वरोरूमपि संस्थितोऽभूत् ।
दृष्टो यथा देवपतिर्महेन्द्रः
शच्या तथा राजसुतो मृगाक्ष्या ॥ १४

नारद उवाच ।❀
एवं निरस्ते महिषे तारके च महासुरे ।
हिरण्याक्षसुतो धीमान् किमचेष्टत वै पुनः ॥ १५

पुलस्त्य उवाच ।❀
तारकं निहतं दृष्ट्वा महिषं च रणेऽन्धकः ।
क्रोधं चक्रे सुदुर्बुद्धिर्देवानां देवसैन्यहा ॥ १६
ततः स्वल्पपरीवारः प्रगृह्य परिघं करे ।
निर्जगामाथ पातालाद् विचचार च मेदिनीम् ॥ १७
ततो विचरता तेन मन्दरे चारुकन्दरे ।
दृष्टा गौरी च गिरिजा सखीमध्ये स्थिता शुभा ॥ १८
ततोऽभूत् कामबाणार्त्तः सहसैवान्धकोऽसुरः ।
तां दृष्ट्वा चारुसर्वाङ्गीं गिरिराजसुतां वने ॥ १९

---

१२. –a) ब$_{1\cdot 2}$ विश्वा (ब$_2$ °श्वु) सुता, दे$_{1\text{-}2}$ 11 विश्वावसो (→विश्वावसोः), ब$_3$ °गणो° (→ °गुणो°) –b) शा$_1$ कारा. का$_{1\cdot 2}$ दे$_{5\cdot 7\cdot 10\cdot 11}$ सुभगा, दे$_9$ सुतरा (→सु वरा). –c) का$_1$ लाव न्यै,+ण्य°, दे$_9$ वरेण्य° (→लावण्य°). –d) शा$_1$ कारा. का$_1$ दे$_{5\cdot 7,9\text{–}11}$ °लसेव (→ °लसैव).

१३. –a) दे$_{1\cdot 2}$ नदना (ननाद् ?), दे$_{3\cdot 10}$ ते$_1$ नन्दनाद्, दे$_{5,9}$ नदनो (→नन्दने); दे$_5$ °पुरिं (→°रिपुस्-). b–) शा$_1$ दे$_9$ संक्रीडतीं (→संक्रीडतीं); दे$_9$ न$_1$ °युता (→ °वतीं); दे$_{1\ 3\ 4}$ ते$_1$ सक्ता (दे$_4$ °क्ता) तिरूप प्रयु (दे$_3$ °य, दे$_4$ °सु) ता ददर्श, दे$_2$ सक्तातिरूपावयुतो ददर्श. –c) दे$_7$ तन्वी) (→तन्वीं). –d) दे$_9$ तस्यार्धत (→तस्यार्थत ); शा$_1$ का$_2$ ब$_1$ दे$_2$ साध्व° (→सोध्व°)

१४. न$_1$.b○. –a) दे$_1$ कृत्वा (→हत्वा); का$_1$ ब$_1$ दे$_5$ [-म] [-म]रिदैत्य, दे$_9$ दैत्यस्य (→च दैत्य); का$_1$ तनूजे + °जो (→तनूजो) –b) कारा. परा तामपि, ते$_1$ वरो नूतनमपि, दे$_9$ वरोरु भुवि, दे$_{11}$ दरोरुमपि(?) (→वरोरूमपि); ब$_{1\ 2}$ सस्थितोऽभवत्, दे$_{2\cdot 5}$ -वस्थितो भूत्, दे$_3$ त स्थितोव(?) भूत् (→सस्थितोऽभूत्) –c) शा$_1$ का$_2$ दृष्ट्वा, कारा. स्वर्गे, दे$_4$ ते$_1$ हृष्टो (→दृष्टो). दे$_{11}$ °पार्ति (→°पति) –d) शा$_1$ कारा. का$_{1\ 2}$ दे$_{7\ 11}$ शच्या , दे$_4$ शय्या, दे$_{10}$ प्राच्या (→शच्या), दे$_9$ °तया, दे$_{11}$ °स्तुतो (→ °सुतो); शा$_1$ का$_{1,2}$ दे$_{5,7}$ मृगाख्या , दे$_1$ मृगादय , दे$_{11}$ मृगाज्य (→मृगाक्ष्या)

१४ श्लोकात्परं कारा अधिकम्—

इति श्रीवामनपुराणे मदालसाकुवलयाश्वयो प्रभावो नाम त्रिषष्टितमोऽध्याय .

❀ शा$_1$ का$_1$ दे$_9$ न$_1$ नारद; दे$_{1\cdot 2\cdot 4}$ नारद उ. .

१५. –a) दे$_9$ हते तु (→निरस्ते); दे$_1$ महिष (→महिषे). –b) दे$_9$ महाहवे, दे$_{11}$ महासुर (→महासुरे). –c) दे$_{11}$ धामा (→धीमान्). –d) शा$_1$ किमाचष्टेत वै, का$_{1,2}$ ब$_1$ दे$_{2\cdot 5\cdot 11}$ किमा (दे$_{11}$ * *) चेष्टत वै (दे$_5$ * * *), दे$_9$ किमभ्येष्टत य, (→किमचेष्टत वै); दे$_{10}$ मुने (→पुन )

❀ शा$_1$ का$_1$ दे$_9$ न$_1$ पुलस्त्य; दे$_7$ पुलस्त्य : दे$_{1.2.4}$ पुलस्त्य उ. .

१६. न$_1$. १६ cd–१७ ab ⊙. –a) शा$_1$ कारा. का$_1$ ब$_{2\ 3}$ दे$_{7.10\cdot 11}$ न$_1$ श्रुत्वा (→दृष्ट्वा) –b) दे$_4$ तु (→च) –c) ब$_1$ दे$_{3.9}$ कोपं, दे$_{5\cdot 11}$ क्रौंच (→क्रोधं); दे$_9$ [-म] थ (→सु-). –d) ब$_1$ दे$_{1\text{-}4.10}$ ते$_1$ दैत्यानां (→देवाना), शा$_1$ का$_{1.2}$ दे$_{7\cdot 11}$ दैत्य° (→देव°). कारा देवाना सैन्यहासुरः .

१७ न$_1$ ab ○ (द. १६ पा वि.) –a) दे$_3$ ततस्तलात्परीवार. –b) दे$_3$ परं (→करे). –d) ब$_2$ मोदिनीं (→मेदिनीं).

१८. –a) दे$_3$ विचारता दे$_{10}$ विचरता (→विचरता). –c) दे$_1$ मदरं (→मन्दरे) –c) शा$_1$ का$_{1\cdot 2}$ गौरीं च गिरिजा, कारा. गौरी गिरिसुता (→गौरी च गिरिजा) –d) शा$_1$ कारा का$_{1\ 2}$ दे$_{2\ 3\ 5\cdot 7.10.11}$ -मध्य- (→-मध्ये). शा$_1$ कारा. का$_{1\ 2}$ -स्थिता शुभा (→स्थिता शुभा).

१९. –a) ब$_2$°बानार्त्त (→°बाणार्त्त ). –b) ब$_3$ दे$_{1\ 5\ 9\text{-}11}$ वान्ध (दे$_9$वोध°) का° (→°वान्धको°). –c) शा$_1$ त (→ता), दे$_7$ वा तु (→चारु-); दे$_4$ सर्वांगो (→-सर्वाङ्गीं) –d) दे$_{11}$ °सुता (→°सुता); ब$_{1\ 2}$ मुने, ब$_3$ तया (→वने); न$_1$ ****** पने.

अथोवाचासुरो मूढो वचनं मन्मथान्धकः ।
कस्येयं चारुसर्वाङ्गी वने चरति सुन्दरी ॥ २०
इयं यदि भवेन्नैव ममान्तःपुरवासिनी ।
तन्मदीयेन जीवेन क्रियते निष्फलेन किम् ॥ २१
यदस्यास्तनुमध्याया न परिष्वङ्गवानहम् ।
अतो धिङ् मम रूपेण किं स्थिरेण प्रयोजनम् ॥ २२
स मे बन्धुः स सचिवः स भ्राता साम्परायिकः ।
यो मामसितकेशां तां योजयेन् मृगलोचनाम् ॥ २३
इत्थं वदति दैत्येन्द्रे प्रह्लादो बुद्धिसागरः ।
पिधाय कर्णौ हस्ताभ्यां शिरःकम्पं वचोऽब्रवीत् ॥ २४

मा मैवं वद दैत्येन्द्र जगतो जननी त्वियम् ।
लोकनाथस्य भार्येयं शंकरस्य त्रिशूलिनः ॥ २५
मा कुरुष्व सुदुर्बुद्धिं सद्यः कुलविनाशिनीम् ।
भवतः परदारेयं मा निमज्ज रसातले ॥ २६
सत्सु कुत्सितमेवं हि असत्स्वपि हि कुत्सितम् ।
शत्रवस्ते प्रकुर्वन्तु परदारावगाहनम् ॥ २७
किंचित् त्वया न श्रुतं दैत्यनाथ
गीतं श्लोकं गाधिना पार्थिवेन ।
दृष्ट्वा सैन्यं विप्रधेनुप्रसक्तं
तथ्यं पथ्यं सर्वलोके हितं च ॥ २८ हे ५६

२० –a) ब$_3$ ग्रसुरात् (→असुरो) –b) दे$_{1\ 4}$ ते$_1$ °थातुर. (→°थान्धक) –c) दे$_7$ यस्येय, दे$_9$ याचो (चे?) यं (→कस्येय) –d) दे$_9$ वर (→वने) दे$_9$ चरसि, न$_1$ धावति (→चरति) दे$_9$ सुदरि (→सुन्दरी)

२१ –a) शा$_1$ का$_{1\ 2}$ कस्येयमतिरंभेव, कारा कस्येय भाति रम्भेव, दे$_7$ रूपयादोनिधिर्नैव, दे$_{11}$ कस्येयमचिर मेव –b) कारा, न मेन्त° (→ममान्त°) शा$_1$ का$_1$ दे$_{11}$ °वासिन, का° वासिन,+°नी, ब$_3$ दे$_{1\ 4}$ ते$_1$ °चारिणी, दे$_9$ °वासिनि (→°वासिनी) –c) दे$_{1\ 4}$ ते$_1$ रूपेण, दे$_9$ वीरेण, न$_1$ वीर्येण (→जीवेन) –d) ते$_1$ नि (?) कुलेन (→निष्फलेन)

२२ ब$_{2\ 3}$ab ○, दे$_9$ २२c–२३d○ –a) का$_1$ दे$_4$ न$_1$ यद्यस्यास्, दे$_3$ यदस्यात्, ते$_1$ जये°,+तपस्यास (→यदस्यास) –b) शा$_1$ कारा का$_{1\ 2}$ दे$_{10}$ ते$_1$ परिष्वक्त, दे$_{7\ 11}$ परिष्वज (→परिष्वङ्ग), दे$_{4\ 11}$ वाहन (→वानह) न$_1$ परिष्वगगणावह –c) न$_1$ निंदा (→धिङ्) –d) ब$_1$ स्थिरऐ (→स्थिरेण)

२३ दे$_9$ ○ (द्र २२पा वि) –a) शा$_1$ मेबद्ध, ब$_3$ मेन्धक, दे$_{1\ 3}$ ते$_1$ मे बुघ (दे$_1$ °द्ध) (→मे बन्धु) –b) ब$_3$ प्रभाता (→स भ्राता); दे$_{1\ 3}$ ते$_1$ °रायक (→°रायिक) –c) का$_1$ ये+यो माम्, ब$_2$ यो मया, ब$_3$ योसम् (समा?), दे$_3$ यो माम् न$_1$ यो मे (→यो माम्); दे$_5$ °केश, मुवे °केशां (→°केशा) –d) दे$_4$ योजयन् (→योजयेत); दे$_2$ °लोचना, दे$_{11}$ °लोचन (→°लोचनाम्)

२४ दे$_3$ २४b–२५a○ (द्र स) –a) ब$_1$ इद (→इत्थ); का$_2$ दे$_{2\ 10\ 11}$ दैत्येन्द्र (→दैत्येन्द्रे) –d) ब$_{1\ 2}$ °कम्पन् वचो, ब$_3$ °कम्पम्वचो, दे$_9$ °कप्यवचो, दे$_{11}$ °कपं च चो (→°कम्पं वचो)

२५ दे$_3$a○ (द्र २४पा वि) –a) ब$_{1\ 2}$ मा चै (ब$_2$ °मे) व (→मा मैव) –b) दे$_9$ जगता (→जगतो); दे$_9$ त्वय (→त्विय)

२६ –a) ब$_{2\ 3}$ दे$_{1\ 4\ 10}$ ते$_1$ सुदुर्बुद्ध दे$_7$ सुदुर्बुद्धि (→सुदुर्बुद्धि) –b) दे$_{1\ 4\ 10}$ ते$_1$ बुद्धि, दे$_9$ न$_1$ त्व वै (→सद्य); ब$_2$ दे$_{2\ 5\ 9\ 10\text{-}11}$ ते$_1$ विनाश (ब$_2$ सि) नीं (→विनाशिनीं) –c) दे$_{1\ 3\ 4}$ परदारस्य (दे$_4$ °राश्र) ते$_1$ परिवारस्य, न$_1$ परिहार्येय (→परदारेय), दे$_9$ भविता परिवारोय –d) ब$_2$ ते$_1$ मा (ते$_1$ मा) विसज्ज, दे$_5$ मानिवर्ज, दे$_9$ ममानिर्ज, दे$_{11}$ मा निवत्तु (→मा निमज्ज) दे$_5$ रसातल (→रसातल)

दे$_7$ २६cd मध्ये अधिकम्—

238 * भार्येय शकरस्य त्रिशूलिन ।
मा कुरुष्व सुदुर्बुद्ध बुद्धि कुलविनाशनम् । (= २५cd २६ab)

२७ –a) दे$_1$ सात्सु, दे$_{5\ 11}$ सत्य (→सत्सु) –b) दे$_{1\ 3}$ ते$_1$ आपत्स्वपि (→असत्स्वपि) –d) दे$_4$ °मशन (→°गाहन), दे$_9$ वरदानविमशन

२८ –a) शा$_1$ का$_{1\ 2}$ ब$_{2\ 3}$ किं त्वया न श्रुत दैत्यनाथ, कारा किं न त्वया सश्रुत दैत्यनाथ दे$_1$ * नव (?) ज्ञातो दैत्यनाथेह किंतु, दे$_{7\ 4}$ नैव (दे$_2$ च) ज्ञातो दैत्यनाथेह किंतु दे$_{5\ 7\ 11}$ किं न श्रुत दैत्यनाथ **? दे$_9$ किं चित्तनेवाश्रुत दैत्य नाथ, दे$_{10}$ नैव ज्ञातो दैत्यनाथेह किंतु ते$_1$ नैव नैव दत्यनाथेह किन्तु b) कारा ब$_{1\ 3}$ श्लोक गीत दे$_{1\ 4\ 10}$ ते$_1$ गीत श्लोको (→गीत श्लोक) –c) दे$_4$ दृष्टा (→दृष्ट्वा); शा$_1$ कारा का$_1$ चैवं, का$_2$ ब$_1$ दे$_1$ चैन्य, ब$_{2\ 3}$ दे$_{5\ 7\ 11}$ चैनं न$_1$ पुत्रं (→सैन्य) शा$_1$ का$_1$ विप्ल, कारा विप्लु (→विप्र); ब$_1$ चितु (?), ब$_{2\ 3}$ चित्त दे$_{1\ 4}$ -यात, दे$_5$ चित्ति, दे$_7$ चित्ते, शा$_1$ कारा का$_{1\ 2}$ दे$_{10\ 11}$ चित्ते ते$_1$ -घात (→-धेनु) ब$_2$ या यक्तं, दे$_9$ प्रवर्तकं (→प्रसक्त) –d) ब$_1$ दे$_{1\ 4\ 10}$ ते$_1$ पथ्य तथ्य (→तथ्य पथ्य); दे$_9$ न$_1$ हित वा (→हित च)

६. २६ वरं प्राणास्त्याज्या न च पिशुनवादेष्वभिरतिः
वरं मौनं कार्यं न च वचनमुक्तं यदनृतम् ।
वरं क्लीबैर्भाव्यं न च परकलत्राभिगमनं
वरं भिक्षार्थित्वं न च परधनास्वादमसकृत् ॥ २९
स प्रह्लादवचः श्रुत्वा क्रोधान्धो मदनार्दितः ।
इयं सा शत्रुजननीत्येवमुक्त्वा प्रदुद्रुवे ॥ ३०
ततोऽन्वधावन् दैतेया यन्त्रमुक्ता इवोपलाः ।
तान् रुरोध बलान्नन्दी वज्रोद्यतकरोऽव्ययः ॥ ३१
मयतारपुरोगास्ते वारिता द्राविता तथा ।
कुलिशेनाहतास्तूर्णं जग्मुर्भीता दिशो दश ॥ ३२
तानर्दितान् रणे दृष्ट्वा नन्दिनाऽन्धकदानवः ।
परिघेण समाहत्य पातयामास नन्दिनम् ॥ ३३
शैलादिं पतितं दृष्ट्वा धावमानं तथान्धकम् ।
शतरूपाऽभवद् गौरी भयात् तस्य दुरात्मनः ॥ ३४
ततः स देवीगणमध्यसंस्थितः
परिभ्रमन् भाति महाऽसुरेन्द्रः ।
यथा वने मत्तकरी परिभ्रमन्
करेणुमध्ये मदलोलदृष्टिः ॥ ३५
न परिज्ञातवांस्तत्र का तु सा गिरिकन्यका ।
नात्राश्चर्यं न पश्यन्ति चत्वारोऽमी सदैव हि ॥ ३६
न पश्यतीह जात्यन्धो रागान्धोऽपि न पश्यति ।
न पश्यति मदोन्मत्तो लोभाक्रान्तो न पश्यति ।

---

२९ –a) ब$_1$ प्राणत्याग, दे$_4$ 11 न$_1$ प्राण (दे$_4$ °णस्) त्यागो, दे$_{10}$ प्राणास्त्यक्ता (→प्राणास्त्याज्या), शा$_1$ कारा का$_{1\ 2}$ दे$_{10-11}$ न च रिपुविनाशेष्वभिरति, ब$_{1-3}$ न तु (ब$_3$ च) शिशुविनाशेष्व भिरति, दे$_{1-4}$ ते$_1$ न च (दे$_{1\ 3}$ ते$_1$ वत) परहिंसा त्वभिमता दे$_7$ न च रि(पिशुन वा)पुविनाशेष्वभिरति (→नच पिशुनवादेष्वभिरति) –b) दे$_1$ बत सता वर (?) वानृत, दे$_{3\ 4}$ ते$_1$ बत सता वाच्य (ते$_1$ °क्य)मनृतम् (→न च वचनमुक्त यदनृतम्) –d) ब$_{1\ 3}$ दे$_9$ भिक्षाशित्व, ते$_1$ भिक्षार्थिन (→भिक्षार्थित्व), शा$_1$ कारा का$_{1\ 2}$ दे$_{5\ 7\ 10-11}$ °धनानां हि हरणम्, ब$_{1-3}$ °धनास्वादनरस (ब$_2$ °कृत), दे$_9$ °धनास्वादरुचिता (→°धनास्वादमसकृत्)

३० –a) ब$_{1\ 2}$ प्रह्लादवचन, दे$_2$ स प्रह्लाद वच (→स प्रह्लादवच) –b) शा$_1$ कारा का$_{1\ 2}$ दे$_{4\ 5\ 7\ 10\ 11}$ मदनातुर, ब$_{1-3}$ मदनान्वित, दे$_9$ मन्यथार्दित (→मदनार्दित) –c) दे$_{1\ 4\ 10}$ सा स्कद-, दे$_9$ संशत्रु-, न$_1$ शकस्य (→सा शत्रु-) –d) ह्यव (→-त्येवम्), ब$_2$ उक्त, दे$_{11}$ उक्ता (→उक्त्वा), दे$_9$ [-अ]भिदुद्रुवे, दे$_5$ प्रदुद्रुवु (→प्रदुद्रुवे)

३१ –a) दे$_9$ न$_1$ तमन्व° (→ततोऽन्व°), ब$_{1\ 2}$ दैतेयो, दे$_{1\ 3}$ दैत्याय, दे$_2$ दैत्येये, दे$_4$ दैत्या ये दे$_7$ दैत्येया, ते$_1$ दैत्येन्द्र (→दैतेया) –b) शा$_1$ पश्चमुक्त, ब$_{2\ 3}$ दे$_{1\ 3}$ ते$_1$ यन्त्रमुक्त, दे$_4$ क्षिप्तो यन्त्र(→यन्त्रमुक्ता) ब$_{1\ 2}$ दे$_{1\ 3}$ ते$_1$ इवोपल (ब$_2$ °र) दे$_9$ तु केवला (→इवोपला) –c) शा$_1$ कारा का$_{1\ 2}$ दे$_{5.7.10}$ तास्तु क्रोध°, ब$_{1\ 3}$ दे$_9$ न$_1$ त (दे$_9$ ता, न$_1$ तान्)रुरोध, दे$_{2\ 3}$ ते$_1$ तानब्रवीत् (→तानद्रावीत्), दे$_1$ बलवशु (?) नन्दी, दे$_{.\ 3}$ ते$_1$ बलवास्तु (→बलान्नन्दी), दे$_4$ वज्राकितकरो नन्दी, दे$_{11}$******* नदी –d) ब$_{2\ 3}$ चक्रोद्यत° (→वज्रोद्यत°), कारा °करोद्रवत्, दे$_9$ °करोन्व्यय, दे$_{11}$ °करान्यया (?) न$_1$ °बलो,+करोव्यय (→°करोऽव्यय); दे$_{2\ 3}$ ते$_1$ नन्दी चक्राङ्कितकर, दे$_4$ बलवान्दैत्य-मभ्ययात्

३२. –a) ब$_3$ मारुताना, दे$_{11}$ मया (?) तार* (→मय-तार-), शा$_1$ का$_{1\ 2}$ °रोगास्तु (→°रोगास्ते) –b) का$_1$ द्र,+ द्राविता, का$_2$ द्रवित, दे$_{1\ 3\ 4}$ ते$_1$ दारिता (→द्राविता). –c) ब$_3$ °हिता (→°हता) –d) ते$_1$ भ्रान्ता (→भीता), दे$_3$ दिश (→दश)

३३ शा$_1$ ıcd ○ –a) न$_1$ ततो (→रणे) –b) दे$_{1-3\ 7}$ ते$_1$ एव च (दे$_7$ °तु) (→-दानव) –c) का$_1$ • परिघेन (→परिघेण)

३४ शा$_1$ a ○ –a) का$_1$ • दे$_{10.11}$ शैलेय, दे$_{3}$ ते$_1$ शैलाग्नि°, दे$_5$ शैले हि, दे$_7$ शैलाद्रि (→शैलादि) –b) ब$_1$ • वर्धमान (→धावमान). –c) दे$_4$ शवरू° (→शतरू°), दे$_{11}$ भवेद (→[-अ]भवद) –d) दे$_9$ °यात्ती सा (→°यात्तस्य) दे$_{11}$ °रात्मना (→°रात्मन)

३५ –a) शा$_1$ देवा, का$_2$ देव, न$_1$ देवीं (→देवी), शा$_1$ दे$_3$ -संस्थित, दे$_5$ -सस्थिता (→-सस्थित) –b) ब$_{\circ}$ ता हि, दे$_7$ नाति-, न$_1$ तस्य (→भाति) –c) शा$_1$ कारा का$_1$ • दे$_{11}$ यथाऽ-क्षतो, ब$_{1\ 3}$ दे$_7$ यथाजनो, दे$_{5\ 10}$ यथा जनो, न$_1$ यथा जले, (→यथा वने) –d) दे$_{1\ 4}$ ते$_1$ विराजतेऽसौ (→करेणुमध्ये) दे$_{1\ 2}$ मदलोह°, दे$_9$ चललोल° (→मदलोल°)

३६ ते$_1$ ab ○ –a) ब$_2$ °ज्ञायता (→°ज्ञातवान्) –b) शा$_1$ का$_2$ [श्रा]श्चर्येण (→[-आ]श्चर्यं) –d) दे$_1$ हि, ते$_1$ मा (?) (→[-अ]मो)

३७ दे$_1$ bcd e ○. –a) दे$_{1\ 4}$ ते$_1$ न पश्यन्तीह जात्यन्धा. –b) दे$_{10}$ जन्मान्धो हि (→रागान्धोऽपि) c) न$_1$

सोऽपश्यमानो गिरिजां पश्यन्नपि तदान्धकः ॥ ३७
प्रहारं नाददत् तासां युवत्य इति चिन्तयन् ।
ततो देव्या स दुष्टात्मा शतावर्या निराकृतः ॥ ३८
कुट्टित. प्रवरैः शस्त्रैर्निपपात महीतले ।
वीक्ष्यान्धकं निपतितं शतरूपा विभावरी ॥ ३९
तस्मात् स्थानादपाक्रम्य गताऽन्तर्धानमम्बिका ।
पतितं चान्धकं दृष्ट्वा दैत्यदानवयूथपाः ॥ ४०
कुर्वन्त. सुमहाशब्द प्राद्रवन्त रणार्थिनः ।
तेषामापतता शब्दं श्रुत्वा तस्थौ गणेश्वरः ॥ ४१
आदाय वज्र बलवान् मघवानिव कोपित. ।
दानवान् समयान् वीरः पराजित्य गणेश्वरः ॥ ४२
समभ्येत्याम्बिकां दृष्ट्वा ववन्दे चरणौ शुभौ ।
देवी च ता निजा मूर्तीः प्राह गच्छध्वमिच्छया ॥ ४३
विहरध्वं महीपृष्ठे पूज्यमाना नरैरिह ।
वसतिर्भवतीनां च उद्यानेषु वनेषु च ॥ ४४
वनस्पतिषु वृक्षेषु गच्छध्वं विगतज्वराः ।
तास्त्वेवमुक्ताः शैलेय्या प्रणिपत्याम्बिका क्रमात् ॥४५
दिक्षु सर्वासु जग्मुस्ताः स्तूयमानाश्च किन्नरैः ।
अन्धकोऽपि स्मृतिं लब्ध्वा अपश्यन्नद्रिनन्दिनीम् ॥
स्वबलं निर्जितं दृष्ट्वा ततः पातालमाद्रवत् ॥ ४६ मं. ५

---

मदान्मत्तो (→मन्मोमत्तो) d) ब1 3 दे4 7 नोभ° (→लोभा°) –c) का1 स+सो दे4 स दे9 तां (→सो), का1 °पश्यमानी (→°पश्य मानो) –f) ब7 दे7 4 7 10 तथाधक, ते ****, न1 न चाधक (→तत्रान्धक); दे9 प्रपश्यन्नपि नान्धक

३८ ते1 ab ○ –a) दे1 3 प्रकार, दे4 प्राहर, दे5 प्रहासात्, दे9 प्रद्यावन् (→प्रहार) दे7 प्रहाकार नारद दत्तासा –b) शा1 युवत्या (→युवत्य); दे7 3 इव (→इति) –c) दे7 देव्या शु (→ततो देव्या स) –d) शा1 कारा का2 शतवर्या का1 शतवया+विभावर्या ब1 2 शतधार्या, दे1 शतावर्त्यं, दे3 ते1 शतावर्त्यं, दे4 10 विभावर्या (→शतावर्या)

३९ दे3 ab ○; ते1. ३६ c वीक्ष्या इत्यारम्य ४१ c पतता यावन्नास्ति –a) शा1 कुष्ठित कारा कुण्ठित, का1 कु(?)ट्टित, दे1 3 4 7 10 सून्ति (दे4 °ता) ते1 सू** न1 प्रहृत (→कुट्टित); ते1 *वरै, न1 प्रवलै (→प्रवरै) –c) दे11 निपतिते (→निपतित) –d) दे4 शव° (→गत°)

४० ते1 ○ (द्र ३९पा वि) –a) दे5 तया (→तस्मात्) दे-3 [प्र]पक्रम्य (→[प्र]पाक्रम्य) b) दे-3 तन्तान्त° (→गतान्त°) दे1 3 मम्यगात् (→मम्बिका) दे4 तदतद्वाने (?) मम्यगात् –d) दे1 3 4 देव° (→दैत्य°)

४१. ते1 ab○ (द्र ३९पा वि) दे5 cd ○ –a) ब1 कुर्वन्तं (→कुर्वन्त) कारा महच्छब्द, दे1 3 महानाद, दे10 महानाद,+महाशब्द (→महाशब्द) –b) ब1 प्रातरन्त दे3 4 प्राद्रवन्त (→प्राद्रवन्त) दे1 रसाहि, दे7 4 रसाहिते (→रणार्थिन) –c) शा1 का1 आपतत, का1 मापतत,+मापतता दे11 मापतन्तं (→मापतता)

४२ दे5 ○ –b) न1 मख° (→मघ°) –c) शा1 कारा का1 ब2 समयन्, का2 स महा, ब1 न1 शमयन् ब3 स तदा, दे9 सहयन् (→समयान्) शा1 धीर, दे1 3 ते1 वीक्ष्य (→वीर.) –d) दे2 11 पराजित, दे7 परिजात्य, दे9 रणेजित्य (→पराजित्य)

४३ दे5 abc ○ –a) शा1 समभ्येत्य चाम्बि(न्ध?)क, कारा का1 2 समेत्य चाबिका, ब1 समभ्येत्यान्धक, दे1 5 समभ्येत्याविका, दे11 समयेताम्बिका(?) (→समभ्येत्याम्बिका) –c) दे2 3 मूर्त्ति, दे7 मूर्त्या (→मूर्ती) दे9 देवयी वाचनिमान् मन्त्रीन्. –d) शा1 का1 2 ब1 3 दे5 7 11 न1 स्वाह, कारा भाह (→प्राह) ब3 इहेच्छया (→इच्छया) दे9 गेहाद् गच्छध्वमिच्छया

४४ –b) शा1 पूज्यमागा,+°ना, दे1 पूज्यमना (→पूज्यमाना) शा1 नरैरसह, ब2 नरैरिव (→नरैरिह) –c) ब2 नवतिर, (→वसतिर) दे4 तु (→च)

४५ –a) ब7 °स्पतीषु (→°स्पतिषु) दे9 दृश्येषु (→वृक्षेषु) –b) न1 मविनकया (→विगतज्वरा), दे4 विहरध्वं गतज्वरा –c) ब1 इत्येवम्, दे7 5 तास्त्वे(?)वम् (→तास्त्वेवम्) शा1 का2 दे11 उक्त्वा ब2 दे1 3 उक्त (→उक्ता) –d) ब3 शैलेन्द्रया, दे1 शैनेया, दे9 शलेयीं (→शैलेय्या); दे9 [-म]म्बिका (→[-मा]म्बिका)

४६ –a) कारा सजग्मु (→जग्मुस्ता) –b) दे7 °मानान् (→°मानास); ब2 सुरासुरै, दे1 3 [प्र] च किन्नरै, दे10 तु किनरै (→च किन्नरैः); ते1 रूपमासाद्य किन्नरै. –c) ब3 स्मृति (→स्मृतिं) –d) दे9 अपश्य, ते1 अपश्यत् (→अपश्यन्); दे1 3.11 नन्दिनी, दे9 तत्र नदिन, ते1 तव नन्दिनी (→अद्रिनन्दिनीम्) –f) दे9 माविशत् दे11 आद्रवन्, दे1 आद्रवम् (→प्राद्रवत्)

५६ ४७ ततो दुरात्मा स तदान्धको मुने पातालमभ्येत्य दिवा न भुङ्क्ते ।
रात्रौ न शेते मदनेषु ताडितो गौरीं स्मरन्कामबलाभिपन्नः ॥ ४७

इति श्रीवामनपुराणे त्रयस्त्रिंशोऽध्याय ॥३३॥

# ३४

नारद उवाच ।❀
क्व गतः शङ्करो ह्यासीद्येनाम्ना नन्दिना सह ।
अन्धक योधयामास एतन्मे वक्तुमर्हसि ॥ १

पुलस्त्य उवाच ।❀
यदा वर्षसहस्रं तु महामोहे स्थितोऽभवत् ।
तदाप्रभृति निस्तेजाः क्षीणवीर्यः प्रदृश्यते ॥ २

स्वमात्मानं निरीक्ष्याथ निस्तेजोऽङ्गं महेश्वरः ।
तपोर्थाय तथा चक्रे मतिं मतिमतां वरः ॥ ३

स महाव्रतमुत्पाद्य समाश्वास्याम्बिकां विभुः ।
शैलादिं स्थाप्य गोप्तारं विचचार महीतलम् ॥ ४

महामुद्रार्पितग्रीवो महाहिकृतकुण्डलः ।
धारयाणः कटीदेशे महाशङ्खस्य मेखलाम् ॥ ५

---

४७ –b) दे9 नक्त (→भुङ्क्ते) –c) ब1 2 मदनेन दाहितो न1 मदनेषुतापितो (→मदनेषु ताडितो) –d) का1 ब1 दे11 कालबला°, ब2 कासवला°, ब3 कामवशा°, दे7 कामवाणा° (→कामबला°) दे10 °वपन्न (→°भिपन्न) दे9 गौरीं स्मरन्काल मलोलया नयत् न1 गौरीं स्मरन् का ❀ रिणी द्विपेन्द्र

पुष्पिका—शा1 का1 2 दे7 7 10 11 न1 इति श्री (दे5 11 [श्री] ) वामनपुराणे भैरवप्रादुर्भावे, कारा ब1 दे3 ते1 इति श्री वामनपुराणे, ब2 3 दे1 7 इति वामनपुराणे, दे4 इति वामने, दे9 श्री वामनपुराणे, मुवे इति श्रीवामनपुराणे पुलस्त्यनारसवादे भैरवप्रादुरभावे अध्यायनाम—शा1 का1 ब1 3 दे1 5-7 10-11 ते1 न1 ○; कारा अन्धकपराजयो नाम का दे9 भैरवप्रादुर्भावो नाम अध्यायसख्या शा1 ब3 दे7 ○, कारा चतुष्षष्ठितमोऽध्याय, का1 ॥४८॥ का2 अध्याय ॥४९॥ ब1 चतुर्विशतितमोऽध्याय, ब2 चतुर्विशोऽध्याय, दे1 10 ॥५६॥ दे7 11 ॥५५॥, दे3 ॥५८॥, दे4 चतुर्विशोऽध्याय, दे7 सप्तदशोऽध्याय, दे9 न1 द्वात्रिंशोऽध्याय, ते1 षष्ठितमोऽध्याय, मुवे नवपञ्चाशत्तमोऽध्याय

३४

❀दे5 ○ शा1 न1 नारदः दे1 4 नारद उ; ते1 श्रीनारदः

१ –a) ब1 3 [-अ]था (ब3 °थो)भूत (→ह्यासीद्) –b) ब1 3 येनात्मा (→येनाम्ना) दे11 नन्दिना (?) (→नन्दिना) –d) दे1 3 ते1 तन्मे त्व (→एतन्मे)

❀शा1 का1 दे4 न1 पुलस्त्य, दे1 2 7 पुलस्त्य उ दे9 श्री पुलस्त्य

२ –a) दे1 4 ते1 वर्षसहस्रं हि, दे9 हतसहस्रांशुर् (→वर्ष-सहस्र तु) –b) शा1 का1 ब3 दे5-7 11 महामोह, दे3 महामोहो, दे10 महा❀हे (→महामोहे) दे1 4 10 ते1 भव (→[-अ]भवत्) दे9 महामोर्गास्तोभवत –c) ब1 दे7 निस्तेज (→निस्तेजा) –d) मुवे हीन° (→क्षीण°) शा1 का1 ❀ स, कारा च (→प्र)

२ श्लोकात्पर दे4 अधिकम्—पुलस्त्य

३ –a) ब3 स चात्मान (→स्वमात्मान) दे7 निरीक्ष्यार्थं (→निरीक्ष्याथ) –b) शा1 कारा का1 2 दे 11 निस्तेजोग, दे3 निस्तेजोह दे7 निस्तेजो +प्रदृश्यति, दे9 न1 निस्तेजस्क (→निस्तेजोऽङ्ग) शा1 महेश्वरम्, का1 महेश्वर (?) (→महेश्वर) –c) दे1 3 ते1 तदर्थाय तदा (ते1 °तो) दे4 तपोर्थाय मतिं, दे9 तन्थ परमा (→तपोर्थाय तथा) –d) दे4 तन दे10 ❀❀ (→मतिं)

४ –a) शा1 का1 उत्पाद्य दे1-4 ते1 उद्यम्य (→उत्पाद्य) –b) ब1 2 समाभाष्य (→समाश्वास्य) ब1 3 प्रभु (→विभु) –c) शा1 शैलाद्रिं, दे7 शैलादि (?) दे11 शैलाक्षि (?) (→शैलादि) ब3 सुरगोप्तार, दे7 स्थाप्य गोपुर्या (→स्थाप्य गोप्तार) –d) दे7 विचराम (→विचचार) शा1 कारा का1 ❀ दे1 5 महीतले (→महीतल)

५ –a) दे3 मह° (→महा°); शा1 °मुन्नार्पित°, ब1 °मुद्रापि ❀ (→°मुद्रार्पित°) दे10 °ग्रीव (→°ग्रीवो) दे9 न1 महाहिमुन्तिग्रीवो –b) दे9 °मण्डन (→°कुण्डल) –c) शा1 का1 2 ब1 3 दे5-7 11 न1 धारयान, दे1-4,10 धारयस्तु, ते1 धार यन् सु, मुवे धारयश्च (→धारयाण) –d) दे1 7 11 मेखलम् (→मेखलाम्)

कपालं दक्षिणे हस्ते सव्ये गृह्य कमण्डलुम् ।
एकाहवासी वृक्षे हि शैलमानुनदीष्वटन् ॥ ६
स्थानं त्रैलोक्यमास्थाय मूलाहारोऽम्बुभोजनः ।
वाय्वाहारस्तदा तस्थौ नववर्षशतं क्रमात् ॥ ७
ततो वीटां मुखे क्षिप्य निरुच्छ्वासोऽभवद् यतिः ।
विस्तृते हिमवत्पृष्ठे रम्ये समशिलातले ॥ ८
ततो वीटा विदार्यैव कपालं परमेष्ठिनः ।
सार्चिष्मती जटामध्यान्निपण्णा धरणीतले ॥ ९
वीटया तु पतन्त्याऽद्रिर्दारितः क्ष्मासमोऽभवत् ।
जातस्तीर्थवरः पुण्यः केदार इति विश्रुतः ॥ १०
ततो हरो वरं प्रादात् केदाराय वृषध्वजः ।
पुण्यवृद्धिकरं ब्रह्मन् पापघ्नं मोक्षसाधनम् ॥ ११
ये जलं तावकं तीर्थे पीत्वा संयमिनो नराः ।
मधुमांसनिवृत्ता ये ब्रह्मचारिव्रते स्थिताः ॥ १२
षण्मासाद् धारयिष्यन्ति निवृत्ताः परपाकतः ।
तेषां हृत्पङ्कजेष्वेव मल्लिङ्गं भविता ध्रुवम् ॥ १३
न चास्य पापाभिरतिर्भविष्यति कदाचन ।
पितॄणामक्षयं श्राद्धं भविष्यति न संशयः ॥ १४ ब. ६

---

६. –a) व1 ***, दे3 कपाल- (→कपाल); व2 दक्षिणं (→दक्षिणे). –b) का2 सव्ये गृह-, व3 सव्ये गृह (?), ते1 सव्ये हस्ते, न1 वामे चैव (→सव्ये गृह्य). –c) का2 एकाहवासी, दे9 एकाह्नवासी, दे11 ए*हद** (→एकाहवासी); व1-2 दे1-4-9 ते1 वृक्षादि-, दे10 वृक्षेषु,+वृक्षे हि, मुद्र. वृक्षाद्रि- (→वृक्षे हि). –d) शा1 कारा. का1-2 शैल (का1 °ला) जासु (→शैलसानु-); व2 °नदीश्वटन्, व3 दे1-3 ते1 °नदीषु च, दे7 °नदीतट, दे9 न1 °नदीतटे (→°नदीष्वटन्).

७. –a) दे9 स्नान त्रैकालमाधाय, ते1 स्थानं त्रैलोक्यमाच्छाय, न1 स्नान त्रैकालमास्थाय –b) शा1 दे7 मूलाहाराम्बुभोजन (शा1 °ना). –c) व1-3 दे1-5 11 ते1 तथा (→तदा). –d) दे9 रा वर्षाणि शत क्रमात्

८. –a) शा1 ततो वीक्ष्यं, का1 ततो वीटीं, दे9 ततो**, ते1 ततो वीर्यं (→ततो वीटां); दे5 मुने (?) (→मुखे); व1 3 क्षिप्त्वा (→क्षिप्य). –b) व2 ***सं (→निरुच्छ्वासो), शा1 का2 व3 [-म]भवद्युति, कारा. [-अ]भवद्यती, व1 भवमति, व2 [-म]भवन्मृति, दे1-3 5 ते1 भवे (दे3 °व)द्यदि (→[-म]भवद्यति). –c) न1 हि * * * (→हिमवद्°) –d) दे2 रम्य- (→रम्ये), शा1 कारा. का1 2 शिव°, व3 शशि° (→सम°).

९. –a) शा1 कारा. का2 व1-2 दे1-3-5 वीटा, का1 वीटी, व3 वीटाद्, ते1 जटा (→वीटा), दे7 ततो ष्यवोविन्नं चैव, न1 ततो* प्रविराश्चैव. –b) दे5 कपाल-, न1 कपाल (→कपाल) –c) शा1 सार्चिष्मते, दे9 न1 या(न1 सा)र्चिष्मति (→सार्चिष्मती) –d) दे1-3 निक्षिप्ता (→निषण्णा)

१०. –a) दे4 वीरया, दे11 वीटया (?), ते1 जटया, न1 वीटाया (→वीटया); शा1 कारा. का1 2 निपतन्त्याद्र, व1 निपतन्त्याद्रिद् (?), दे5.7.10 निपतन्त्याद्रिर्, न1 निपतं ह्याद्रिर् (→तु पतन्त्याद्रिर्) दे9 विटपानिपतेत्याद्रिर्. –b) शा1 दारि तुशा- ?, का1 दारितास्मा,+दारितक्ष्मा, दे2 दारित क्ष (?), दे4.9 दारितास्मा-, न1 दारितं क्ष्मा- (→दारित क्ष्मा-); कारा. -तलो, का1 ततो,+सतो (→-समो) –c) व3 जात क्षेत्र°, दे1-3 ते1 यावत्तीर्थ° (→जातस्तीर्थ°); दे10 पुण्यं (→पुण्य). –d) दे9 केदारम्, दे3 केदा * (→केदार); दे2 विश्रुता (→विश्रुत).

११. –a) व2 हरं (→हरो). –b) दे1-3 ते1 केदारे वृषभध्वज. –c) दे1.9 पुण्यं (→पुण्य-); दे9 श्रद्धि° (→वृद्धि°). –d) दे9 पापं तद् (→पापघ्नं).

१२. –a) व2 दे2 ये जनं, व3 योजनं, दे4 ये यत्ने, दे10 ये जालं (→ये जल); व1-3 दे1 4 7.10 तावके (दे2 °कि) तीर्थे (दे7 °र्थं), दे9 पावनं तीर्थं (→तावकं तीर्थे). –b) शा1 कारा. का1 दे3 संयमितो (→संयमिनो); दे11 नर (→नरा). –c) कारा. मद्यमास-, दे1 मधुमासं (→मधुमास-); व3 दे1-3 ते1 निवृत्तास्तु, दे1 निवृत्ताश्च (→निवृत्ता ये). –d) दे3 ब्रह्मचारी, दे10 ब्रह्मचर्यं- (→ब्रह्मचारि-); दे9 वृते (?) (→व्रते), व2 स्थित (→स्थिता).

१३. –a) शा1 कारा. का1-2 व2.3 दे4 न1 षण्मासान्, दे9 ते1 षण्मास (→षण्मासाद्). –b) शा1 निवृत्त (→निवृत्ता); दे3 °पातक (→°पाकता). –c) दे1 °पंके, दे11 °पद्म- (→°पङ्क-); व1 3 दे1 ते1 एव (→[-ए])व. –d) व2-3 दे9 न1 म (दे9 स) ल्लिङ्गो, दे1-3.4 ते1 सल्लिङ्ग (→मल्लिङ्ग); दे11 भवतु (→भविता).

१४. –a) शा1 न चासि(?), व3 न चास्ति (→न चास्य); शा1 कारा. का1 2 पापाभिरतिर्, व1-3 पापे (व2 °पो) भिरतिर्, दे1-4 ते1 पापेषु रतिर् (→पापाभिरतिर्).

६० १५ स्नानदानतपांसीह होमजप्यादिकाः क्रियाः ।
भविष्यन्त्यक्षया नृणां मृतानामपुनर्भवः ॥ १५
एतद् वरं हरात् तीर्थं प्राप्य पुष्णाति देवताः ।
पुनाति पुंसा केदारस्त्रिनेत्रवचनं यथा ॥ १६
केदाराय वरं दत्त्वा जगाम त्वरितो हरः ।
स्नातुं भानुसुतां देवीं कालिन्दीं पापनाशिनीम् ॥ १७
तत्र स्नात्वा शुचिर्भूत्वा जगामाथ सरस्वतीम् ।
वृतां तीर्थशतैः पुण्यैः प्लक्षजां पापनाशिनीम् ॥ १८
अवतीर्णस्ततः स्नातुं निमग्नश्च महाम्भसि ।
द्रुपदां नाम गायत्रीं जजापान्तर्जले हरः ॥ १९

निमग्ने शंकरे देव्या सरस्वत्या कलिप्रिय ।
साग्रः संवत्सरो जातो न चोन्मज्जत ईश्वरः ॥ २०
एतस्मिन्नन्तरे ब्रह्मन् भुवनाः सप्त सार्णवाः ।
चेलुः पेतुर्धरण्यां च नक्षत्रास्तारकैः सह ॥ २१
आसनेभ्यः प्रचलिता देवाः शक्रपुरोगमाः ।
स्वस्त्यस्तु लोकेभ्य इति जपन्तः परमर्षयः ॥ २२
ततः क्षुब्धेषु लोकेषु देवा ब्रह्माणमागमन् ।
दृष्ट्वोचुः किमिदं लोकाः क्षुब्धाः संशयमागताः ॥ २३
तानाह पद्मसंभूतो नैतद् वेद्मि च कारणम् ।
तदागच्छत वो युक्तं द्रष्टुं चक्रगदाधरम् ॥ २४

---

१५ –a) व$_3$ स्नानदान, दे$_9$ स्नान दान (→स्नानदान) व$_2$ तपासि ह (→तपांसीह) –b) दे$_9$ °यज्ञादि° (→°जप्यादि°) –d) दे$_9$ न$_1$ न पुनर्भव, ते$_1$ ●●●●● (→अपुनर्भवः)

१६ –a) शा$_1$ कारा का$_{1\ 2}$ दे$_{5\ 7\ 10\ 11}$ ते$_1$ एव (→एतद्), ते$_1$ ●●●●●● (→एतद्वरं हरात्) व$_{1\ 3}$ तीर्थे (→तीर्थं) –b) का$_3$ व$_{2\ 3}$ दे$_{1\ 3}$ ते$_1$ मुष्णान्ति, व$_1$ दे$_9$ पुष्णन्ति, (→पुष्णाति) व$_3$ दे$_{5\ 11}$ देवता (→देवताः) –c) व$_{1\ 2}$ दे$_{4\ 5}$ पुस (व$_3$ °स) (→पुंसा) –d) दे$_3$ ते$_1$ केदार (→केदारः) –d) व$_{1\ 3}$ दे$_{5\text{-}9}$ ते$_1$ न$_1$ त्रिणेत्र, व$_2$ त्रिरात्र (→त्रिनेत्र); ते$_1$ व ●● ●● (→वचनं यथा)

१७ ते$_1$ ab ○ –b) दे$_1$ त्वरिता दे$_7$ त्वरित (→त्वरितो) दे$_9$ जगामास्तमितो हरः –c) शा$_1$ भानुसुत (?) व$_{1\ 3}$ भानुमती व$_3$ मानुमता (?) (→भानुसुतां) –d) दे$_9$ तां ह॒तीं (?) (→कालिन्दीं) दे$_{2\text{-}9}$ °नाशनीम् (→°नाशिनीम्)

१८ व$_1$ दे$_{1\ 4}$ ते$_1$ ○ –a) दे$_9$ यत्र (→तत्र) –c) व$_3$ दे$_{7\ 9\ 11}$ न$_1$ तीर्थव (दे$_7$ °त) रैः (→तीर्थशतैः) व$_3$ पुण्यां (→पुण्यैः) –d) दे लक्षपापनाशिनी

१९ ते$_1$ ab ○ –a) दे$_{1\ 3\ 5}$ अवतीर्य (→अवतीर्णः); दे$_9$ तत्र (→ततः) –b) दे$_3$ विमनश्च, दे$_5$ निमग्ना च (→निमग्नश्च); दे$_9$ समम्भसि दे$_{10}$ ● हाम्भसि (→महाम्भसि) –c) शा$_1$ दे$_3$ द्रुपदानाम°, दे$_4$ द्रुपदानाम, न$_1$ द्रुपदा नाम° (→द्रुपदां नाम°) –d) शा$_1$ जटापान्तजलं हरः, व$_3$ जजापान्तजलो हरः

१९ श्लोकान्तरं दे$_1$ ab, cd मध्ये अधिकम्—
239 ● तत्र स्नात्वा शुचि स्नात्वा जगामाथ सरस्वतीम् ।
वृतां तीर्थवरैः पुण्यैः प्लक्षजां पापनाशिनीम् ।
अवतीर्णस्ततः स्नातुं निमग्नश्च महाम्भसि ।
(= १८, १९ab)

२० –a) दे$_7$ विमने, दे$_3$ निमग्ना (?) दे$_{10}$ निमग्न (→निमग्ने); दे$_5$ शाङ्करे (→शंकरे) शा$_1$ कारा का$_1$ दे$_3$ देवे, दे$_5$ दिव्य, दे$_7$ दिव्य, दे$_{11}$ दिव्यां (→देव्या) –b) दे$_7$ कलेप्रिय दे$_7$ कलिप्रिया (?) दे$_{11}$ कलिप्रिय (→कलिप्रिय) –c) दे$_{1\text{-}4}$ ते$_1$ साढं, दे$_{5\ 11}$ साग्र, मुत्रे सार्थ (→साग्रः) कारा ब$_1$ दे$_7$ ते$_1$ यातो (→जातो) –d) शा$_1$ न चेन्मज्जत ईश्वर, कारा न चोन्मज्जति ईश्वर दे$_7$ न चोमज्जन्तदेश्वर, दे$_9$ न चोन्मज्जत्येश्वर

२१ –a) व$_3$ दे$_{1\ 3\text{-}5\ 10\ 11}$ ब्रह्मा दे$_7$ ब्रह्म (→ब्रह्मन्) –b) व$_3$ न$_1$ सार्णवा (→सार्णवाः) दे$_{1\ 4}$ ते$_1$ भुवनान्यर्णवास्तथा –c) दे$_1$ धरिण्या, दे$_{10}$ धरिण्या (→धरण्यां) –d) शा$_1$ का$_1$ दे$_{7\ 11}$ नक्षत्रैं, दे$_{1\ 3\text{-}5}$ ते$_1$ नक्षत्र, दे स्तारकैः तु (→नक्षत्रा)

२२ कारा का$_1$ cd ○ –a) कारा प्रचेलुश्च (→प्रचलिताः) –d) कारा जेपुश्च दे$_3$ जपन्ति (→जपन्तः)

२३ का$_1$ ab ○ –a) दे$_{10}$ तत्र (→ततः); दे$_{5\ 11}$ क्षुब्धेषु (→क्षुब्धेषु) दे$_{1\ 3}$ ते$_1$ क्षुब्धाश्च देवा लोकेषु, दे$_4$ क्षुब्धा लोकेषु ते देवा –b) शा$_1$ का$_3$ व$_{1\ 3}$ दे$_{5\text{-}11}$ अगमन्, कारा मागमन्, दे$_{10}$ ●● मन् (→मागमन्) दे$_{1\text{-}4}$ ते$_1$ ब्रह्माणं च (दे$_1$ °णं) क्षुब्धागताः –c) व$_1$ किमिदोत्पाता (→किमिदं लोकाः) –d) का$_3$ क्षुब्धा दे$_{11}$ क्षुद्धा (→क्षुब्धाः); दे$_1$ क्षुब्धा ●●●●●●

२४ –a) दे$_1$ ●●●●● संभूतो दे$_7$ ताह पद्मसंभूतो, न$_1$ तानागस्य पद्मभवा –b) व$_1$ न$_1$ न तद्, दे$_3$ नैव (→नैतद्), दे$_4$ तु (→च) –c) न$_1$ तमागच्छत (→तदागच्छत); शा$_1$ कारा का$_{1.2}$ व$_3$ दे यो युक्ता, व$_1$ यो युक्ता, दे$_{1\text{-}9\ 10.11}$ न$_1$ योयुक्ता (दे$_{10}$ °क्तं) (→वो युक्तं) –d) दे$_2$ ते$_1$ द्रष्टुं, दे$_3$ दृष्टा (→द्रष्टुं).

पितामहेनैवमुक्ता देवाः शक्रपुरोगमाः ।
पितामहं पुरस्कृत्य मुरारिसदनं गताः ॥ २५

नारद उवाच ।❀

कोऽसौ मुरारिर्देववर्ये देवो यक्षो नु किन्नरः ।
दैत्यो राक्षसो वापि पार्थिवो वा तदुच्यताम् ॥ २६

पुलस्त्य उवाच ।❀

योऽसौ रज.सत्त्वमयो गुणवांश्च तमोमयः ।
निर्गुणः सर्वगो व्यापी मुरारिर्मधुसूदनः ॥ २७

नारद उवाच ।❀

योऽसौ मुर इति ख्यातः कस्य पुत्रः स गीयते ।
कथं च निहतः संख्ये विष्णुना तद् वदस्व मे ॥ २८

पुलस्त्य उवाच । ❀

श्रूयतां कथयिष्यामि मुरासुरनिबर्हणम् ।
विचित्रमिदमाख्यानं पुण्यं पापप्रणाशनम् ॥ २९

कश्यपस्यौरसः पुत्रो मुरो नाम दनूद्भवः ।
स ददर्श रणे शस्तान् दितिपुत्रान् सुरोत्तमैः ॥ ३०

तत. स मरणाद् भीतस्तप्त्वा वर्षगणान्बहून् ।
आराधयामास विभुं ब्रह्माणमपराजितम् ॥ ३१

ततोऽस्य तुष्टो वरदः प्राह वत्स वरं वृणु ।
स च वव्रे वर दैत्यो वरमेनं पितामहात् ॥ ३२

यं यं करतलेनाहं स्पृशेयं समरे विभो ।
स स मद्धस्तसस्पृष्टस्त्वमरोऽपि मरत्वत. ॥ ३३ बं ६०

---

२५ –d) न$_1$ °शरण (→°सदन)

२५ श्लोकात्पर दे$_4$ ab, cd मध्ये अधिकम्—

240 * स्वस्त्यस्तु लोकेभ्य इति जपन्त परमर्पय (=२१ cd.)

२५ श्लोकात्पर दे$_5$ ab, cd मध्ये अधिकम्—

241 * स्वस्त्यस्तु लोकेभ्य इति जपन्त परमर्षयः ।
तत क्षुब्धेषु लोकेषु देवा ब्रह्माणमब्रुवन् ।
दृष्ट्वोचु किमिद लो ‥ ‥(=२१ cd– २२ abc)

❀ दे$_7$ ○ शा$_1$ ते$_1$ नारद , का$_1$ दे$_9$ न$_1$ श्रीनारद , दे$_{1\ 2\ 4}$ नारद उ

२६ दे$_5$ ○ –a) दे$_9$ असौ, दे$_{10}$ योसौ (→कोऽसौ) दे$_{10}$ मु*रि (→मुरारि ) –b) ब$_{1\ 3}$ दे$_4$ यक्षोय (→यक्षो नु) –c) ब$_{1\ 2}$ [ अ] सौ वा (→वापि) –d) दे$_{11}$ न (→वा)

❀ शा$_1$ का$_1$ दे$_{7\ 9}$ ते$_1$ न$_1$ पुलस्त्य ; दे$_{1\ 4}$ पुलस्त्य उ

२७ –a) ब$_3$ योय (→योऽसौ) दे$_4$ मय (→रज -), दे$_{11}$ °सत्वमयो(?) (→°सत्त्वमयो) –b) दे$_9$ तपोमय (→तमोमय ) –c) शा$_1$ का$_{1\ 2}$ सत्वगोसा यो, कारा सत्त्वगोसा यो, ब$_3$ सर्वतो व्यापा (→सर्वगो व्यापी)

❀ शा$_1$ का$_1$ दे$_9$ ते$_1$ न$_1$ नारद , दे$_{1\ 2\ 4}$ नारद उ

२८ दे$_7$ ○. –a) शा$_1$ का$_2$ कोसौ मनुरिति, कारा दे$_{1\ 2\ 9}$ ते$_1$ न$_1$ को (दे$_2$ का) सौ मुर इति, का$_1$ कोसौ मुररिति, (→योऽसौ मुर इति) –b) दे$_{9\ 10}$ न$_1$ च (→स) –c) शा$_1$ सन्निहत , कारा स निहत , दे$_7$ विनिहत (→च निहत ) ब$_3$ सख्यो (?) (→सख्ये)

❀ दे$_5$ ○ शा$_1$ का$_1$ दे$_7$ न$_1$ पुलस्त्य दे$_{1\ 4}$ पुलस्त्य उ; दे$_9$ श्रीपुलस्त्य

२९ –a) दे$_4$ कथयिष्येह (→कथयिष्यामि) –b) शा$_1$ कारा का$_{1\ 2}$ मुने, दे$_{\circ\ 4\ 7\ 10\ 11}$ सुरा° (→मुरा°) न$_1$ निर्बहण (→ निबर्हणम्) –d) दे$_{1\ 4\ 9\ 10}$ ते$_1$ पुण्यद पापनाशनम्

३० –a) दे$_9$ काश्य° (→कश्य°) –b) शा$_1$ का$_{1\ 2}$ दे$_{5\ 7}$ मुरुनाम° (दे$_7$ °मा), दे$_{11}$ मनुर्नाम° (→मुरो नाम), दे$_{1\ 3}$ ते$_1$ तनूद्भव , दे$_9$ न$_1$ महासुर (→दनूद्भव ); ब$_2$ मुरुर्नाम दनुत्तर –c) शा$_1$ शक्र कारा का$_{1\ 2}$ दे$_{5\ 7\ 11}$ शत्रु ब$_{1\ 3}$ शम्भु (ब$_3$ °भुर) दे$_{1\ 4\ 10}$ ते$_1$ भग्नान् (→शस्तान्) –d) शा$_1$ कारा का$_{1\ 2}$ ब$_{1\ 3}$ दे$_{5\ 7\ 11}$ °पुत्रो (→ °पुत्रान्) शा$_1$ सुरोत्तमा, कारा का$_{1\ 2}$ ब$_{1\ 3}$ दे$_{7\ 11}$ सुरोत्तम , न$_1$ सुरोत्तमान् (→सुरोत्तमै )

३१ –b) शा$_1$ वर्षगणाद् (→वर्षगणान्) –c) दे$_4$ आराधनाय स (→आराधयामास) –d) दे$_3$ ब्रह्मणा (→ब्रह्माणम्), दे$_3$ * पराजित, ते$_1$ अपराजित (→अपराजितम्)

३२ –a) दे$_9$ न$_1$ वरदस्तुष्ट (→तुष्टो वरद ) –b) शा$_1$ का$_2$ भृणु (→वृणु) –c) शा$_1$ कारा का$_{1\ 2}$ त (→स) –d) शा$_1$ कारा का$_1$ एत ब$_1$ दे$_{4\ 5\ 7\ 9\ 10}$ एव, ब$_{2\ 3}$ दे$_{1\ 3}$ ते$_1$ एतत् (→एनं), ब$_1$ दे$_{2\ 4}$ पितामह, ब$_2$ प्रदीयता, ब$_3$ दे$_1$ पितामह (→पितामहात्)

३३ –b) दे$_{11}$ समय (?) (→समरे) –c) ब$_3$ सम**, दे$_{2\ 4}$ ते$_1$ मद्धस्तेन, न$_1$ मे हस्तेन (→स मद्धस्त-) कारा ससमद्धस्त सम्पर्शाद् –d) दे$_{1\ 4}$ ते$_1$ ह्यमरोपि, दे$_7$ त्वमरो चा(?), न$_1$ अमरो नि(?) (→त्वमरोऽपि); कारा मरत्वथ, ब$_1$ मि * त्यज, ब$_2$ स्त्रियद्व्रज, ब$_3$ प्रियव्रज, दे$_{1\ 4\ 10}$ ते$_1$ म्रिये (दे$_4$ °या) दज, दे$_5$ म्रियतामज, दे$_9$ म्रियेत वै, दे$_{11}$ न$_1$ म्रियत्वज (→मरत्वत ).

बाढमित्याह भगवान् ब्रह्मा लोकपितामहः ।
ततोऽभ्यागान्महातेजा मुरः सुरगिरिं बली ॥ ३४
समेत्याह्वयते देवं यक्षं किन्नरमेव वा ।
न कश्चिद् युयुधे तेन समं दैत्येन नारद ॥ ३५
ततोऽमरावतीं क्रुद्धः स गत्वा शक्रमाह्वयत् ।
न चास्य सह योद्धुं वै मतिं चक्रे पुरंदरः ॥ ३६
ततः स करमुद्यम्य प्रविवेशामरावतीम् ।
प्रविशन्तं न तं कश्चिन्निवारयितुमुत्सहेत् ॥ ३७
स गत्वा शक्रसदनं प्रोवाचेन्द्रं मुरस्तदा ।
देहि युद्धं सहस्राक्ष नो चेत् स्वर्गं परित्यज ॥ ३८
इत्येवमुक्तो मुरुणा ब्रह्मन् हरिहयस्तदा ।
स्वर्गराज्यं परित्यज्य भूचरः समजायत ॥ ३९
ततो गजेन्द्रकुलिशौ हृतौ शक्रस्य शत्रुणा ।
सकलत्रो महातेजाः सह देवैः सुतेन च ॥ ४०
कालिन्द्या दक्षिणे कूले निवेश्य स्वपुरं स्थितः ।
मुरुश्चापि महाभोगान् बुभुजे स्वर्गसंस्थितः ॥ ४१
दानवाश्चापरे रौद्रा मयतारपुरोगमाः ।
मुरमासाद्य मोदन्ते स्वर्गे सुकृतिनो यथा ॥ ४२
स कदाचिन्महीपृष्ठं समायातो महासुरः ।
एकाकी कुञ्जरारूढः सरयूं निम्नगां प्रति ॥ ४३
स सरय्वास्तटे वीरं राजानं सूर्यवंशजम् ।
ददर्श रघुनामानं दीक्षितं यज्ञकर्मणि ॥ ४४

---

३४. –a) ब$_{1-3}$ इत्येव (→इत्याह). –b) का$_1$ ब्रह्म-, + ब्रह्मा, ब$_2$ ब्रह्म- (→ब्रह्मा); शा$_1$ दे$_5$ °पितामहा, ब$_3$ दे$_1$ °पितामह (→ °पितामह ). –c) शा$_1$ दे$_{10.11}$ न$_1$ अभ्यगात् (→अभ्यागात् ); दे$_{1-4}$ ते$_1$ ततोभ्या (दे$_4$ °भ्य) गाद्दितिसुतो. –d) का$_2$ मुरु, ब$_1$ मरु (→मुर); दे$_9$ न$_1$ सुररिपु (न$_1$ °पुर्) (→सुरगिरिं); ब$_2$ बलीं, न$_1$ व्रती (→बली); दे$_{1.4}$ ते$_1$ दिवमुत्पत्य वेगवान्.

३५. –a) शा$_1$ कारा. का$_1$ दे$_{11}$ न$_1$ समेत्याहूयते, ब$_1$ समेत्याहूये (य?) ते, ब$_2$ सम (मे?) त्यान्वयते, दे$_{2.3}$ समेत्याह्वयतो, दे$_9$ समेत्याह्वय मे (→समेत्याह्वयते), दे$_1$ देवा, दे$_{2-4}$ ते$_1$ देवान् (→देव). –b) दे$_{1.2}$ ते$_1$ यक्ष- (→यक्ष), शा$_1$ का$_{1\ 2}$ ब$_{1.2}$ दे$_{4.11}$ च (→वा); दे$_{1-3}$ ते$_1$ -पन्नगान् (→एव वा). –c) दे$_7$ युद्धयते (→युयुधे)

३६. –a) शा$_1$ क्रुद्धा(?) (→क्रुद्ध). –b) दे$_3$ चक्रम् (→चक्रम्); ब$_1$ सदन(?) दे$_1$ आह्वयन् (→आह्वयत्). –c), शा$_1$ का$_{1\ 2}$ स तेन, कारा. न तेन, दे$_{7.10}$ नानेन (→न चास्य); कारा. स (→वै): दे$_{1-4}$ ते$_1$ न सोने (ते$_1$ °मे) न सम योद्धु.

३६ श्लोकात्पर ब$_1$ अधिकम्—

242 * प्रोवाचेद मरुस्तदा···माहूयत ।

३७ –a) दे$_9$ वीरम् (→करम्). –c) दे$_1$ कश्चित्तु, दे$_{2\ 4}$ ते$_1$ कश्चित् त (→त कश्चित् ); त शा$_1$ कारा का$_{1.2}$ प्रविशन्त तत कश्चित्. –d) शा$_1$ कारा. का$_{1-2}$ न वारयितु (→निवारयितु), दे$_{2.3.7}$ ते$_1$ उत्सहे, दे$_9$ उद्यत (→उत्सहेत्).

३८. –a) दे$_3$ चक्र° (→शक्र°): ब$_2$ °सदन, दे$_{10}$ °वचनं (→°सदन). –b) ब$_{1-3}$ दे$_{1-4\ 9}$ न$_1$ °चेदं (→°चेन्द्र), शा$_1$ ब$_1$ मरुस्, कारा. का$_1$ मुरुस्, दे$_{2.11}$ सुरस्, दे$_5$ सुतस् (?), दे$_7$ सुरान् (→मुरस्); ब$_3$ तथा (→तदा). –c) ब$_1$ दे$_3$ सहस्राक्षो (दे$_3$ °क्ष·) (→सहस्राक्ष). –d) दे$_{11}$ स्वर्गं (→स्वर्गं).

३९ –a) शा$_1$ उक्त्वा, का$_2$ उक्ता (→उक्तो), कारा दैत्येन (→मुरुणा); दे$_3$ इत्येवमुरुणा ब्रह्मन्, दे$_9$ इत्येव गुरुणा प्रोक्तो, ते$_1$ इत्येव मुरुणा **, न$_1$ एवं मुरेण सप्रोक्तो, –b) दे$_3$ इन्द्रो (→ब्रह्मन्); दे$_2$ हयं हरिं (→हरिहय), ते$_1$ इदं हरिहयस्तदा.

४०. –a) दे$_9$ ततो गजेन्द्र कुलिश. –b) दे$_{7.11}$ हृतौ (→हृतौ); दे$_{1-4}$ गृहीतौ शत्रुणा हरेः ते$_1$ गृहीत्वा शत्रुणा हरे. –c) दे$_9$ सकालज्ञो, न$_1$ सकलत्रे (→सकलत्रो) –d) दे$_{10}$ देवैः सह (→सह देवैः ); ब$_{1\ 2}$ दे$_4$ तु (→च).

४१. –b) ब$_1$ निविवेश, ब$_2$ निवेश्य स, दे$_{11}$ निवेश्य च (→निवेश्य स्व-); दे$_{11}$ पुरीं (→पुर), शा$_1$ ब$_{2\ 3}$ दे$_{1-4\ 10}$ ते$_1$ हरिः, दे$_9$ तत (→स्थित). –c) कारा. दे$_7$ मुरुश्चापि, ब$_1$ मरुस्त्वपि, ब$_{2\ 3}$ दे$_{1-3}$ मुरुस्त्वपि, दे$_{4.9}$ ते$_1$ न$_1$ मुरस्त्वपि (→मुरुश्चापि); दे$_3$ महान्(→महा-). –d) दे$_9$°सयुत (→°संस्थित).

४२. –a) ब$_{1\ 3}$ दे$_{1.3\ 4\ 9}$ दानवास्त्वपरे, ते$_1$ दानवास्त्रिपुरा (→दानवाश्चापरे) ब$_3$ रुद्रा (→रौद्रा). –c) शा$_1$ मनुम्, का$_2$ दे$_{1-3.\,\cdot10.11}$ मुरुम्, ब$_1$ मरुम्, (→मुरम्). –d) दे$_{1.3}$ स्वर्गं, दे$_2$ स्वर्ग- (→स्वर्गे); का$_2$ स्वकृतिनो, दे$_{11}$ सुकृतिना (→सुकृतिनो)

४३. –a) दे$_4$ °पृष्ठे (→°पृष्ठ). –b) शा$_1$ कारा. का$_{1.2}$ महेश्वर (→महासुरः). –d) शा$_1$ का$_1$ दे$_{\cdot.11}$ न$_1$ सरयू- (→सरयूं)

४४. –a) शा$_1$ कारा. का$_1$ सरस्वत्यास्, दे$_2$ स सर · (→स सरय्वास्), दे$_9$ तदा (→तटे), न$_1$ स तीरस्यस्तदा वीर. –b) ब$_3$ दे$_9$ °वंशंस (→°वंशजम्). –c) दे$_9$ ददर्श (→ददर्शे).

तमुपेत्याब्रवीद् दैत्यो युद्धं मे दीयतामिति ।
नो चेन्निवर्ततां यज्ञो नेष्टव्या देवतास्त्वया ॥ ४५
तमुपेत्य महातेजा मित्रावरुणसंभवः ।
प्रोवाच बुद्धिमान् ब्रह्मन् वसिष्ठस्तपतां वरः ॥ ४६
किं ते जितैर्नरैर्दैत्य अजिताननुशासय ।
प्रहर्तुमिच्छसि यदि तं निवारय चान्तकम् ॥ ४७
स बली शासनं तुभ्यं न करोति महासुर ।
तस्मिञ्जिते हि विजितं सर्वं मन्यस्व भूतलम् ॥ ४८
स तद् वसिष्ठवचनं निशम्य दनुपुंगवः ।
जगाम धर्मराजानं विजेतुं दण्डपाणिनम् ॥ ४९
तमायान्तं यमः श्रुत्वा मत्वाऽवध्यं च संयुगे ।
स समारुह्य महिषं केशवान्तिकमागमत् ॥ ५०
समेत्य चाभिवाद्यैनं प्रोवाच मुरचेष्टितम् ।
स चाह गच्छ मामद्य प्रेषयस्व महासुरम् ॥ ५१
स वासुदेववचनं श्रुत्वाऽभ्यागात् त्वरान्वितः ।
एतस्मिन्नन्तरे दैत्यः संप्राप्तो नगरीं मुरः ॥ ५२
तमागतं यमः प्राह किं मुरो कर्तुमिच्छसि ।
वदस्व वचनं कर्ता त्वदीयं दानवेश्वर ॥ ५३

मुरुरुवाच ।❀

यम प्रजासंयमनान्निवृत्तिं कर्तुमर्हसि ।
नो चेत् तवाद्य छित्त्वाऽहं मूर्धानं पातये भुवि ॥ ५४
तमाह धर्मराड् ब्रह्मन् यदि मां संयमाद् भवान् । वें. ६०.

---

४५. –a) शा1 तमुत्पत्य, का1 तमुत्पत्य,+त्या, ब3 तमुत्पत्या°, दे4 तमभ्येत्या°, दे9 त तु प्रीत्या° (→तमुपेत्या°); न1 वद (→[-अ] ब्रवीत्). –c) कारा. दे7 9.11 निवर्त्यता, न1 निवार्यता (→निवर्ततां); दे9 यागो (→यज्ञो) –d) ब1 3 न याज्या (ब2 °ज्य), दे1-4 9 ते1 न1 न पूज्या (→नेष्टव्या), दे7 देवता (→देवतास्).

४६. –a) ब1.2 तमुवाच, ब3 तमुत्पत्य (→तमुपेत्य). –b) दे9 मित्रावरुणयो सुत. –d) ब2.3 व (°ब2 वि) शिष्ठस् (→वसिष्ठस्); दे1 3.4 ते1 तपसा निधि (→तपता वर)

४७ –a) शा1 का1.2 किन्तैर्जितैर्, दे4 जितैर्जितैर् (→किं ते जितैर्), ब1 दैत्ये (→दैत्य); दे9 किं तैर्जितैर्महादैत्य –b) दे9 सजितानुसशाय (?) –c) दे4 ते1 प्रहन्तुम् (→प्रहर्तुम्); दे9 प्रहर्तुमिच्छति हि यस् –d) शा1 चान्तिकम् (→चान्तकम्).

४८. –a) भुवे. ते वै (→तुभ्य). –b) ब1.2 समन्तत, दे4 5 महासुर (→महासुर) –c) दे3 तस्मिञ्जिने हरि जितं, दे9 तस्मिञ्जिते जित वह्नि, न1 तस्मिञ्जितेभिजित. –d) कारा. दे1-4.9-11 ते1 न1 सर्वमन्यच्च (कारा °त्स) भूतल, ब1 सर्व (मेव) मन्यस्व भूतलं,

४९. –a) ब2.3 वशिष्ठ° (→वसिष्ठ°). –c) दे11 (तुभ्य) विजेतु (→विजेतु).

५०. –a) दे2 नर:, दे4 वच दे9 यम (→यम) –b) ब1.2 गत्वायोध्यश्च, ब3 दे2 ते1 मत्वायोध्यश्च, दे1 मत्वायोध्या च, दे3 मत्वायोध्य च (→मत्वाऽवध्य च). –c) ब1-3 दे1-4 9 न1 समारुह्याथ (→स समारुह्य). –d) शा1 कारा का1 2 दे5.7.11 अभ्यगात्, ब1 3 दे1-4 ते1 आगत, (→आगमत्).

५१ –a) शा1 का2 समेत्या (?) (→समेत्य); ब1 3 दे1 4 9 न1 अभिवं (ब3 °न)द्य (→[-अ]भिवाद्य). –b) शा1 का2 ब2 3 दे1-3.5 7.10 मुरु°, ब1 मरु°, दे11 मनु° (→मुर°). –c) शा1 कारा. का1 2 मामेव, ब3 मासाद्य (?), दे9 मत्पार्श्वं (→मामद्य); दे1-4 ते1 तमागच्छत (दे4 °न्त) मद्यह (दे2 हम्). –d) दे9 प्रपय त्वं (→प्रेषयस्व).

५२. –a) दे2 3 ते1 वासुदेवो (→वासुदेव-). –b) ब1-3 श्रुत्वाभ्यगात्त्वरान्वित, दे1-4 ते1 श्रुत्वागात् त्वरयान्वित, दे5 11 (श्रुत्वा) अभ्यगात् त्वरा(दे5 °रया)न्वित दे7 अभ्यगात् त्वरयान्वित, –c) दे9 प्राप्तो (→दैत्य). –d) शा1 सम्प्राप्ते, दे9 यमस्य (→सम्प्राप्तो), शा1 का1 2 ब2 दे7.10 मुरु, ब1 मरु, दे1-4 ते1 पुन, दे5 सुरां (→मुर)

५३ –a) दे1.4 ते1 समागत (→तमागत) –b) कारा. दे9 मुर किं, ब1 किं मरो, दे2 किं मुरे, दे3 किं मुरो, दे5 किं पुरो (?), न1 किं मुर (→किं मुरो); कारा का1 ब1 3 दे5 अर्हसि (→इच्छसि) c) ब3 गत्वा (→कर्त्ता) –d) ते1 तदीय (→त्वदीय); ब2 दे2 5 दानवश्वर (→दानवेश्वर)

❀ न1 ○, ब1 मरुरुवाच; ब3 दे4 मुर उ ; दे1 मुर उवाच; दे9 मुर, दे11 मनुरुवाच

५४. –a) शा1 का1 2 दे5 यम (→यम); न1 -सयमनी (→-सयमनात); दे9 भवान् यम स्वभावान. –b) दे1 इच्छसि (→अर्हसि), दे9 निवर्त्तिकर्तुमर्हति –c) ते1 तवाय (→तवाद्य). ब2 छित्त्वा तु, ब3 छेत्ताह, दे11 छित्वाह, ते1 रियत्वाह (→छित्त्वाह). –d) ब2.3 दे1-3.7 पातयेद् (→पातये), दे4.9 भुवि पातये (→पातये भुवि).

५५. –a) ब3 धर्मराज- (→धर्मराट्), शा1 कारा का1.2 ब1-3 दे5.7.10.11 वाक्यं (→ब्रह्मन्) –b) शा1 का1 ब1-3 दे7.11 मा सयमेद्, कारा. तं सयमेद्, दे5 मा सयतेद्, दे9 मत्संयमो, दे10

०.५४ गोपायति मुरो सत्यं करिष्ये वचनं तव ॥ ५५
मुरस्तमाह भवतः कः संयन्ता वदस्व माम् ।
अहमेनं पराजित्य वारयामि न संशयः ॥ ५६
यमस्तं प्राह मां विष्णुर्देवश्चक्रगदाधरः ।
श्वेतद्वीपनिवासी यः स मां संयमतेऽव्ययः ॥ ५७
तमाह दैत्यशार्दूलः क्वासौ वसति दुर्जयः ।
स्वयं तत्र गमिष्यामि तस्य संयमनोद्यतः ॥ ५८
तमुवाच यमो गच्छ क्षीरोदं नाम सागरम् ।
तत्रास्ते भगवान् विष्णुर्लोकनाथो जगन्मयः ॥ ५९
मुरस्तद्वाक्यमाकर्ण्य प्राह गच्छामि केशवम् ।
किं तु त्वया न तावद्धि संयम्या धर्म मानवाः ॥ ६०
स प्राह गच्छ त्वं तावत् प्रवर्तिष्ये जयं प्रति ।
संयन्तुर्वा यथा स्याद्धि ततो युद्धं समाचर ॥ ६१
इत्येवमुक्त्वा वचनं दुग्धाब्धिमगमन्मुरः ।
यत्रास्ते शेषपर्यङ्के चतुर्मूर्तिर्जनार्दनः ॥ ६२

नारद उवाच ।

चतुर्मूर्त्तिः कथं विष्णुरेक एव निगद्यते ।
सर्वगत्वात् कथमपि अव्यक्तत्वाच्च तद्वद ॥ ६३

पुलस्त्य उवाच ।

अव्यक्तः सर्वगोऽपीह एक एव महामुने ।
चतुर्मूर्तिर्जगन्नाथो यथा ब्रह्मंस्तथा शृणु ॥ ६४
अप्रतर्क्यमनिर्देश्यं शुक्लं शान्तं परं पदम् ।

---

(मा) सयमसे, मुत्रे. सयमने मा (→सयमाद्), दे$_{3}$-स्वात्, मुत्रे. महान् (→भवान्) –c) शा$_{1}$ का$_{1.2}$ ब$_{1.2}$ दे$_{5-11}$ गोपितासि पुरा (दे$_{5}$ °रो) सत्य, कारा यो मा सयमते सत्य, ब$_{3}$ गोप्तार मे जया मुर्को, दे$_{3.4}$ गोपायसि मुरो सत्य, दे$_{9}$ देवात्रामुना सत्य, दे$_{10}$ न$_{1}$ गोपितासि मुर (दे$_{10}$ °रो) सत्यं.

५६. कारा ब$_{2}$ दे$_{1-4.5-9.10}$ मुरस्, का$_{1}$ ब$_{1}$ मरुस्, दे$_{11}$ मनुस् (→मुरस्) –b) ब$_{3}$ क सयन्ता, दे$_{1-4.10}$ ते$_{1}$ कोनि-कस्त (दे$_{3}$ ते$_{1}$ °स्त्व) (→कः सयन्ता); दे$_{1.4.10}$ ते$_{1}$ मे (→माम्) –c) ब$_{1.2}$ अहमन्य, दे$_{1.3.9-10}$ ते$_{1}$ न$_{1}$ अहमेव (→अहमेन), ब$_{1.2}$ परित्यज्य, दे$_{9}$ विनिर्जित्य (→पराजित्य) –d) दे$_{1}$ वारयिष्ये (→वारयामि), दे$_{9}$ महीमिमा (→न सशय).

५७. ५६b–५८c 'देवस्त्व' इत्यारभ्य 'विष्णुर्' इति यावन्नास्ति (द. स) –a) दे$_{7}$ माह (→प्राह): कारा यो, दे$_{1.5.10-11}$ ते$_{1}$ मे (→मा) –c) शा$_{1}$ °द्वीपनिवासा, दे$_{9}$ °द्वीप(?) श्विवासी (→°द्वीपनिवासी) –d) न$_{1}$ यो मा (→स मा), दे$_{4}$ [-म]च्युत (→[-म]व्यय.

५८. ब$_{3}$. ○ (द, ५७ पा वि,) –b) दे$_{1-4.10}$ ते$_{1}$ न$_{1}$ कोत्तय (→दुर्जय) –c) दे$_{10}$ स्वय तत्रागमिष्यामि. –d) ते$_{1}$ तत्र (→तस्य), शा$_{1}$ का$_{1.2}$ यम, कारा. यम (→[उ]द्यत), ब$_{1}$ तस्या (?) सयमतस्वक, ब$_{3}$ तस्या सायमुत्सुक.

५९. ब$_{3}$. abc ○ (द. ५७ पा वि), ते$_{1}$ १ 'समुवाच य' खण्डितम्

६०. –a) ब$_{1}$ मरस्, शा$_{1}$ का$_{2}$ ब$_{2.3}$ दे$_{2.5-10}$ ते$_{1}$ मुरस्, दे$_{11}$ मनुस् (→मुरस्). –b) दे$_{3}$ तत्र पि (→केशवं). –c) शा$_{1}$ कारा का$_{1}$ त्वया न च, का$_{2}$ त्वया च न, ब$_{3}$ त्वया न * (→तु त्वया न). –d) दे$_{9}$ अप, दे$_{3}$ धर्म्म- (→धर्म).

६१. –a) दे$_{3}$ चाह (→प्राह); दे$_{1-4.10}$ त्वत्तो वा, दे$_{2.3}$ ते$_{1}$ त्वभो वा, दे$_{9}$ त्व नो चेत्, न$_{1}$ त नो वा (→त्वं तावत्): कारा. स प्राह त गच्छ तावत. –b) दे$_{3}$ प्रयतिष्ये, ते$_{1}$ प्रवृत्तिष्ये (→प्रवर्तिष्ये); ब$_{1.2}$ स्वय प्रति, दे$_{1-3}$ यमे मुरे (दे$_{3}$ °मुरे), दे$_{4}$ यमे मुरो, दे$_{9}$ जगत् पुरः, ते$_{1}$ याम मुरो, न$_{1}$ जगद पुरः (→जय प्रति) –c) ब$_{1.2}$ सयन्त्व त्व (ब$_{2}$ °वा) यथा, ब$_{3}$ सयन्तु वा यथा, दे$_{1-4}$ ते$_{1}$ संयन्तु वा (दे$_{2}$ °चा)न्यथा, दे$_{5}$ संजेतुं वा यथा, दे$_{7.10}$ सयन्तु वा(दे$_{7}$ °चा)यथा, न$_{1}$ सयन्ता चान्यथा (→संयन्तुर्वा यथा), ब$_{3}$ स्याद् वै, दे$_{1.4}$ ते$_{1}$ वापि (→स्याद्धि): दे$_{9}$ सयन्ता-न्यथा स्याद्धि –d) दे$_{9}$ वचो (→ततो), का$_{2}$ ब$_{2}$ युद्ध, ब$_{1}$ मुक्त (?) (→युद्ध), ब$_{3}$ दे$_{10}$ समाचरे, दे$_{2}$ (समा) समाचरे, दे$_{4}$ समाचरे (→समाचर).

६२. –a) कारा. दे$_{4}$ उक्तो (→उक्त्वा) –b) ब$_{3}$ दुग्धार्चि°, दे$_{11}$ दुग्धाद्धि° (→दुग्धाब्धि°), दे$_{11}$ वचनं (→आगमद्); शा$_{1}$ का$_{1}$ ब$_{1.2}$ दे$_{1.3-7.10.11}$ ते$_{1}$ मुरः (→मुर)

✽शा$_{1}$ ते$_{1}$ न$_{1}$ नारदः; दे$_{1.4}$ नारद उ; दे$_{9}$ श्रीनारद.

६३. –a) दे$_{5.11}$ विष्णु- (→विष्णुर्). –b) दे$_{5}$ एव (→एव). दे$_{3}$ यजगोन्निनिगद्यते. –c) दे$_{1}$ सर्वगत्वात (→सर्वगत्वात्). –d) शा$_{1}$ कारा का$_{1.2}$ ब$_{1}$ दे$_{7}$ अव्यक्तत्वात्, दे$_{11}$ प • त्वात् (→अव्यक्तत्वात्): दे$_{9}$ मुवद (→तद् वद).

✽शा$_{1}$ का$_{1}$ दे$_{3}$ ते$_{1}$ न$_{1}$ पुलस्त्य; दे$_{1-4}$ पुलस्त्य उ०.

६४. –a) कारा अव्यया (→अव्यक्त), ब$_{1}$ सर्वगोरो च, दे$_{5}$ सर्वगो व्यापी (ह), दे$_{7}$ सर्वगो व्यापी (→सर्वगोऽपीह) –d) ब$_{1}$ यत्र (→यथा); दे$_{7}$ [-ब्र]त (→तथा)

६५. –a) ब$_{1.2}$ अप्रतर्क्यमनिर्दिष्ट –b) ब$_{3}$ शीतं, दे$_{9}$ शीत (→शान्त): ते$_{1}$ पद परं (→परं पद). –c) ब$_{2}$ देवाः (→देवा-

वासुदेवाख्यमव्यक्तं स्मृतं द्वादशपत्रकम् ॥ ६५

नारद उवाच ।❀

कथं शुक्लं कथं शान्तमप्रतर्क्यमनिन्दितम् ।
कान्यस्य द्वादशैवोक्ता पत्रका तानि मे वद ॥ ६६

पुलस्त्य उवाच ।❀

शृणुष्व गुह्यं परमं परमेष्ठिप्रभाषितम् ।
श्रुतं सनत्कुमारेण तेनाख्यातं च तन्मम ॥ ६७

नारद उवाच ।❀

कोऽयं सनत्कुमारेति यस्योक्तं ब्रह्मणा स्वयम् ।
तवापि तेन गदितं वद मामनुपूर्वशः ॥ ६८

पुलस्त्य उवाच ।❀

धर्मस्य भार्याऽहिंसाख्या तस्यां पुत्रचतुष्टयम् ।
संजातं मुनिशार्दूल योगशास्त्रविचारकम् ॥ ६९
ज्येष्ठः सनत्कुमारोऽभूद् द्वितीयश्च सनातनः ।
तृतीयः सनको नाम चतुर्थश्च सनन्दनः ॥ ७०
सांख्यवेत्तारमपरं कपिलं वोढुमासुरिम् ।
दृष्ट्वा पञ्चशिखं श्रेष्ठं योगयुक्तं तपोनिधिम् ॥ ७१
ज्ञानयोगं न ते दद्युर्ज्यायांसोऽपि कनीयसाम् ।
मानमुक्तं महायोगं कपिलादीनुपासतः ॥ ७२
सनत्कुमारश्चाभ्येत्य ब्रह्माणं कमलोद्भवम् ।
अपृच्छद् योगविज्ञानं तमुवाच प्रजापतिः ॥ ७३

ब्रह्मोवाच ।❀    वें. ६०.५

ख्यं). –d) का$_2$ °पत्रिकम्, व$_1$ °पच्चकं, दे$_7$ °ठैवक, दे$_{11}$ °मन्त्रक (→°पत्रकम्).

❀शा$_1$ ते$_1$ न$_1$ नारद ; दे$_{1.2-4}$ नारद उ .

६६. व$_{1-3}$ दे$_9$ न$_1$ ab ⊙ ; –a) का$_1$ मुक्त, दे$_2$ शुक्र (→शुक्ल) –b) दे$_{1-3}$ ते$_1$ 'नारद उवाच' इत्यस्यानन्तरमधिकम्— वासुदेवेति किं नाम चतुर्मूर्त्तिः कथ पदम्. –c) शा$_1$ कारा का$_{1.2}$ काश्चास्य, व$_3$ कालस्य (→वान्यस्य)' दे$_{1-4.10}$ ते$_1$ द्वादशोक्तानि (→द्वादशैवोक्ता ). –d) शा$_1$ का$_{1.2}$ पत्रिकास्, दे$_9$ परकास् (→पत्रका): कारा पत्रिकास्त्वमे वद व$_3$ पत्रकाणि च मे वद दे$_{1-4}$ $_{10}$ ते$_1$ पत्रकाणि महामुने, दे$_9$ तस्योक्त ब्रह्मण स्वय मे वद ?.

❀शा$_1$ का$_1$ दे$_7$ ते$_1$ न$_1$ पुलस्त्य ; दे$_{1-4}$ पुलस्त्य उ. दे$_9$ श्रीपुलस्त्य

६७. –a) व$_2$ गुप्त परम, दे$_{1.10}$ वचन गुह्य, दे$_{2-4}$ $_7$ ते$_1$ परम गुह्य (→गुह्य परम) –d) का$_1$ दे$_{10}$ च यन्मम, दे$_9$ श्रुत मम, न$_1$ तथा मम (→च तन्मम).

❀शा$_1$ ते$_1$ न$_1$ नारद , का$_1$ दे$_{1.2.4.5}$ नारद उ ; दे$_9$ श्री नारद .

६८ –b) दे$_5$ ययोक्त,+यस्योक्त, दे$_7$ ययोक्त, दे$_9$ तयोक्त (→यस्योक्त), दे$_5$ ब्रह्मण (→ब्रह्मणा) –c) दे$_1$ गदित (?) दे$_4$ गतित (→गदितं).

❀शा$_1$ का$_1$ दे$_4$ $_7$ ते$_1$ न$_1$ पुलस्त्य ; दे$_1$ $_2$ पुलस्त्य उ. दे$_9$ श्रीपुलस्त्य उवाच.

६९ –b) दे$_1$ तस्या (→तस्या) –c) शा$_1$ कारा. का$_{1.2}$ व$_{2.3}$ दे$_{5.7}$ साम्प्रत (→सज्ञात). –d) दे$_7$ °विचारक (→°विचारकम्).

७०. –a) दे$_9$ सनत्कुमारो ह (→सनत्कुमारोभूद्). –c) का$_2$ दे$_7$ नामस् (?), दे$_9$ न$_1$ नाम्ना (→नाम). –d) व$_{1.3}$ सनन्दकः, दे$_{5.7}$ सनातन (→सनन्दन ).

७१. –a) दे$_1$ $_3$ संख्या° (→साख्य°). –b) कारा. दे$_{11}$ वोढम् (→वोढुम्); दे$_1$ आधुरि , दे$_{11}$ आधुरि (?) (→आसुरिम्). –c) कारा. का$_1$ $_2$ व$_{1.2}$ दे$_4$ ज्येष्ठ (→श्रेष्ठ). –d) दे$_7$ योगं युक्ति (→योगयुक्त): दे$_{1.2}$ द्विजोत्तम (दे$_2$ °म ), दे$_3$ द्विजोत्तमं (→तपोनिधिं).

७१ श्लोकात्परं दे$_5$ अधिकम्—ज्ञानयोनिधि.

७२. –a) व$_1$ $_2$ तैर् (?) (→ते): व$_3$ ततस्ते वन्दनं दद्य, दे$_{1-4}$ ते$_1$ ततस्तस्यासन दद्याद्, दे$_9$ तत स्वमासनं दद्युर्, न$_1$ तत स्वय सन दाद्यात् –b) शा$_1$ का$_1$ $_2$ दे$_5$ $_{9.10}$ ज्यायसो (का$_1$ दे$_5$ °से)पि, व$_3$ दे$_{11}$ ज्या ❀ सोपि, दे$_1$ $_3$ ज्यायानपि, दे$_4$ सर्वानपि, ते$_1$ ज्येष्ठाय न (→ज्यायासोपि), का$_1$ कनीयसा , व$_{1.2}$ कनीयसा, व$_3$ दे$_4$ कनीयस , दे$_1$ $_5$ न$_1$ कनीयस, दे$_2$ $_3$ ते$_1$ कनीयसे (→कनीयसाम्). –c) शा$_1$ शान्तमुक्तं, व$_1$ मानमुज्ज्व (?), व$_2$ दे$_{5.7}$ मानमुह्य (दे$_{5.7}$ °ह्य), व$_3$ मानमुज्य, दे$_{1-3}$ ते$_1$ मौनं (दे$_3$ °न) मुक्त्वा, दे$_4$ मौन चैव, दे$_{10}$ मौन मुह्य, न$_1$ मानमुख्य, मुत्रे. मौन गुह्य (→मानमुक्त), व$_2$ दे$_4$ महायोगी, व$_3$ सदायोगी, दे$_9$ महायोगा (→महायोग). –d) का$_1$ अपासत , व$_1$ दे$_{1-4.10}$ ते$_1$ उवाच स , व$_2$ उपागत , दे$_9$ अपास्य तु, न$_1$ अपास्य च (→उपासत ).

७३. –a) कारा. सनत्कुमारोथाभ्येत्य. –b) व$_1$ ब्राह्मणम् दे$_1$ ब्रह्माणी (→ब्रह्माणं). –c) दे$_7$ योगविद् ज्ञानं (→योगविज्ञानं).

❀कारा. व$_3$ ○; दे$_{10}$ ब्रह्मा उवाच; ते$_1$ न$_1$ ब्रह्मा.

७३ कथयिष्यामि ते साध्य यदि पुत्रत्वमिच्छसि ।
यस्य कस्य न वक्तव्य तत्सत्यं नान्यथेति हि ॥७४

सनत्कुमार उवाच ।

पुत्र एवास्मि देवेश यतः शिष्योऽस्म्यहं विभो ।
न विशेषोऽस्ति पुत्रस्य शिष्यस्य च पितामह ॥ ७५

ब्रह्मोवाच ।

विशेषः शिष्यपुत्राभ्या विद्यते धर्मनन्दन ।
धर्मकर्मसमायोगे तथापि गदत. शृणु ॥ ७६
पुन्नाम्नो नरकात् त्राति पुत्रस्तेनेह गीयते ।
शेषपापहरः शिष्य इतीय वैदिकी श्रुतिः ॥ ७७

सनत्कुमार उवाच ।

कोऽयं पुन्नामको देव नरकात् त्राति पुत्रकः ।
कस्माच्छेषं ततः पाप हरेच्छिष्यश्च तद्वद ॥ ७८

ब्रह्मोवाच ।

एतत् पुराणं परम महर्षे
योगाङ्गयुक्तं च सदैव यच्च ।
तथैव चोग्र भयहारि मानव
वदामि ते साध्य निशामयैनम् ॥ ७९

इति श्रीवामनपुराणे चतुस्त्रिंशोऽध्याय ॥३४॥

---

७४ ब1.2 cd ○ –a) का2 ब1 3 दे5 माध्य, ते1 न1 साध्य (→साध्य) –b) शा1 कारा का1 2 ब1 3 दे5 7 9 11 यदि पुत्र (ब3 °त्रो) ति (ब3 °सि) मे वच, दे4 यदि पुत्रत्वमेषि मे –c) शा1 कारा का1 2 दे5 10 11 शृणोषि कुरुषे तच्च, ब3 यदि शुश्रूषसे नित्य, दे7 ब्रवीमि कुरुषे तच्च, दे9 कथ यस्वानवद्योग(?), न1 कथयस्वानवद्या मे –d) शा1 का1 ० ज्ञान साह्वथ सु (का2 म +सु)तो भव, कारा ज्ञान साध्यसुतो भवान्, ब3 मन्मना नान्यमानस, दे5 7 10 11 ज्ञान (दे7 11 °न) साध्य (दे7 °ध्ये) युतो भव (दे10 °वान्) न1 त ∗ त्य नान्यथेति हि

दे1 2 4 7 सनत्कुमार उ , दे9 ते1 न1 सनत्कुमार:.

७५ दे11 ७५ b 'स्म्यह' इत्यारभ्य ७६ c 'योगे इति यावत् नास्ति –a) ब1 ० देवेन्द्र (→देवेश) –b) ब० शिष्यो ह्यहं, दे1 4 ते1 शिष्योस्मि ते (→शिष्योऽस्म्यह) न1 प्रभो (→विभो) –d) दे3 पितामह (→पितामह)

दे11 ○ दे4 ब्रह्मा उ , दे5 10 ब्रह्मा उवाच , ते1 न1 ब्रह्मा

७६ दे11 abc ○ (द्र ७५ पा वि ) –a) शा1 कारा का1 ० दे5.7 पुत्रशिष्याभ्यां, ब1 3 सुतशिष्याभ्या, दे1 3 ते1 सुतपुत्राभ्या, दे2 सत्यपुत्राभ्या (→शिष्यपुत्राभ्या) –b) शा1 धर्मनन्दन , दे3 गुरुनन्दन (→धर्मनन्दन) –d) ब1 तच्चापि, ब2 तश्चापि, ब3 दे1 3 9 न1 तत्रापि (→तथापि); ब1 3 दे1 4 न1 वदत (→गदत )

७७ –a) न1 °नाम्ना (→°नाम्नो) ब० 3 न1 त्राता (→त्राति) दे1 4 पुत्र पुन्नरकात् त्राति, ते1 पुत्र ∗ नरकात् त्राति –b) दे4 पुत्रनहेन (→पुत्रस्तेनेह) –c) का० ब० 3 दे9 शेष (→शेष ) दे5 11 शिष्यर् (→शिष्य ) –d) शा1 का1 ० तृतीय, कारा त्वितीयं, ब3 इतीयद् (→इतीय) शा1 वैदिके (→वैदिकी)

शा1 का1 दे1 9 ते1 न1 सनत्कुमार , दे1 4 सनत्कुमार उ

७८ –a) ब1 पुन्नामके (→पुन्नामको); ब3 कोय पुन्नामका∗∗, दे9 सोय पु∗∗काद्व –b) ब3 ∗∗∗ त्राति, दे1 3 ते1 यस्तस्मात त्राति, दे० यस्मात त्राति ∗, दे4 यत्त स्मात त्राति, मुवे यस्मात् नाति च (→नरकात त्राति) न1 पुत्रक (→पुत्रक ) –c) ब1 ० दे1 4 10 ते1 तस्मात् (→कस्मात्) ब1 3 दे1 5 9 10 ते1 न1 तया (→तत) –d) दे1 4 ते1 शिष्यो हरति, दे9 न1 हरेच्छिष्यस्तु (→हरेच्छिष्यश्च)

शा1 दे10 ब्रह्म (दे10 °ह्मा) उवाच न1 ब्रह्मा

७९ –a) दे9 नात पुराग (→एतत् पुराण) दे4 मह र्षयो(यो)(→महर्षे) –b) ब3 योगाङ्क°(→योगाङ्ग°) दे1 4.10 ते1 तथा सदैव (→सदैव यच्च), का1 यद्योगयुक्त च सदव यश्च, दे9 सद्योगमत्मुक्तिकर सदैव न1 मयोत्तम मुक्तिपद सदैव –c) ब3 तदैव, न1 तवैव (→तथैव) ब1 3 दे5 7 10.11 भयकारि (→ भयहारि) दे1 4 10 ते1 पुण्य, दे5 च मान, न1 मानवा (→मानव); कारा भयस्य चोग्रस्य विनाशि मानद, दे9 न1 तत्र(न1 °त्रै)व चोक्त स्वय (?) कारि मानवा –d) ब1 3 निशामयेह (→निशामयैन); दे1 4 10 ते1 वदामि (दे० °म्य?) ते (दे०°ति) नाम्य त ये (दे०?) न पाप, दे3 स्वमस्ति तत्साध्य नियामि तत

७९ श्लोकान्तर ते1 अधिकम्—श्रीकृष्णार्पणमस्तु

पुष्पिका—शा1 का1 ० ब1 दे3 7 ते1 इति श्रीवामनपुराणे, कारा दे10 न1 इति श्रीवामनपुराणे भैरवप्रादुर्भावे ब० 3 दे1 ० 4 5 इति वामनपुराणे दे9 श्री वामनपुराणे दे11 इति वामनपुराणे सरोमाहात्म्ये मुवे इति श्रीवामनपुराणे पुलस्त्यनारदसंवादे भैरवप्रादुर्भावे अध्यायनाम—ब1 3 दे1 4 9 10 ते1 न1 ○, शा1 का1 दे5 11 भैरवप्रादुर्भाव , कारा पुत्रशिष्ययोर्लक्षणं नाम; का० दे7 भैरवप्रादुर्भावो नाम अध्यायसख्या—शा1 का2 ब3 दे० 3 5 ○, कारा पञ्चषष्टितमोऽध्याय., का1 ॥५०॥, ब1 ० पञ्चविंशोऽध्याय , दे1 10 ॥६०॥, दे4 पञ्चविंशतितमोऽध्याय , दे7 अष्टादशोऽध्याय, दे9 न1 त्रयस्त्रिंशोऽध्याय , दे11 ॥५६॥, ते1 एकषष्टितमोऽध्याय , मुवे षष्टितमोऽध्याय

न सोऽस्ति कश्चित् त्रिदशोऽसुरो वा
यक्षोऽथ मर्त्यो रजनीचरो वा ।
इदं हि दुःखं मृगशावनेत्र्या
निर्माजर्येद् यः स्वपराक्रमेण ॥ ८५

इत्येवमुक्त्वा स मुनिर्जगाम
द्रष्टुं विभुं पुष्करनाथमीड्यम् ।
नदीं पयोष्णीं मुनिवृन्दवन्द्यां
संचिन्तयन्नेव विशालनेत्राम् ॥ ८६

इति श्रीवामनपुराणे सप्तत्रिंशोऽध्यायः ॥३७॥

# ३८

दण्ड उवाच ॥❀
चित्राङ्गदायास्त्वरजे तत्र सत्या यथासुखम् ।
स्मरन्त्याः सुरथं वीरं महान् कालः समभ्यगात् ॥ १
विश्वकर्माऽपि मुनिना शप्तो वानरतां गतः ।
न्यपतन्मेरुशिखराद् भूपृष्ठं विधिचोदितः ॥ २
वनं घोरं सुगुल्माढ्यं नदीं शाल्वकिनीमनु । मे. ६४

८५. –a) दे1 3 नमेस्ति, दे2 यस्येस्ति, दे11 नमोस्ति, न1 न चास्ति (→न सोऽस्ति). –b) दे1.3.4 ते1 न1 यक्षो न, दे11 जक्षो न (→यक्षोऽथ); दे9 मर्त्या (→मर्त्यो). –c) दे7.11 इम (→इदं); शा1 °शावनेक्ष, दे4 °शावनेभ्या, न1 °शात्वनेत्र्या (→°शावनेत्र्या). –d) शा1 निन्दार्जयेद्य, ब1 निम्मुञ्च्छयेयु, ब3 दे1.2 निमार्ज्रयेद्य (→निर्माजर्येद्य); ब2 सु° (→स्व°).

८६. –a) दे3 उक्ता (→उक्त्वा). –b) ब2 प्रभु, दे7 विभु (→विभु); ब2 प (पु?)ष्कर, दे7 पुष्प स (→पुष्कर-), ब1 दे11 -नाथमाद्य (दे11 °द्या?), ब2 ईशमाद्यम्, दे5 -नाममीड्यम्, दे9 -नाथमीशम् (→-नाथमीड्यम्). –c) शा1 ब1 दे1 3.5 ते1 नन्दीं, का2 दे7 न1 नन्दी, दे9 नद्यां, दे11 नदी- (→नदीं); दे11 -पयोष्णा (→पयोष्णीं) –d) दे7 11 न1 स चिन्तयन्नेव (→संचिन्तयन्नेव); शा1 °नेत्रम्, दे5 °नेत्रा (→°नेत्राम्).

पुष्पिका—शा1 कारा. का1.2 दे5.10 इति श्री (कारा. दे5 [श्री]) वामनपुराणे भैरवप्रादुर्भावे दण्डो (कारा का2 °ण्डको) पाख्याने, ब1 दे2 3 7.11 ते1 न1 इति श्री वामनपुराणे ब2 3 दे1 इति वामनपुराणे, दे4 इति वामने, दे9 श्री वामनपुराणे. मुवे. इति श्रीवामनपुराणे पुलस्त्यनारदसंवादे भैरवप्रादुरभावे दण्डापाख्याने
अध्यायनाम—शा1 का1.2 ब1-3 दे1 5 9-11 ते1 न1 ○, कारा. चित्राङ्गदासङ्कटो नाम, दे7 चित्राङ्गदाशापो नाम अध्याय-
संख्या—शा1 ब3 दे3.5.○, कारा. सप्ततितमोऽध्याय, का1 ॥५३॥, का2 अध्याय ॥ ५२ ॥, ब1 2 दे4 अष्टाविंशतितमोऽध्याय, दे1.10 ॥६३॥, दे2 ॥५८॥, दे7 चतुर्नोऽध्याय, दे9 षड्विंशोऽध्याय, दे11 अध्यायः ॥५६॥, ते1 चतुष्षष्टितमोऽध्याय, न1 षट्त्रिंशोऽध्याय, मुवे. त्रिषष्टितमोऽध्याय.

३८

❀शा1 कारा. का1 दे11 दण्डक उवाच; का2 ॐ दण्ड उवाच; दे1.7 पुलस्त्य उ०; दे2 पुलस्त्य उवाच; दे4 दंड उ०; दे9 दण्डक; ते1 पुलस्त्य, न1 दण्ड.

१. –a) दे5 चित्राङ्गजायास् (→चित्राङ्गदायास्); ब1.2 स्म (ब2 °स्व ?) रज (ब2 °ज), दे7 स्वरजस्, न1 स्वजरे (→स्वरजे). –b) ब2 दे9 11 न1 [-अ]सत्या (दे9 °स्ये), दे1 सख्या, दे3 सत्य (→सत्या) –c) दे4 स्मारन्त्या (→स्मरन्त्या); दे2 सुरथे (→सुरथं). –d) शा1 ब3 महाकाल, ब1 महान्काल, ते1 महान्कालो (→महान्काल); शा1 दे11 समा (दे11 °म)भ्यागात्, ते1 समत्यगात् (→समभ्यगात्)

२. –a) शा1 °कर्मणा (→°कर्मापि) –c) दे5 °शिखरां (→°शिखरात्) –d) शा1 विधिचोधित, का2 विधि,+विदिचोदित, दे3 विधितो(धितो)दित, दे4 7.9 10 विधिनोदित (→विधिचोदित).

३ –a) कारा दे4 वने (→वन); कारा घोरे (→घोर). दे7 सुगुल्माद्य, दे9 सुबहुल (→सुगुल्माढ्य) –b) शा1 नन्दी, दे11 नदी (→नदीं), दे5-11 साल (दे5 °लू) किनीं, ते1 शालकिनीं (→शालूकिनीं); दे1-3 ते1 तत, दे7 [-अ]नु, न1 प्रति(→[-अ]नु); दे9 मानन्दी वालकीमनु –c) शा1 का1.2 शालेय, कारा. शाल्वेये, ब1 सासुरं, ब2 दे1 2 4.10 11 ते1 स रवेवं, ब3 सद्गुरु, दे5 न1 शा (न1 सा)ल्वेय (दे5 °व). दे9 साल्वे * (→शाल्वेय); कारा. °श्रेष्ठे (→°श्रेष्ठ); दे3 (कालोभ्यगा)सत्वेव पर्वतश्रेष्ठं. –d) कारा.

६४ ३ शाल्वेय पर्वतश्रेष्ठ समावसति सुन्दरी ॥ ३
तत्रासतोऽस्य सुचिर फलमूलान्यथाश्नत ।
कालोऽत्यगाद् वरारोहे बहुवर्षगणो वने ॥ ४
एकदा दैत्यशार्दूल. कन्दराख्य. सुता प्रियाम् ।
प्रतिगृह्य समभ्यागात् ख्याता देववतीमिति ॥ ५
ता च तद् वनमायान्तीं सम पित्रा वराननाम् ।
ददर्श वानरश्रेष्ठ प्रजग्राह बलात् करे ॥ ६
ततो गृहीता कपिना स दैत्य स्वसुता शुभे ।
कन्दरो वीक्ष्य सक्रुद्ध खड्गमुद्यम्य चाद्रवत् ॥ ७
तमापतन्त दैत्येन्द्र दृष्ट्वा शाखामृगो बली ।
तथैव सह चार्वङ्गया हिमाचलमुपागत ॥ ८
ददर्श च महादेव श्रीकण्ठ यमुनातटे ।
तस्याविदूरे गहनमाश्रम ऋषिवर्जितम् ॥ ९
तस्मिन् महाश्रमे पुण्ये स्थाप्य देववतीं कपि ।
न्यमज्जत स कालिन्द्या पश्यतो दानवस्य हि ॥ १०
सोऽज्ञानत् ता मृता पुत्रीं सम शाखामृगेण हि ।
जगाम च महातेजा पाताल निलय निजम् ॥ ११
स चापि वानरो देव्या कालिन्द्या वेगतो हृत ।
नीत शिवीति विख्यात देश शुभजनावृतम् ॥ १२
ततस्तीर्त्वोऽथ वेगेन स कपि पर्वत प्रति ।

ब$_{1\ 3}$ दे$_{2\ 3\ 5\ 11}$ °वसत (→°वसति)

४ दे$_{9}$ ४a–५b ○ –a) शा$_{1}$ ब$_{3}$ दे$_{5}$ रुचिर (→सुचिर) ब$_{1\ 2}$तत्रास्यतोस्य सुचिर, दे$_{1\ 3}$ ते$_{1}$ वसतोस्य तत्र (दे$_{3}$ ✱✱) सुचिर दे$_{4}$ तत्रासतो व सुरुचि –b) शा$_{1}$ °न्यथास्थित कारा °शनस्य तु का$_{2}$ °शिनस्तत न$_{1}$ °यथाशिन° (→°न्यथाश्नत ) –c) ब$_{2}$ दे $_{3\text{-}11}$ ते$_{1}$ न$_{1}$ [ अ ]भ्य (दे$_{2}$ °भ्या)गात् दे$_{4\ 7}$ [-अ]प्यगात् (→[ अ ] यगात्) ब$_{1}$ दुरारोहे (→वरारोहे) –d) दे$_{7}$ गणान् (→ गणो)

५ दे$_{9}$ ○ (द्र ४ पा वि ) b) का खन्दराख्यः ब$_{1\ 2}$ कन्दराक्ष ब$_{3}$ भुकराक्ष (→कन्दराख्य ); शा$_{1}$ सुता (→सुतां) का$_{1}$ प्रियम्,+ प्रियाम् (→प्रियाम्) –c) दे$_{4}$ प्रगृह्य च (→प्रतिगृह्य) शा$_{1}$ समाभ्यागान्, दे$_{11}$ ममाभ्यागात् (→समभ्यागात् ) दे$_{1\ 3}$ ते प्रगृह्यसमगा (ते$_{1}$ गात् )ख्याता –d) कारा गृहीतपाठवत्,+वेदवतीं ब$_{1}$ वेदमतीन्, दे$_{5}$ वेदमतीं (→देववतीं) ब$_{1\ 3}$ अपि ब$_{2}$ इव दे$_{1\ 3}$ दिवि (→इति); दे$_{1\ 4}$ ते$_{1}$ वरा देवव (ते$_{1}$ °च ?) तीं दिवि

६ –a) दे $_{3}$ ते$_{1}$ सा (→ता); ब$_{1\ 3}$ दे$_{2\ 4\ 10}$ आयाता (दे$_{2}$ °ता) (→आयान्तीं) दे$_{1\ 3}$ सा च तद्वन याता दे$_{7}$ ता तद्वन मुपायाता दे$_{9}$ ता तावद्वनमायातीं, ते सा च तद्वनवाता b) दे$_{1\ 4\ 9\ 1}$ वरागना (दे$_{4\ 9}$ °ना) (→वराननाम्) दे$_{7}$ समपित्रा वरागनाम् ते समापित्रा वराङ्गना –c) शा$_{1}$ दे $_{11}$ वानर दे$_{3}$ वा नर. (→वानर ) –d) दे$_{3}$ [ अ ]बला करे ते$_{1}$ करेबली (→बला करे)

७ –a) दे $_{3\ 9}$ ते$_{1}$ गृहीता (→गृहीता) ब$_{1\ 3}$ दे$_{1\ 4\ 7\ 9}$ ते$_{1}$ न$_{1}$ बलिना (→कपिना) –b) शा$_{1}$ कारा का$_{1\ ?}$ दे वलिना (कारा °ना) ब $_{3}$ दे $_{\text{-}4\ 7}$ ते$_{1}$ कपिता दे$_{2}$ कविना दे$_{3}$ कपिला दे$_{9}$ स्वसिता न$_{1}$ स्वसुता (→स द य ) शा$_{1}$ सुश्रुता ब$_{2}$ सुसुता दे$_{1\ 3\text{-}5}$ ते$_{1}$ स्वसुता दे$_{9}$ न$_{1}$ कपिना (→स्वसुता) ब$_{1}$ वने ब $_{3}$ दे$_{5}$ मुने दे$_{1}$ शुभ दे$_{4}$ करे (→शुभे) –c) शा$_{1}$ सक्रुद्धा न$_{1}$ सकुप्त (→सक्रुद्ध ) –d) दे$_{7}$ [-अ]ब्रवीत् (→[-अ]द्रवत्)

८ –a) दे$_{9}$ त पतन्त तदा दत्य –c) शा$_{1}$ का$_{2}$ ब$_{1\ 3}$ दे$_{1\ 2\ 4\ 5\ 10}$ ते$_{1}$ न$_{1}$ तत्रैव ब$_{?}$ तथापि दे$_{3}$ अथैव (→तभव) –c) व चावङ्गो (→चावङ्गया) –d) शा$_{1}$ कारा का$_{1,2}$ दे$_{4\ 5\ 10}$ °गमत् (→°गत )

९ –a) दे$_{2\ 3}$ ते$_{1}$ °दिव्य (→°देव) –b) न$_{1}$ श्रीकण्ठ शूलपाणिनम् –c) दे$_{5\ 7}$ तस्यापि (→तस्या वि ) ब$_{3}$ सवन दे$_{7}$ गहने (→गहन) दे$_{9}$ तस्माद्विदूरमगमत्, न$_{1}$ यमुनायास्तटे रम्ये –d) दे$_{7}$ स्वाश्रम (→आश्रम), दे$_{9}$ मुनि° (→ऋषि°)

१० –a) शा$_{1}$ आश्रम (→आश्रमे) –b) दे$_{5}$ पति (→कपि ) –c) शा$_{1}$ निम° (→न्यम°) दे$_{1\ 3}$ कालिन्दी (→कालि न्द्या) –d) शा$_{1}$ कारा का$_{1\ ?}$ दे $_{10}$ कन्दरस्य ब$_{3}$ मानरस्य (→दानवस्य)

११ –a) दे$_{7}$ सा (→स ) दे$_{1\ 3\ 5\ 10}$ ते$_{1}$ [-अ]आनत (→[ अ ]जानत् ता) दे$_{9}$ सा न्यमजत मे पुत्री –b) शा$_{1}$ दे$_{3}$ सम (→समं) दे$_{9}$ तु (→हि) –c) ब$_{2\ 3}$ दे$_{2\ 3\ 7}$ जगामाथ (→जगाम च) –d) दे$_{2}$ निलये (→निलय); दे स्वक (→निजम्)

१२. –a) दे$_{11}$ चामरो न$_{1}$ दानवो (→वानरो) शा$_{1}$ दे$_{4}$ न$_{1}$ देव्या (→देव्या) –b) दे$_{11}$ वेगिनो (→वेगतो) का$_{1}$ वहन्, दे $_{4\ 10}$ ते$_{1}$ मृश दे$_{5}$ हृत न$_{1}$ [ उ ]द्गत (→हृत ) दे$_{9}$ कालिन्द्य निगतोद्गत –c) शा कारा का$_{1\ 2}$ दे $_{7\ 10\ 11}$ ते$_{1}$ न$_{1}$ शिवेति दे$_{3}$ शिव (र) ति दे$_{1}$ शचोति दे$_{9}$ शुभेति (→शिवीति) दे$_{1\ 10}$ व्याख्यात (→विख्यातं) –d) शा$_{1}$ का $_{2}$ दे $_{7\ 10}$ देशं (शा$_{1}$ दश (?)) स्फीत (शा$_{1}$ का$_{1\ 2}$ °त) जनाश्रितम् (दे$_{7}$ °वृतम्) कारा देश स्फीत जनाशुभम्, दे$_{9}$ देश शुभजलावृतम्

१३ –a) का ततस्तीर्त्वाथ दे$_{1\ 3}$ ततो नीतोथ दे$_{3}$ ततोथ

गन्तुकामो महातेना यत्र न्यस्ता सुलोचना ॥ १३
अथापश्यत् समायान्तमञ्जनं गुह्यकोत्तमम् ।
नन्दयन्त्या समं पुत्र्या गत्वा निगमिषुः कपि. ॥ १४
तां दृष्ट्वाऽमन्यत श्रीमान् सेय देववती ध्रुवम् ।
तन्मे वृथा श्रमो जातो जलमज्जनसंभव. ॥ १५
इति संचिन्तयन्नेव समाद्रवत सुन्दरीम् ।
सा तद् भयाच न्यपतन्नदीं चैव हिरण्वतीम् ॥ १६
गुह्यको वीक्ष्य तनया पतितामापगाजले ।
दुःखशोकसमाक्रान्तो जगामाञ्जनपर्वतम् ॥ १७
तत्रासौ तप आस्थाय मौनव्रतधरः शुचि. ।
समास्ते वै महातेनाः सवत्सरगणान् बहून् ॥ १८
नन्दयन्त्यपि वेगेन हिरण्वत्याऽपवाहिता ।
नीता देशं महापुण्यं कोशलं साधुभिर्युतम् ॥ १९
गच्छन्ती सा च रुदती ददृशे वटपादपम् ।
प्ररोहप्रावृततनुं जटाधरमिवेश्वरम् ॥ २०
त दृष्ट्वा विपुलच्छायं विशश्राम वरानना ।
उपविष्टा शिलापट्टे ततो वाचं प्रशुश्रुवे ॥ २१
न सोऽस्ति पुरुषः कश्चिद् यस्तप्रूयात् तपोधनम् ।
यथा सतनयस्तुभ्यमुद्बद्धो वटपादपे ॥ २२
सा श्रुत्वा तां तदा वाणीं विस्पष्टाक्षरसंयुताम् । वें ६४ २

---

नीतो, दे9 ततो निष्क्रम्य, दे11 ततस्तोत्वीनु, ते1 ततो नोतोप्य, न1 ततो निष्क्राम (→ततस्तोत्वाय) –b) दे1 कलि पर्वत, दे2 ऋपि पवत, मुवे कापिलवन (→कपि पर्वत) –c) दे1 4 ते1 त्वरिता गन्तुकामोसो, दे7 11 तमाश्रम गन्तुकामो. –d) दे5-7 सुनोचन (→सुलोचना)

१४ –a) ना1 °यान्तुम् (→°यान्तम्) –b) शा1 मर्जन (→अञ्जन) दे9 °गोत्तमम् (→°कोत्तमम) –c) ना1 दे1 5 दमयन्त्या, कारा का1 2 दे7 मदयन्त्या, ब2 नि दयन्त्या, ब3 म द-यन्त्या, दे3 नन्यन्त्या, दे9 नदंयत्या (→नन्दयन्त्या) –d) दे9 गवा (त्वा?), दे3 न1 गगां (न1 °गा) दे11 गतो (→गत्वा); ना1 °मिष, ब° 3 दे3 4 7 10-11 °मिपु (→°मिषु), दे3 4 कपि (→कपि)

१५ –a) शा1 मम तु, दे4 मन्यते दे11 [-अ]वनत (→[-अ]मन्यत) –b) शा1 सीय(?), ब2 सोय, दे9 येय (→सेय) दे11 °श्रुवन् (→ध्रुवम्) –c) दे9 वृथा (→वृथा)

१६ –a) दे9 एव (→इति), ब1 सचिन्तमवेव (?), दे3 सञ्चित्य यत्नेन, दे7 11 सचितयन्नेव, दे10 सचिन्तये नेव (→सञ्चि-न्तयन्नव) –b) ना1 कारा का1 समुद्रवत, ब3 समातद्रुत (?) दे7 समाव्रजति (←समाद्रवत) मुवे सुन्दरि (→सुन्दरीम्) –c) दे5 7 स (→सा) दे9 भयार्त्ता दे3 न1 भयात्स (→भयाच्च) –d) ब2 दे9 न1 स्नु, ब3 दे1 3 4 ते1 सहि दे7 चापि दे 1 च स (→चैव) शा1 कारा का1 2 ब3 हिरण्म (ना1 ब3 °म) यां दे10 हिरण्मती (→हिरण्वतीं) ब1 नदीमन्वहि वलिनीं

१७ –ab) दे3 ततो तनयाम् (→तनयां पतिताम्) –c) दे3 दुष्य° (?) (दुःख°); दे10 °समायुक्तो न1 °भयाक्रान्तो (→°समाक्रान्तो)

१८ –a) ब2 3 दे11 ततोसौ (→तत्रासौ) –b) ब1 3 दे1 4 7 ते1 °पर (→°धर) –c) ते1 समाते (→समास्ते) –d) ब3 सवत्सरान् (→सवत्सरगणान्)

१९. –a) शा1 कारा का1 2 मन्यन्त्यपि, दे3 मदयन्त्यपि, दे7 मन्दयरयपि, दे10 दमयन्त्यपि (→नन्दयन्त्यपि) –b) शा1 हिरन्वत्या पयाहिता, ब1 3 हिरन्यन्या (ब3 °येना) पवाहिता (ब3 °ना) न1 हिरण्यवत्यपवाहिता –c) दे2 4 ते1 सदा°, दे9 साधु° (→महा°) –d) शा1 का1 2 कुशल, कारा ब3 दे1 4 9 कोसलं, ब1 कोसली, दे7 कैलासं (°सं ?) (→कोशलं); दे3 स्वादुभि (→साधुभि), ते1 वृत्त (→युतम्)

२० –a) ब1 गच्छती चाप, दे3 गच्छती सा॰, दे7 गच्छन्ती साथ, दे9 सा गच्छन्ती चा, ते1 सा गच्छन्ती तु(→गच्छन्ती सा च) –b) दे9 न1 ददग (→ददृशे); दे9 पट° (→वट°). –c) ब1 दे2 3 9 ते1 प्रा (ब1 पु) रोह° (→प्ररोह°) ब1 2 प्रावृतन्तत्र, ब3 व्यायत, तनु, ते1 प्रावृततनु (→प्रावृत तनु) –d) ब2 °भार (→°धर)

२१ –a) शा1 का2 ते1 विपुनच्छाखं, कारा विपुल शाखं, ब3 विपुलच्छाया, दे9 विपुल चायं (→विपुलच्छाय) –b) कारा वराङ्गना (→वरानना) – ) दे4 उपद्विष्टा (→उपविष्टा) शा1 ब° 3, दे° 11 °पदे दे3 न1 °पृष्ठ ते1 °देशे (→°पट्ट) –d) ब1 2 ततोराव, दे7 तदावाच, दे11 ततो वाच्य (→ततो वाच)

२२ दे1 3 ते1 3b ◯ –a) का1 नसेस्ति, ब2 नासास्ति (→नसोस्ति) दे° 7 न सो (दे7 °मो?)स्ति कश्चि पुरुष –b) न1 यस्ते (→यस्त) न1 भूयात् (→ब्रूयात्) –c) दे7 बद्ध (→यथा) कारा का1 दे9 न1 सुतनय (→सतनय); दे2 यस्तु, दे9 स्तभं, ते1 वस्तु (→तुभ्य); दे3 अथा सा तनयो वस्तु. –d) का1 उद्बद्व (?) दे3 उद्बधो (→उद्बद्धो)

२३ –a) दे° ततो (→तन्ना); दे3 वर्णी, दे7 वाच (→वाणीं) –b) शा1 विसृष्टा°, दे7 प्रस्पष्टा°, दे9 विशिष्टा° (→विस्पष्टा°)

६४ २३ तिर्यगूर्ध्वमधश्चैव　　समन्तादवलोकयन् ॥ २३
ददर्श वृक्षशिखरे शिशुं पञ्चाब्दिकं स्थितम् ।
पिङ्गलाभिर्जटाभिस्तु उद्बद्धं यत्नतः शुभे ॥ २४
त विब्रुवन्त दृष्ट्वैव नन्दयन्ती सुदुःखिता ।
प्राह केनासि बद्धस्त्वं पापिना वद बालक ॥ २५
स तामाह महाभागे बद्धोऽस्मि कपिना वटे ।
जटास्वेवं सुदुःखेन जीवामि तपसो बलात् ॥ २६
पुरोन्मत्तपुरेत्येव　तत्र　देवो　महेश्वरः ।
तत्रास्ति तपसो राशिः पिता मम ऋतध्वजः ॥ २७
तस्यास्मि जपमानस्य महायोगं महात्मनः ।
जातोऽलिवृन्दसंयुक्तः　सर्वशास्त्रविशारदः ॥ २८
ततो मामब्रवीत् तातो नाम कृत्वा शुभानने ।
जाबालीति परिख्याय तच्छृणुष्व शुभानने ॥ २९
पञ्चवर्षसहस्राणि बाल एव भविष्यसि ।
दशवर्षसहस्राणि　कुमारत्वे　चरिष्यसि ॥ ३०
विंशतिं यौवनस्थायी वीर्येण द्विगुणं ततः ।
पञ्चवर्षशतान् बालो भोक्ष्यसे बन्धनं दृढम् ॥ ३१
दशवर्षशतान्येव　कौमारे　कायपीडनम् ।
यौवने परमान् भोगान् द्विसहस्रसमास्तथा ॥ ३२
चत्वारिंशच्छतान्येव　वार्धके　क्लेशमुत्तमम् ।

---

–d) कारा ब1 3 दे1 4 9 न1 °लोकयत्, दे2 3 ते1 °लोकत (→°लोकयन्)

२४ ते1 २४c–२६d ○ –a) दे9 ते1 ददश (→ददर्श) –b) कारा पाचाब्दिक, ब1 3 दे1 पश्चाब्दक, दे9 पचाब्शिक (→पञ्चाब्दिक), शा1 स्थिरम्, दे11 स्मृत (→स्थितम्) –c) दे3 4 11 त (→तु) –d) दे9 उद्बधा (→उद्बद्ध)

२५ ते1 ○ (द्र २४पा वि) –a) दे2 4 हि ब्रुवन्त, दे7 चाब्रुवन्त (→विब्रुवन्त) –b) शा1 कारा दे5 7 मदयन्ती, का1 2 दे10 दमयन्ती (→नन्दयन्ती) –c) शा1 न1 केनापि (→केनासि); ब2 बद्धस्त, दे9 बधस्त्व(→बद्धस्त्व) –d) ब3 पानेन (→पापिना) का2 बालक, दे10 पोतक (→बालक)

२६ ते1 ○ (द्र २४ पा वि) –b) ब3 दे4 बद्धोसि (→बद्धोस्मि) –c) शा1 जटास्वेद, ब2 दे2 3 7 9 न1 जटास्वेव ब3 जटाग्रए (→जटास्वेव), दे9 तु (→सु) ब1 जटाभारेण गाढ्ण

२७ –a) ब1 2 पुरोत्तमपुरो यत्र, ब3 पुरोन्मत्तापुरेत्येव, दे1 4 पुरे मनु पुरे चै (दे4 °त्ये) व दे2 3 ते1 पुरामनुपुरे चैव दे7 पुर मनुपुरेत्येव दे9 पुरामरपुरेत्वेव, दे11 पुराभध्रुपुरे ह्यव, न1 पुरे मर पुरेत्येव –b) दे9 यत्र (→तत्र) कारा वृषध्वज, दे2 11 महेश्वरा (दे11 °र) (→महेश्वर) –c) ब2 3 तत्रासी दे1 4 11 ते1 तत्रपि (→तत्रास्ति) दे9 च पयो (→तपसो)

२८ –a) ब2 तस्य (→तस्या) शा1 कारा का1 2 दे 4 5 7 10 तप्य° ब1 3 तप° (→जप°) b) शा1 कारा का1 2 दे4 5 7 10 °योगात्, ब2 °वेगो (→°योग) –c) कारा जातोब्द°, ब3 जातालि°, दे3 ततोलि°(→जातोलि°) ब1 2 °संकाश (→°संयुक्त), न1 जावालि बद्धसयुक्त

२९ –a) ब2 प्रब्रुवन्, दे3 प्रब्रती (→अब्रवीद) –b) का1 दे9 नम कृत्वा, का2 ब1 3 दे1 3 11 नमस्कृत्य (ब2 दे11 °त्वा), ब1 जात दृष्ट्वा दे2 * म कृत्वा, दे4 नाम कृत्य(?) (→नाम कृत्वा) –c) दे1 3 जयोसीति, ते1 क्षमोसीति (→जाबालीति) दे1 4 ते1 परिनाय, दे7 परिव्यक्त (→परिख्याय) –d) ब1 3 दे7 न1 वरानने, दे9 शुचिस्मिते (→शुभानने)

३० दे9 11 ३० c–३१d ○ (द्र स) –a) शा1 कारा दश° (→पञ्च°) –b) ब1 2 चरिष्यति (→भविष्यसि) शा1 कारा कुमारत्वे (शा1 °त्व) चरिष्यति –c) शा1 कारा पञ्च (→दश) –d) शा1 न1 भविष्यसि, दे1 2 4 ते1 गमिष्यसि (→चरिष्यसि), शा1 कारा बाल एव भविष्यति (शा1 °सि)

३१ दे9 11 ○ (द्र ३० पा वि) –a) कारा का1 दे1 3 5 7 न1 विंशति (→विंशतिं), दे1 3 ते1 विनयस्थायी, ब1 2 यौवनस्थस्य (→यौवनस्थायी) –b) ब1 3 दे1 5 7 10 ते1 स्था (दे1 3 ते1 स्थ) विर्यं (→वीर्येण) –c) शा1 कारा का1 2 ब1 2 दे7 शत बालो, ते1 -शता बाले (→-शतान् बालो) –d) ब1 2 ते1 भोक्ष्यते (→भोक्ष्यसे) कारा दृढ बन्धनम्, न1 बन्धन ध्रुव (→बन्धन दृढम्)

३२ दे11 ३२c–३३d ○ –a) कारा पञ्च° (→दश°) –b) ब1 2 दे2 3 11 ते1 कुमारे (ब1 2 °र) (→कौमारे) का2 दे11 °पीडितम् (→°पीडनम्) –c) दे4 यौवनेनुपमान् भोगान्, दे9 यौवने परमे भोगा –d) ब1 दे7 न1 द्विसाहस्र (→द्विसहस्र) शा1 समस्तथा ते1 समास्तत्त (→समास्तथा)

३३ दे11 ○ (द्र ३२ पा वि) –b) ब1 2 दे1 4 7 9

लप्स्यसे भूमिशय्याढ्यं कन्दलाशनभोजनम् ॥ ३३
इत्येवमुक्तः पित्राऽहं बालपञ्चाब्ददेशिकः ।
विचरामि महीपृष्ठं गच्छन् स्नातुं हिरण्वतीम् ॥ ३४
ततोऽपश्यं कपिवरं सोऽवदन्मां क्व यास्यसि ।
इमं देववतीं गृह्य मूढ न्यस्तां महाश्रमे ॥ ३५
ततोऽसौ मां समादाय विस्फुरन्तं प्रयत्नतः ।
वटाग्रेऽस्मिन्नुद्बबन्ध जटाभिरपि सुन्दरि ॥ ३६
तथा च रक्षा कपिना कृता भीरु निरन्तरैः ।
लतापाशैर्महायन्त्रमध्यस्ताद् दुष्टबुद्धिना ॥ ३७
अभेद्योऽयमनाक्रम्य उपरिष्टात् तथाप्यधः ।
दिशां मुखेषु सर्वेषु कृतं यन्त्रं लतामयम् ॥ ३८
संयम्य मां कपिवरः प्रयातोऽमरपर्वतम् ।
यथेच्छया मया दृष्टमेतत् ते गदितं शुभे ॥ ३९
भवती का महारण्ये ललना परिवर्जिता ।
समायाता सुचार्वङ्गी केन सार्थेन मां वद ॥ ४०
साऽब्रवीदञ्जनो नाम गुह्यकेन्द्रः पिता मम ।
नन्दयन्तीति मे नाम प्रम्लोचागर्भसंभवा ॥ ४१
तत्र मे जातके प्रोक्तमृषिणा मुद्गलेन हि । वें. ६३.

---

ते1 न1 वार्द्धि (ब1 दे4 9 ते1 °र्द्ध) क्ये (→वार्वके); शा1 कारा. का1 2 अद्भुतम्, दे7 अब्रुवन् (→उत्तमम्) –c) दे10 आप्स्यसे, ते1 तस्या श, न1 लप्स्यते (→लप्स्यसे), शा1 °शायाढ्य, दे1 3.5.7 शय्याया, दे4 शय्याद्य (→°शय्याढ्य) –d) दे7 कन्दमूलोपभोजनम्, दे3 9 कन्द नाशन् भोजनम्.

३४. –a) दे9 उक्तं (→उक्त). –b) दे1.3.10 °देशक, दे2 ते1 °दे शि (दे3 °श) क, मुत्रे °देश्यक (→°देशिक); दे9 न1 बाल पश्चाब्दिवार्षिक –c) दे9 विचचार (→विचरामि), का1 दे7 °पृष्ठ (→°पृष्ठ) –d) ब1 2 गच्छनार्तो, ब3 शार्दूलार्तो, दे7 गच्छन्मातु, दे9 गच्छन् भूमि (→गच्छन् स्नातुं), ब1 2 हिरन्यिनीं, ब3 हिरन्मयीं (→हिरण्वतीं)

३५. –a) शा1 का2 ब3 दे9 [-अ] पश्यत्, दे3.4 11 [-अ]पश्यन् (→[-अ] पश्य); ते1 °र्पति (→°वर) –b) ब1 [-अ] ददत् (→[-अ] वदन्). –c) दे5 7 9 वेद° (→देव°), ब3 -पुन, दे9 गुह्य (→गृह्य) –d) शा1 मूढ न्यास्ता, दे1.3 ते1 गूढन्यस्ता, दे2 गूढनस्तान्, दे4 मूढन्यस्ता (→मूढ न्यस्ता), दे7.9 ते1 न1 मया (ते1 °मा) श्रमे (→महाश्रमे)

३६. –a) न1 ततो *मासमुपादाय.* –b) *शा1 का1 2 ब1.2* दे5.10 शिशु तत्र, कारा. शिशु तदा, ब3 दे9 समन्तत (→प्रयत्नत). –c) ब1 2 [-अ] रिमन्निर्बबन्ध, दे1-3 ते1 तेनोद्बबद्धश्च, दे4 [-अ]स्मिन्नुवद्बद्ध, दे9 [-अ] स्मिन्समुद्ग्रथ्य, न1 [-अ]स्मिन् समुद्ग्रथ्य (→[-अ]स्मिन्नुद्बबन्ध). –d) दे1 तटाभिराभि सुन्दरि, दे3 ते1 जटाभिरभि सुन्दरि, दे9 जटाभिरिह सुन्दरि, न1 जटाभिरिति सुन्दरि.

३७ –a) न1 [-अ]पि (→च); दे1 3 ते1 रक्ष (रक्षा); दे9 तथावरेजावपिना –b) दे4 न1 निरन्तरे (न1 °रा), दे9 अनन्तरा (→निरन्तरै); दे1 3 ते1 कृत तीर निरन्तरम् –c) दे3.5.9 -यन्त्रं (→-यन्त्र-) –d) का1 मध्यस्थो, का2 मध्यस्ता,+ मध्यस्या, ब1 मध्यस्थान्, दे1 मध्यस्या (→मध्यस्थात्); ब1.2 नीच° (→दुष्ट°)

३८. –a) शा1 ब2 अम्येद्य, दे7.9 अभेद्य, ते1 अभयो (→अभेद्य), ब1 -यमनाक्राम्य, दे7 -मदनाक्रम्य (→ यमनाक्रम्य). –b) दे2 ते1 यथ (→[-अ]प्यध). –c) दे3.7.9.11 दिशा- (→दिशां). –d) ब2.3 लतामुखम्, ते1 ज(ल ?)तामयम् (→लतामयम्).

३९. –a) दे4 सपत्यता, दे9 संयतार (→संयम्य मां); दे9 ते1 °वर (→°वर) –b) ब1 2 प्रयातोपर°, ब3 प्रयातो मेरु°, दे10 प्रयतोमर° (→प्रयातोमर°). –c) दे1-3 ते1 त्वया, दे7 यथा (→मया), दे9 दृष्ट्वा (→दृष्टं) –d) ब3 दे2 4 ते1 श्रतस्ते, दे9 मत्त (→एतत्ते), दे7.11 कथित (→गदित); शा1 शुभं, ब1-3 दे1-4 7 ते1 मया (→शुभे)

४०. –a) ब3 भवता (→भवती). –b) का2 दे7.10 पति° (→परि°). –c) दे9 °यातासि (→°याता सु-), शा1 दे3 -चा (शा1 °च)र्वाङ्गी (→-चार्वङ्गी) –d) बा1 3 दे4 [-अ]स्यार्थेन, दे1 3 ते1 कार्येण, दे5 स्वार्थेन, दे7 9 न1 [-अ]प्यर्थेन, दे11 [-अ]र्थे-नापि (→सार्थेन), दे1.4 ते1 वा (→मा)

४१. ब2. ab ○; दे11. bc ○. –b) दे9 -मह (→मम). –c) शा1 कारा का1 2 दे5.7 मदयन्तीति, दे2 नन्दयन्ती च, दे10 दमयन्तीति (→नन्दयन्तीति); ब1 3 नन्दती नाम मे माता. –d) शा1 प्रम्नेचा°, का1 प्रम्लेचा°,+प्रम्लोचा, दे1 3 प्राप्तावा° (दे1 °चा°), दे9 प्रमोच°, (→प्रम्लोचा°); दे2 प्राप्ताकाल. वरो न हि.

४२. –a) दे7 तत्रैम (→तत्र मे), दे9 जन मे, दे11 जनक (→जातके); दे4 प्रोक्ता (→प्रोक्त); दे7 तत्र मे जन्मसमये. –b) शा1 शपि (षि ?) णा (→ऋषिणा); दे11 मद्गुणेन (→मुद्गलेन),

६३ ४२ इय नरेन्द्रमहिषी भविष्यति न संशयः ॥ ४२
तद्वाक्यसमकालं च व्यनदद् देवदुन्दुभिः।
शिवा चाशिवनिर्घोषा ततो भूयोऽब्रवीन्मुनिः ॥ ४३
न संदेहो नरपतेर्महाराज्ञी भविष्यति।
महान्तं संशयं घोरं कन्याभावे गमिष्यसि ॥
ततो जगाम स ऋषिरेवमुक्त्वा वचोऽद्भुतम् ॥ ४४
पिता मामपि चादाय समागन्तुमथैच्छत।
तीर्थे ततो हिरण्वत्यास्तीरात् कपिरथोत्पतत् ॥ ४५
तद् भयाच्च मया ह्यात्मा क्षिप्तः सागरगाजले।
तयाऽस्मि देशमानीता इम मानुषवर्जितम् ॥ ४६
श्रुत्वा जाबालिरथ तद् वचनं वै तयोदितम्।
प्राह सुन्दरि गच्छस्व श्रीकण्ठं यमुनातटे ॥ ४७
तत्रागच्छति मध्याह्ने मत्पिता शर्वमर्चितुम्।
तस्मै निवेदयात्मानं तत्र श्रेयोऽधिलप्स्यसे ॥ ४८
ततस्तु त्वरिता काले नन्दयन्ती तपोनिधिम्।
परित्राणार्थमगमद्धिमाद्रेर्यमुना नदीम् ॥ ४९
सात्वदीर्घेण कालेन कन्दमूलफलाशना।
संप्राप्ता शकरस्थानं यत्रागच्छति तापसः ॥ ५०

---

दे1 2 4 7 11 ते1 च (→हि) –c) दे7 11 महेन्द्र° (→नरेन्द्र°)

४३ –a) दे10 तु (→च) –b) का1 2 दे5 10 व्यनदद्दि (का2 दे5 °द्) व दुन्दुभि, ब1 3 दे2 4 अनदन्देवदुन्दुभि, दे1 3 11 ननन्द देवदुन्दुभि, दे7 अवाद्य तव दुन्दुभि, ते1 ननाद देवदुन्दुभि –c) शा1 का० ब2 दे7 शिवावा (दे7 °ध) शिव°, का1 ब3 दे4 शिवा च शिव°, दे1 शिवाश्चा शिव°, दे2 3 ते1 शिवा श्चाशिव°, दे9 सुशिवा दिवि°, न1 शिवाश्च दिवि (→शिवा चाशिव°) शा1 दे3 9 ते1 °निर्घोषा (→°निर्घोषा) –d) दे9 तयो (→ततो) दे9 [-अ] वदन् (→[-अ] ब्रवीत्)

४४ दे10 cd O; न1 ef O –a) दे5 नरपति (→नरपते) –b) शा1 महाराज्ञ, दे1 10 महाराना (→महाराज्ञी) दे3 ते1 भविष्यसि (→भविष्यति) दे7 महान्त (→महान्तं) शा1 कारा का1 2 महत्तर भय घोर –d) ब2 3 तस्या° (→कन्या°) कारा ब1 2 दे5 गमिष्यति, ब3 भविष्यति दे2 भविष्यसि, दे1 3 4 7 9 11 ते1 न1 समेष्यति (दे1 3 9 °सि) (→गमिष्यसि) –e) कारा स मुनि, दे1 3 ते1 सर्षपि, दे9 व ऋषे (→स ऋषि) –f) दे7 उक्ता (→उक्त्वा); कारा का1 ब1 3 दे1 5 10 [अ] द्रुतम्, दे11 [-अ] द्रुवन् (→[-अ] द्भुतम्), दे9 धर्मयुक्ता वचोऽब्रवीत्

४५. –a) ब1 दे9 11 ममापि (→मामपि) –b) न1 गमा° (→समा°) ब1 3 दे4 अथेच्छति, ब2 दे1 3 11 अथेच्छसि, दे9 तमतेच्छत् ते1 अथेच्छसि (→अथैच्छत्) –c) शा1 दे4 तीर्थे न1 वर्तु (?) (→तीर्थे) कारा पुण्य, दे2 तत्र, दे9 तोय (→ततो)। शा1 कारा का2 हिरण्वत्या, ब1 2 हिरण्य (ब2 °न्यि) न्या, ब3 हिरन्मया, दे9 सरस्वत्या (→हिरण्वत्या) –d) दे2 तीर्थाद्, + तीरात्, दे5 शैलाद् (→तीराद्), ब3 दे1 3 4-7 11 ते1 [-अ] (दे4 त) था पतत् (→[-अ] थोत्पतत्)

४६ –b) दे5 क्षिप्ता, दे11 क्षिप्त (→क्षिप्त); ब3 सा चारजा°, ब1 दे1 सागरजा°, दे9 स्यागरजा° (→सागरगा°) शा1 क्षिप्त नदीजले –c) शा1 तपासि, का1 तयासि, + तयास्मि, ब1 2 दे5 7 तयास्मिन्, दे9 तेनास्मि (→तयास्मि) –d) शा1 का2 ब० दे10 इद, दे5 इह (द ?) दे7 त्विम, (→इम)

४६ श्लोकानन्तर अधिकम्—दे1 4 दण्ड उ दे०.3 दण्डक उवाच दे10 मुने दण्ड उवाच

४७ –a) दे1 ० जापालिर (→जाबालिर्) –b) का2 दे5 तयोदितम्, दे11 तवोदितम् (→तयोदितम्) –c) दे7 गच्छ त्वं (→गच्छस्व) –d) दे3 °तले (→°तटे)

४८ –a) का० गच्छति दे3 [-आ] गच्छतु (→[-आ] गच्छति) दे1 4 ते1 नित्य वै (→मध्याह्ने) –b) दे7 पिता मे (→मत्पिता) दे10 शिव (→शर्व) –c) शा1 कारा का1 2 तस्मिन् (→तस्मै) ब1.2 निवेदयाशुद्ध, दे1 5 7 10 11 निवेदयाशु त्व, दे9 निदर्शयाशु त्व न1 निवेदयस्व त्व (→निवेदयात्मान) –d) कारा ब1 3 दे1-4 9 11 ते1 तत दे7 तत्त (→तत्र) ब1 3 दे1 4 9-11 ते1 [अ] भिलप्स्यसे (दे० 3 ते1 °सि दे4 °ते), ब० दे5 न1 हि लप्स्यसे (दे5 °ते) दे7 [अ] भिपत्स्यसि (→[अ] धिलप्स्यसे)

४९ –a) कारा सा त्वरिता ब1 तु दुरिता, न1 तद् अरिता (→तु त्वरिता), ब1 तेन, ब2 3 दे1 3 ते1 वाले, दे4 7 9 11 न1 वाला (→काले) –b) शा1 कारा का1 2 दे5 7 मदयन्ती, दे9 नदपत्नी, दे10 दमयन्ती (→नन्दयन्ती) दे9 पयोनिधे (→तपोनिधिम्) –d) ब1 विमात्र, दे1 4 7 10 ते1 हिमाद्रौ (→हिमाद्रे) दे4 11 यमुना (→यमुना)

५० –a) का० ब० 3 न1 दीर्घेण (→[-अ] दीर्घेण) –b) शा1 का1 ० ब1 3 दे11 न1 -फलाशिनी (ब3° ना, दे11 °नीम्), दे4 7 -फलाशना (दे7 °न) (→-फलाशना) –c) दे7 शाङ्कर (→शकर) –d) ब1 3 अथ (→यत्र) शा1 दे11 ते1 न1 गच्छति, ब1 [-अ] गच्छत्, ब3 [-आ] गच्छतु (→[-आ] गच्छति)

तत. सा देवदेवेशं श्रीकण्ठं लोकवन्दितम् ।
प्रतिवन्द्य ततोऽपश्यदक्षरांस्तान्महामुने ॥ ५१
तेषामर्थं हि विज्ञाय सा तदा चारुहासिनी ।
तज्जाताल्युदितं श्लोकमलिखच्चान्यमात्मनः ॥ ५२
मुद्गलेनास्मि गदिता राजपत्नी भविष्यति ।
सा चावस्थामिमां प्राप्ता कश्चिन्मां त्रातुमीश्वरः ॥ ५३
इत्युल्लिख्य शिलापट्टे गता स्नातुं यमस्वसाम् ।
ददर्श चाश्रमवरं मत्तकोकिलनादितम् ॥ ५४
ततोऽमन्यत सात्रर्षिर्नू॑न तिष्ठति सत्तम. ।
इत्येवं चिन्तयन्ती सा संप्रविष्टा महाश्रमम् ॥ ५५
ततो ददर्श देवाभां स्थितां देववतीं शुभाम् ।
संशुष्कास्यां चलन्नेत्रां परिम्लानामिवाब्जिनीम् ॥ ५६
सा चापतन्तीं ददृशे यक्षजां दैत्यनन्दिनी ।
केयमित्येव संचिन्त्य समुत्थाय स्थितामवत् ॥ ५७
ततोऽन्योन्यं समालिङ्गय गाढं गाढं सुहृत्तया ।
पप्रच्छतुस्तथान्योऽन्यं कथयामासतुस्तदा ॥ ५८
ते परिज्ञाततत्त्वार्थे अन्योन्यं ललनोत्तमे ।
समासीने कथाभिस्ते नानारूपाभिरादरात् ॥ ५९ ब. ६४.

५१ –a) ब$_{1}$ दे$_{7}$ स (→सा) दे$_{9}$ °देव त (→°देवेश) –b) ते$_{1}$ शङ्करं (→श्रीकण्ठं), शा$_{1}$ °पूजित (→°वन्दितम्) –c) दे$_{9}$ स्वश्यात् (?), दे$_{3}$ ते$_{1}$ पश्चात् (→[-अ]पश्यत्) –d) दे$_{1\ 3\ 7\ 9}$ ते$_{1}$ न$_{1}$ [-अ]नराणि (→[-अ]क्षरास्तान्), कारा का$_{1\ 2}$ महामुने, ब$_{3}$ महात्मन, दे$_{5}$ ** ##मते (→महामुने)

५२. –b) ब$_{1}$ स (→सा); ब$_{1}$ °हासिनी (→°हासिनी) –c) ब$_{1}$ ता?द्रु?हा? रान्सूत **, ब$_{2}$ त राजान्युदित श्लोक, ब$_{3}$ त यामान्युदित श्लोकं, दे$_{1\ 3}$ ते$_{1}$ जागमाल्युदित श्लोक, दे$_{4}$ जावा दिनोदित श्लोकं, दे$_{5}$ जावालिकरित श्लोक, दे$_{7}$ त जावा युदित श्लोक, दे$_{9}$ तत्परस्या दिवं श्लोक, दे$_{10}$ जावानिनोदित श्लोक, न$_{1}$ तत्पार्श्वे नष्ट ** क. –d) दे$_{9}$ मगमत् (→मलिखत्), ब$_{1}$ श्लोक, दे$_{4}$ त्वाग्य, दे$_{5}$ चाल्प, दे$_{7}$ वं त, दे$_{9}$ न$_{1}$ साम्य दे$_{11}$ सान्य (→चाग्य)

५३ –a) दे$_{3}$ मुद्गदेन (→मुद्गलेन), दे$_{9}$ न$_{1}$ सन्द्रिष्टा (→गदिता) –b) शा$_{1}$ कारा का$_{1}$ दे$_{4\text{-}9\ 11}$ न$_{1}$ भविष्यसि, दे$_{10}$ भविष्यसि,+भविष्यति (→भविष्यति) –c) दे$_{7}$ स्व च, दे$_{11}$ सर्वा (→सा च); शा$_{1}$ प्राप्या, दे$_{1}$ प्रा *, न$_{1}$ प्राप्ता (→प्राप्ता) –d) शा$_{1}$ दे$_{1\text{-}3\ 5\ 9}$ मा (→मा)

५४ ब$_{2}$ d○ –a) शा$_{1}$ ब$_{3}$ न$_{1}$ शिलापृष्ठे, दे$_{2}$ शिलापदे, दे$_{9}$ तिलापट्टे (→शिलापट्ट) –b) ते$_{1}$ स्नातु(?) (→स्नातुं), शा$_{1}$ यमसुसाम्, ब$_{3}$ दे$_{1\ 3\ 7}$ ते$_{1}$ न$_{1}$ यमानुजा (दे$_{1}$ °गां), दे$_{11}$ यमश्वसाम (→यमस्वसाम्) –c) दे$_{7}$ ददर्श (→ददृशे), शा$_{1}$ स्वाश्रमवर ब$_{2}$ चाश्रमवस, दे$_{11}$ चाश्रम रम्य (→चाश्रमवर); दे$_{9}$ ददर्शे चास (श्र?) मपद

५५ ब$_{2}$ ५५a–५६b○ –a) शा$_{1}$ ततोमन्यत् सौत्रादि, कारा सात्वमन्य सोर्त्रपि, ब$_{1}$ ततोमन्यत सात्रृपि, ब$_{3}$ तते मन्यत सार्द्रपि, दे$_{1\ 10}$ ते$_{1}$ श्र (दे$_{10}$ स) तो मध्यम सात्रृपि, दे$_{2}$ श्रतो मन्यत चात्रर्षि, दे$_{3}$ श्रतो मध्यसमावृष्टि, दे$_{5}$ ततोमन्यतमात्रर्षि, दे$_{7}$ ततोमन्यत श्रोत्रर्षि, दे$_{9}$ ततोमन्यत सोभूय, दे$_{11}$ न$_{1}$ ततोमन्यत सार्त्रपि –b) दे$_{3}$ तिष्ठसि (→तिष्ठति), ब$_{1}$ सर्व्वंग॰ (→सत्तम॰), शा$_{1}$ नून तिष्ठ पट्ट त्तम –c) शा$_{1}$ चिन्तयन्ते (→चिन्तयन्ती)

५६ ब$_{1}$ ५६b 'स्थितां' इत्यारभ्य ६२a 'देवेश' इत्यन्तं यावन्नास्ति; ब$_{2}$ ab○ (द्र ५५ पा वि) –a) शा$_{1}$ का$_{2}$ दे$_{1\ 3\ 4\ 11}$ ते$_{1}$ देवाना, कारा सा वेद्या, का$_{1}$ देवी तां, ब$_{1}$ देवानां, दे$_{7}$ देवेशं, दे$_{9}$ चाप्रच न$_{1}$ देवाभे (→देवाभां) –b) शा$_{1}$ दे$_{4}$ स्थिता (→स्थितां); दे$_{1\ 3\ 11}$ ते$_{1}$ न$_{1}$ शुभे, दे$_{4}$ मुने (→शुभाम्) –c) ब$_{2\ 3}$ दे$_{1\ 3\ 7}$ ते$_{1}$ शुष्कस्या चलने (ब$_{2\ 3}$ °न्न) त्रा तु (दे$_{7}$ °च), दे$_{4}$ शुष्कस्य तु चले नेत्र, दे$_{11}$ शुष्कस्याश्चलनेत्रीं च –d) कारा का$_{1}$ ब$_{2\ 3}$ दे$_{2\ 3\ 5\ 9}$ न$_{1}$ °म्लान, ते$_{1}$ °त्रस्ता (→°म्लानां), ब$_{2}$ दे$_{3\text{-}4}$ ते$_{1}$ न$_{1}$ इवाब्जि (ते$_{1}$ °हि, न$_{1}$ °द्रि) नीम् (→इवाब्जिनीम्)

५७ ब$_{1}$ ○ (द्र ५६पा वि) –a) शा$_{1}$ का$_{2}$ ब$_{3}$ दे$_{1\ 4\ 7\ 10\text{-}11}$ न$_{1}$ [-आ] पतन्ती (→[-आ] पतन्तीं) –b) शा$_{1}$ कारा का$_{1\ 2}$ ब$_{3}$ दे$_{5\ 7}$ न$_{1}$ ते$_{1}$ यक्षजा, दे$_{9}$ यक्षिणीं (→यक्षजां), दे$_{4}$ नदिन अन्यत्र नन्दिनीम् (→नन्दिनी) c–) दे$_{2}$ इत्यपि (→इत्येव) दे$_{1\ 3\ 7}$ साचिन्त्य (→संचिन्त्य) –d) शा$_{1}$ दे$_{1\ 3}$ स्थिरा° दे$_{2\ 4}$ [-अ]स्थिता (दे$_{4}$ °ता) (→स्थिता°)

५८ ब$_{1}$ ○ (द्र ५६ पा वि); ब$_{2}$ ५८c आरभ्य ६१b यावन्नास्ति –a) ब$_{3}$ दे$_{1\ 4\ 7\ 9}$ ते$_{1}$ न$_{1}$ समाश्लिष्य (→समालिङ्गय) –b) न$_{1}$ गाढाद् गाढ (→गाढं गाढं); दे$_{1\ 7}$ तथा (→तया) –c) का$_{2}$ पप्रच्छतुस्तया ब$_{3}$ दे$_{1\ 4\ 7\ 9\ 11}$ ते$_{1}$ पर्यपृच्छतदा ब$_{3}$ यदपृच्छत्तदा (?) दे$_{5}$ पप्रच्छतुस्ततो, (→पप्रच्छतुस्तथा) –d) ब$_{2\ 3}$ दे$_{1\ 3\ 4\text{-}7\ 9\ 11}$ ते$_{1}$ न$_{1}$ तत (→तदा)

५९ ब$_{1}$ ○ (द्र ५६ पा वि); ब$_{2}$ ○ (द्र ५८ पा वि) –a) शा$_{1}$ ब$_{3}$ °ज्ञान (→°ज्ञात) –b) दे$_{4}$ उत्तमै, दे$_{11}$ उत्तरे (→उत्तमे) –c) ब$_{3}$ दे$_{3\ 5\ 7\ 9\ 10}$ न$_{1}$ समासा(दे$_{7}$ °स) ते, दे$_{1\ 2}$ ते$_{1}$ समासान्ते, दे$_{11}$ समागते (→समासीने), शा$_{1}$ कथा भ्यास्ते, ब$_{3}$ कथाभिस्त, ते$_{1}$ कथाभिर्यं (→कथाभिस्ते)

६४ ६० एतस्मिन्नन्तरे प्राप्तः श्रीकण्ठं स्नातुमादरात् ।
स तत्त्वज्ञो मुनिश्रेष्ठो अक्षराण्यवलोकयन् ॥ ६०
स दृष्ट्वा वाचयित्वा च तमर्थमधिगम्य च ।
मुहूर्तं ध्यानमास्थाय व्यजानाच्च तपोनिधिः ॥ ६१
ततः सपूज्य देवेशं त्वरया स ऋतध्वनः ।
अयोध्यामगमत् क्षिप्रं द्रष्टुमिक्ष्वाकुमीश्वरम् ॥ ६२
तं दृष्ट्वा नृपतिश्रेष्ठं तापसो वाक्यमब्रवीत् ।
श्रूयतां नरशार्दूल विज्ञप्तिर्मम पार्थिव ॥ ६३
मम पुत्रो गुणैर्युक्तः सर्वशास्त्रविशारदः ।
उद्बद्धः कपिना राजन् विषयान्ते तवैव हि ॥ ६४

तं हि मोचयितुं नान्यः शक्तस्त्वत्तनयादृते ।
शकुनिर्नाम राजेन्द्र स ह्यस्त्रविधिपारगः ॥ ६५
तन्मुनेर्वाक्यमाकर्ण्य पिता मम कृशोदरि ।
आदिदेश प्रियं पुत्रं शकुनिं तापसान्वये ॥ ६६
ततः स प्रहितः पित्रा भ्राता मम महाभुजः ।
सम्प्राप्तो बन्धनोद्देशं समं हि परमर्षिणा ॥ ६७
दृष्ट्वा न्यग्रोधमत्युच्च प्ररोहास्तृतदिङ्मुखम् ।
ददर्श वृक्षशिखरे उद्बद्धमृषिपुत्रकम् ॥ ६८
ताश्च सर्वाँल्लतापाशान् दृष्टवान् स समन्ततः ।
दृष्ट्वा स मुनिपुत्रं तं स्वनटां सयतं वटे ॥ ६९

---

६० ब1 ○(द्र ५६ पा वि) ब॰ ○ (द्र ५८ पा वि) ब3. ab ○ –a) शा1 दे1 प्राप्त, दे3 प्राप्ता, दे9 प्राप्त (→प्राप्त-) –b) दे1 4 श्रीकण्ठम (दे3●)र्चित (दे1 °तु) मुनि-, दे7 श्री कण्ठ देवमादरात दे10 ते1 श्रीकण्ठ चार्चितु मुनि, दे11 श्री कण्ठ द्रष्टुमान्रात् –c) ब3 दे1 4 7 9-11 ते1 ऋत(दे7°तु) ध्वजो, दे5 (एतस्मि) ऋतध्वजो न1 स तु स्नात्वा (→सतत्त्वज्ञो) –d) शारा का1 दे5 9 न1 [म]वनोवयत् (→[-अ]वलोकयन्); ब3 ततापदयन्घोक्षरान्, दे1 4 ते1 ततोपश्यदया (दे॰ °णा)क्षरान् (दे4 °रात), दे7 पश्यन्सोयाक्षराणि च

६१ ब1 ○ (द्र ५६ पा वि) ब॰ ab ○ (द्र ५८ पा वि) –b) ब3 दे1 4.7 9 11 ते1 तदर्थं (→तमर्थं) ब3 अव गम्य, दे7 10 न1 मभिगम्य, दे11 मभिचिन्त्य (→अधिगम्य) ब3 ते, दे4 तु (→च) –c) दे1 ॰ 11 मुहूर्त-(दे॰° र्तं)(→मुहूर्तं) –d) शा1 व्यजानच्च ब॰ व्यजानत्स दे1 व्यजानार्थं दे2 व्यजनत्व, दे3 (म)व्यजनार्थं दे1 व्यजनार्थं, दे11 न ज्ञातश्च, दे10 व्यजानात्र, ते1 व्यज्ञितार्थं (→व्यजानाच्च)

६२ ब1 3 ○ (द्र ५६ पा वि) –a) दे5 प्रपूज्य (→सम्पूज्य) –b) दे3 न1 त्वयवान् (→त्वरया) शा1 सतपत द्विज, कारा का1॰ स्तो (का1 °तत्, का॰ °तन्) द्विज (→स ऋतध्वज) –c) शा1 शारा का1॰ दे 10 शीघ्रं (→क्षिप्र)

६३ –a) शा1 मुनि°, शारा का1॰ राज°, दे 9 नृप° (→नर°) –d) का ब3 दे 9 न1 विज्ञप्ति (→विज्ञप्ति)

६४ –c) दे9 उद्ध (→उद्बद्ध) ब1 दे1 4 7 ते1 कपि राजेन (→कपिना राजन्) –d) ब3 [-अ] त्र चैव हि, दे 5 10 विभो तव, दे3 न1 तु वै विभो (→तवैव हि)

६५ –a) शा1 का1 3 दे5-10 सं या कारा न1 त य ब1 2 तं वै, ब3 त नु, दे7 त्वं नु (→त हि); कारा नान्यो (→नान्य) दे1 11 ततो (दे1 °भो) चापयितु नान्यः –b) कारा नान्या (→शक्त), शा1 नित्वनयात्, दे11 स्वतनयाव, न1 वे तनयाद् (→त्वत्तनयाद्) –c) दे1 3 शाकुनि (→शकुनि) –d) शा1 सहिम्र (?) ब3 दे1 3 स ह्यत्र, दे9 सह्य स (→स ह्यस्त्र)

६६ –a) ब1 त मुने, दे3 तन्मुनि, ते1 त सखे (→तन्मुने) –b) दे7 पितु (→पिता) –c) शा1 मादिन्वे ब3 आन्दिदेश (→आन्दिदेश) –d) दे॰ 5 10 शकुनि (→शकुनि); कारा तापसा न्वये, ब॰ तापसालये दे1 4 7 10 नाम तान्वये दे3 तापसार्थितं, न1 तापसार्थित (→तापसान्वये)

६७ –a) ब3 तप (→तत) शा1 स ●● त, कारा प्रस्थापित का1 स प्रथित, का॰ स पितर,+प्रहित, दे1 3 ते1 प्राह (दे॰ °हि) सि (दे॰ °स) त, दे4 प्रसहित (→स प्रहित); शा1 का॰ दे3 पुत्रा, ब3 पित्र्या (→पित्रा) –b) ब1 पित्रा स॰ दे3 [म] भ्यागता मा (?) (→भ्राता मम) –c) शा1 का3 म (का आ) प्रात, शारा सप्राप्त न1 सम्प्राप्ते (→सम्प्राप्त), ब3 [म] य वनाद्देन, दे4 बन्धनो देवो (→बन्धनोद्दे)

६८ a) ब3 दे1 11 मत्युच्चं दे3 मत्युच्च दे7 मत्युच्चं, दे3 मत्य च (→मत्युच्च) –b) ब॰ पुरोहस्तृ°, ब3 प्ररोहा स्थित° (→प्ररोहास्तृत); शारा प्ररोहास्त्वमुखम्, दे1 प्ररोह स्तो दि मुखम् –d) शा1 दे॰ उद्ध (दे3 त) (→उद्बद्ध) दे1 न1 मुनि° (→ऋषि°); ब1 वानके दे10 ●●● (→पुत्रकम्).

६९ दे10 ab ○ –a) ब1 ताश्च सर्व लतापाशान्, दे1 ॰ 4 ते1 ततश्चलतपाशान्, दे3 ता चरतता मान(?) दे ताश्च सवलतापाशान्, दे3 ताश्च सर्वान् सतपाशां –b) दे5 दृष्ट्वा चान्य समन्तत –c) शारा च (→स); दे7 च, न1 त्वं (→तं) दे10 ●●●●● पुत्र सं. –d) शा1 का॰ स जग°, कारा सु जग°, ब1 धर्मभि° (→स्वनटा°); ब॰ संयुतं (→सयत); ब1 3 मुने, दे3 वने (→वटे); दे11 ते1 स्वरतां (दे11 °ता) ययतं वटे

धनुरादाय बलवानधिज्यं स चकार ह।
लाघवादृषिपुत्र तं रक्षंश्चिच्छेदमार्गणैः ॥ ७०
कपिना यद् कृतं सर्वं लतापाशं चतुर्दिशम्।
पञ्चवर्षशते काले गते शक्तस्तदा शरैः ॥ ७१
लताच्छन्नं ततस्तूर्णमारुरोह मुनिर्वटम्।
ग्रामं स्वपितरं दृष्ट्वा जाबालिः संयतोऽपि सन् ॥ ७२
आदरात् पितरं मूर्ध्ना ववन्दत विधानतः।
संपरिष्वज्य स मुनिर्मूर्ध्न्याघ्राय सुतं ततः ॥ ७३
उन्मोचयितुमारब्धो न शशाक सुसंयतम्।
ततस्तूर्णं धनुर्न्यस्य बाणांश्च शकुनिर्बली ॥ ७४
आरुरोह वटं तूर्णं जटा मोचयितुं तदा।
न च शक्नोति संच्छन्नं दृढं कपिवरेण हि ॥ ७५
यदा न शक्तिता तेन सप्रमोचयितुं जटा।
तदाऽवतीर्णः शकुनिः सहितः परमर्षिणा ॥ ७६
जग्राह च धनुर्बाणांश्चकार शरमण्डपम्।
लाघवादर्द्धचन्द्रैस्ता शाखा चिच्छेद स त्रिधा ॥ ७७
शाखया कृतया चासौ भारवाही तपोधनः।
शरसोपानमार्गेण अवतीर्णोऽथ पादपात् ॥ ७८ ह. ६४

---

७० –a) ब1 पुन (→धनु) –b) का1 मधिज्यं स-, दे2 अधि (प्रज्ये)ष्ठ स, दे3 अनु(प)ज्य स, दे11 मविध्वंस, ते1 मधिस्वस (→अधिज्य स) दे11 विकार (→चकार) –c) शा1 दे3.5 11 दृष्टि°, का1 मुनि° (→ऋषि°), ब1 3 दे1 4 10 11 ते1 -पुत्रस्य, ब2 पुत्रस्व, न1 -पुत्रत्वं (→-पुत्र त) –d) ब1 दे1 4.10 ते1 सम, ब3 बम्ब, दे7 रक्षत्, दे9 ऋक्ष, दे11 रक्षा (→रक्षन्)

७१ –a) दे1 4 7 10 11 ते1 न1 पूर्वं (→सर्वं), दे9 कपि नार्पनित पूर्वम् –b) दे9 न1 °पा (→°पाश); दे3 °दश, दे7 °दिव (→°दिशम्) –c) दे1 3 -शत (→-शते) –d) शा1 गत शक्त, कारा गतेच्छिन्नं, का1 गते कृत, ब1 3 गते शक्नोत्, दे1 3 10 गातसक्त, दे4 गते शक्तो, दे5 गते शूले, दे9 शते शस्त्रं, दे11 गते शक्र, ते1 शानसक्त, न1 गते शक्ते (→गते शक्त) दे2 वद (°दा ?) (→तदा)

७२ –a) दे4 7 °च्छेत्तु, दे5 10 °च्छिन्ना, दे9 °च्छिन्न, न1 °च्छिन्ना (→°च्छन्न) दे तूर्णी (→तूर्णं); कारा ततच्छिन लतं चूर्णं –b) दे9 द्रुमाग्रक, दे11 मुनिर्यटं, न1 पुनवट (→मुनिर्वटं) –c) ते1 आदरात्पितर दृष्ट्वा –d) शा1 जाबाल्य, ब3 दे7 याबालिः, दे1 जापालि (→जाबालि)

७३ दे7 cd ○ –a) शा1 आवरात (→आदरात) दे3 पिर ते (?) (→पितर) ब3 दृष्ट्वा, दे3 11 मूर्वा (→मूर्ध्ना) *ब1 आदरातिशयात् मूर्ध्ना, दे7 आदेशात् पितर मूर्ध्ना* –b) कारा सो वन्दत, का1 दे1 4 9 10 ते1 न1 वनन्दे तु (शा1 दे4 °त दे9 न1 °च), ब2 3 दे7 व (दे7 त्व) वन्देत, दे5 11 ववन्द (दे5 °न्दे) स (→ववन्दत) –c) दे11 त (→स); ब3 -परिपज्य (→-परिष्वज्य); शा1 कारा का1 ॰ तु तन्ना (→स मुनि) –d) ना1 [-श्रा]भ्राय (→[-आ]घ्राय) ब2 स्वतन्तत, दे1 4 9 10 ते1 समन्तत (→सुत तत)

७४ –a) शा1 उन्मूचयितु, ब3 दे9 त मोचयितु, दे3 उन्मोचयतुं (→उन्मोचयितुम्) दे7 मारब्धे (→मारब्धो) –b) शा1 शशाङ्क(?) (→शशाक) ब1 ॰ सुत(ब2 तो)यत, ब3 सुत तव, दे1 4 10 ते1 सुयन्त्रित, दे5 11 सुत यत (→सुसयतम्) –c) शा1 न्यर्यं, ब3 दृम्य, दे1 3 10 नाम्य, ते1 नामा (→न्यस्य) दे7 ततूर्णं धनुराकृष्य –d) शा1 [अ]रय बाणाश्चशक्तनिबली; दे7 बाणश्च शकुनिर्बली

७५ दे1 2 4 7 ते1 ७५ cd–७६ ab ○ (ह स) –a) दे11 वर (→वट) –b) ब1 3 दे1 4 7 ते1 समुमो° (→जटा मो°) ब1 3 दे1 4 7 ते1 जटा (→तदा) –c) दे9 नापि (→न च) कारा शक्नोमि, का1 दे10 न1 शक्तोति- (→शक्नोति); ब1 2 दे3 5 10 स मत्त, ब3 न1 स यन्तु, दे9 स युक्त (→सच्छन्न)

७६ दे1 2 4 7 ते1 ab ○ –a) कारा ब2 3 दे3 शकि (दे3 °क्ति) ता, का1 ब1 न1 नक्ति, दे9 शक्तवान् (→शक्तिता) –b) ब1 स मु (ने) मो°, ब2 3 दे5 9 न1 समुमो (ब2 दे9 न्मो°) दे3 सह्मो°, दे10 तत्रमो°, मुक्ते समं मो° (→सप्रमो°) –c) दे9 [प्र] व तीर्य (→[अ] व तीर्ण) –d) दे7 प्रहित (→सहित)

७७ –a) व1 दे4 स (→च); ते1 बाग (→बागान्) दे5 11 जग्राह शकुनिर्बाण –b) शा1 ब1 3 °मण्डलम्, दे10 °मण्डप, +°भजर (→°मण्डपम्) –c) शा1 °चन्द्रो रता कारा °चन्द्रण, दे1 3 7 9 ते1 °चन्द्राभ्यां, न1 °चन्द्राभ (→°चन्द्रस्ता) –d) ब2 *दे1 न1 शाखा (→शाखा) दे1 विच्छेद (→चिच्छेद) का2 सन्निधौ* न1 स द्विधा (→स त्रिधा)

७८ –a) दे3 4 शाखाया (→शाखया) का1 2 ब1 3 कृन्त (ब3 त्य) या, दे3 तपाया दे4 न तया(?) (→कृतया) दे5 शापाया कृतचाप सो –b) ब1 3 भारवाह (→भारवाही) ते1 शाखाहीनस्तपोधन –c) ब1 °मा इश (→°मार्गेण) –d) दे7 सोवतीर्णो, दे9 अवतीर्णा (→अवतीर्णो) दे11 पाद (पाद) पान् (→पादपाद)

६४ ७९ तस्मिंस्तदा स्वे तनये ऋतध्वज
स्नाते नरेन्द्रस्य सुतेन धन्विना ।
जाबालिना भारवहेन संयुत:
समाजगामाथ नदीं स सूर्यजाम् ॥ ७९

इति श्रीवामनपुराणे अष्टात्रिंशोऽध्याय ॥३८॥

# ३९

दण्डक उवाच ॥※
एतस्मिन्नन्तरे बाले यक्षासुरसुते शुभे ।
समागते हरं द्रष्टुं श्रीकण्ठं योगिनां वरम् ॥ १
ददृशाते परिम्लानसंशुष्ककुसुमं विभुम् ।
बहुनिर्माल्यसंयुक्तं गते तस्मिन् ऋतध्वजे ॥ २
ततस्तं वीक्ष्य देवेशं ते उभे अपि कन्यके ।
स्नापयेतां विधानेन पूजयेतामहर्निशम् ॥ ३
ताभ्यां स्थिताभ्यां तत्रैव ऋषिरभ्यागमद् वनम् ।
द्रष्टुं श्रीकण्ठमव्यक्तं गालवो नाम नामतः ॥ ४
स दृष्ट्वा कन्यकायुग्मं कस्येदमिति चिन्तयन् ।

---

७९ —a) का1 ब2 3 दे2 3 ते1 तथा, दे1 याद (→तदा) कारा [-अ] स्मिन्, दे1 स्व , दे10 ते (→स्वे) दे7 ऋतुध्वज (→ऋतध्वज) —b) ब1 स्थिते ब3 दे1 3 ते1 ततो (→स्नाते) शा1 स तेन (→सुतेन) —c) ब3 यावालिना, दे1 2 जा (दे2 ज) पालिना (→जाबालिना) दे7 स्वार° (→भार°) —d) ब1 सूर्यता (→सूर्यजां); शा1 * * * * * * * र स सूर्यजाम् कारा का1 स सूयजामाशु जगाम तापस

पुष्पिका—शा1 इति श्रीवामनपुराणे भैरवप्रादुर्भावे कारा का1 दे10 इति श्री (कारा [श्री]) वामनपुराणे भैरवप्रादुर्भावे दण्डकोपाख्याने, ब1 दे3 7 इति श्रीवामनपुराणे ब2 3 दे1 ॰ 4 इति वामनपुराणे दे5 11 इति वामनपुराणे भैरवप्रादुर्भावे, दे9 श्रीवामनपुराणे ते1 मुवे इति श्रीवामनपुराणे पुलस्त्यनारदसंवादे न1 इति श्रीवामनपुराणे दण्डोपाख्याने अध्यायनाम—शा1 का1 2 ब1 3 दे1 4 7 9 10 ते1 न1 ○ कारा ऋषिपुत्रमोचन नाम दे5.11 दण्डकोपाख्यानम् अध्यायसंख्या—शा1 ब3 दे॰ 5 11 ○ कारा एकसप्ततितमोऽध्याय, का1 ॥५४॥ का॰ अध्याय ॥५३॥ ब1 एकोनत्रिंशत्तितमोऽध्याय, ब॰ एकोनत्रिंशत्तमोऽध्याय, दे1 10॥६४॥ दे3 ॥६३॥ दे4 एकोनत्रिंशोऽध्याय दे7 पञ्चमोऽध्याय, दे9 न1 सप्त त्रिंशोऽध्याय, ते1 पञ्चषष्टितमोऽध्याय, मुवे षट्षष्टितमोऽध्याय

३९

[ ब2 पुस्तके अयमध्याय ६४ श्लोकादारभ्य अध्यायसमाप्ति यावत् खण्डितम् ]

※ शा1 दे9 दण्डक, ब॰ 3 ते1 दण्ड उवाच, दे1 3 4 दण्डक

उ दे7 दण्ड उ, न1 दण्ड

१. —a) ब3 दे9 न1 काले दे4 बालो, दे11 बाल (→बाले) —b) दे9 द (य?) क्षा° (→यक्षा°); दे1 3 9 ते1 मुने, दे5 11 उभे (→शुभे) —c) दे9 हरिं (→हरं) —d) दे1 4 ते1 त मुनि (→श्रीकण्ठ)

२ ते1 d 'गते' इत्यारभ्य ७० 'मजानत' इति पर्यन्त नास्ति (द्र स) —a) शा1 कारा का1 2 ब1 3 दे॰ 5 9 परिम्लानं, ब1 परिम्ला *, दे4 परिम्लाने (→परिम्लान ) —b) दे7 °सशुक्ल° (→°संशुष्क°), दे9 °विमल (→°कुसुमं) —c) दे1 संयुक्तं बहुभिर्माल्ये

३ ते1 ○ (द्र २ पा वि ) —a) शा1 ब॰3 दे1-4 तु ब1 तद् (→त) —b) कारा का1 ॰ ब3 दे1 4 7 10 चर (→अपि); न1 उभे अपि च कन्यके —c) शा1 स्नापयेतुं (?) का॰ स्नापयेत, ब3 दे1 4 7 स्नापयेते (→स्नापयेतां); दे3 न1 स्नापयेत (न1 °त्ता) सुविश्वस्ते —d) ब2 दे1 4-7 पूजयेते (→पूजयेताम्)

४ ते1 ○ (द्र २ पा वि ) —a) दे11 ताभ्यां तत्रैव पुत्राभ्यां —b) दे3 ऋषिम्, दे4 मुनिर् (→ऋषिर्) न1 ऋषिभ्या मगमद् वनं —c) दे4 मध्यय (→मव्यक्त) —d) दे5 ॰ गालवे ना (दे5 न)म (→गालवो नाम)

५ ते1 ○ (द्र २ पा वि ) —b) दे11 कस्ये [द] मिति श्चिन्तयत् —c) ब3 दे1 4-7 मुनि (→मुनि); ब1 ॰ भूप्वा, दे स्नातुं (→स्नाता) —d) दे9 निर्मले (→विमले)

प्रविवेश शुचि स्नात्वा कालिन्द्या विमले जले ॥ ५
ततोऽनुपूजयामास श्रीकण्ठ गालवो मुनि ।
गायेते सुस्वर गीत यक्षासुरसुते तत ॥ ६
तत स्वर समाकर्ण्य गालवस्ते अजानत ।
गन्धर्वकन्यके चैते सदहो नात्र विद्यते ॥ ७
सपूज्य देवमीशान गालवस्तु विधानत ।
कृतजप्य. समध्यास्ते कन्याभ्यामभिवादित ॥ ८
तत पप्रच्छ स मुनि कन्यके कस्य कथ्यताम् ।
कुलालङ्कारकरणे भक्तियुक्ते भवस्य हि ॥ ९
तमूचतुर्मुनिश्रेष्ठ याथातथ्य शुभानने ।
जातो विदितवृत्तान्तो गालवस्तपता वर. ॥ १०
समुष्य तत्र रजनीं ताभ्यां सपूजितो मुनि. ।
प्रातरुत्थाय गौरीश सपूज्य च विधानत ॥ ११
ते उपेत्याब्रवीद्यास्ये पुष्करारण्यमुत्तमम् ।
आमन्त्रयामि वा कन्ये समनुज्ञातुमर्हथ. ॥ १२
ततस्ते ऊचतुर्ब्रह्मन् दुर्लभ दर्शन तव ।
किमर्थं पुष्करारण्य भवान् यास्यत्यथादरात् ॥ १३
ते उवाच महातेजा महत्कार्यसमन्वित ।
कार्तिकी पुण्यदा भावि मासान्ते पुष्करेषु हि ॥ १४
ते ऊचतुर्वयं यामो भवान् यत्र गमिष्यति ।
न त्वया स्म विना ब्रह्मन्निह स्थातु हि शक्नुव. ॥ १५
बाढमाह ऋषिश्रेष्ठस्ततो नत्वा महेश्वरम् ।  वें ६५

---

६ ते$_1$ ○ (द्र २ पा वि ) a) कारा ततस्तु ब$_1$ ततोसौ (→ततोऽनु ) –c) शा$_1$ दे$_5$ गीयते का$_2$ दे$_{9\ 11}$ गाय (ये?) ते दे$_7$ गायन्ते (→गायेते) कारा गायेते स्वरसवीत –d) ब$_{1\ 3}$ यथासुर°, दे$_5$ यक्षा ** (→यक्षासुर°) दे$_9$ उभे (→तत )

७ ते$_1$ ab ○ (द्र २ पा वि ) –a) दे$_{11}$ ** (→तत ); दे$_{1-3}$ स (दे$_2$ स) गीतमाकण्य दे$_4$ तद् गीतमाकण्य (→स्वर समाकर्ण्य) –b) दे$_{1\ 3}$ गालव (वो ?) द्र मुवे गालवो द्र (→गालवस्ते); का$_1$ व्यजानत दे$_4$ प्रजानत (→अजानत) –c) दे$_3$ चैव (→चैते) –d) ब$_3$ न च दे$_9$ नव (→नात्र) दे$_{11}$ * द्यते (→विद्यते)

८ –b) दे$_5$ *** (→गालवस); दा$_1$ कारा का$_{1\ 2}$ दे$_{10\ 11}$ महामुनि (→विधानत ) –c) दे$_3$ कृतजप्य (प्य ?) (→कृतजप्य ) शा$_1$ का$_2$ दे$_3$ समाध्यास्ते कारा समव्यास्त दे$_{10}$ समम्या (दे$_{10}$ °म्य ?) स्ते (→समध्यास्ते) –d) शा$_1$ कारा का$_{1\ 2}$ कन्यकाभ्या स वदित ब$_1$ ° कन्याभ्यामभि (ब$_1$ °ति) वोदित ब$_3$ कन्याभ्यामभिवन्दित

९ –a) शा$_1$ ब$_{1\ 2}$ दे$_3$ पप्रच्छ (→पप्रच्छ) –d) ब दे$_9$ भविष्यत दे$_7$ भविष्यथ (→भवस्य हि)

१० –a) ते$_1$ ते ऊचतुर (→तमूचतुर) –b) का यथातथ्य +याथातथ्य ब$_{1\ 2}$ दे$_{3\ 10}$ ते$_1$ न$_1$ यथातथ्य (→याथातथ्य) –c) कारा का$_{1\ 2}$ दे$_{5\ 9\ 11}$ तता ब$_2$ जाते ब$_3$ यातो (→जातो) –d) ब$_3$ तापसां दे$_3$ तपसा (→तपता)

११ –a) ब$_3$ स वस्य दे$_{11}$ समुष्य(ष्य) न$_1$ (स?) भमुष्य (→समुष्य) –b) शा$_1$ संपूज्यते (→सपूजितो) c) शा$_1$ गौरे(री?)श (→गौरीश)

१२ –a) शा$_1$ यासी, कारा यामि दे$_2$ यासे दे$_3$ यास्ते (→यास्ये) –c) ब$_1$ ते दे$_4$ न$_1$ मा दे $_{11}$ वा (वा ?) (→वा) ब$_{1\ 2}$ दे$_{4\ 10}$ न$_1$ तन्व्यौ ब$_3$ सख्यौ दे$_{1\ 3}$ तप्तौ (→कन्ये) दे$_9$ मामन्त्रयेह भवत्यौ ते$_1$ अन त यामि वा तस्थौ d) ब$_1$ दे$_{1\ 5\ 7\ 9\ 10}$ ते$_1$ मामनुनातु, न$_1$ ममानुनातु (→समनुज्ञातु) का$_2$ ब$_{1\ 3}$ दे$_{4\ 5\ 7\ 9\ 11}$ न$_1$ महय (→मर्हथ )

१३ –a) ब$_{?\ 3}$ दे$_7$ तमूचतुर (→ते ऊचतुर) –c) ब$_{1\ 3}$ दे$_{1\ 5\ 7\ 10}$ ते$_1$ पुष्करारण्ये (→पुष्करारण्य) –d) दे$_{11}$ प्रादरम् (→थादरात) दे$_4$ भगवान् या यथादरात दे$_7$ भगवान् *याति सादरात् न$_1$ भवान् यास्ये(?)ऽयथादरात्*

१४ –a) शा$_1$ कारा का$_{1\ 2}$ स (→ते); दे$_7$ ततोऽब्रवीत् (→ते उवाच); दे$_5$ महामन्ते(?) (→महातेजा) b) ब$_{1\ 2}$ दे$_{5\ 10}$ महत्कार° दे$_{1\ 3}$ महद्धार° दे $_7$ सो°कार°(दे °र्य) मुवे अहकार° (→महत काय°) ब$_{1\ 3}$ दे$_{7\ 10\ 11}$ –समन्विता (दे$_7$ °त) (→समन्वित ) दे$_9$ न$_1$ ऋषि परमधार्मिक –c) कारा पुण्यदा भाव्य ब $_3$ पुण्यदात्री वै (ब हि) दे$_5$ पुण्यन्न वेला ते$_1$ पुण्य दाता दि (?) न$_1$ पुण्यदा भाति (→पुण्यदा भावि) –d) ब$_3$ पुष्करे च हि, दे$_4$ पुष्करेषु वै (→पुष्करेषु हि) दे$_{1\ 3\ 5}$ ते$_1$ पुष्करेष्वे (दे °स्तु?) व कार्त्तिके

१५ –b) ब$_2$ गमिष्यते (→गमिष्यति) –c) शा$_1$ त्वया स कारा दे $_9$ त्वया स्वो ब$_1$ त्वयास्मिन्, दे$_5$ त्वयाद्य दे$_{7\ 11}$ त्वयास्मद् (→त्वया स्म) –d) शा$_1$ कारा दे $_9$ न$_1$ न शक्नुव ब$_1$ हि शङ्कर. ब$_3$ दे$_4$ हि शक्नुम दे$_{1\ 3}$ ते$_1$ समुत्सहे, दे$_7$ **** (→हि शक्नुव )

१६ दे$_7$ a○ –a) का$_{1\ 2}$ दे$_{1\ 4}$ ते$_1$ न$_1$ मुनि°

६१ १६ गते ते ऋषिणा सार्द्धं पुष्करारण्यमादरात् ॥ १६
तथाऽन्ये ऋषयस्तत्र समायाताः सहस्रशः ।
पार्थिवा जानपद्याश्च मुक्त्वैकं तमृतध्वजम् ॥ १७
ततः स्नाताश्च कार्तिक्यामृषयः पुष्करेष्वथ ।
राजानश्च महाभागा नाभागेक्ष्वाकुसंयुताः ॥ १८
गालवोऽपि समं ताभ्यां कन्यकाभ्यामवातरत् ।
स्नातु स पुष्करे तीर्थे मध्यमे धनुपाकृतौ ॥ १९
निमग्नश्चापि ददृशे महामत्स्यं जलेशयम् ।
षष्ठीभिर्मत्स्यकन्याभिः प्रीयमाणं पुनः पुनः ॥ २०
स ताश्चाह तिमिर्मुग्धाः यूयं धर्मं न जानथ ।
जनापवाद घोरं हि न शक्तः सोढुमुल्बणम् ॥ २१
तास्तमूचुर्महामत्स्यं किं न पश्यसि गालवम् ।
तापस कन्यकाभ्यां वै विचरन्तं यथेच्छया ॥ २२
यद्यसावपि धर्मात्मा न विभेति तपोधनः ।
जनापवादात् तत्किं त्वं विभेषि जलमध्यग. ॥ २३
ततस्ताश्चाह स तिमिर्नैष वेत्ति तपोधनः ।
रागान्धो नापि च भय विजानाति सुबालिशः ॥ २४
तच्छ्रुत्वा मत्स्यवचनं गालवो व्रीडया युत. ।
नोच्चचार निमग्नोऽपि तस्थौ स विजितेन्द्रियः ॥ २५
स्नात्वा ते अपि रम्भोरू समुत्तीर्य तटे स्थिते ।
प्रतीक्षन्त्यौ मुनिवर तद्दर्शनसमुत्सुके ॥ २६
वृत्ता च पुष्करे यात्रा गता लोका यथागतम् ।

---

(→ऋषि°) –b) दे$_{1}$ मत्वा, दे$_{2}$ ते$_{1}$ गत्वा (→नत्वा) –c) दे$_{1\ 4}$ ते$_{1}$ च (→ते)

१७ –a) दे$_{10\text{-}11}$ तथान्य (→तथान्ये) कारा दे$_{4}$ न$_{1}$ मुनयस् (→ऋषयस्), दे$_{4}$ पुत्र (?) (→तत्र) –c) ब$_{2\ 3}$ जानपत्याश्च, दे$_{1\ 3}$ जानपदाश्च, दे$_{2\ 11}$ जानपद्यश्च, ते$_{1}$ जानपदाश्चैव मुवे वा जानपदा (→जानपद्याश्च) –d) दे$_{1\ 4}$ ते$_{1}$ तु (→त) ब$_{1\ 3}$ मुक्तैकान्त (→मुक्त्वैक तम्) दे$_{9}$ मुक्तागमृषभध्वज.

१८ –a) शा$_{1}$ कारा का$_{1}$ तत्र (→तत ) शा$_{1}$ का$_{1}$ ब$_{1}$ ॰ दे$_{7}$ स्नात्वा तु, कारा ब$_{3}$ न$_{1}$ स्नातास्तु, का$_{2}$ स्नात्वा च दे$_{1\ 3}$ स्नातु च, दे$_{4}$ स्नान तु, ते$_{1}$ स्नातु तु (→स्नाताश्च) दे$_{9}$ तत स्नात्वा तु ऋषय –b) ब$_{3}$ पुष्करे सुख न$_{1}$ पुष्करे परे (→पुष्करेष्वथ) दे$_{1}$ पुष्करे पुष्करेश्वरे –d) दे$_{2}$ नाभगो° (→नाभागे°); ब$_{3}$ इक्ष्वाकुवाजा, दे$_{7}$ इक्ष्वाकुनन्दन (→क्ष्वाकुसयुता )

१९ b) दे$_{9}$ तत स्नातु (→कन्यकाभ्या) –c) दे$_{1\ 3}$ ते$_{1}$ स स्नातु, दे॰ स स्नात्वा, दे$_{1}$ * स्नातु, दे$_{9}$ स्नातु तु (→स्नातु स): दे$_{1\text{-}4\ 9}$ ते$_{1}$ पुष्करजले न$_{1}$ पुष्करमर्ये (?) (→पुष्करे तीर्थे) –d) कारा ब$_{3}$ दे$_{1\ 9}$ धनुराकृतौ, मुवे धनुषा प्लुतौ (→धनुपाकृतौ)

२० दे$_{9}$ २० c–२२ b ○ –b) ब$_{1}$ जलाशये दे$_{7}$ जलोद्भव (→जलेशय) –c) दे$_{3}$ वह्नीति (→वह्नीभिर ) –d) दे$_{1\text{-}4}$ ते$_{1}$ मुहुर्मुहु ( →पुन पुन )

२१ दे$_{9}$ ○ (द्र २० पा वि ) –a) शा$_{1}$ का$_{1}$ ॰ स ताश्चा हेति मे मुग्धा ब$_{1}$ स ता ताद्देतिमुग्धा (?), ब॰$_{3}$ स ता श्चा (ब॰ श्चा) हेति (ब॰ °सि) भि (ब$_{2}$ °वि)मग्ना, दे$_{1\text{-}3}$ स ताश्चाह विनिर्मुक्ता, दे$_{1}$ मुताश्चाह * निर्मुग्धा, दे$_{7}$ स तास्त्वाहतिभिर्मुग्धा –b) दे$_{1\ 3}$ ते$_{1}$ इमं (→यूयं) दे$_{1\ 2}$ ते$_{1}$ जानत (→जानथ) –c) दे$_{10}$ स (→हि) –d) ब$_{1}$ दे$_{2}$ क (→न)

२२ दे$_{9}$ ab ○ (द्र २० पा वि) –a) दे$_{1\ 3}$ तास्ता ऊचुर् (→तास्तमूचुर्) न$_{1}$ त ऊचतुर्महामत्स्य –b) दे$_{1\ 3\text{-}5\ 10}$ ते$_{1}$ पश्याम (दे$_{3\ 5}$ °मि), दे$_{7}$ पश्यथ (→पश्यसि) –d) दे$_{1}$ ते$_{1}$ विवदत (→विचरन्त)

२३ ब$_{1\ 3}$ दे$_{10}$ २३ c–२४ b ○ (द्र स ) –a) दे$_{10}$ सहसा° (→यद्यसा°) –b) दे$_{9}$ बिभेमि (→बिभेति) –c) दे$_{1\ 2\ 4\ 7}$ जनापवान्त किं त्व, दे$_{3}$ जनापवाद सत् किं त्व, दे$_{9}$ जनापवादात् किल, ते$_{1}$ जनापवान्त किञ्चित –d) ते$_{1}$ जाति° (→जल°)

२४ ब$_{1\ 3}$ दे$_{10}$ ab ○ (द्र २३ पा वि ) –a) दे$_{1\ 4}$ ते$_{1}$ ततश्चाप्याह, दे$_{9}$ तत स ताश्च (→ततस्ताश्चाह) दे$_{4}$ न$_{1}$ मुनिर् (→तिमिर्) –c) ते$_{1}$ रागाढ्यो (→रागान्धो) शा$_{1}$ कारा का$_{1\ 2}$ दे$_{5\ 10\ 11}$ मानव भय (→नापि च भय); ब$_{1\ 2}$ रागान्धानां न च भय, ब$_{3}$ रागान्धो नैव च भय दे$_{9}$ रागान्धो नापि तु भयं –d) शा$_{1}$ कारा का$_{1\ 2}$ किं जानाति (→विजानाति) न$_{1}$ सुबालिन (→सुबालिश )

२५ –b) कारा ब$_{1\ 3}$ व्रीडयान्वित, दे$_{9}$ व्रीडयावृत (→व्रीडया युत ) –c) दे$_{9}$ निमग्नोप्सु (→निमग्नोऽपि)

२६ –a) ब$_{1}$ तेप्यपि, ब$_{3}$ ते तेपि, दे$_{1\ 3}$ द्वे तेपि, दे$_{1\ 7}$ ते त्वपि, दे$_{9\ 10}$ स्नातेपि, ते$_{1}$ ते द्वपि (→ते अपि) –b) ब$_{3}$ यथा स्थिते (→तटे स्थिते) –c) का॰ दे$_{1\ 7\ 9}$ न$_{1}$ प्रतीक्ष्यन्त्यं, दे$_{1\ 3}$ प्रतीक्षन्तो, दे॰$_{5\text{-}10}$ प्रतीक्षन्त्यो (→प्रतीक्षन्त्यौ) –d) दे$_{9}$ दर्शन (→तद्दर्शन )

२७ –a) ब$_{1}$ दे$_{1\ 3}$ वृत्ता तु, दे$_{9}$ वृत्ताश्च ते$_{1}$ वृत्तानु (→वृत्ता च) –b) ब$_{1\ 2}$ दे$_{1\text{-}9}$ गतो लोके, ब$_{3}$ दे॰ ॰ $_{10}$ ते$_{1}$ न$_{1}$ गतो लोको (दे$_{2}$ °क, दे$_{3}$ °के) (→गता लोका): दे$_{3}$ ते$_{1}$ °मत (→°गत)

ऋषयः पार्थिवाश्चान्ये नाना जानपदास्तदा ॥ २७
तत्र स्थितैका सुदती निश्वकर्मतनूरुहा ।
चित्राङ्गदा सुचार्वङ्गी वीक्षन्ती तनुमध्यमे ॥ २८
ते स्थिते चापि वीक्षन्त्यौ प्रतीक्षन्त्यौ च गालवम् ।
संस्थिते निर्जने तीर्थे गालवोऽन्तर्जले तथा ॥ २९
ततोऽभ्यागाद् वेदवती नाम्ना गन्धर्वकन्यका ।
पर्जन्यतनया साध्वी घृताची गर्भसंभवा ॥ ३०
सा चाभ्येत्य जले पुण्ये स्नात्वा मध्यमपुष्करे ।
ददर्श कन्यात्रितयमुभयोस्तटयोः स्थितम् ॥ ३१
चित्राङ्गदामथाभ्येत्य पर्यपृच्छदनिष्ठुरम् ।
कामि केन च कार्येण निर्जने स्थितवत्यसि ॥ ३२
सा तामुवाच पुत्रीं मां विन्दस्व सुरवर्धकेः ।
चित्राङ्गदेति सुश्रोणि विख्यातां विश्वकर्मणः ॥ ३३
साहमभ्यागता भद्रे स्नातुं पुण्यां सरस्वतीम् ।
नैमिषे काञ्चनाक्षीं तु विख्यातां धर्ममातरम् ॥ ३४
तत्रागताथ राज्ञाऽहं दृष्टा वै दर्भकेण हि ।
सुरथेन स कामार्तो मामेव शरणं गतः ॥ ३५
मयात्मा तस्य दत्तश्च सखीभिर्वार्यमाणया ।
ततः शप्ताऽस्मि तातेन वियुक्तास्मि च भूभुजा ॥ ३६
मर्तुं कृतमतिर्भद्रे वारिता गुह्यकेन च । वे. ६५.

—c) न1 मुनय (→ऋषय) —d) कारा का2 ब1 दे5 11 जन पनास्, दे9 जानपदे (→जानपदास्), शा1 ब1 3 दे1 4 7 ते1 न1 तथा, दे9 स्थित (→तदा)

२८ a) दे3 तत्रा- (→तत्र), शा1 ब1 स्थितेका (→स्थितैका) दे3 ते1 मदयती, दे7 रुदती, दे11 मुदति (→सुदती) —b) कारा दे4 9 10 न1 °तनूद्भवा, दे7 11 °तनूरुह (?), ते1 °तनूस्तदा (?) (→°तनूरुहा) —c) शा1 का2 दे3 °चार्वाङ्गी (→°चार्वङ्गी) —d) शा1 कारा का1 दे7 न1 वीक्ष्यन्ती, का2 दे1 3 11 वीक्ष(का2 °क्ष्य)ती, दे9 वीक्षति (→वीक्षन्ती) शा1 का1 2 तनुमध्यमा, दे1 4-7 9 ते1 तनुमध्यमा (→तनुमध्यमे)

२९ —a) शा1 कारा का1 ० ता स्थिता (→ते स्थिते) दे1 4 11 ते1 वापि, दे10 अपि दे5 * पि, दे9 वा * (→चापि) कारा का1 न1 वीक्ष्यन्त्यौ, दे2 वीक्षत्यो (→वीक्षन्त्यौ) —b) शा1 कारा का1 ब1 3 दे7 न1 प्रतीक्ष्यन्त्यो (→प्रतीक्षन्त्यौ), दे1 3 ते1 गालव मुनिसत्तमम्, दे11 च गालवा**** —c) ब1 निर्ज्जने (→निर्जने) —d) शा1 का1 ० तदा, कारा स्थित (→तथा)

३० —a) शा1 ते1 वेगवती, दे7 9 न1 देववती (→वेदवती) —c) शा1 का2 ब1 3 दे5 पर्यन्य (→पर्जन्य), शा1 कारा का1 ० दे9 10 -कन्यका (→तनया)

३१. —a) शा1 कारा का1 2 तदा, दे1 3 ते1 कुते (→जले); ब1 ० स्नात्वा (→पुण्ये) दे11 स चाभ्येत्य सत्पुण्येन, मुदे कूते पुण्ये समभ्येत्य —b) ब1 पुण्ये मध्यमपुष्करे, न1 स्नात्वा पुष्कर मध्यमे —c) शा1 कारा, का1 2 ब3 दे5 7 द्वितय (→त्रितय) —d) का1 उभये,+योस्, दे9 उभयो (स्तु) (→उभयोस्); शा1 का1 2 तीरसंस्थित, कारा तीर्थसंस्थित, ब3 तथ्ययो स्थित (→तटयो स्थितम्)

३२. —a) दे1 4 ते1 चित्राङ्गदा (दे2 °दा) समभ्येय —b) ते1 पर्यपृच्छत (→पर्यपृच्छत्) —d) दे9 शयने (→निर्जने); का2 दे9 न1 स्थितवत्यपि, दे11 स्थितवानसि (→स्थितवत्यसि).

३३ —a) का2 तासाम्, ब1 दे7 सा याम्, दे2 सतीम् (→सा ताम्), का2 दे3 पुत्री, दे11 पु * (→पुत्रीं) न1 पुत्रा (?) ता, ब1 *** (→पुत्रीं मा) —b) शा1 का2 दे2 3 ते1 °वार्द्धके, दे7 वाधुके, दे3 °वर्द्धके (→°वर्धके); ब1 विन्दस्व वर्द्धके सुतां —c) ब3 विख्याता (→सुश्रोणि) —d) कारा का1 दे1 4 विख्याता, ब3 स्वसुता, दे7 दुहिता (→विख्याता)

३४ —a) दे4 ग्रप्यागता, दे9 अभ्यागता (→अभ्यागता). —b) कीर्तिपुण्या, दे11 पुण्या स्नातु (→स्नातुं पुण्या) —c) शा1 कारा का1 2 नैमिप (→नैमिषे), दे4 च (→तु) —d) दे4 °मानत (→मातरम्)

३५ —a) ब1 तत्रागतोय राज्ञा हि, ब3 तत्रस्था ?*राज्ञाहं, दे1 3 ते1 तत्रागता सुराहांहं, दे5 तत्रागतोह राताहं, दे9 तत्रगता च राता * —b) शा1 ब2 दे4 7 11 दृष्ट्वा, ब3 दृष्ट्वा,+ज्ञात्वा, दे1 3 5 10 ते1 दृष्टा (दे3 °ष्ट) (→दृष्टा); दे3 गभवेन, न1 दर्भकेण (→दर्भकेण) —c) शा1 कारा का1 2 सुरथ (शा1 °थे) श्च, ते1 सुरनाम (→सुरथेन); दे5 स * मार्तो (→स कामार्तो) —d) दे2 मामेक (→मामेव), शा1 गता (→गत)

३६ —a) ब1 मयार्थितस्य, दे1 3 स्नातस्य (दे1 °श्च); ब1 2 दत्त (ब1 °त्ता) स्य, दे4 दत्तस्तु (→दत्तश्च) —b) दे3 धार्यमाणया (→वार्यमाणया) —c) न1 शप्तास्मि तातेन पुरा —d) ब1 दे4 11 ते1 विमुक्तास्मि (→वियुक्तास्मि); न1 तु (→च)

३७ —a) शा1 मर्तुं (?) (→मर्तुं) —b) ब1 2 दे7 हि, दे1 तु (→च) —c) दे7 10 प्रगमद् (→प्रगमं) दे11 यो-कण्ठमाश्रमं द्रष्टुं —d) शा1 कारा का1 2 दे1 4 11 ते1 गोदावरी-,

५ ३७ श्रीकण्ठममग्रं द्रष्टुं ततो गोदावर जलम् ॥ ३७
तस्मादिम समायाता तीर्थप्रवरमुत्तमम् ।
न चापि दृष्टः सुरय स मनोह्लादन. पति' ॥ ३८
भवती चात्र का बाले वृत्ते यात्राफलेऽधुना ।
समागता हि तच्छस मम सत्येन भामिनि ॥ ३९
साब्रवीच्छ्रयता याऽसि मन्दभाग्या कृशोदरि ।
यथा यात्राफले वृत्ते समायाताऽसि पुष्करम् ॥ ४०
पर्जन्यस्य घृताच्या तु जाता वेदवतीति हि ।
रममाणा वनोद्देशे दृष्टास्मि कपिना सखि ॥ ४१
स चाभ्येत्याब्रवीत् का त्व यासि देववतीति हि ।
आनीतास्याश्रमात् केन भूपृष्ठान्मेरुपर्वतम् ॥ ४२
ततो मयोक्तो नैवास्मि कपे देववतीत्यहम् ।
नाम्ना वेदवतीत्येव मेरोरपि कृताश्रया ॥ ४३
ततस्तेनातिदुष्टेन वानरेण ह्यभिद्रुता ।
समारूढास्मि सहसा बन्धुजीव नगोत्तमम् ॥ ४४
तेनापि वृक्षस्तरसा पादाक्रान्तस्त्वभज्यत ।
ततोस्य विपुला शाखा समालिङ्ग्य स्थितात्वहम् ॥ ४५
तत प्लवङ्गमो वृक्ष प्राक्षिपत् सागराम्भसि ।
मह तेनैव वृक्षेण पतितास्म्यहमाकुला ॥ ४६
ततोम्नरवलाद् वृक्ष निपतन्त यदृच्छया ।

---

ब$_2$ दे$_7$ गोदावरीं (→गोदावर) दे$_4$ जले दे$_7$ शुभा (→जलम्)

३८ –a) शा$_1$ का$_1$ ॰ दे$_1$ 4.5 10 इद (→इम) –b) का$_2$ दे$_7$ तीर्थं (→तीर्थ) दे॰ उत्तर (→उत्तम) –c) दे$_1$ 5 गुरथ (?) दे$_{11}$ न$_1$ सुरथो (?) (→सुरथ) –d) न$_1$ सु (→स); शा$_1$ मनि, दे$_3$ मनो, दे$_7$ मया (→मनो) ब$_1$ °दु खनुद (→°ह्लादन) दे$_{11}$ शुचि (→पति)

३९. –a) ते$_1$ द्रवती (?) (→भवती) ब$_1$ ॰ कात्र (ब॰ °द्र) वा दे$_1$ चात्र वा (→चात्र का); दे$_1$ काले (→बाले) –b) गा$_1$ वृत्त दे$_{11}$ वृत्ता (→वृत्ते) ब$_1$ फले ब॰ वन (→[-अ] धुना) –c) दे$_9$ न$_1$ °गतासि (→°गता हि) शा$_1$ कारा का$_1$ 2 गच्छन्ति, ब$_3$ तत् सत्य (→तच्छस) –d) शा$_1$ का$_1$ ॰ सम, कारा जना (→मम); कारा मागण (→सत्येन); ब$_1$ 3 भाविनि, दे$_3$ 4 7 भामिनी दे$_3$ तामिन्ति (→भामिनि)

४० –a) दे॰ स (?) (→सा) दे$_1$ 3 चास्मि (→यास्मि) –b) दे$_3$ मन्दभाग्य, दे$_{11}$ मन्दभागा (→मन्दभाग्या) शा$_1$ कारा का$_1$ 3 ब$_1$ दे$_1$ 9 10 ते$_1$ न$_1$ कृशोदरी (→कृशादरि) –c) दे$_9$ यत्र (→यात्रा) –d) ब समायातास्मि (→समायातास्मि), दे॰ पुष्करे (→पुष्करम्)

४१ –a) ब$_1$ ॰ दे$_4$ च ते$_1$ हि (→तु) –b) शा$_1$ दे$_{11}$ जात (?) दे$_1$ ॰ जातो (→जाता) शा$_1$ कारा का$_1$ ॰ वेदवतीत्यहम्, ब$_1$ वेदवतीति ह, दे वेदवती विति (→वेदवतीति हि) –c) दे$_7$ रममागविनो देशे (?) –d) दे$_{11}$ दृष्टासि (→दृष्टास्मि)

४२ दे$_{11}$ ४२b 'देववतो ४३-c नाम्ना' इति यावत् ○ (ह. सं) –a) दे$_1$ 4 सो तु, दे$_7$ सत्वं दे$_1$ तन्वि, दे$_{10}$ क त्वं (→का त्वं) –b) शा$_1$ का$_{1.2}$ वेदवतीति हि ब$_3$ वेदवती इति दे$_1$ 3 ते$_1$ वेदवति (दे$_3$ °ती) च हि, दे$_3$ देववतीति च दे$_{10}$ वेदवतीव हि (→देववतीति हि) –c) शा$_1$ कारा का$_1$ ॰ आनीता स्वाश्रमं केन ब$_3$ आनीतास्याश्रमे रम्ये, दे$_1$ 3 ते$_1$ आनीतासि (दे$_3$ °स्मि) श्रमात् केन दे$_4$ आनीतास्वाश्रमात्तेन दे$_7$ आनीतास्याश्रमात्केन दे$_9$ आनीतास्म्यथ सा तेन न$_1$ आनीतास्याश्रम केन –d) गा$_1$ कारा का$_1$ ॰ भूपृष्ठ (→भूपृष्ठात्) गा$_1$ कारा का$_1$ ॰ पर्वतात् (→पर्वतम्)

४३ दे$_{11}$ ॰ तत –c नाम्ना ○ –a) ब$_1$ दे$_1$ 3 मयोक्ते दे$_4$ 7 मयोक्त (→मयोक्तो) दे$_1$ ॰ ते$_1$ नास्मीति दे$_3$ नास्मी हि (→नैवास्मि) –b) गा$_1$ कपो (?) ब 3 रुपे (→कपे); शा$_1$ का$_1$ 2 ब$_1$ 3 दे$_1$ 3 7 10 ते$_1$ वेद° (→देव°); ब$_1$ [अ] स्म्यहं, ब$_2$ 3 दे$_5$ 10 ह्यह दे$_9$ त्वह (→[इ] त्यह) –c) दे$_3$ 9 11 न$_1$ देव° (→वेद°) न$_1$ सा च देव° (→नाम्ना वेद°), कारा का$_1$ ॰ ह्यव दे$_5$ [अ] प्येव (?) दे$_9$ [इ] त्येव (→[इ] त्येव) –d) ब$_1$ 3 दे$_1$ 3 5 7 10 मेरावपि दे मेनावव न$_1$ मेरो एव (→मेरोरपि) दे$_9$ कृताश्रय (→कृताश्रया)

४४ –a) दे$_9$ तेनाह (?) (→तेनाति) –b) गा$_1$ हि विद्रुता ब$_3$ ह्यतिद्रुता दे$_1$ 3 [-अ] भिविद्रुता दे$_4$ [-अ] तिविद्रुता ते$_1$ [-अ] पि च हृता (→ह्यभिद्रुता) –c) दे$_9$ न$_1$ समानीता (→समारूढा) –d) गा$_1$ कारा का$_1$ तरुत्तमम् का॰ तरुत्तमम् (→नगोत्तमम्)

४५. –a) दे$_9$ दम (?) (→वृक्ष) दे॰ त॰ सा (→तरसा) –b) गा$_1$ पादाक्रान्त, दे॰ 3.10.11 पादाक्रान्त, न$_1$ पराक्रान्त (→पादाक्रान्त); दे$_9$ पादाक्रान्तस्य भज्यत (?) –c) दे$_7$ विपुरा (→विपुला) –d) ब$_1$ 3 दे$_1$ समानम्य (→समालिङ्ग्य); शा$_1$ स्थितान्वह ब$_1$ स्थिता ह्यहं, दे$_3$ स्थितास्म्यहं, न$_1$ स्थिता त्वहो (→स्थिता त्वहम्)

४६ –a) ब$_1$ पुरङ्गमा (→प्लवङ्गमो) –d) ब$_1$ पतिता हि (→पतितास्मि) दे$_7$ महाकुला दे$_{10}$ निराकुला (→[-अ] हमाकुला)

४७. –b) ब$_1$ 3 पतितं तं (→निपतन्तं) –d) ब$_1$ 3

दद्दशुः सर्वभूतानि स्थावराणि चराणि च ॥ ४७
ततो हाहाकृतं लोकैर्मां पतन्तीं निरीक्ष्य हि।
ऊचुश्च सिद्धगन्धर्वाः कष्ट सेयं महात्मनः ॥ ४८
इन्द्रद्युम्नस्य महिषी गदिता ब्रह्मणा स्वयम्।
मनोः पुत्रस्य वीरस्य सहस्रक्रतुयाजिनः ॥ ४९
तां वाणीं मधुरां श्रुत्वा मोहमस्म्यागता ततः।
न च जाने स केनापि वृक्षश्छिन्नः सहस्रधा ॥ ५०
ततोऽस्मि वेगाद् बलिना हुतानलसखेन हि।
समानीतास्म्यहमिमं त्वं दृष्टा चाद्य सुन्दरि ॥ ५१

तदुत्तिष्ठस्व गच्छावः पृच्छावः क इमे स्थिते।
कन्यके अनुपश्ये हि पुष्करस्योत्तरे तटे ॥ ५२
एवमुक्त्वा वराङ्गी सा तया सुतनुकन्यया।
जगाम कन्यके द्रष्टुं प्रष्टुं कार्यसमुत्सुका ॥ ५३
ततो गत्वा पर्यपृच्छत् ते ऊचतुरुभे अपि।
याथातथ्यं तयोस्ताभ्यां स्वमात्मानं निवेदितम् ॥ ५४
ततस्ताश्चतुरोपीह सप्तगोदावरं जलम्।
संप्राप्य तीर्थे तिष्ठन्ति अर्चन्त्यो हाटकेश्वरम् ॥ ५५
ततो बहून् वर्षगणान् बभ्रमुस्ते जनास्त्रयः। वं. ६५

---

जङ्गमस्थावराणि च

४८ –a) दे1 11 हाहाहृतो (दे11 °ते) (→हाहाकृत), दे2 7 लोके, दे9 लोको, न1 लोका (→लाकै) –b) शा1 च, न1 ह (→हि) –c) शा1 कारा का1.2 दे10 ते (→च). –d) ब3 दे1 कय (→कष्ट); दे7 सर्वं (→सेयं)

४९ –b) ब3 विहिता (→गदिता); न1 ब्राह्मणी स्वय (→ब्रह्मणा स्वयम्) –c) ते1 तनो (→मनो) ब1 2 राज्ञस्तु, ब3 तस्येय, दे5 * * *, दे7 9 धीरस्य (→वीरस्य) –d) दे1 यगातु (?) (→सहस्र), कारा दे1 2 °वाजिन, दे3 °वाजिना (→°याजिन)

५० –a) दे1 वीणा (→वाणी) –b) शा1 सोह (→मोह), ब3 दे7 न1 अम्यागता (→अस्म्यागता) दे1 नता (→तत), ब1 मोह मम गत तत –c) शा1 कारा का1 * दे9 न तु, दे1 ननु, न1 तनु (→न च); दे3 स्वकेनापि (→स केनापि); ब3 न च केन स जाने वा

५१ –a) दे11 नीतास्मि (→ततोऽस्मि); दे11 वेग (→वेगात्) –b) दे4 धूना° (→हुता°) ब3 हुतानन सनेन हि –c) ब1 3 समानीतास्म्यहमिम, ब3 समानीतास्म्यहन्त्वेन दे9 समानीतास्म्यहं माते, दे11 समानीतोस्मि मीमत्वा –d) शा1 का2 त्वं दृष्टाद्यात्र सुन्दरि, कारा का1 त्व दृष्टा चात्र सुन्दरि, दे1 3 त्वं हु (दे3 ह) ष्टा चाद्य सुन्दरि, दे11 दृष्ट्वा चाद्यस्य सुन्दरि

५२ दे2 ab ○ –a) शा1 उत्तिष्ठ सु (→उत्तिष्ठस्व); दे7 गच्छाम (→गच्छाव) ब1 2 तदुत्तिष्ठ च गच्छस्व, ब3 तदुत्तिष्ठस्व गच्छाव, दे1.3 तत उत्तिष्ठ गच्छाव, दे4 ते1 तत (दे4 °तो ?) उत्तिष्ठ गच्छाव, दे7 त्वमुत्तिष्ठ त्व गच्छाव –b) ब3 पृच्छस्व, दे7 पृच्छाम (→पृच्छाव), ब3 दे7 के त्विमे (→क इमे); दे1 3.4 ते1 क (दे4 क) उभे त्रस्थिते वरे, दे5 क दाम * स्थिते * *, दे7 त्वा वाम के त्विमे स्थिते, दे11 क इमे कन्यके स्थिते. –c) शा1 कारा का1 2 [-अ] नुपमे ह्यहि, ब1 2 अनुपाभे ह्येहि, ब3 स्वपमेते हि, दे2 अनुपश्य हि, दे5 अनुपमेहि, मुवे अनुपश्येह (→अनुपश्ये हि) –d) दे9 [-उ]त्तमे (→[-उ]त्तरे).

५३ –a) दे3 10 11 न1 उक्ता (→उक्त्वा) –b) दे1 3 4 ते1 तथा (→तया), ब3 न1 च (→सु), दे9 -मध्यया, न1 -मध्यमा (→-कन्यया) –c) दे9 कन्यका (→कन्यके) –d) कारा, कार्यं (→कार्य-) शा1 पृष्ट कार्यसमुत्सुका, ब1 2 कार्यं तत् प्रति सोत्सुका, ब3 प्रष्टुं कार्यं च सोत्सुका, दे1 4 ते1 प्रष्टुं कार्यं तु कौतुकात्, दे7 द्रष्टुं कार्यं च सोत्सुक, दे9 न1 प्रष्टु कार्यं समुत्सुके, दे11 पृष्टुं * यत्र सोत्सुका.

५४ –a) दे9 तत्वागत्वा, न1 ततो गच्छन् (→ततो गत्वा), दे3 पर्यगच्छत्, दे10 पर्यगच्छन्, (→पर्यपृच्छत्) –ab–) दे9 पर्यपृच्छात (→पर्यपृच्छते) –b) दे3 ते ऊचतुर्भवते अपि, दे11 ऊचतुस्ते उभे अपि –c) शा1 दे2 3 ते1 न1 यथातथ्य (दे3 °थ्यस्) (→याथातथ्य); दे2 त्वाभ्या (→ताभ्यां), ब1 2 याथातथ्य स्वमात्मान –d) शा1 कारा का2 स्वमा (कारा °मा) त्मा विनिवेदित (शा1 ता (?), ब1 2 निवेदितमिद मया, दे3 स्वमात्मा न निवेदितं, दे7 स्ववृत्तान्तमथादित .

५५ –a) शा1 का2 ततस्ताश्च ततोपीह, कारा चतस्रस्ता-स्ततोपीह –b) शा1 कारा का1 2 दे7 °गोदावरी- (→°गोदावर) –c) शा1 कारा का1 2 ब3 तीर्थं, ब1 2 दे1 4 ते1 तीरे (→तीर्थे); ब3 दे9 तिष्ठन्त्यो (ब3 °न्त्य), न1 तिष्ठन्त (→तिष्ठन्ति) –d) कारा स्वर्चन्त्यो, ब1 2 दे1 * अर्चन्त्या, ब3 [-अ]र्चयन्त्यो, दे1 स्तुवन्त्यो, न1 अर्च्यन्त्यो (→अर्चन्त्यो); शा1 हाटकेश्वरम् (→हाटकेश्वरम्).

५६. –a) दे11 ततोऽब्रुवन् ऋषिगणा . –b) शा1 तै, दे1 ता (→ते); दे1 बलात्रया, न1 जनेश्वर (→जनास्त्रय) –c) दे4 तासामथा च, दे7 न समर्थश्च, दे11 स समर्थ स (→तासामर्थंच), दे4 समुनि (→राहुनि) –d) दे1 3 धार्ति

३९ ५६ तासामर्थाय शकुनिर्जाबालि सऋतध्वज' ॥ ५६
भारवाही तत' खिन्नो दशाब्दशतिके गते ।
काले जगाम निर्वेदात् सम पित्रा तु शाकलम् ॥ ५७
वसिन्नरपति श्रीमानिन्द्रद्युम्नो मनो. सुत ।
समभ्यास्ते स विज्ञाय सार्घपात्रो विनिर्ययौ ॥ ५८
सम्यक् सपूजितस्तेन सजाबालिर्ऋतध्वज ।
स चेक्ष्वाकुसुतो धीमान् शकुनिर्भ्रातृजोर्चित ॥ ५९
ततो वाक्य मुनि प्राह इन्द्रद्युम्न ऋतध्वज ।
राजन् नष्टाऽबलास्माक नन्दयन्तीति विश्रुता ॥ ६०
तस्यार्थे चैव वसुधा अस्माभिरटिता नृप ।
तस्मादुत्तिष्ठ मार्गस्व साहाय्य कर्तुमर्हसि ॥ ६१
अथोवाच नृपो ब्रह्मन् ममापि ललनोत्तमा ।
नष्टा कृतश्रमस्यापि कस्याह कथयामि ताम् ॥ ६२
आकाशात् पर्वताकार. पतमानो नगोत्तम' ।
सिद्धाना वाक्यमाकर्ण्य बाणैश्छिन्न सहस्रधा ॥ ६३
न चैव सा वरारोहा विभिन्ना लाघवान्मया ।
न च जानामि सा कुत्र तस्माद् गच्छामि मार्गितुम् ॥ ६४
इत्येवमुक्त्वा स नृप समुत्थाय त्वरान्वित ।
स्यन्दनानि द्विजाभ्या स भ्रातृपुत्राय चार्पयत् ॥ ६५
तेऽधिरुह्य रथास्तूर्णं मार्गन्ते वसुधा क्रमात् ।
बदर्याश्रममासाद्य ददृशुस्तपसा निधिम् ॥ ६६
तपसा कर्शित दीन मलपङ्कजटाधरम् ।
निश्वासायासपरम प्रथमे वयसि स्थितम् ॥ ६७
तमुपेत्याब्रवीद् राजा इन्द्रद्युम्नो महाभुज ।

---

स दे7 जावालि सु दे9 जावालिश्च (→जाबालि' स) दे7 ऋतुध्वज (→ऋतध्वज)

५७ –a) दे1 3 ते1 भिन्नो (दे3 °न्ने) (→खिन्नो) –b) कारा दे4 दशाब्दशतके दे3 5 7 9 दशाब्द् दशतिके दे दशाब्दशतक (?) (→दशाब्दशतिके) ते1 दशानीके गते दशान् –c) शा1 कारा का1 2 दे5.10 निवद (→निवदात्) –d) कारा का1 ॰ दे1 5 9 10 ते1 न1 पित्रानु° ब3 पित्रा हि दे11 पित्रा च (→पित्रा तु) शा1 कारा का1 ॰ शाकले दे1 3 ते1 न1 शालक (दे 3 °क) दे11 साकलि (→शाकलम्)

५८ शा1 कारा का1 2 ५८ cd त ५९ यावद् ○ –a) दे11 श्रीमान् (→श्रीमान्) –c) दे2 3 11 समाध्यास्ते दे न1 समम्यास्ते (→समभ्यास्ते) –d) ब1 दे1 साध्यपात्रो दे1 4 10 सार्घपाद्यो दे 7 सर्वपात्रो ते1 सवपाद्यो (→सार्घपात्रो) ब1 विनिर्दिशेत (→विनिर्ययौ)

५९ शा1 कारा कारा का1 ॰ ○ दे1 ५९ c–६० b ○ (इ स) –b) दे1 3 स जापालिर दे1 जावालि स (→स जावालिर); दे5 7 ऋतुध्वज (→ऋतध्वज) –d) ब3 धातृजो र्चित दे3 भ्रातृजार्चित दे9 भूभुजात्मज (→भ्रातृजार्चित)

६० दे1 ab ○ (द्र ५९ शा वि) –a) दे7 नृप (→मुनि) –c) शा1 कारा का1 ॰ ब3 दे 10 राजभ्रष्टा सुतास्माक ब1 राजन् नष्टासि यास्माक ब॰ राजन् दृष्टा (?) त्रियास्माक दे1 राष्ट्र नष्टा बलास्माकं दे11 गत नष्टाबलास्माक –d) शा1 कारा का1 ॰ दे2.7 मन्यन्तीति ब3 नन्यन्ती ह, दे10 दमयन्तीति दे11 तन्तीति (→नन्यन्तीति)

६१ –a) कारा तन्यें दे10 तस्यार्थं मुवे तन्द (→तस्यार्थे); दे7 तस्यार्थे वसुधास्माभिर, –b) ब3 [म]दिता (→[-अ]टिता) दे7 अटिता नृपसत्तम –c) ब1 2 दे1 ॰ 4 5 7 ते1 मार्गस्य (→मार्गस्व)

६२ –a) ब महा दे9 मुनिर (→नृपो) –b) दे3 [-उ]त्तम न1 [उ]त्तमा (→[उ]त्तमा) –c) ब॰ °समस्यापि दे5 °समस्यापि (→°श्रमस्यापि) –d) ब2 दे1 ॰॰८ दे कस्यापि दे11 कस्य हि (→कस्याह) ते1 तम् (→ताम्)

६३ –b) ब दे5 पातमानो दे 1 पतमाना (→पतमानो) शा1 नगोत्तमा (→नगोत्तम) –d) दे7 शर. (→बाणै)

[ब २ ६४ श्लोकाद्यारभ्य समाप्तियावद्भारित]

६४ –a) दे1 3 ते चैव दे11 न चैका ते1 ते नैव (→न चैव) –d) दे गच्छसि (→गच्छामि)

६५ –a) ब3 श्रुत्यदम् (→इत्येवम्); शा1 नृपा (→नृप) –c) दे1 चन्दनास्तु, न1 स्यन्दनास्तु (→स्यन्दनानि); दे7 च न1 सा (→स) –d) शा1 कारा का1 ॰ भ्रातु (→भ्रातृ) का1 चापयेत्, न1 वापयत (→चापयत) दे9 भ्रातृपुत्र च वाहत

६६ –a) शा1 का तेऽधिरुह्यारथात् ब1 दे1 4 ते1 तेऽधि रूढ(दे4 °ढं)रथास दे7 तेऽधिरुह्यरथान् दे 10 11 तेऽधिरुह्यरथास, दे1 नेऽधिरह्य तथाम (?) न1 तेऽधिरह्यारथान् (→तेऽधिरुह्य रथान्) –b) शा1 मार्गन्ता कारा का ब1 दे1 5 7 9 10 ते1 न1 मार्गन्तो का मार्गन्त (→मार्गन्त) –c) दे7 मागम्य (→मासाद्य) –d) दे7 तपसो (→तपसा)

६७ –a) का दे7 कर्षित (→कर्शित); दे4 घोर (→दीनं) –c) शा1 निश्वास° दे1 विश्वासा° (→निश्वासा°); ब1 °याम° (→°यास°) –d) दे4 परमे (→प्रथमे)

६८ –a) ब1 तमुत्थाय (?) (→तमुपेत्य) –b) दे1 इन्द्रप्रस्थो दे इन्द्रद्युम्ना दे11 इन्द्रप्रस्थे (→इन्द्रद्युम्नो) –c)

तपस्विन् यौवने घोरमास्थितोऽसि सुदुश्चरम् ॥ ६८
तप. किमर्थं तच्छंस किमभिप्रेतमुच्यताम् ।
सोऽब्रवीत् को भवान् ब्रूहि ममात्मानं सुहृत्तया ॥ ६९
परिपृच्छसि शोकार्तं परिखिन्नं तपोन्वितम् ।
स प्राह राजाऽस्मि विभो तपस्विन् शाकले पुरे ॥ ७०
मनोः पुत्र. प्रियो भ्राता इक्ष्वाकोः कथितं तव ।
स चास्मै पूर्वचरितं सर्वं कथितवान् नृपः ॥ ७१
श्रुत्वा प्रोवाच राजर्षिर्मा मुञ्चस्व कलेवरम् ।
आगच्छ यामि तन्वङ्गीं विचेतु भ्रातृजोऽसि मे ॥ ७२
इत्युक्त्वा संपरिष्वज्य नृप धमनिसततम् ।
समारोप्य रथं तूर्णं तापसाभ्यां न्यवेदयत् ॥ ७३
ऋतध्वजः सपुत्रस्तु त दृष्ट्वा पृथिवीपतिम् ।
प्रोवाच राजन्नेह्येहि करिष्यामि तव प्रियम् ॥ ७४
यासौ चित्राङ्गदा नाम त्वया दृष्टा हि नैमिषे ।
सप्तगोदावरं तीर्थं सा मयैव विसर्जिता ॥ ७५
तदागच्छथ गच्छाम. सौदेवस्यैव कारणात् ।
तत्रास्माकं समेष्यन्ति कन्यास्तिस्रस्तथापराः ॥ ७६
इत्येवमुक्त्वा स ऋषिः समाश्वास्य सुदेवजम् ।
शकुनिं पुरत. कृत्वा सेन्द्रद्युम्नः सपुत्रक. ॥ ७७
स्यन्दनेनाश्वयुक्तेन गन्तु समुपचक्रमे । वें. ६५

---

गा1 का2 तपस्विनवना (का2 °न) कारा तपस्विना वन, का1 तपस्विस्त्व वन, दे3 4 10 तपस्विन् यं वने, न1 तपस्विन् किं व्रत (→तपस्विन् यौवने) ब3 दे4 घोरे, (→घोरम्) दे9 तपस्तर्श वृत घोर -d) ब3 ग्रास्थितोस्मि (→आस्थितोसि); का2 दे7 11 °दुष्कर, दे2 3 °दुश्चिर (→°दुश्चर)

६९ -a) शा1 का2 दे9 तत (→तप); शा1 तु श्वस (?) दे9 पर्रसि, दे11 तद्शक्य, न1 त्व शस (→तच्छस); कारा तत्किमर्थं प तच्छस -b) दे4 तद् (→किम्) -d) न1 स्वमात्मान (→ममात्मान); दे9 सुहृत्तम (→सुहृत्तया)

७० -a) दे1 4 7 10 ते1 °पृच्छामि, न1 °पृच्छति (→°पृच्छसि) दे1 शोकार्थं दे7 शोकार्त्त, दे9 यत्कार्यं (→शोकार्तं) -b) ब1 दे1 ? 4 9 ते1 परिद्यून ब3 परित्यक्त दे3 परिद्रुन दे7 परिद्यून, दे11 परिछिन्नं, न1 परि उन (→परिखिन्न) ब3 दे9 तपोनिधि (→तपोन्वितं) -c) मुवे बली (→विभो) -d) ब1 3 साकले (→शाकले); दे9 तपस्वी सकले पुरे.

७१ -a) शा1 दे3 पुत्र (→पुत्र), दे9 ज्यायान् (→भ्राता) -b) दे9 वर्शित, न1 वर्थित (→कथित) -c) ब3 चास्मि, दे3 चास्ते (→चास्मै); दे9 °परित (→°चरित), दे5 स चा******* -d) कारा मुनि (→नृप)

७१ श्लोकात् पर दे9 पुस्तके अधिकम्—

253* चित्राङ्गदार्थं सुरयस्तपस्यामि सुदेवत ।

७२ -a) दे10 राजर्षे (→राजर्षिर) -b) दे9 मुश्वस्व (→मुञ्चस्व) -c) का2 दे4 5 9-11 न1 याम (→यामि); मुवे यागमिष्यामि (→आगच्छ यामि) -d) ब1 3 विनार्तु, दे1 विचेए (रु ?) दे3 विचोरं, दे5 9 11 विजेतु. न1 विरचेतु (→विचेतु); दे7 भ्रातृ यो (→भ्रातृजो)

७३ -a) शा1 कारा का1 2 स (शा1 रा) परिष्वज्य (→सपरिष्वज्य) -b) दे2 नृपो, न1 कृ ा (→नृप); शा1 नृप स* नि सन्ततम्, ब3 तपत्वमनिश तत, दे5 नृप धमनि सयुतम्, दे7 11 नृप धर्मनि सतत (दे11 र) -c) दे1 समारूप्य (→समारोप्य) दे7 रथे (→रथ) -d) शा1 न्यवेशयत्, दे3 निवेदयेत ते1 न्यवेशयन् (→न्यवेदयत) दे5 तापसा*****, दे9 तपस्वी(?) भ्या विनिर्ययौ

७४ शा1 cd O; दे5 O -a) दे7 सपुत्रस्यस् (→सपुत्रस्तु) -b) गा1 °प्रियम् (→°पतिम्) -c) कारा का1 2 दे10 11 अम्येहि (→एह्यहि); दे7 [-अ]प्रिय (→प्रियम्)

७५ दे1 3 4 ७५ c इत्यारम्य ७८ b यावन्नास्ति ते1 ७५ d 'साम' इत्यारम्य ७८ c तीर्थे यावन्नास्ति -a) शा1 कारा का1 2 ब1 3 दे1 2 7 9 11 न1 या सा, दे4 यास्य दे5** (→यासौ) -b) दे9 नैमिषे (→नैमिषे) -c) दे9 सप्तगोदावरे तीर्थे d) कारा का1 ब1 3 दे5 9 10 न1 विवर्जिता (→विसर्जिता) दे2 7 सा गतापीह साम्प्रतम्

७६ दे1 3 4 ते1 O (द्र ७५ पा वि) -a) गा1 [-आ]गच्छाम, कारा ब1 3 दे9 न1 [-अ]गच्छत (→[-आ]गच्छ); ब1 दे7 9 गच्छाम (→गच्छाम) मुवे आगच्छ यागमिष्यामए -b) ब1 यादेवस्यैव (?) ब3 सदेवस्यैव, दे महादेवस्य दे5 सौदेवस्य हि, दे तस्मादेवस्य, दे9 सत्नामस्यैव, मुवे तस्मान्वे हि (→सौदेवस्यैव) -d) दे 10-11 [-अ]परा (दे11 °र) (→[-अ] परा)

७७ दे1 3 4 ते1 O (द्र ७५ पा वि) -a) ब1 3 मुनिं (→ऋषि) (ब3 °नि), -b) शा1 का2 समाश्यास्य (→समाश्वास्य); कारा का1 ब1 स्वदेवजं, ब3 सुदेवत, दे2 सुन्देवजाम् (→सुदेवजम्) -c) शा1 परत (→पुरत) -d) ब1,2 दे2 7 9 सेन्द्रद्युम्न सपुत्रकम्

७८ दे1 3-4 ab O; ते1 abc O (द्र. ७५ पा वि).

I.६५.७८ समगोदावरं तीर्थं यत्र ताः कन्यका गताः ॥ ७८
एतस्मिन्नन्तरे तन्वी घृताची शोकसंयुता ।
विचचारोदयगिरिं विचिन्वन्ती सुतां निजाम् ॥ ७९
तमाससाद च कपिं पर्यपृच्छत् तथाप्सराः ।
किं बाला न त्वया दृष्टा कपे सत्यं वदस्व मां ॥ ८०
तस्यास्तद् वचनं श्रुत्वा स कपिः प्राह बालिकाम् ।
दृष्टा देववती नाम्ना मया न्यस्ता महाश्रमे ॥ ८१
कालिन्द्या विमले तीर्थे मृगपक्षिसमन्विते ।
श्रीकण्ठायतनस्याग्रे मया सत्यं तवोदितम् ॥ ८२
सा प्राह वानरपते नाम्ना वेदवतीति सा ।
न हि देववती ख्याता तदागच्छ व्रजावहे ॥ ८३
घृताच्यास्तद्वचः श्रुत्वा वानरस्त्वरितक्रमः ।
पृष्ठतोऽस्याः समागच्छन्नदीमन्वेव कौशिकीम् ॥ ८४
ते चापि कौशिकीं प्राप्ता राजर्षिप्रवरास्त्रयः ।
द्वितयं तापसाभ्यां च रथैः परमवेगिभिः ॥ ८५
अवतीर्य रथेभ्यस्ते स्नातुमभ्यागमन् नदीम् ।
घृताच्यपि नदीं स्नातुं सुपुण्यामाजगाम ह ॥ ८६
तामन्वेव कपिः प्रायाद् दृष्टो जाबालिना तथा ।
दृष्ट्वैव पितरं प्राह पार्थिवं च महाबलम् ॥ ८७
स एव पुनरायाति वानरस्तात वेगवान् ।

---

–a) व1 स्यन्दनेन सयुक्तेन. –b) दे9 यातुं (→गन्तु), दे10 °चक्रिरे (→°चक्रमे) –c) दे7 °गोदावरी- (→°गोदावर). –d) दे1.3.4 ते1 तत्र (→यत्र), दे9 स्थिता (→गता).

७८ श्लोकात्परं कारा अधिकम्—

इति वामनपुराणे दण्डकोपाख्याने कन्याचतुष्टय समागमो नाम द्विसप्ततितमोऽध्याय । दण्डक उवाच.

७९. –c) कारा. °गिरी (→°गिरिं). –d) का2 व1 विचिन्वतीं (→विचिन्वन्ती); ब1.3 दे10 निजा सुता (→सुता निजाम्)

८०. –a) दे9 न1 समाससाद, दे11 तामाससाद (→तमाससाद); ब1.3 दे5.7 11 स कपि (ब3 °पिम्) (→च कपिं) –b) दे1-4 ते1 मयाप्सरा, दे7.9 अयाप्सरा, दे10 तदाप्सरा (→तथाप्सरा). –c) न1 सा (→न) –d) का1 मम+मा, दे1-4 ते1 मे (→माम्); दे7 वदाद्य मे (→वदस्व माम्).

८१. दे5. 'नाम' cd इत्यारभ्य 'महाश्रमे' इति यावत् खण्डितम्, दे7. ○. –a) ते1 तु (→तत्). –b) कारा. चाप्सरा, दे3 वालिक (?) (→बालिकाम्). –c) का2 व3 दे1-5 9-11 ते1 न1 दृष्ट्वा (→दृष्टा); कारा व3 दे10 11 वेदवती (→देववती); ब1.3 दे1 4 9 11 ते1 न1 नाम (→नाम्ना). –d) ब1.3 दे1 2-4. 10.11 ते1 न1 सा च, दे3 स चा-, दे5 सा वि-(→मया); व1 महामुन, न1 मयाश्रमे (→महाश्रमे).

८२ –a) दे5 'कालिन्द्या विमले' खण्डितम् –a) दे1-4.7.9 ते1 न1 तीरे (→तीर्थे). –b) शा1 °पक्ष°, व1 °पङ्क° (→°पक्षि°). –c) दे1.3 श्रीकण्ठाय न (दे1 त ?) मस्याग्रे.

८३. –a) शा1 कारा का1 2 सा चाह (→सा प्राह); व1 वानरमतीं (?), दे1 4 ते1 वानरवर (→वानरपते). –b) का1.2 दे10.11 ते1 न1 देववती, दे3 न1 वेद (न1 देव) वतीं (→वेदवती); व1 हिसा, दे9 न1 [-इ]मा (→[-इ]ति सा). –c) का1.2 नाम्ना (→न हि); दे2.3.5.10 वेदवतो दे11 वे* वती, (→देववती); कारा. नाम्ना ख्याता देववतो, न1 न हि सा देववत्याख्याता. –d) व1.3 दे7 10 व्रजामहे, ते1 व्रजावह (→व्रजावहे).

८४. –a) दे3 घृतास्यास् (→घृताच्यास्). –b) ब3 दे9 त्वतिविक्रम, न1 त्वरितेक्रम (→त्वरितक्रम). –c) दे9 पृष्ठतो स (?) (→पृष्ठतोस्या); शा1 समागच्छेत् (→समागच्छत्). –d) शा1 का2 अन्वैव, व1 स्नात्वैव, ब3 सत्वेव, दे2 मत्वे च, दे3 अन्वं च, दे7 अद्यव, ते1 अध्येत्य (→मन्वेव), ब3 कौषिकीं (→कौशिकीम्).

८५ दे2 ते1. b ⊙ –a) शा1 चाल्य- (→चापि), ब3 कौषिकीम् (→कौशिकीम्); दे4 प्राचा (?) (→प्राप्ता); दे1-3 10 ते1 प्राप्ताराजर्षिप्रवरास्, –b) दे1 सो(?) गत्वा तत्र सादरात् दे3 10 त्रयस्. ******, दे9 राजतो प्रवरास्त्रिय. –c) कारा. का1 उभाभ्या, व3 दे2 10 11 न1 द्वितीय (व3 °यस्) (→द्वितयं); न1 वै (→च); दे9 तापसाचन्त (→तापसाभ्या च). –d) व3 पवन° (→परम°); दे1-4 ते1 रथा पश्चाद्वेगिभि (दे4 °न)

८६. –a) व3 अवतीर्णं(?) (→अवतीर्य); ते1 रथे भ्यस्ते (→रथेभ्यस्ते). –b) शा1 अभ्यारमन्नदीं (→अभ्यागमन्नदीं) –c) शा1 घृताचि पि (?), का1 ब1.3 दे3.9 घृताच्यापि (→घृताच्यपि), व1 दृष्ट्वा (→स्नातु). –d) का2 दे10 सपुण्या, व1 स्वपुण्यां, दे9 सा पुण्या (→सुपुण्यां); दे11 माजगा ** (→आजगामह)

८७. –a) दे1-3 ता * न्वे (दे3 °न्वे) व (→तामन्वेव); दे1 (स) कपि (→कपिः) –b) व1 दृष्टे, दे7 दृष्टा (→दृष्टो); शा1 का2 दे5.10.11 सह, कारा. दे4 9 न1 तदा, का1 न हि, ब1 तत (→तथा) –c) शा1 कारा. का1 2 दृष्ट्वा च, ब3 दे11 पृष्टोऽसौ, ते1 पृष्टोपि (→दृष्ट्वैव). –d) दे4 नृपति (→पार्थिवं)

८८. –a) शा1 दे1 3 4 ते1 न1 एष (→एव); ब3 पुन,

पूर्वं जटास्वेव बलाधेन बद्धोऽस्मि पादपे ॥ ८८
तज्जाबालिवच श्रुत्वा शकुनि क्रोधसयुत ।
सशर धनुरादाय इद वचनमब्रवीत् ॥ ८९
ब्रह्मन् प्रदीयता मह्यमाज्ञा तात वदस्व माम् ।
यावदेन निहन्म्यद्य शरेणैकेन वानरम् ॥ ९०
इत्येवमुक्ते वचने सर्वभूतहिते रत ।
महर्षि शकुनिं प्राह हेतुयुक्त वचो महत् ॥ ९१
न कश्चित्तात केनापि बध्यते हन्यतेऽपि वा ।
वधबन्धौ पूर्वकर्मवश्यौ नृपतिनन्दन ॥ ९२
इत्येवमुक्त्वा शकुनिमृषिर्वानरमब्रवीत् ।
एह्येहि वानरास्माकं साहाय्य कर्तुमर्हसि ॥ ९३
इत्येवमुक्तो मुनिना बाले स कपिकुञ्जर ।
कृताञ्जलिपुटो भूत्वा प्रणिपत्येदमब्रवीत् ॥
ममाज्ञा दीयता ब्रह्मन् शाधि किं करवाण्यहम् ॥ ९४
इत्युक्ते प्राह स मुनिस्त वानरपतिं वच ।
मम पुत्रस्त्वयोद्बद्धो जटासु वटपादपे ॥ ९५
न चोन्मोचयितु वृक्षाच्छक्नुयामोऽपि यत्नत ।
तदनेन नरेन्द्रेण त्रिधा कृत्वा तु शाखिन ॥ ९६
शाखा वहति मत्सूनु शिरसा ता विमोचय ।
दशवर्षशतान्यस्य शाखा वै वहतोऽगमन् ॥ ९७ वे ६

---

दे3 पु*(→पुनर्) –b) दे9 त्वति (→तात) –c) शा1 जटास्त्वेव दे11 * टास्वेव ते1 घटाग्रे च (→जटास्वेव) d) दे2 पादयो (→पादपे)

८९ –a) दे1 3 जापालि° (→जाबालि°) –b) दे9 शकुनि (→शकुनि) दे1 10 °मूर्छित (→°संयुत) –c) शा1 कारा का1 ° सरब्धो (→सशर) –d) दे1 4 ते1 आनम्य (दे1 3 °स्य) (→[-आ]दाय) –d) ब1 3 वचनश्चेदम्, (→इद वचनम्) ब3 मब्रुवन् (→अब्रवीत्)

९० –b) दे7 वन्द्य (→वदस्व) –c) दे3 यावदेव (→यावदेन) ब3 हिनरम्यद्य दे9 निहरस (?)द्य दे11 हि हन्म्यद्य (→निहन्म्यद्य) –d) दे7 शरेन (→शरेण)

९१ ब1 ६१ c महर्षि इत्यारभ्य ६५ b 'वच इति यावन्नास्ति (द्र स) –c) दे1 ते1 शकुनि (→शकुनिं) –d) दे9 योगयुक्तो (→हेतुयुक्त)

९२ ब1 ○ (द्र ६१ पा वि) –a) दे5 न च कश्चित्र दे9 न कश्चन तु, दे10 न कश्चित्र स न1 न कश्चिन तु (?) (→न कश्चित्तात) –b) दे3 विध्यते दे9 वाच्यते (→बध्यते); दे1 * बध्यते दे3 बध्यता दे5 बध्यते दे9 बध्यते दे11 *** ते बध्यते न1 बध्य * (→हन्यते) –c) दे_ बध्यवधौ दे9 विधबन्ध (→वधबन्धौ) –d) शा1 °बध्य ब3 दे1-3 10 ते °वशौ दे9 °वशा (→°वश्यौ); दे5 नन्दन दे9 °सत्तम +°नन्दन (→°नन्दन)

९३ ब1 ○ (द्र ६१ पा वि), दे1 3 7 11 स cd ○ –a) का ब3 उत्ता (?) दे1 3 7 ते1 उक्त (→उक्त्वा); दे1 3-7 ते1 शकुनिर्, न1 वचनं (→शकुनिं); दे3 इत्येवमुक्ते वचने –b) ब3 वानरो ऋषिमब्रवीत्, दे1 4 ते1 ऋषि (दे4 °षिर) वचनमब्रवीत् दे7 ऋषिणा वानरोऽब्रवीत् दे9 ऋषि नृपतिरब्रवीत् न1 मुनि शकुनिमब्रवीत्

९४ ब1 ○(द्र ६१ पा वि); दे1 3-7 11 ते1 ○ –a) दे4 उक्त्वा (→उक्तो) –b) दे5 बाल न1 बलो (→बाले) –c) न1 °पुटं (→°पुटो) –c) शा1 ममाज्ञा देहि ता ब्रह्मन्, दे4 ममाज्ञा दीयता ब्रह्मन् दे9 मुने शां (?) दीयतां मह्यं –f) शा1 चाधि (→शाधि) दे7 करवाणि ते (→करवाण्यह) दे9 साहाय्यं करवाण्यहं

९५ ब1 cd ○ (द्र ६१ पा वि) –a) दे3 5 10-11 ते1 इत्युक्त (→इत्युक्ते) दे9 इत्युक्तोपि मुनि प्राह –c) शा1 तया बद्धो कारा का1 * ब1 दे 7 9 न1 त्वया बद्धो दे4 तयोद्बद्धो (→त्वयोद्बद्धो) –d) दे1 4 ते1 जटाभिर्, दे9 यत्राग्र (→जटासु)

९६ –a) कारा ब1 दे1 न च मोचयितु वृक्षात् ब3 दे1 5 7 ते1 न चेन्मोचयितु वृक्षात् –b) शा1 शक्नुयामो प्रयत्नत कारा शक्नुयाम प्रयत्नत ब3 दे1 4 ते1 शक्नुयाश्च (ब3 °→) पि यत्नत –c) ब3 तद् वानर दे1-3,7 ते1 न1 तन्नानेन दे4 तन्नातेन दे9 तथा नन (→तदनेन) दे7 नरेग स्व ते1 मतन्मण (?) (→नरेन्द्रेण) –d) ते1 द्विधा (→त्रिधा); ब3 कृते दे4 छित्वा (→कृत्वा); का1 दे1 4 7 9 ते1 शाखिनम् (→शाखिन) दे11 त्रिधा कृतातशापिन

९७ –) व मे सूनु दे तत्सूनु दे7 न1 मत्सूनुं (→मत्सूनु) ब3 साम्प्रतन्ति मत्सूवि (?) –b) दे 11 शिरसा ते1 शिरसम (→शिरसा) ब3 तन्विमोचय दे3 तो विमोचय (→ता विमोचय) –c) ब1 शतान्येव दे10 सहस्राणि ते1 शतान्यष्टौ (→शतान्यस्य) –d) दे1 9 ते1 वहयो (→वहतो); शा1 कारा का1 2 न1 [-अ] गमत् ब3 दे1 3-5 11 ते1 गता (दे1 °ता) दे10 गत (→[-अ] गमन्)

६५.६७ न च सोऽस्ति पुमान् कश्चिद् यो ह्युन्मोचयितुं क्षमः ।
स ऋषेर्वाक्यमाकर्ण्य कपिर्जाबालिनो जटा ॥ ९८
शनैरुन्मोचयामास क्षणादुन्मोचिताश्च ताः ।
ततः प्रीतो मुनिश्रेष्ठो वरदोऽभूदृतध्वजः ॥ ९९
कपिं प्राह वृणीष्व त्वं वरं यन्मनसेप्सितम् ।
ऋतध्वजवचः श्रुत्वा इमं वरमयाचत ॥ १००
विश्वकर्मा महातेजाः कपित्वे प्रतिसंस्थित ।
ब्रह्मन् भवान्वरं मह्यं यदि दातुमिहेच्छति ॥ १०१
तत्त्वद्दत्तो महाघोरो मम शापो निवर्त्यताम् ।
चित्राङ्गदायाः पितरं मां त्वष्टारं तपोधन ॥ १०२
अभिजानीहि भवतः शापाद्वानरतां गतम् ।
सुबहूनि च पापानि मया यानि कृतानि हि ॥ १०३
कपिचापल्यदोषेण तानि मे यान्तु संक्षयम् ।
ततो ऋतध्वजः प्राह शापस्यान्तो भविष्यति ॥ १०४
यदा घृताच्यां तनयं जनिष्यसि महाबलम् ।
इत्येवमुक्तः संहृष्टः स तदा कपिकुञ्जरः ॥ १०५
स्नातुं तूर्णं महानद्यामवतीर्णः कृशोदरि ।
ततस्तु सर्वे क्रमशः स्नात्वाऽर्च्य पितृदेवताः ॥ १०६
जग्मुर्हृष्टा रथेभ्यस्ते घृताची दिवमुत्पतत् ।
तामन्वेव महावेगः स कपिः प्लवतां वरः ॥ १०७
ददृशे रूपसंपन्नां घृताचीं स प्लवंगमः ।
सापि तं बलिनां श्रेष्ठं दृष्ट्वैव कपिकुञ्जरम् ॥ १०८
ज्ञात्वाऽथ विश्वकर्माणं कामयामास कामिनी ।
ततोऽनुपर्वतश्रेष्ठे ख्याते कोलाहले कपिः १०९

---

९८. –a) शा1 कारा. क1.2 न मे (कारा. का2 सो) स्ति पुरुष कश्चिद्, दे1-3 ते1 न चा (दे1 ते1 °वा) स्ति पुरुष कश्चिद्, दे4 न त्वत्तोस्ति पुमान् लोके. –b) शा1 कारा. का1 न1 योद्य मो°, का2 यद्वि मो°, ब3 योम्युन्मो°, दे9 यो हि मो° (→यो ह्युन्मो°) –c) कारा स मुनेर्वाक्य, दे7 स चैतद् वाक्यम्, न1 सर्सपेर्वाक्य (→स ऋषेर्वाक्यम्). –d) दे2 जापालिनो (→जाबालिनो), दे1.3 जट, दे5 जरा (→जटा).

९९ ब3 दे11 cd ○. –b) का1 उन्मोचितश् (→उन्मोचिताश्); शा1 का1 2 च हि, दे7 श्रुता (→च ता) –c) शा1 कारा. का1 2 प्रीतो मुनिवरश्रेष्ठो. –d) दे7 ऋतुध्वज (→ऋतध्वज ).

१००. ब3. d⊙. –a) ब3 शृणुष्व, दे5 वृणुष्वं, दे10.11 वृणुष्व (→वृणीष्व); शा1 कारा. का1.2 कपे प्रब्रूहि लब्धा त्व.–b) ते1 मानसे° (→मनसे°). –c) दे1 ऋतुष्वज° (→ऋतध्वज°). –d) ब1 दे2 9 ते1 इद (→इम), दे7 परं (→वर); दे7 वर वेदमयाचत.

१०१ –b) ब1 3 सप्रतिष्ठि (ब1 °स्थि) त (→प्रतिसंस्थित ), दे7 स कपित्वे प्रतिष्ठित– –c) दे1 [-म] ह्य (→मह्यं), ब3 ब्रह्मन् वरं भव (वा?) न् मह्यं. –d) दे1 4 यथेच्छसि, दे5.7.9 न1 इहेच्छसि, ते1 यथेच्छसि (→इहेच्छति)

१०२. –a) शा1 तव त्वदत्तो,+तत्त्वया दत्तो, का2 दे1.3.4 10 ते1 तच्च दत्तो, ब1 तव सुदत्तो, ब3 तव सदत्तो (→तद त्वद्दत्तो) –b) कारा दे1 निवर्ततां (→निवर्त्यताम् ). –d) शा1 तु, दे7 त (→मां), शा1 का2 ब1 दे7 10 तपोधनं (→तपोधन)

१०३. –a) कारा. का1 दे 10.11 अपि° (→अभि°), –b) कारा. का1 ब1 दे7 गत (→गतम्). –d) शा1 कारा. का1 2 न1 च (→हि)

१०४ –a) शा1 कारा. दे1 °चापल° (→°चापल्य°). –c) कारा. ब1 दे1 ऋतध्वजस्तत (→ततो ऋतध्वज ).

१०५ –a) दे10 घृताच्या (→घृताच्यां). –b) दे11 °बल (→°बलम्), ब3 जनयिष्यति दानव, दे4 जनयिष्यसि मानद –c) दे11 एवमुक्त संप्रहृष्ट. –d) ब3 दे1 4 ते1 तथा (→तदा); ब1 दे1 3.7 ते1 °सत्तम (दे7 °म) (→°कुञ्जर); दे11 वानरोत्तम (→कपिकुञ्जरः)

१०६. –a) ते1 स्नान (→स्नातुं), दे1 7.11 तुर्णं (→तूर्णं) –b) न1 अवतीर्णं (→अवतीर्णः ). –d) दे1 3 ते1 स्नात्वा च, दे4 स्नात्वा तु (→स्नात्वार्च्य).

१०७. –a) दे7.9 रथैस्ते हि (→रथेभ्यस्ते). –c) शा1 तामन्वह, दे1 तामन्वयान्, न1 तामन्वगाद् (→तामन्वेव). –d) ब3 प्रयताम्वर. (→प्लवतां वरः).

१०८. –a) कारा. दे7 ददर्श (→ददृशे); दे7 11 °सम्पन्ना (→°सम्पन्नां). –b) दे3.11 घृताची स, दे1.10 घृताची च (→घृताचीं स); दे4 घृताचीं प्लवगोत्तम. –c) ब3 बलिनां, दे1 बलिना (→बलिनां).

१०९. –a) ब1 ज्ञात्वा वै, दे1 ज्ञात्वा त (→ज्ञात्वाऽथ) –c) कारा. ततस्तु, ब1 3 ततोसं (→ततोनु-); ते1 नग्येषु पर्वतश्रेष्ठे. –d) दे1 ख्यात, दे11 ख्यातो, ते1 ख्याते (→ख्याते); दे1 रम्ये कोलाहले कपि (?).

रमयामास तां तन्वीं सा च तं वानरोत्तमम् ।
एवं रमन्तौ सुचिरं संप्राप्तौ विन्ध्यपर्वतम् ॥ ११०
रथैः पश्चापि तत्तीर्थं संप्राप्तास्ते नरोत्तमाः ।
मध्याह्नसमये प्रीता. सप्तगोदावरं जलं ॥ १११
प्राप्य विश्रामहेत्वर्थमवतेरुस्त्वरान्विता ।
तेषां सारथयश्चाश्वान् स्नात्वा पीतोदकाप्लुतान् ॥ ११२
रमणीये वनोद्देशे प्रचारार्थे समुत्सृजन् ।
शाड्वलाढ्येषु देशेषु मुहूर्तादथ वाजिनः ॥ ११३
ताः समाद्रवन् सर्वे देवायतनमुत्तमम् ।
तुरङ्गखुरनिर्घोषं श्रुत्वा ता योषिता वरा ॥ ११४
किमेतदिति चोक्त्वैव प्रजग्मुर्हाटकेश्वरम् ।
आरुह्य वलभीं तास्तु समुद्देक्षन्त सर्वशः ॥ ११५
अपश्यस्तीर्थसलिले स्नायमानान् नरोत्तमान् ।
ततश्चित्राङ्गदा दृष्ट्वा जटामण्डलधारिणम् ॥
सुरथं हसती प्राह सरोहत्पुलका सखीम् ॥ ११६
योऽसौ युवा नीलघनप्रकाश.
सदृश्यते दीर्घभुज. सुरूपः ।
स एव नूनं नरदेवसूनु
वृतो मया पूर्वतरं पतिर्यः ॥ ११७
यश्चैष जाम्बूनदतुल्यवर्ण.   वें ६५

---

११० दे$_2$ ११० c–११६ b ○ (द्र स) –a) दे$_9$ रञ्जयामास (→रमयामास) दे$_3$ तन्वी (→तन्वीं) –b) व$_1$ चव व$_3$ चैन (→च तं) दे वानरेश्वरं (→वानरोत्तमम्) –c) दे$_4$ युधिर (?) (→सुचिर) –d) व$_3$ दे$_{1\,3\,4}$ ते$_1$ प्राप्तौ तं दे$_9$ सप्राप्तं दे$_{11}$ स प्राप्तं (→संप्राप्तं)

१११ दे ○ (द्र ११० पा वि) –a) व$_1$ दे$_{1\,3\,5\,7\,10\,11}$ ते रथेषु चापि (दे$_3$ °प) (→रथैः पश्चापि) दे$_7$ त तीर्थ (→तत्तीर्थ) व$_3$ न यथेष्ट चा (व$_3$ °वा) पितत् (व$_3$ °त) तीर्थ दे$_9$ यथेष्टमावद तीर्थ –b) दे$_{11}$ स्वे (→ते) –c) दे$_1$ ते$_1$ मध्याह्न (→मध्याह्न); व$_1$ स्नात्वा व$_3$ दे$_7$ स्नाता दे$_{1\,3\,4\,9\,11}$ श्रान्ता दे$_{5\text{-}10}$ ते$_1$ न$_1$ प्राप्ता (→प्रीता) –d) दे$_{10}$ °सारस्वत (→°गोदावर)

११२ दे ○ (द्र ११० पा वि) –a) दे$_{1\,3\,4\,7}$ ते$_1$ प्राप्ता (दे$_3$ °प्त) (→प्राप्य) कारा दे$_{11}$ विश्रम° (→विश्राम°) व$_3$ हेतुयम्, दे$_3$ हेत्वर्थं (→हेत्वर्थं); दे$_9$ न$_1$ प्राप्य विश्रम्य स्नानार्थं –b) ते$_1$ अवातरु (→अवतेरु) दे$_{1\,3\,4\,7\,11}$ ते$_1$ न$_1$ नृपान्विता (→स्वरान्विता) –c) व$_3$ सारथयश्चाश्वा दे$_{1\,3\,4}$ ते$_1$ सारथयो श्वाश्च दे$_5$ सारथय साश्वान्, दे$_9$ सारथिमुक्तोवान् (?) दे$_{11}$ सारथ यो ह्यश्वान्, न$_1$ सारथयोप्यश्वान् (→सारथयश्चाश्वान्) –d) का$_1$ दे$_9$ स्नात न$_1$ स्नात्वा (→स्नात्वा); शा$_1$ पीतोदका व$_{1\,3}$ दे$_{5\,7}$ पीतोदकान्, दे$_{1\,3\,10}$ ते$_1$ पीतोदका दे$_4$ पीतोदक (→पीतोदका) दे$_{1\,3}$ ते$_1$ प्लुता (→प्लुतान्) व$_3$ स्नात्वा पीतोदकान् शुचीन्

११३ दे$_9$ ○ (द्र ११० पा वि) –a) दे$_1$ रमणाये दे$_1$ दे$_{11}$ रमणीय (→रमणीये) –b) दे$_{1\,3\,4}$ ते$_1$ प्रचाराय दे$_{7\,9\,11}$ न$_1$ प्रचाराथ (→प्रचाराय) –c) शा$_1$ कारा का$_1$ शाड्वलाङ्गु, व$_1$ शाड्वलाद्य(?) दे$_{3\,5\,7\,11}$ शाड्वलाद्येषु, ते$_1$ शाड्वलायेषु (→शाड्वलाढ्येषु)

११४ दे$_2$ ○ (द्र ११०पा वि) –a) दे$_9$ दृष्ट्वा (→तुरङ्ग) का सव दे$_5$ स ६ (→सर्वे) –b) का$_2$ दे$_{1\,3\,4}$ ते$_1$ देवालयमनुत्तम –d) दे$_9$ त (→ता); शा$_1$ दे$_{4\,7}$ °वरः व$_3$ दे$_{11}$ ते$_1$ °वरा (→°वरा)

११५ दे ○ (द्र ११०पा वि) –a) व$_{1\,3}$ दे$_{4\,7\,11}$ चोक्त्वैव(?) दे$_3$ चोक्तव दे$_9$ चोक्ता तु, न$_1$ चोक्त्वैव (→चोक्त्वैव) –c) शा$_1$ कारा का$_2$ बहुभीतास्तु, व$_3$ दे$_3$ $_{10}$ वलभीतास्तु, दे$_{11}$ वरभावास्तु, ते दानभीतासु (→वलभीं तास्तु); दे$_9$ न$_1$ आगम्य च महाभीता –d) दे$_{9\,10}$ न$_1$ समुद्रो (दे$_{10}$ °द्रो) क्षं (न$_1$ °क्ष्या) त (न$_1$ °थ) (→समुदक्षन्त) शा$_1$ कारा का$_{1\,2}$ व$_1$ दे$_{4\,5\,7\,10\,11}$ ते$_1$ सवत (→सर्वतः)

११६ दे ab ○ (द्र ११०पा वि) –b) व$_1$ स्नातुकामान्, दे$_{1\,4}$ ते आप्लुताङ्गान्, दे$_3$ (आ) प्लवन्ताङ्गान्, दे$_{5\,9}$ स्नायमाना(दे$_5$ °नो) न्, दे$_{11}$ सर्वानिव न$_1$ स्नातमात्रा (→स्नायमानान्) व$_3$ सुरोत्तमान् (→नरोत्तमान्); दे$_7$ ताः कन्या पुरुषोत्तमान् –d) व$_3$ तत्र (→जटा) दे$_3$ °धारणं (→°धारिणं) –e) मुत्र हसन्ती सुरथ प्राह –f) दे$_{7\,10}$ सती (→सखीं) ते$_1$ नीरातलग्न सखीम्

११७ –b) का दे$_7$ स दृश्यते दे$_{1\,4}$ ते$_1$ सलक्ष्यते (→सदृश्यते); शा$_1$ व$_1$ दे$_{3\,7\,11}$ स्वरूप (→सुरूप); दे$_9$ न$_1$ °अस्वरूप (→°ज सुरूप) –c) कारा का$_1$ दे$_{7\,11}$ एष (→एव) दे$_4$ नूनुर (→नूनं) –d) दे दृष्टो (→वृतो); दे$_{1\,3\text{-}7}$ ते$_1$ पूवपति व$_1$ न$_1$ पूवतर (→पूर्वतर)

११८ –a) दे$_{4\text{-}5}$ ते$_1$ यश्चैव (→यश्चैष); व$_3$ °वर्गतुल्य (→°तुल्यवर्ग) –b) कारा वद्धजटा व$_3$ श्वेतं यया (→श्वेत जटा); कारा यशेतवान्म्यम्, दे$_{3\text{-}7\,10,11}$ न$_1$ अधारयिष्यन् (→अधारयिष्यत्) –c) व$_1$ एव (→एष) दे$_3$ रूपं (→नूनं); शा$_1$ कारा

६५ ११७ श्वेत जटाभारमधारयिष्यत् ।
स एप नून तपता वरिष्ठो
ऋतध्वजो नात्र विचारमस्ति ११८
ततोऽब्रवीद्यो हृष्टा नन्दयन्ती सखीजनम् ।
एपोऽपरोऽस्यैव सुतो जाबालिर्नात्र सशय ॥ ११९
इत्येवमुक्त्वा वचन वलभ्या अवतीर्य च ।
समासताग्रत' शभोर्गायन्त्यो गीतिका शुभाम् ॥ १२०
नमोऽस्तु शर्व शभो त्रिनेत्र चारुगात्र त्रैलोक्यनाथ

उमापते दक्षयज्ञविध्वसकर कामाङ्गनाशन घोर पापप्रणाशन महापुरुष महोग्रमूर्त्ते सर्व सत्त्वक्षयकर शुभकर महेश्वर त्रिशूलधारिन् स्मरारे गुहावासिन् दिग्वास महाशङ्खशेखर [5] जटाधर कपालमालाविभूषितशरीर वामचक्षु वामदेवप्रजाध्यक्ष भगाक्ष्णो क्षयकर भीमसेन महासेननाथ पशुपते कामाङ्गदहन चत्वरवासिन् शिव महादव ईशान शकर भीम भव

---

का1 2 ब3 दे4 5 तपसा दे3 तपसा दे11 पतिता ते1 वदता (→तपता) ब1 दे1 4 11 ते °वरिष्ठ दे2 °वरिष्ठ दे3 °वसिष्ठ (→°वरिष्ठो) –d) दे7 ऋतुध्वजे ते1 कृतध्वजो (→ऋतध्वज) शा1 कारा का1 2 दे1 4 ते1 विचारणास्ति (→विचारमस्ति)

११९ –a) ब3 ग्रसौ (→अयो) शा1 कारा का1 न1 दृष्ट्वा (→हृष्टा) –b) शा1 कारा का1 2 मदयन्ती दे5 10 दम यन्ती (→नन्दयन्ती) –c) दे9 एपोय तस्यव दे11 एपोपरस्यव (→एपोऽपरोऽस्यव) ब3 सुते (→सुतो) –d) दे1 3 जापा (दे1 °प) लिर दे4 न1 जावाली (→जाबालिर्)

१२० दे1 cO –b) शा1 का1 2 बाहुभ्य कारा बाहुभि ब1 दे5 10 वडभ्याम्, दे3 मलभ्या दे7 11 न1 वलभ्याम् (→वलभ्या) शा1 कारा का1 2 त्ववतीर्य (→अवतीर्य) दे9 उपलभ्यावतीय च –c) कारा न1 समासन्ताग्रत ब3 दे 3 10 ते1 समासन्नाग्रत दे4 11 समासन्नग्रत (→समासताग्रत) –d) ब3 दे7 गायन्ती दे4 ते1 गायन्तो (→गायन्त्यो); शा1 कारा का1 गीतगा शुभा ब1 3 दे1 4 10 गीतकान् शुभान्, दे5 गीतिका शुभा दे7 गीतका शुभा दे9 गिरिजा शुभा दे11 गीतक शुभ ते1 गीतका ञ्छुभान् (→गीतिका शुभा)

१२०श्लोकान्तर शा1 कारा का1 ० दे5.9 10 न1 अधिकम्—कन्यका ऊचु

–1 दे4 5 11 ॐ O; दे9 ॐ नमोस्तु O; दे9 11 चारुगात्र O; शा1 का न1 ॐ नमोस्तु ते दे4 5 नमोस्तु ते (→नमोस्तु); शा1 का दे 5-7 सव (→शर्व) ब1 3 त्रिणेत्र दे9 त्रिणयन (→त्रिनेत्र); न1 त्रिनेत्र शभो (→शभो त्रिनेत्र) दे9 त्रिलोकी सम्प्रणोदित (→त्रैलोक्यनाथ)

–2 दे9 उमापते O शा1 कारा का1 ० ब1 3 दे 4 5 10 न1 घोर O; दे9 घोर' इत्यारभ्य ६ पंक्तौ 'शिवमहादेव' इति यावत् नास्ति दे11 कामाङ्गनाशन घोर O; दे1 3 ते1 उमापते (दे1 °ते) (→उमापते) दे1 4 °कारक (दे3 °क) ते1 °कारके (→°कर); दे3 °नाशन (→°नाशन); दे3 7 ते1 घोप (→घोर)

–3 दे9 O शा1 कारा का1 ० ब1 3 दे5 पापप्रणाशन O दे3 10 न1 ● प्रणाशन (दे10 °ना) दे7 प्रकाशन + प्रणाशन दे 1 आपशमना (→पापप्रणाशन) कारा का1 प्रभा° (→महो°) दे11 °मूर्त्ति (→°मूर्त)

–4 दे9 O शा1 शुभङ्कर O; दे 0 °भयकर (→क्षयकर); का1 दे1 शुभकर, दे3 शुभकार (→शुभकर) दे 4 ते1 त्रिशूलधर (दे3 °र) न1 त्रिशूलिन् (→त्रिशूलधारिन्)

–5 दे9 O ब1 स्मारारि, ते1 स्मारग (→स्मरारे) ब3 न1 गुह° (→गुहा°) दे 3 ते1 °धाम (दे3 °म) दे4 7 10-11 °वास (→°वासिन्) शा दिग्वास कारा का1 दे3 7 11 न1 दिग्वास (का1 °सो) (→दिग्वास) कारा महाङ्कुशेखर, दे3 महा●शेखर दे4 महाशशिशेखर ते1 भुवे महाचन्द्रशेखर (→महाशङ्खशेखर)

–6 दे9 O शा °माल° (→°माला°); शा1 दे4 °भूषित° (→°विभूषित°); कारा °विग्र° ब1 °शेखर (→°शरीर); शा1 कारा का भीमचक्षुर ब1 व्योमचक्षु दे11 वा● चक्षु न1 वामचक्षु (→वामचक्षु)

–7 दे9 O न1 प्रजाध्यक्ष O ब1 ० भरमन्निध दे1 3 ते1 क्षुभितदेव दे 7 10 न1 भीमदेव दे 1 भीम ●● (→वाम देव) दे4 भगाक्ष्णो दे7 भगाक्ष दे11 भगाक्ष्णो (→भगाक्ष्णो); दे भयकर दे 1 भयकारा (→क्षयकर)

–8 दे9 O शा1 कारा का1 दे1 3 ते1 न1 नाथ (→महासेननाथ) न1 पशुप्रभो (→पशुपते); दे 10 न1 कामाङ्ग° (→कामाङ्ग°); ब °देहन भुव °दाहिन् (→°दहन); शा1 चम वासिन्, ब1 स्मेरावासिन्, दे3 च वारवासिन (→चत्वरवासिन्)

–9 दे9. शिव महादेव O दे3.11 शिव (→शिव); शा दे3 महादेव (शा1 °व) (→महादेव) ब3 इशान (→ईशान); कारा भामसेन ब1 भीमवर दे4 भवभीम दे5 भीमभग (→भीम भव); दे 3 ईशान शकर भीम भव दे7 हर शङ्कर सर्व स्थाणो (→ईशान शङ्कर भीम भव)

वृषभध्वज जटिल प्रौढ महानाट्येश्वर भूरिरत्न
अविमुक्तक रुद्र रुद्रेश्वर स्थाणो एकलिङ्ग
कालिन्दीप्रिय श्रीकण्ठ नीलकण्ठ अपराजित
रिपुभयंकर संतोषपते वामदेव अघोर
तत्पुरुष महाघोर अघोरमूर्ते शान्त
सरस्वतीकान्त कीनाट सहस्रमूर्ते महोद्भव

विभो कालाग्निरुद्र रुद्र हर महीधरप्रिय
सर्वतीर्थाधिवास हंस कामेश्वर केदाराधिपते
परिपूर्ण मुचुकुन्द मधुनिवासिन् कृपाणपाणे
भयंकर विद्याराज सोमराज कामराज रञ्जक
अञ्जनराजकन्याहृदचलवसते समुद्रशायिन्
गजमुख घण्टेश्वर गोकर्ण ब्रह्मयोने बं. ६५

---

–10. कारा. ब$_{1.3}$ दे$_{1\,3}$ ते$_{1}$ न$_{1}$ वृषध्वज (दे$_{1}$ °ज), दे$_{5}$ सवृषध्वज (→वृषभध्वज), ब$_{1.3}$ कटकी, दे$_{1\,3.5}$ कटम, दे$_{4.10}$ ते$_{1}$ कटभी, दे$_{7}$ कटसी, दे$_{11}$ करश्री, न$_{1}$ करटि (→जटिल); दे$_{1}$ प्रोढ, न$_{1}$ चर्मधर प्रौंढ (→प्रौढ); शा$_{1}$ कारा. का$_{1.2}$ ** नाटयेश्वर, दे$_{1\text{-}3}$ महाना (दे$_{1.3}$ °न)येश्वर, दे$_{5}$ महावाहो येश्वर, दे$_{7}$ महानदीश्वर, दे$_{10}$ महावाहो ईश्वर (→महानाट्येश्वर), कारा. भूरिरत्नभूषण, ब$_{1}$ विभूतिरत, ब$_{3}$ दे$_{1\text{-}3.5.10}$ ते$_{1}$ न$_{1}$ भूतिरत (दे$_{3}$ °त), दे$_{7}$ भूभरता (→भूरिरत्न).

–11. ब$_{3}$ विश्वकर, दे$_{1}$ अविमुक्तक (→अविमुक्तक); दे$_{10}$ भद्र (→रुद्र); दे$_{3}$ रुद्रश्वर, दे$_{10}$ भद्रश्वर (→रुद्रेश्वर). 10-11 पङ्क्तिस्थाने दे$_{9}$—

पञ्चवक्त्र त्रिणयन त्रिशूलधराविमुक्तकर एकाभिलिङ्ग,
वृषभध्वज रुद्र नीलग्रीव जटाधर गङ्गाधरेश्वर.

–12. दे$_{9}$ श्रीकण्ठ ⊙; दे$_{11}$ शात श्रीकण्ठ (→श्रीकण्ठ); दे$_{2}$ नीलकण्ठ नीलकण्ठ, दे$_{3}$ नीलकण्ठ, दे$_{9}$ श्रीनीलकण्ठ (→नीलकण्ठ); दे$_{3}$ अपराजित (→अपराजित).

–13. दे$_{9}$ 'संतोषपते वामदेव अघोर' ⊙; ब$_{1}$ विप्र° (→रिपु°); कारा का$_{1}$ दे$_{5.9\,11}$ न$_{1}$ °क्षयकर, दे$_{1}$ °भयंकर (→°भयंकर); शा$_{1}$ सन्तोषपतो, ते$_{1}$ सीतापते, न$_{1}$ सद्योजात सतोपनाथ (→सन्तोषपते); शा$_{1}$ का$_{1}$ दे$_{11}$ वामदेवाघोर, कारा. सद्योजात वामदेव अघोर (→वामदेव अघोर)

–14. दे$_{9}$. ○; शा$_{1}$ कारा का$_{1.2}$ महाघोर अघोरमूर्ते शान्त ○; दे$_{11}$ अघोरमूर्ते ⊙; दे$_{3.9}$. शान्त ○; न$_{1}$ महादेव (→महाघोर); दे$_{2}$ ** मूर्ते, दे$_{7}$ अघोरमते, ते$_{1}$ अघोर** (→अघोरमूर्ते). ब$_{1}$ शान्तरूप, (ते$_{1}$ शान्ति) न$_{1}$ रंन्ना (→शान्त)

–15. शा$_{1}$ कारा. का$_{1\,2}$ दे$_{3}$ ○; दे$_{1\,2.4.10}$ ते$_{1}$ 'कीनाट' ○; दे$_{3}$ 'सरस्वतीकान्त कीनाट सहस्रमूर्ते' ○; ब$_{3}$ दे$_{5.11}$ कीनाट (दे$_{5}$ °ट), दे$_{7}$ कीनाट, न$_{1}$ कीनाटक (→कीनाट); दे$_{1}$ महोद्भव, महोद्भव, दे$_{4}$ न$_{1}$ भवोद्भव (→महोद्भव). दे$_{10}$. 15 16 पङ्क्त्योः स्थाने, वाङ्मनुमहोद्भव विभो कालाग्ने रुद्र (= 16)

–16. दे$_{9}$. ○; शा$_{1}$ कारा. का$_{1.2}$ 'विभो कालाग्निरुद्र रुद्र हर' ⊙; ब$_{1}$ दे$_{1\text{-}4}$ ते$_{1}$ कालाग्ने (→कालाग्नि-); दे$_{1\text{-}4}$ ते$_{1}$ रौद्रहर, न$_{1}$ हर रुद्र, दे$_{5}$ ** हर, दे$_{11}$ **** (→रुद्रहर); दे$_{3}$ °प्रिय (→ °प्रिय) ब$_{3}$ महाधराप्रिय, दे$_{11}$ महीधरतीर्थ (→महीधरप्रिय); दे$_{10}$. अस्य स्थाने—सरस्वतीकान्त सहस्रमूर्ते हर महीधरप्रिय.

–17. दे$_{9}$. ○; ब$_{3}$ 'कामेश्वर केदाराधिपते' ○; दे$_{1\,3.4}$ दे$_{10}$ 'हंस कामेश्वर' ⊙; ते$_{1}$ 'हस' ○; दे$_{11}$ प्रिय° (→सर्व°) ब$_{3}$ सर्वतीर्थाधिराज, दे$_{1.3}$ सर्वं तीर्थाधिवास (→सर्वतीर्थाधिवास); दे$_{1}$ कामेश्वर, दे$_{4}$ कामेश्वरं (→कामेश्वर); दे$_{7}$ केदाराधिपति (→केदराधिपते).

–18. ब$_{3}$ दे$_{9}$. ○; दे$_{2\,3}$ ते$_{1}$ परिपूर्णानुचकुं (दे$_{2}$ °कं) द (→परिपूर्ण मुचुकुन्द); शा$_{1}$ कारा. का$_{1.2}$ दे$_{5}$ मधु (कारा. का$_{1}$ °धु) रानिवासिन्, ब$_{1}$ मधुरानिवास, दे$_{1\text{-}4.10}$ ते$_{1}$ मधुनिवास, दे$_{3}$ मधुनिवास (→मधुनिवासिन्) शा$_{1}$ कारा. का$_{1\,2}$ दे$_{4.11}$ कपालपाणे (→कृपाणपाणे)

–19. ब$_{3}$ दे$_{9}$ ⊙; शा$_{1}$ ते$_{1}$ 'सोमराज' कामराज ○; कारा. का$_{1.2}$ दे$_{4}$ 'कामराज' ○; शा$_{1}$ कारा.का$_{1.2}$ दे$_{1\,4}$ 'रञ्जक' ○; शा$_{1}$ कारा. का$_{1}$ भैरव, का$_{2}$ भैरव भद्रकर, दे$_{1\text{-}3}$ भयंकर., दे$_{4.5.10}$ भैरव भयंकर, न$_{1}$ भयकर भैरव (→भयंकर), ब$_{3}$ कामराजक (→कामराज); दे$_{1.3}$ विद्याराज सोमराज कामराज (→विद्याराज सोमराज कामराज); ब$_{1}$ दे$_{10}$ रञ्जन, ते$_{1}$ रजर्क (→रञ्जक)

–20. ब$_{3}$ दे$_{9}$ ○; कारा का$_{1.2}$ दे$_{5}$ 'राजकन्याहृदयचलवसते' ○; शा$_{1}$ 'चलवसते' ○; दे$_{2.7}$ 'राजकन्या' ○; दे$_{4}$ 'राजकन्याचल' ○; शा$_{1}$ अञ्जनरक्तवसामो, कारा अर्नंजनरक्तवसन, का$_{1.2}$ अंञ्जनरक्तवसन, ब$_{1}$ अञ्जनावद्धवसन, दे$_{3}$ राजकन्याचलवसते, दे$_{4}$ अञ्जनवसते, दे$_{5}$ अञ्जनरक्तवसन, दे$_{10}$ न$_{1}$ अञ्जनाचलवसते, ते$_{1}$ स्वजसाचलवसते, मुद्रे. महीधरराजकन्याहृदञ्जवसते (→अंजनराजकन्याहृदचलवसते).

–21. ब$_{3}$ दे$_{9}$. ⊙; ब$_{1}$ दे$_{1\,3\,7.10}$ ते$_{1}$ 'घंटेश्वर' ○; शा$_{1}$ गगमुख, ब$_{1}$ दे$_{1\text{-}5.10}$ ते$_{1}$ गयामुख (दे$_{1}$ ख), दे$_{7}$ मयमुख (→गजमुख), दे$_{5.10}$ घटेश्वर, (→घण्टेश्वर), न$_{1}$ नटेश्वर गजमुख (→गजमुख घटेश्वर).

१२० सहस्रवक्त्राक्षिचरण हाटकेश्वर नमोऽस्तु ते ॥
एतस्मिन्नन्तरे प्राप्ताः सर्व एवर्षिपार्थिवाः ।
द्रष्टुं त्रैलोक्यकर्तारं त्र्यम्बकं हाटकेश्वरम् ॥ १२१
समारूढाश्च सुस्नाता ददृशुर्योषितश्च ताः ।
स्थितास्तु पुरतस्तस्य गायन्त्यो गेयमुत्तमम् ॥ १२२
ततः सुदेवतनयो विश्वकर्मसुतां प्रियाम् ।
दृष्ट्वा हृपितचित्तस्तु संरोहत्पुलको बभौ ॥ १२३
ऋतध्वजोऽपि तन्वङ्गीं दृष्ट्वा चित्राङ्गदां स्थिताम् ।
प्रत्यभिज्ञाय योगात्मा बभौ मुदितमानसः ॥ १२४
ततस्तु सहसाऽभ्येत्य देवेशं हाटकेश्वरम् ।
संपूजयन्तस्त्र्यक्षं ते स्तुवन्तः संस्थिताः क्रमात् ॥ १२५
चित्राङ्गदापि तान् दृष्ट्वा ऋतध्वजपुरोगमान् ।
समं ताभिः कृशाङ्गीभिरभ्युत्थायाभ्यवादयत् ॥ १२६
स च ताः प्रतिनन्द्यैव समं पुत्रेण तापसः ।
समं नृपतिभिर्हृष्टः संविवेश यथासुखम् ॥ १२७
ततः कपिवरः प्राप्तो घृताच्या सह सुन्दरि ।
स्नात्वा गोदावरीतीर्थे दिदृक्षुर्हाटकेश्वरम् ॥ १२८
ततोऽपश्यत् सुतां तन्वीं घृताची शुभदर्शनाम् ।
साऽपि तां मातरं दृष्ट्वा हृष्टाऽभूद्वरवर्णिनी ॥ १२९
ततो घृताची स्वां पुत्रीं परिष्वज्य न्यपीडयत् ।

—22. ब$_{3}$ दे$_{9}$ ते$_{1}$ 'सहस्रवक्त्राक्षि चरण' ○; न$_{1}$ सहस्राक्षचक्राक्षिचरण (→सहस्रवक्त्राक्षिचरण). शा$_{1}$ कारा का$_{1.2}$ ब$_{3}$ दे$_{4.5.7.10}$ ते$_{1}$ न$_{1}$ ॐ हाटकेश्वर (दे$_{4}$ °रो) (→हाटकेश्वर); ब$_{1.3}$ दे$_{1-4}$ नमस्ते, दे$_{7}$ नमस्ते, नमस्ते न$_{1}$ शिवनमोनमस्ते (→नमोस्तु ते)

अत पर कारा. अधिकम्—इति वामनपुराणे दण्डकोपाख्याने हाटकेश्वरगद्यस्तोत्रं नाम त्रिसप्ततितमोऽध्याय ॥

१२१. —b) शा$_{1}$ कारा. का$_{1.2}$ देवर्षि, दे$_{9}$ एव हि (→एवर्षि-) —c) शा$_{1}$ कारा. का$_{1.2}$ ब$_{3}$ दे$_{5.9.10}$ न$_{1}$ °भर्त्तारं (→°कर्त्तारं); दे$_{7}$ द्रष्टुं त्रिलोककर्त्तारं. —d) दे$_{9}$ शंकरं (→त्र्यम्बक)

१२२. —a) दे$_{1}$ समुद्रास्ते च सुस्नाता —b) ब$_{3}$ दे$_{1-3}$ ते$_{1}$ शुभा (→च ता). —c) कारा. दे$_{4}$ स्थिताश्च, ब$_{1}$ स्थिता ह्यु, ते$_{1}$ स्थिता सु (→स्थितास्तु). —d) दे$_{11}$ ते$_{1}$ गीतम् (→गेयम्).

१२३. —a) शा$_{1}$ का$_{1}$ यदेवायतने चित्त (का$_{1}$ °त्र), कारा प्रासादे सुरयो राजा, का$_{2}$ यदेवायं तेन चित्त. —b) शा$_{1}$ सुता (→सुतां); का$_{1}$ ते$_{1}$ प्रिय (→प्रिया), दे$_{4}$ (तां सुरय) विश्वकर्मसुता प्रियाम् —c) शा$_{1}$ कारा का$_{2}$ दे$_{2.7}$ हर्षित°, दे$_{3}$ ऋषित,° (→हृपित°); दे$_{7}$ च (→तु). का$_{1}$ दृष्ट्वा हर्षितचित्तातु, ते$_{1}$ दृष्ट्वा मपिस्चिन्ता तु. —d) का$_{1}$ दे$_{3}$ °पुलकाद्भुतो, दे$_{7}$ ते$_{1}$ °पुलके बभौ (→°पुलको बभौ).

१२४ —a) दे$_{5.7}$ ऋतुध्वजो (दे$_{7}$ °जे) (→ऋतध्वजो); दे$_{3}$ च (→[-अ] पि), शा$_{1}$ का$_{1.2}$ चस्तवेपिततन्वङ्गीं, कारा. तन्वङ्गीं वेपितो राजा —b) ब$_{1}$ शुभां (→स्थिता). —c) शा$_{1}$ प्रति (त्य?) भिज्ञाय (→प्रत्यभिज्ञाय). —d) दे$_{1.3}$ ते$_{1}$ बलो, दे$_{2}$ बाला (→बभौ), शा$_{1}$ °मानसा (→°मानस).

१२५. दे$_{11}$.cd ○. —a) दे$_{1.3.4}$ ते$_{1}$ तत प्राह समभ्येत्य, मुवे. ततस्तेपि समभ्येत्य. —b) शा$_{1}$ का$_{1.2}$ दे$_{5.10}$ न$_{1}$ देवं स, कारा स देव (→देवेश). —c) ब$_{1}$ त्र्यक्ष्य ते, दे$_{4}$ त्यक्षन्ते, दे$_{7}$ प्रेक्षन्त, दे$_{9}$ न$_{1}$ कुसुमै (→त्र्यक्ष ते). —d) दे$_{1.4}$ ते$_{1}$ सस्तुवन्त क्रमात्तत, दे$_{9}$ कुर्वन्त सस्तुति क्रमात्.

१२६. —a) ब$_{3}$ दे$_{3.9}$ न$_{1}$ ता (→तान्). —b) दे$_{5.7}$ ऋतुध्वज° (→ऋतध्वज°). —c) ब$_{3}$ ताभि सह (→समं ताभि); दे$_{2.3}$ कृशाङ्गाभि (→कृशाङ्गीभि). —d) शा$_{1}$ का$_{2}$ अनुत्थाय, दे$_{7}$ अभुच्छा (त्था ?) य, दे$_{11}$ अत्युत्थाय-, न$_{1}$ प्रत्युत्थाय (→अभ्युत्थाय); दे$_{3.7.11}$ [-अ]भ्यवादयन्, दे$_{5}$ [-अ]भ्यवारयत, ते$_{1}$ [-अ] भ्युपादयत (→[-अ] भ्यवादयत).

१२७. —a) शा$_{1}$ कारा. का$_{1.2}$ ब$_{1}$ दे$_{5}$ स च तां, दे$_{9}$ सेवतो (?), दे$_{10}$ सा च तान्, दे$_{11}$ सानुत्ता (→स च ता); ब$_{3}$ प्रतिवन्द्यैव, ते$_{1}$ प्रतिमन्त्र्यैवं (→प्रतिनन्द्यैव). —b) ब$_{3}$ तापसा (→तापस) —d) शा$_{1}$ कारा का$_{1.2}$ प्रविवेश, दे$_{11}$ विवेश च (→संविवेश).

१२८. —a) ब$_{1}$ प्रीतो (→प्राप्तो). —b) दे$_{7}$ घृतायं (→घृताच्या); दे$_{2}$ सुर-, दे$_{7}$ स हि (→सह). —c) शा$_{1}$ कारा का$_{1.2}$ स्नातो (→स्नात्वा) —c) न$_{1}$ गोदावरे (→गोदावरी-), ब$_{3}$ °तीरे (→°तीर्थे). —d) शा$_{1}$ का$_{2}$ दे$_{10}$ न$_{1}$ द, (का$_{2}$ दे$_{10}$ न$_{1}$ दि) दृक्षु, का$_{2}$ दे$_{10}$ न$_{1}$ कारा. का$_{1}$ दर्शं (→दिदृक्षु).

१२९. —a) ब$_{3}$ [-अ] पश्यश्च तां, दे$_{1}$ [-अ] पश्यच्युतां दे$_{3}$ [-अ]पश्यच्युता, दे$_{7}$ पश्यन्तु ता (→[-अ] पश्यत् सुतां). दे$_{2.3.11}$ तन्वी (→तन्वीं) —b) कारा का$_{1.2}$ ब$_{1.3}$ दे$_{1-2.4.5-7.9.10}$ ते$_{1}$ घृताचीं (→घृताची). —c) दे$_{7}$ स्वा (→तां). —d) दे$_{11}$ हृष्ट्वा (→हृष्टा)

१३०. —a) दे$_{7}$ घृताचीं (→घृताची); दे$_{10}$ न$_{1}$ तां (→स्वां). —b) शा$_{1}$ का$_{2}$ दे$_{11}$ न्यपीडयन्, दे$_{7}$ [-अ]भ्यपीडयन्(→न्यपीडयत्). —c) ब$_{1}$ सबाष्पनयनस्नेहाद, ब$_{3}$ दे$_{11}$ स्नेहार्द्र (ब$_{3}$ द्र) बाष्पनयना, दे$_{1}$ स्नेहार्तिस्निग्धनयना, दे$_{2.7.10}$ स्नेहातिबाष्पनयना,

स्नेहात् सनाष्पनयना मुहुस्तां परिजिघ्रती ॥ १३०
ततो ऋतध्वजः श्रीमान् कपिं वचनमब्रवीत् ।
गच्छानेतुं गुह्यकं त्वमञ्जनाद्रौ महाञ्जनम् ॥ १३१
पातालादपि दैत्येशं वीरं कन्दरमालिनम् ।
स्वर्गाद् गन्धर्वराजानं पर्जन्यं शीघ्रमानय ॥ १३२
इत्येवमुक्ते मुनिना प्राह देववती कपिम् ।
गालवं वानरश्रेष्ठ इहानेतुं त्वमर्हसि ॥ १३३
इत्येवमुक्ते वचने कपिर्मारुतविक्रमः ।
गत्वाऽञ्जनं समामन्त्र्य जगामामरपर्वतम् ॥ १३४
पर्जन्यं तत्र चामन्त्र्य प्रेषयित्वा महाश्रमे ।
सप्तगोदावरे तीर्थे पातालमगमत् कपिः ॥ १३५
तत्रामन्त्र्य महावीर्यं कपिः कन्दरमालिनम् ।
पातालादभिनिष्क्रम्य महीं पर्यचरज्जवी ॥ १३६
गालवं तपसो योनिं दृष्ट्वा माहिष्मतीमनु ।
समुत्पत्यानयच्छीघ्रं सप्तगोदावरं जलम् ॥ १३७
तत्र स्नात्वा विधानेन संप्राप्तो हाटकेश्वरम् ।
ददर्श नन्दयन्ती च स्थितां देववतीमपि ॥ १३८
तं दृष्ट्वा गालवं चैव समुत्थायाभ्यवादयत् ।
स चार्चिष्यन्महादेवं महर्षीनभ्यवादयत् ।
ते चापि नृपतिश्रेष्ठास्तं संपूज्य तपोधनम् ॥ १३९
प्रहर्षमतुलं गत्वा उपविष्टा यथासुखम् ।
तेषूपविष्टेषु तदा वानरोपनिमन्त्रिताः ॥ १४० वे. ६५

दे$_3$ स्नेहातिसस्यानयना, दे$_4$ स्नेहातिरक्तनयना, दे$_9$ बाष्पं सुपूर्णनयनं, तै$_1$ स्नेहात् * * * नयना. –d) दे$_9$ वहुस्ता (?) (→मुहुस्ता).

१३१. –a) कारा. दे$_{1\ 7}$ ऋत (दे$_7$ °तु) ध्वजस्तत, का$_1$ तस्त्ववृतध्वज (→ततो ऋतध्वज). –b) शा$_1$ का$_2$ कपे (→कपिं). –c) कारा. दे$_9$ गुह्यकं तं, ब$_3$ महाद्रेत (?), दे$_{7.11}$ गुह्यक त्वं (→गुह्यक त्व). –d) कारा. तमञ्जन, का$_1$ ब$_1$ दे$_{1.3.4.5}$ तै$_1$ महाजन, दे$_2$ सहानुज, दे$_7$ सहाञ्जनं, दे$_{11}$ * * * * (→महाञ्जनम्); ब$_3$ गुह्यक त्व महाञ्जनं, दे$_9$ अञ्जनाद्रौ हिमाञ्जनम्.

१३२. ब$_3$. cd ⊙ –a) ब$_1$ दे$_{2-11}$ न$_1$ दैत्येन्द्र (→दैत्येश). –b) दे$_{3\ 11}$ वीर-, दे$_{10}$ वीरे (→वीरं), दे$_9$ °मं लिन, दे$_{10}$ °शालिन (→°मालिन). –c) दे$_7$ स्वर्गं (→स्वर्गाद्).

१३३. ब$_3$ दे$_5$. ○; का$_1$. ab ○. –a) दे$_{1-11}$ न$_1$ उक्तो (→उक्ते); कारा. इत्येव मुनिना प्रोक्त. –b) दे$_{1.2}$ वेदवती (→देववती); शा$_1$ का$_2$ प्रोक्तं देववती कपिम्. –c) शा$_1$ दे$_7$ °श्रष्ठ (→°श्रेष्ठ); दे$_4$ गालववचन श्रेष्ठ, दे$_9$ लाघवाद् वानरश्रेष्ठ. –d) शा$_1$ का$_{1.2}$ त्वमिहानेतुमर्हसि, कारा. त्वमानेतुमिहार्हसि.

१३४. ब$_3$. ○. –b) दे$_{1-4\ 7.11}$ तै$_1$ कपीन्द्राऽमितविक्रम. –c) शा$_1$ का$_{1\ 2}$ दे$_{10}$ स चामन्त्र्य, दे$_9$ समातम्य (→समामन्त्र्य); कारा. मञ्जनमामन्त्रयितुं. –d) शा$_1$ कारा. का$_{1\ 2}$ °माञ्जन° (→°मामर°).

१३५. ब$_3$. ○. –a) दे$_7$ पर्वत (→पर्जन्य), कारा स्वर्गं पर्जन्य चामन्त्र्य –b) शा$_1$ कारा. का$_{1\ 2}$ तै$_1$ महाश्रम (→महाश्रमे) –c) दे$_9$ स सं (→सप्त-); शा$_1$ कारा. का$_{1\ 2}$ ब$_1$ दे$_{1-5.7.9-10}$ तै$_1$ न$_1$ °गोदावरी- (→°गोदावरे).

१३६. ब$_3$. ab ○; दे$_1$ तै$_1$. १३६ a–१३८ d ○ (द्र. सं.). –a) ब$_1$ दे$_{2-3.9-11}$ महावीर्यं, न$_1$ महावीर. (→महावीर्यं). –b) शा$_1$ दे$_3$ कपि-(पि ?) (→कपिः). –c) ब$_3$ [-अ]तिनिर्गम्य, दे$_{3.7}$ [-अ]तिनिष्क्रम्य, दे$_9$ [-अ]पिनिष्क्रम्य, (→[अ-]भिनिष्क्रम्य) –d) शा$_1$ का$_{1.2}$ तदा, कारा. तत, दे$_{9\ 10}$ जवात्, दे$_{11}$ क्षवीं (→जवी), दे$_9$ मृगीपुर्विचार स.

१३७. दे$_1$ तै$_1$. ⊙ (द्र. १३६ पा. वि.). –a) दे$_{11}$ गालवो (→गालव); दे$_7$ न$_1$ तपसां (→तपसो). –b) दे$_7$ दृष्टो (→दृष्ट्वा); शा$_1$ °मते (→°मतीं). –c) का$_2$ दे$_4$ न$_1$ तमुत्पत्या, ब$_1$ दे$_{11}$ समुत्पाद्य (→समुत्पत्य); शा$_1$ कारा. का$_{1.2}$ क्षिप्रं (→शीघ्रं); दे$_{10}$ समुत्पपात यत् क्षिप्र, न$_1$ समुत्पाद्यातरत् क्षिप्रं. –d) शा$_1$ कारा. का$_{1.2}$ ब$_1$ दे$_{2-5.7\ 10}$ न$_1$ -गोदावरी- (→-गोदावर).

१३८ दे$_1$ तै$_1$ ○ (द्र. १३६ पा. वि.). –a) ब$_1$ ज्ञात्वा (→स्नात्वा). –c) शा$_1$ कारा. का$_{1\ 2}$ दे$_{10}$ मदयन्ती (शा$_1$ °ते) च, दे$_{11}$ ता मदयन्तीं, मुवे दमयन्तीं तां (→नन्दयन्ती च); ब$_1$ दे$_3$ वेदवतीं (→देववतीम्); ब$_3$ इव (→अपि)

१३९ दे$_{1-4}$ तै$_1$. cd○. –a) शा$_1$ कारा. का$_{1.2}$ ब$_3$ दे$_{1.7.10.11}$ ते, ब$_1$ ता(→तं) –b) ब$_1$ [-अ]त्यवदयन्, दे$_{4.9}$ [-अ]भ्यवन्दतां, न$_1$ [-अ]भिवन्द्य त (→[-अ]भ्यवादयत्) कारा ab स्थाने त दृष्ट्वा गालवं चाभ्यवादयेतां शुचिस्मिते –c) कारा स चार्चिचत् महादेव, ब$_1$ दे$_{7.10.11}$ स चा (दे$_{11}$ वा) शिष्य महादेव, ब$_3$ स चापि महादेव, दे$_9$ स चान्विष्यन् महादेव, दे$_3$ न$_1$ सर्वा शिष्या महादेव. –d) दे$_{10}$ सप्तर्षीन् (→महर्षीन्) –f) का$_2$ दे$_{10}$ प्रपूज्य, न$_1$ च पूज्य (→संपूज्य); ब$_3$ दे$_{11}$ °निधिम् (→°धनम्), दे$_7$ सम पूज्य तपोधनं, तै$_1$ संपूज्य तपसो धनम्

१४० –c) दे$_9$ तया (→तदा) –d) दे$_{3-11}$ वानरोपि निमन्त्रित (दे$_{11}$ °ता), दे$_{1\ 4-7}$ तै$_1$ न$_1$ वानरेण निमन्त्रिता.

६५. १४० समायाता महात्मानो यक्षगन्धर्वदानवाः ।
तानागतान् समीक्ष्यैव पुण्यस्ताः पृथुलोचनाः ॥ १४१
स्नेहार्द्रनयनाः सर्वास्तदा सस्वजिरे पितॄन् ।
नन्दयन्त्यादिका दृष्ट्वा सपितृका वरानना ॥ १४२
सबाष्पनयना जाता विश्वकर्मसुता तदा ।
अथ तामाह स मुनिः सत्यं सत्यध्वजो वचः ॥ १४३
मा विषादं कृथाः पुत्रि पिताऽयं तव वानरः ।
सा तद्वचनमाकर्ण्य व्रीडोपहतचेतना ॥ १४४
कथं तु विश्वकर्माऽसौ वानरत्वं गतोऽधुना ।
दुष्पुत्र्यां मयि जातायां तस्मात् त्यक्ष्ये कलेवरम् ॥ १४५
इति संचिन्त्य मनसा ऋतध्वजमुवाच ह ।
परित्रायस्व मां ब्रह्मन् पापोपहतचेतनाम् ॥ १४६
पितृघ्नी मर्तुमिच्छामि तदनुज्ञातुमर्हसि ।
अथोवाच मुनिस्तन्वीं मा विषादं कृथाधुना ॥ १४७
भाव्यस्य नैव नाशोऽस्ति तन्मा त्याक्षीः कलेवरम् ।
भविष्यति पिता तुभ्यं भूयोऽप्यमरवर्द्धकिः ॥ १४८
जातेऽपत्ये घृताच्यां तु नात्र कार्या विचारणा ।
इत्येवमुक्ते वचने मुनिना भावितात्मना ॥ १४९
घृताची तां समभ्येत्य प्राह चित्राङ्गदां वचः ।
पुत्रि त्यजस्व शोकं त्वं मासैर्दशभिरात्मजः ॥ १५०
भविष्यति पितुस्तुभ्यं मत्सकाशान्न संशयः ।
इत्येवमुक्ता संहृष्टा बभौ चित्राङ्गदा तदा ॥ १५१
प्रतीक्षन्ती सुचार्वङ्गी विवाहे पितृदर्शनम् ।

---

१४१. –a) दे$_{1\ 3}$ समाद्या (°या ?) ता (→समायाता). –b) व$_{1}$ °किन्नरा (→°दानवा). –d) व$_{1}$ क्षेत्रस्था', दे$_{2}$ पुत्रस्ता' (→पुण्यस्ता); दे$_{4}$ पितृ° (→पृथु°).

१४२. –a) दे$_{1-4}$ ते$_{1}$ ता वै, दे$_{11}$ ता * (→सर्वा). –b) व$_{1.3}$ ता वै, दे$_{2}$ सर्व्वान्, दे$_{4}$ पितॄन्, दे$_{7}$ तान् वै, (→तदा); दे$_{2.4.7}$ भृशं (→पितॄन्). दे$_{1}$ समाश्वस्य न तै भृश, दे$_{3}$ तदा स स्वजने पितॄन्, ते$_{1}$ *** स सते भृश. –c) शा$_{1}$ कारा. का$_{1\ 2}$ दे$_{5.10}$ मदयन्त्यादिका दृष्ट्वा, दे$_{1.3}$ ते$_{1}$ नदयत्यादिको (का ?) दृष्ट्वा, दे$_{7}$ मदयन्त्यपि तान् दृष्ट्वा, दे$_{9}$ नन्दयन्त्यादिका हृष्टा, मुवे. दमयन्त्यादिका दृष्ट्वा. –d) दे$_{4}$ स्वपितृस्ता, दे$_{9}$ स * तिक-, ते$_{1}$ सापि दृष्टा, न$_{1}$ स्वपितॄन् ता, मुवे. पितृयुक्ता (→सपितृका); का$_{1}$ दे$_{7.10}$ न$_{1}$ वरानना (→वरानना).

१४३. –a) शा$_{1}$ सानुवाक्यानना, कारा. का$_{2}$ सान्त्ववाक्यानना, का$_{1}$ सामवाक्यानना, दे$_{2}$ सावरयनयना, दे$_{3}$ सभाष्पनमना (→सबाष्पनयना). –d) व$_{1}$ सत्य ध्वजो, दे$_{4}$ कृतध्वजो (→सत्यध्वजो), दे$_{9}$ सत्यं सत्य वदासु च.

१४४ –d) दे$_{7}$ °चेतन, दे$_{9}$ °चेतसा (→°चेतना).

१४५. –a) शा$_{1}$ कथं बो, कारा कथं वा, का$_{1.2}$ दे$_{5.10}$ कथ वै, दे$_{3}$ कोय वै (→कथ नु); दे$_{7}$ विश्वकर्मा सन्, दे$_{9}$ विश्वकर्मा स (→विश्वकर्मासौ). –c) दे$_{7.11}$ दुःपुत्र्या (→दुष्पुत्र्या), दे$_{10}$ मयि (→मयि). –d) व$_{1}$ तस्मात्मोक्ष्य कलेवरं, दे$_{3}$ न त्वं त्यज्ये कलेवरं.

१४६. व$_{1}$ १४६a–१४८b ○ (द्र. सं.). –a) दे$_{7}$ मरवायं (→मनसा). –b) कारा. सत्यध्वजम्, दे$_{7}$ ऋतुध्वजम् (→ऋतध्वजम्). –d) व$_{1}$ दे$_{1-4\ 9}$ ते$_{1}$ °चेतसम्, दे$_{7.11}$ °चेतसा (→°चेतनाम्).

१४७. व$_{3}$. ⊙. (द्र. १४६ पा. वि.). –a) दे$_{7.10}$ पितृघ्नी (→पितृघ्नी); शा$_{1}$ कारा. का$_{1}$ भर्तुम् (→मर्तुम्). –b) दे$_{5.11}$ ते$_{1}$ तदत्र क्षन्तुमर्हसि. –c) दे$_{4}$ मुनि, दे$_{10}$ मुनेस् (→मुनिस्). –d) कारा. वृथा कृथा, व$_{1}$ दे$_{3.4\ 9.11}$ कृताधुना (→कृथाधुना).

१४८. व$_{3}$. ab ⊙. (द्र. १४६ पा. वि.). –a) दे$_{1-3.4.7}$ ते$_{1}$ स (दे$_{3}$ स) भाव्ये (दे$_{3.7}$ °व्यो) न विनाशोस्ति. –c) दे$_{3}$ तपिष्यति (→भविष्यति); न$_{1}$ भूयो (→तुभ्य) –d) शा$_{1}$ दे$_{11}$ भूयोपि, दे$_{2}$ भूयोय, दे$_{9}$ भूयो यो, न$_{1}$ तुभ्य चा- (→भूयोप्य-); का$_{1}$ दे$_{7}$ °वार्ध (दे$_{7}$ °द्धु) कि, दे$_{2}$ °वार्द्धके, दे$_{3}$ °वर्धिके (→°वर्द्धकि).

१४९. –a) दे$_{9}$ न$_{1}$ जाते पुत्रे, ते$_{1}$ जातोपत्यो (→जातेऽपत्ये); दे$_{3.11}$ घृताच्या तु (→घृताच्यां तु). –d) दे$_{4}$ मुनिना सा तया पुन . दे$_{7}$ मुनीना भावितात्मना

१५०. –a) दे$_{7}$ ता (च) (→ता). –b) दे$_{1}$ न$_{1}$ तत, दे$_{11}$ स्वर (→वच). –c) व$_{3}$ दे$_{1\ 3}$ ते$_{1}$ परित्यजस्व (→पुत्रि त्यजस्व) –d) का$_{2}$ दे$_{1}$ मात्मन, व$_{1}$ मात्मजे, दे$_{11}$ आत्मजः (→मात्मज)

१५१. दे$_{3}$ १५१ d–१५३ c ○. –a) दे$_{1}$ तुभ्यो (→तुभ्यं). –c) शा$_{1}$ कारा. का$_{1\ 2}$ दे$_{5}$ सन्तुष्टा, (→संहृष्टा). –d) दे$_{7}$ तया (→तदा).

१५२. दे$_{3}$. ○ (द्र. १५१ पा. वि). –a) शा$_{1}$ प्रतीक्ष्य-न्तीस-, व$_{1.3}$ दे$_{10}$ प्रतीक्षत सु-, दे$_{1.2}$ ते$_{1}$ स्व प्रतीक्षत, दे$_{3}$ सप्रतीक्ष्यत, दे$_{4}$ स्व प्रतीक्षत, दे$_{5}$ प्रतीक्षित सु-, दे$_{1}$ स्वं प्रतीक्षस्व, दे$_{11}$

८१ तमाराध्य जगन्नाथं नक्षत्रपुरुषेण हि ॥ ८१
सुरूपतामवाप्याग्र्यां तस्मिन्नेव च जन्मनि ।
ततः प्रियोऽभूद् भार्याया भोगवांश्चाभवद् वशी ।
श्रवणद्वादशीभक्तः पूर्वाभ्यासादजायत ॥ ८२

एवं पुराऽसौ द्विजपुंगवस्तु
कुरूपरूपो भगवत्प्रसादात् ।
अनङ्गरूपप्रतिमो बभूव
मृतश्च राजा स पुरूरवाऽभूत् ॥ ८३

इति श्रीवामनपुराणे त्रिपञ्चाशोऽध्याय ॥ ५३ ॥

# ५४

नारद उवाच ।❀
पुरूरवा द्विजश्रेष्ठ यथा देव श्रियः पतिम् ।
नक्षत्रपुरुषाख्येन आराधयत तद् वद ॥ १

पुलस्त्य उवाच ।❀
श्रूयतां कथयिष्यामि नक्षत्रपुरुषव्रतम् ।
नक्षत्राङ्गानि देवस्य यानि यानीह नारद ॥ २

---

ब$_2$ तमरोध्य (→तमाराध्य) –d) दे$_9$ तत्क्षणात्, दे$_{11}$ तत्र तत्र (→नक्षत्र ), दे$_4$ वै (→हि)

८२ –a) का$_2$ ब$_3$ दे$_{1\ 3\ 7\ 10\cdot 11}$ ते$_1$ स°, दे$_9$ न$_1$ स्व° (→सु°) दे$_{1\ 3}$ ते$_1$ अवाप्यायम, दे$_9$ स च प्राप्य दे$_{11}$ अवाप्यग्र(?) (→अवापाग्र्या) –b) ब$_{1\ 2}$ हि जन्मनि, दे$_4$ तु जन्मनि, दे$_7$ चात्मनि, दे$_{11}$ ** न्मना (→च जन्मनि) –c) ब$_{1\ 3}$ [अ]सौ (→[-अ]भूत्), ब$_{1\ 3}$ दे$_{1\ 3\ 5\ 9}$ ते$_1$ भार्य्यायाम् (→भार्य्याया) –d) शा$_1$ कारा का$_{1\ 2}$ दे$_{5\ 10\ 11}$ भोग्यता, न$_1$ भागवान् (→भोगवान्) दे$_5$ च भवत्, दे$_{10}$ च गमत् (?), दे$_{11}$ [-अ] था न वद्, न$_1$ स्वभवत् (→चाभवत्) –e) दे$_{11}$ श्रवणा° (→ श्रवण°) शा$_1$ कारा का$_{1\ 2}$ दे$_{5\ 10\ 11}$ °युक्त (→ °भक्त ) –f) का$_1$ पूर्वाम्य,+पूर्वाम्यासात् (→पूर्वाभ्यासात्)

८२ श्लोकस्य ab,cd मध्ये दे$_{11}$ अधिकम—
302 * इन्द्रियाण्यपि तुष्यतेस्तद्दृहदेहिनो नृप ।
कारणा यात्मनस्तानि सूक्ष्म पश्यति तं सुत ।
आत्मना विप्रहीनानि काष्ठाकय समानि तु ।
विनश्यति न सदेह केन इव महार्णवे ॥ 4 ॥
इन्द्रियै सह सुप्तस्य देहिन शत्रु जायन ।
तत्वस्य च गुणा नरजस्य गुणान् प्रभु ॥
च जन्मनी

८३ –a) दे$_3$ पुरा या (→पुरासौ) –b) ब$_1$ ** सु (→कुरूप ) दे$_{11}$ °सषो (?) (→°रूपो) शा$_1$ भगवान् (→भगवद् ) –c) दे$_2$ अनङ्गरूपे, दे$_9$ अनन्तरूप , दे$_{11}$ अनङ्गतुल्य (→ अनङ्गरूप ) –d) शा$_1$ मृतेश्च, दे$_5$ मृतेव, दे$_{11}$ तथैव (→मृतश्च) दे$_9$ पुरूरवावत्, दे$_{11}$ तु रूरवाह्यभूत्, न$_1$ पुरूरवोभूत् (→ पुरूरवाभूत् )

पुष्पिका—ब$_3$ ○, शा$_1$ कारा का$_{1\ 2}$ दे$_{5\ 9\ 11}$ न$_1$ इति (दे$_1$ [इति]) श्री (कारा दे$_{5\ 11}$ [श्री]) वामनपुराणे वामनप्रादुर्भावे प्रह्लादतीर्थयात्रायाम्, ब$_1$ ॰ इति वामनपुराणे दे$_{1\ 4}$ इति वामन पुराणे प्रह्लादतीर्थयात्रायाम्, दे$_{2\ 3}$ ते$_1$ इति श्रीवामनपुराणे प्रह्लादतीर्थयात्रायाम् , दे$_7$ इति श्रीवामनपुराणे प्रह्लादतीर्थयात्राया पुरश्रवसोपाख्याने, मुवे इति श्रीवामनपुराणे पुलस्त्यनारदसंवादे वामनप्रादुर्भावे प्रह्लादतीर्थयात्रायाम् अध्यायनाम—दे$_{\circ\ 9}$ न$_1$ ○, शा$_1$ का$_1$ ॰ प्रतोपाख्यानम्, कारा प्रतमोचन नाम, ब$_{1\ 3}$ दे$_{10}$ पुरूरवस उपाख्शानम् दे$_1$ श्रवणद्वादश्योपाख्यान पुरूरवसोपाख्यानम्, दे$_{2\ 3}$ पुरूरवसोपाख्यानम्, दे$_4$ पुरूरवस आख्यानम्, दे$_7$ श्रवणद्वादशी नाम दे$_{11}$ पुरूरवा उत्पत्ति ते$_1$ पुरूरवसोपाख्यान नामाध्याय अध्याय सख्या —शा$_1$ का$_1$ ब$_{1\ 3}$ दे$_{1\ 5\ 7}$ ते$_1$ ○,कारा पचनवतितमोध्याय का$_2$ ॥६८॥, दे$_9$ एकपञ्चाशोध्याय , दे$_{10}$ ॥७६॥, दे$_{11}$ ॥७५॥, न$_1$ द्विपञ्चाशोऽध्याय , मुवे नवसप्ततितमोऽध्याय

अध्यायनामानन्तर शा$_1$ का$_{1\ 2}$ ब$_1$ ॰ अधिकम्– समाप्तम्

५४

❀दे$_9$ न$_1$ ○ शा$_1$ नारद दे$_{2\ 4\ 5}$ नारद उ , न$_1$ श्रीनारद

१ –a) कारा दे$_9$ न$_1$ °श्रेष्ठो (→°श्रेष्ठ) –d) ब॰ अवोधयत (→आराधयत)

❀शा$_1$ दे$_{1\ 9}$ न$_1$ पुलस्त्य

२ –b) ब$_1$ °पुरुषोत्तम (→°पुरुषव्रत) –c) दे$_9$ नक्षत्रे च* दे$_{11}$ नभत्रतागानि (→नक्षत्राङ्गानि) –d) शा$_1$ दे$_7$ यानि हि, दे॰ यानि ह (→यानीह)

मूलर्क्षं चरणौ विष्णोर्जङ्घे द्वे रोहिणी स्मृते ।
द्वे जानुनी तथाश्विन्यौ संस्थिते रूपधारिणः ॥ ३
आपाढे द्वे द्वयं चोर्वोर्गुह्यस्थं फाल्गुनी द्वयम् ।
कटिस्थाः कृत्तिकाश्चैव वासुदेवस्य संस्थिताः ॥ ४
प्रोष्ठपद्याद्वयं पार्श्वे कुक्षिभ्यां रेवती स्थिता ।
उरःसंस्था त्वनुराधा श्रविष्ठा पृष्ठसंस्थिता ॥ ५

विशाखा भुजयोर्हस्तः करद्वयमुदाहृतम् ।
पुनर्वसुरथाङ्गुल्यो नखाः सार्पं तथोच्यते ॥ ६
ग्रीवास्थिता तथा ज्येष्ठा श्रवणं कर्णयोः स्थितम् ।
मुखसंस्थस्तथा पुष्यः स्वातिर्दन्ताः प्रकीर्तिताः ॥ ७
हनू द्वे वारुणश्चोक्तो नासा पैत्र उदाहृतः ।
मृगशीर्षं नयनयो रूपधारिणि तिष्ठति ॥ ८ नं. ८

३. –a) ब2.3 मूलर्क्षस्, दे2 मूलस्तु (→मूलर्क्षं); दे9 मूल (नक्षत्र)चरणे विष्णोर्. –b) ब1 2 दे9.10 न1 स्थिता, दे5 स्मृता, दे1 4 ते1 स्थिते (→स्मृते); दे7 रोहिण्यो जङ्घयो स्थिते –c) शा1 का1 द्वे सक्ति(थि?)नी, का2 द्वे सक्थिनी, दे1 3 ते1 कथन्विनी (दे2 न्वीनी), दे4 सक्थिनी च, दे5 द्विजानुनी, दे7 जानुयुग्म (→द्वे जानुनी); कारा. तयाश्विनीं, दे7.9 तयाश्विन्या, दे9 तयाश्विभ्या (→तयाश्विन्यौ). –d) दे7 संस्थिता (→संस्थिते); दे11 वर-धारिण. (→रूपधारिण)

४. –a) शा1 कारा. का1 2 दे4 आपाढे द्वे तथैव स्फिग्, ब1.3 आपाढे द्वयश्चोरु (ब3 °र्व्वं), दे1.3 ते1 आपाढे च तथैव स्फिग्, दे2 आपाढे च तथैवोरू, दे7 आपाढे द्वे (द्वे)तथैवोरू, दे9 न1 आपाढे द्वे तथा चोरू (न1 °रु). –b) का1 गुह्यस्त, ब1 गुह्य स्त, दे1 गुह्यस्थे, दे2 गुह्यस्थौ (→गुह्यस्थं), कारा दे2.3.11 फाल्गुणी°, का2 फल्गुनी,+णी° (→फाल्गुनी°). –c) शा1 कारा. का1 2 दे4 7.10.11 कटिस्था, दे9 कटिस्थ- (→कटिस्था); कारा. का1 दे4 कृत्तिका, ब1 कीर्तिकाश् (→कृत्तिकाश्), दे11 चैत्र (→चैव). –d) दे9 वासुदेवस्य (→वासुदेवस्य). ब1 2 सश्रिता, दे4 सस्थिता, दे7 नारद (→संस्थिता).

५. दे11. ○; दे1.3 ते1 न1. ab ○. –a) शा1 कारा. का2 प्रोष्ठपद्या (का2 °द्या) द्वये पार्श्वे, का1 पार्श्वौ प्रोष्ठपदे प्रोक्ते, ब1.3 प्रोष्ठपद्या (ब2 °द्य) द्वयपार्श्वे, दे2.7 पार्श्वस्थिते ते भाद्रपदे, दे9 प्रोष्ठपदद्वयं पार्श्वे. –b) शा1 का2 कुक्षिभ्यामवनी स्थिता, का1 कुक्षिस्था रेवती मता, ब1 3 दक्षिण्या (ब1 °भ्या) रेवती स्थिता, दे2.7 कुक्षौ च (दे7 क्षौ) रेवतीषु च, दे9 कुक्षिभ्यो रेवती स्थिता. –c) ब1.2 ऊरू, दे1.3.5.9 ते1 न1 ऊरू- (न1 °रु) (→उर-). कारा. [-अ]नुराधा च, शा1 का1 2 दे1 चानुराधा, ते1 स्वनूराधा (→त्वनुराधा); दे7 उरस्थिताश्चानुराधा. –d) शा1 कारा. का1.2 ब2 दे1.5 ते1 धनिष्ठा, दे- निवष्टा (→श्रविष्ठा); शा1 का1.2 दे10 कण्ठ-, दे1 ते1 हृत्तु, दे2 तच्च (→पृष्ठ-).

६. ब3 दे5. ६ a–७ b ○ (द. स) –a) दे2 हस्ता, दे9 हस्तं (→हस्त); दे7 फाल्गुनीद्वयंविशाखा –b) दे1.4.9 ते1 न1 मनुत्तमं (न1 °म-) (→उदाहृतं); दे7 भुजयोर्हस्त (कर)द्वय-मनुत्तम. –c) ब1 पुनर्वस्व, दे3 पुनर्वसू (→पुनर्वसुर्); का2 रथोङ्गुल्यो, दे1.4 ते1 अयो गुल्फौ, दे7 भस्मैगुल्यो (?), दे9 रसा-गुल्फौ (→रथाङ्गुल्यो). –d) दे1 4 ते1 नखे (दे2 °खं) (→नखा); ब1 स्व<स् (?), ब2 स्वात्यस्, दे1.3.10 सार्प्यं, दे2 सार्पं, दे7 सार्धं, दे9 सर्वासु, दे11 सार्पस्, न1 सर्पस् (→सार्पं). दे7 तथान्यते (?) (→तथोच्यते).

७. ब3 दे5. ab ⊙ (द्र. ६ पा. वि.). –a) कारा. °श्रिता,+°स्थिता (→°स्थिता); दे1 4 ते1 तस्य (→तथा); दे7 धनिष्ठाया(तु स्थिता ज्येष्ठा, मुवे. ज्येष्ठा ग्रीवा स्थिता तस्य –b) ब1.2 दे7.9.11 श्रवग, न1 श्र * ण (→श्रवणम्), ब1.2 दे4.7.9.11 न1 स्थित, दे10 ** (→स्थित). –c) दे1.3 ते1 ओष्ठसंस्थस्, (→मुखसंस्थस्); दे2 पुष्य (→ पुष्य); दे4 मुष्टस्थस्तु तथा पुष्यो, दे7 मुख(खे?)तथास्थित पुष्य, दे9 पुष्यो मुखे तथा स्वातिः. –d) दे4 दन्ता स्वाति प्रकीर्तिता, दे5 मुवे. स्वातिर्दन्तेषु कीर्तिता मुवे (°ता), दे9 दशनेषु जगत्पते.

८. न1. ○; दे10.b○. –a) शा1 का2 दे1.4.10 ते1 हनौ पुनर्वसुश्चो (दे4°प्रो)क्तौ, ते1 (°क्ता). कारा. आस्यस्थो वारुण प्रोक्तो, का1 हसितं शयनामा, दे2 हस्तापुनर्वसुश्चोक्ता, दे5 हनू द्वे वारुग प्रोक्तो, दे9 भास्ये शतभिषा ज्ञेया. –b) शा1 का2 दे1 3.5.11 ते1 नासा मै (ते1 °मे)त्रमुदाहृतं, कारा. मघा नासा प्रकीर्तिता, का1 मघा मृगशिरोक्षिणी, दे2 श्रवणं कर्णयो स्थित, दे4 न (ना ?) सा मै त्र (त्रा?)मु (मु ?) दाहृतं, दे7 नासा वै उत्तरावृत. –c) शा1 का2 ब1.3 दे1.5 -.11 न1 प्राजापत्य (ब1 3 °त्यस्, दे2°त्ये) च (दे4 °तु) नत्राभ्या, कारा. मृगशीर्षं नेत्रसस्थ, का1 चित्रा ललाटं भरणी, दे10***स्य च नेत्राभ्यां, मुवे. प्राजापत्य नेत्रयुग्मे. –d) शा1 कारा का2 रूप (का2 °पं)धारे प्रतिष्ठितं, का1 शिर आर्द्रा कचा अपि, ब1 रूपवान् स प्रतिष्ठित ब2 3 रूपं (ब3 °प)धाम्न प्रतिष्ठितं, दे1 4 ते1 रूपधाप्रतिष्ठित, दे5 रूप धाम्य प्रतिष्ठित, दे7 रूपधारी प्रतिष्ठित, दे10 रूपं चित्रा प्रकीर्तित, दे11 रूप धाम्नि प्रतिष्ठितम्

न1. ८ श्लोकस्य स्थाने पाठः—

303 * मृगशीर्षं वारुणं प्रोक्त नासायैत्रमुदाहृतं
चित्रा चैव ललाटे तु भरणी तु तथा शिरः.

८०.८ चित्रा चैव ललाटे तु भरणी तु तथा शिरः ।
शिरोरुहस्था चैवार्द्रा नक्षत्राङ्गमिदं हरेः ॥ ९
विधानं संप्रवक्ष्यामि यथायोगेन नारद ।
संपूजितो हरिः कामान् विदधाति यथेप्सितान् ॥ १०
चैत्रमासे सिताष्टम्यां यदा मूलगतः शशी ।
तदा तु भगवत्पादौ पूजयेत् तु विधानतः ॥
नक्षत्रसन्निधौ दद्याद् विप्रेन्द्राय च भोजनम् ॥ ११
जानुनी चाश्विनीयोगे पूजयेदथ भक्तितः ।
दोहदे च हविष्यान्नं पूर्ववद् द्विजभोजनम् ॥ १२
आषाढाभ्यां तथा द्वाभ्यां द्वावूरू पूजयेद् बुधः ।
सलिलं शिशिरं तत्र दोहदे च प्रकीर्तितम् ॥ १३
फाल्गुनीद्वितये गुह्यं पूजनीयं विचक्षणैः ।
दोहदे च पयो गव्यं देयं च द्विजभोजनम् ॥ १४
कृत्तिकासु कटिः पूज्या सोपवासो जितेन्द्रियः ।
देयश्च दोहदं विष्णोः सुगन्धकुसुमोदकम् ॥ १५
पार्श्वे भाद्रपदायुग्मे पूजयित्वा विधानतः ।

---

९ बा1 ६ d "शाङ्ग" मित्यारम्य ११ c 'नक्षत्र इत्यन्त पाठो ○ (द स) शा1 का1 2 बा1 3 दे1 5 10 11 ते1 न1 ab ○ –ab) दे7 ललाटसंस्थिता चित्रा भरणी तु तथा शिर. –c) शा1 का2 द1-4 ते1 शिरोरुहास्तथैवेन्द्र, का1 इति ते कथित सम्यक् d) द9 नक्षत्राङ्गानि वै हरे

६ श्लोकस्य स्थाने कारा पाठ —

304 * शिरोरुहास्तथा रौद्र चित्रा सालिकसंस्थिता ।
शिर सस्था तु भरणी नक्षत्राङ्गमिद हरे ।

द9 ab, cd मध्ये अधिकम्—

305 * सपूजनीया विद्वद्भि राष्ट्रा चैव गिरे गृहा ।
इमानीमानि श्वस्य ।

१० बा1 ○ (द्र ६ पा वि) –a) द10 * * * (→विधान), द4 तम्य वक्ष्यामि, द7 शृणु पूजाया (→सप्रवक्ष्यामि) द9 विधानेन यथायत्त –b) बा1 3 द1 4 ते1 °न्यायेन ; न1 * गेन (→°योगेन); द9 पूजयामास वै द्विज –c) द1 4 ते1 धीमान् (→कामान्) द7 पूजितो येन सकाम, दे9 एवं य यत्प्रकरोतीह –d) बा1 दे1 4 7 यथेप्सित (दे7 °त) (→यथेप्सितान्) दे9 तस्य सिद्धम्मनोत्तमं

११ बा1 abcd ○ (द्र ६ पा वि); दे9 ef ○ –a) का2 दे5 10-11 चैत्रे (→चैत्र) दे4 11 -मास, बा3 दे5 7 10 -मास्य (→मासे) –b) बा2 मृग° (→मूल°) –c) दे7 भगवत (→भगवत्) दे7 तथा (→तदा) बा1 3 दे11 °पादान्, दे5 °पाद (→°पादौ) दे9 तदा तु भगवान् देव –d) कारा का1 बा7 दे4 पूजयेत, बा1 दे1 3 7 10 पूजयेच्च (→पूजयेत्तु); दे3 पूजनीयो विधानत –e) दे1 4 °पुरुषे ते1 °पुस्तके (→°सन्निधौ) दे7 नक्षत्रपुरुषेणेह –f) दे10 द्विजेन्द्राय + विप्रेन्द्राय (→विप्रेन्द्राय) दे7 दद्याद्विप्राय भोजन

१२ –a) दे1 4 ते1 तत्रसयोगे (दे1 °ग), दे11 वाष्ट (व) योगेन (?) मुद्रे रोहिणीयोगे (→चाश्विनीयोगे) बा1 2 फाल्गुनी चाश्विनीयोगे दे7 नक्षत्राय पुरुषाय दे9 नक्षत्रपुरुषाख्येन –b) बा2 पूजयेत्तथ, बा3 पूजयेत च, दे7 दद्याद्दान च, न1 पूजयीताय (→पूजयेदथ); शा1 कारा का1 7 दे5 11 शक्तित (→भक्तित) –c) बा1 * * * *, बा2 3 दे5 11 दोहदोऽथ, दे1 देहि देव, दे2 ते1 देहे देवा (ते1 °व), दे3 दोहिदेव, दे7 दोहदेव, दे9 देवे देय, मुद्रे. दोहदे वै (→दोहदे च) –d) दे1 3 5 पूर्वे च, दे7 पूर्वे वा, दे4 पूर्वे तु (→पूर्ववद्)

१३ ते1 ○, दे1 d ○ –a) दे4 यथा (?), दे9 यथा (→तथा); न1 द्वौ द्वौ (→द्वाभ्या) –b) शा1 कारा का2 दे1-3 द्विरूप, बा1 द्विरूप, + स्फिग्रूप, दे4 विरूप, दे7 ऊरू सं°, न1 उरू वै, मुद्रे स्फिग्रूप (→द्वावूरू), दे5 द्वावूरुभ्यो जयेद् बुध, दे9 ऊरुद्वयमथार्चयेत –c) दे7 सलिले (→सलिल); दे1 * * दे9 चैव (→तत्र) –d) शा1 कारा का1 2 दे5 11 दोहद (→दोहदे); कारा स (→च) बा3 °कीर्तित, दे7 °कीर्तिता (→°कीर्तित); दे9 नैवेद्य विविध दद्यात्

१४ दे1 cd ○ –a) शा1 का1 2 दे7 फाल्गुणी (का2 °ना), बा1 3 फल्गुनी (→फाल्गुनी°) द1 °द्वितीये, द2 °त्विभये (?), दे5 °द्वतये (→°द्वितये) –b) दे7 ते1 पूजनीये (दे2 °य) (→पूजनीय) –ab) दे9 यातनीभूतये कर पूजयेच्च विचक्षणै (?) –c) शा1 का1 2 दे4 5 7 दोहद च, दे2 ते1 देहि देव (→दोहदे च) दे3 दोहदेशे यथा गव्य –d) द2 3 9 ते1 देय (दे9 मा) स (→देय च)

१५. –a) बा1 कृत्तिकापु, दे2 घटिकासु, दे4 कृत्तिका सु, न1 कार्त्तिकासु (→कृत्तिकासु), दे 7 कटि (→कटि), दे7 9 न1 पूज्य (न1 °ज्यो) (→पूज्या) –b) बा1 2 दे10 न1 सोपवासी, बा3 सोपवासैर्, दे4 सोपवा * (→सोपवासो), बा3 दे9 जितेन्द्रियै (→जितेन्द्रिय) –c) दे7 दोहदे (→दोहद) दे1 3 4 दोहद च (दे3 तु) विभो (दे3 °भु) देय, दे7 दोहदे वा विभोर्देय, दे9 देय च विविधान्न वै, ते1 दोहदण्ड विभोर्देय –d) शा1 का1 दे1 5.10 ते1 सुगन्ध, कारा बा1 3 सुगन्धि (→सुगन्ध); दे7 गव्य दधिविचक्षणैः, दे9 ब्राह्मणाय च भोजन.

१६ –a) बा3 दे1 5 10 ते1 पार्श्वौ (→पार्श्वे); दे4 भद्रपदा युग्मे, दे9 भाद्रपदायुग्म; न1 भाद्रपदे युग्मे (→भाद्रपदायुग्मे) –c)

गुड सलेहकं दद्याद् दोहदं दत्तकीर्तितम् ॥ १६
द्वे कुशी रेवतीयोगे दोहदं मुद्गमोदका ।
अनुराधासु जठरं षष्टिकान्नं च दोहदं ॥ १७
श्रविष्ठाया तथा पृष्ठं शालिभक्तं च दोहदे ।
स्तनयुग्मं विशाखासु दोहदं परमोदनम् ॥ १८
हस्ते हस्तौ तथा पूज्यौ यावकं दोहदं स्मृतम् ।
पुनर्वसावङ्गुलीश्च पटोलस्तत्र दोहदं ॥ १९

आश्लेषासु नखान् पूज्य दोहदे तित्तिरामिषम् ।
ज्येष्ठाया पूजयेद् ग्रीवा दोहदे तिलमोदकम् ॥ २०
श्रवणे श्रवणौ पूज्यौ दधिभक्तं च दोहदे ।
पुष्ये मुखं पूजयेत दोहदं घृतपायसम् ॥ २१
स्वातियोगे च दशना दोहदं तिलशष्कुली ।
दातव्या कशवप्रीत्यै ब्राह्मणस्य च भोजनम् ॥ २२
हनू शतभिषायोगे पूजयेच्च प्रयत्नतः । बॅ ८

व3 गुर्भ दे2 गडे (→गुडं); शा1 कारा का॰ दे5 10 11 शालेयव व1 3 समो॰ (व3 °ह) कं दे1 संनेहक न1 स्वनहक (→सनेहक) दे9 शुद्ध च दोह॰ दद्या, –d) शा1 का2 दे5 10 दोह॰ व3 दोहदे दे1 दोह ● (→॰ोहदे) शा1 कारा का1 ॰ व1 3 दे 10 °प्रीतिं॰ (→°कीर्तितं); दे4 दोहदे देवि कीर्तित दे7 दोहदे प्रातिं॰ विभो दे9 द्विजे देवे च प्रीतिं॰ दे11 दोह॰प्रीतिं॰व॰म्, न1 दोहदेव प्रकीर्तितं

१७ –a) दे द्वे कुशौ दे9 द्विकुशी दे11 द्वे कुरे (→द्वे कुशी); व3 °मुखे (→°योगे) –b) कारा दोहदे दे5 7 दोहद ते1 देहाय (→दोहदे) व3 दे1 3 5 °मोदक दे °मोदको (→°मोदका); व1 मुद्गमोदका दे11 गुडमोदका (→मुद्गमोदका) –c) दे2 स्वनुराधासु (→अनुराधासु); व1 3 च तु (व3 °तु) ट दे1 4 ते1 कर्णोऽथ न1 जठरे (→जठरं); दे9 अनुराधा षष्टि पूज्या –d) व1 3 दे11 न1 कु (न1 कू) लस्यास्तत्र दाहदे दे कुलस्यात्र दोहदे पुष्पे दे7 तुलस्यास्तत्र दोह॰ दे9 पाव (क ?) रा दोहन दद्यत्

१८ दे10 ○; ते1 d ○ –a) दे 3 ते1 धनिष्ठाया (→श्रविष्ठाया); शा1 कारा का दे1 4 ते1 तथा पूज्य का1 पृष्ठपूजा व1 ॰ हृदं (व स्य?) व3 तथा पृष्ठ दे7 तथा विष्ट(?) दे9 सधिरजा (→तथा पृष्ठं) –b) दे4 भक्तं तु, दे9 °भर्ग च (→°भक्तं च) का1 दे9-11 दोह॰ (→॰ोह॰) –c) दे 5 °युग्मे (दे3 °ग्म) (→°युग्मं) –d) का1 दे9-11 दोह॰ (→॰ोह॰); कारा व1 3 परमोदनं दे7 परमोन्र (→परमान्नं)

ab cd दे5 11 मध्ये प्रक्षिप्तम्—
306 ● पुष्पे मुखं पूजयेच दोह॰ घृतपायसम्.
[दे11 पुष्यो (→पुष्पे), दे 1 मूर्ख (?) (→मुख)]

१९ ते1 ○ –a) दे9 हस्तौ हस्ते (→हस्ते हस्त) दे 0 पुष्पे मुखं तु संपूज्य –b) व1 यटकं दे9 पाव॰ (→यावक) का1 दे11 दोह॰ (→॰ो॰) –c) कारा का दे 4 पुनर्वस्व॰ (का °सौ) लीनुल्यो (दे1 °ल) दे7 पुनर्वसावङ्गुलिका दे9 पुनद मुकरागुल्य न1 पुनर्वसोरगुलीश्च –d) व 2 पट्टोले व3 पटोरम्, दे पटोलात् दे9 न1 शालयस् (→पटोलस्) शा1 दाहसे का1 दे11 दोह॰ दे दोहते (→दोहदे)

२० व २०a ग्रीवां इत्यारभ्य २३b 'पूजयेच्च' पर्यन्तं नास्ति (द्र म) ते1 abc ○ –a) का2 व ॰ दे 3-7 न1 नखा (दे2 7 °खावा) श्लेषासु संपूज्या व3 नखाग्रे सा पूप पूय दे9 नखा श्लेषासु संपूज्य –b) का1 दे7 11 दोहद (→दोहदे) का1 तत्तिरामिष दे7 च निरामिष (→तित्तिरामिषं) –d) का1 दे9 11 दोह॰ (→दोहदे); व 3 दे5 7 °मोदकान्, दे9 11 न1 °मोदका मुद्गे °मोदक (→°मोदकम्)

२१ व ○ (द्र २०a वि), दे10- cd ○ –a) दे5 श्रावणे दे9 श्रवण (→श्रवणे); कारा दे2 4 न1 श्रवणे दे9 श्रवणा (→श्रवणौ), कारा पूज्य दे4 न1 पूज्ये दे9 पूज्य (→पूज्यौ) b) दे4 तु (→च) का दे9-11 दोह॰ (→॰ोहदे) –c) दे4 °मुख्यं (→°मुखं) कारा पूजयित्वा व3 पूजयेच्च दे1 4 ते तु संपूज्य दे पूजयेत्त दे7 पूजयेत् ● (→पूजयेत) –d) का1 दे11 दोह॰ ते1 देहे घि (→दोहदे)

२२ व1 ○ (द्र. २०a वि) दे a.ab ○ –a) दे9 स्वातौ° (→स्वाति°), दे4 तु (→च), व1 दान दे5 न1 दानात् दे11 दशनां (→॰ाना) –b) का दे 11 दोह॰ (→दोहदे), दे ते °शकुली दे9 °शाष्कुली (→°ष्कुली) दे1 विसनाल च (॰ोहदिन) सष्कुला –c) का व 3 दे 3 4 10 दातव्य (दे व्य) (→दातव्या) –d) दे 4 ते1 तता ब्राह्मणभोजनम्

२३ व ab ○ (द्र २०a वि) व3 २३a २४b ○ (द्र सं) –a) व हनु, दे हनु, दे9 अनू (?) न1 हनौ (→हनू) कारा शतभि॰ (→शतभिषा) –b) कारा व दे 9 ते1 न1 पूजयेत (→पूजयेच्च) –c) शा1 प्रियगुनक्तं दास्य र्ण कारा प्रियगू रक्त धान्यन्नं व1 ॰ दे 4.9 ते1 न1 प्रियंगुभक्तं देय च दे10 प्रियगुभक्तं धान्यन्नं –d) कारा व दे1-4.10 ते1 दोहदे (→दो॰॰), कारा °विप्रुष व1 ॰ दे1 4 9 न1 °भक्तिन (दे1 °ना)

८० २३ प्रियङ्गुरक्तशाल्यन्न दोहद मधुविद्विष ॥ २३
मघासु नासिका पूज्या मधु दद्याच्च दोहदे ।
मृगोत्तमाङ्गे नयने मृगमास च दोहद ॥ २४
चित्रायोगे ललाट च दोहद चारुभोजनम् ।
भरणीषु शिर॰ पूज्य चारु भक्त च दोहद ॥ २५
सपूजनीया विद्वद्भिरार्द्रायोगे शिरोरुहा ।
विप्राश्च भोजयेद् भक्त्या दोहदे च गुडार्द्रकम् ॥ २६
नक्षत्रयोगेष्वेतेषु सम्पूज्य जगत पतिम् ।
पारिते दक्षिणा दद्यात् स्त्रीपुसोश्चारुवाससी ॥ २७
छत्रोपानत्श्वेतयुग सप्रधान्यानि काञ्चनम् ।
घृतपात्र च मतिमान् ब्राह्मणाय निवेदयत् ॥ २८

प्रतिनक्षत्रयोगेन पूजनीया द्विजातय ।
नक्षत्रमय एवैष पुरुष शाश्वतो मत ॥ २९
नक्षत्रपुरुषाख्य हि व्रतानामुत्तम व्रतम् ।
पूर्वं कृत हि भृगुणा सर्वपातकनाशनम् ॥ ३०
अङ्गोपाङ्गानि देवर्षे पूजयित्वा जगद्गुरो ।
सुरूपाण्यभिनायन्ते प्रत्यङ्गाङ्गानि चैव हि ॥ ३१
सप्तजन्मकृत पाप कुलसगागत च यत् ।
पितृमातृसमुत्थ च तत्सर्वं हन्ति केशव ॥ ३२
सर्वाणि भद्राण्याप्नोति शरीरारोग्यमुत्तमम् ।
अनन्ता मनस प्रीतिं रूप चातीव शोभनम् ॥ ३३
वाड्माधुर्यं तथा कान्ति यच्चान्यदभिवाञ्छितम् ।

---

दे2 3 ते1 °घातिनि दे7 °घातिनी (→°विद्विष )

२४ ब3 ○ (द्र २३पा वि) दे2 २४c–२५d ○ (द्द स) दे9 न1 cd ○ (द्द स) –b) दे1 4 ते1 मधुराद्य (→मधु दद्याद); शा1 कारा का2 दे5 10 11 °भोजने (दे11 °न) (→दोहदे) –c) ब मृगोत्तमाङ्ग सेवेत ब॰ मृगोत्तमाङ्ग तपसे –d) ते1 °मासे (→°मास) दे4 तु (→च) का1 दे5 10 दोहद दे11 भोजनम् (→दोहदे)

२५. ब3 ab ○ (द्र २३पा वि) दे2 ○ (द्र २४पा वि) दे10 d ○ –a) दे11 ललाटे (→लला ); दे4 तु (→च) –b) शा1 का1 दे11 दोहद (→दोहदे) ते1 वान्न° (→चारु°) –c) दे1 3 4 स्नात्वा (→पूज्य) d) दे1 3 7 ते1 भक्ष्य च दे4 भक्ष तु (→भक्त च) का1 दे11 दोहद (→दोहदे)

२६ दे10 ab ○ –a) न1 सपूजनीय (→सपूजनीया); दे9 विधिवद् (→विद्वद्भिर) –b) ब1 3 आर्द्राया च दे4 चार्द्रायोगे (→आर्द्रायोगे) दे1 3 ते1 शिरोरुहान् (→शिरोरुहा ) –c) कारा पूजयेद् (→भोजयेद्) d) का1 दे5 7 दोहद ते1 दोहृदे (?) (→दोहदे); दे4 तु (→च) दे7 गुरार्द्रके दे9 गुडोदने (→गुडार्द्रकम्)

२७ –b) दे9 तेषु पूज्यो जगत्पत्ति –c) ब दे 0 पूजिते ब2 पवित्रे दे7 पतिते दे9 धारिते (→पारिते) ब दे, दक्षिग (→दक्षिणा) –d) दे 4 ते ब्राह्मणे वेदपारगे

२८ –a) शा1 कारा का 2 छत्रोपानहवस्त्र च ब1 मुत्रे छत्रोपानद् वस्त्रयुगान् (मुत्रे °ग) ब2 छत्रोपानत्वे (?) ते युगान् ब3 छत्रोपानहौ वस्त्रयुग्म दे4 छत्रोपानद् श्वतयुगे दे5 11 छत्रोपान चैलयुग दे7 छत्रोपानद् वसनयुग्म –b) शा कारा का1 2 मुद्रिका च कमण्डलु (कारा °लु ) ब 3 दे1 4 7 ते सप्तधान्य स काञ्चन –c) न1 घृत (→घृत ); दे7 °पात्राश्च (→°पात्र च) दे5 गो * ग्धीं दे 0 गा दोग्ध्री (→मतिमान्) –d) ब1 3 दे1 4 7 ते ब्राह्मणेभ्यो (→ब्राह्मणाय)

गा1 २८ श्लोकात् पर तथा कारा का1 2 २८ श्लोकस्य ab cd मध्ये अधिकम्—

307 * आसन भाजन चैव पदमष्टविध स्मृतम् ।
दोग्ध्री गौश्च प्रदातव्या सप्तधान्यानि काञ्चनम् ॥

२९ –a) कारा °योगे च (→°योगेन) शा1 कारा का2 दे5 9 10 न1 भोजनीया (→पूजनीया) ब1 3 द्विजोत्तमा (→द्विजातय ) –c) ब1 3 दे5 7 9 11 न1 नक्षत्रज्ञाय विप्राय ब1 3 दे5 9 11 पृथग्दद्याच्च दक्षिणाम् दे7 दद्याद् दान च शक्तित न1 पृथग् देयात्र दक्षिणा

३० दे10. ab ○ –a) दे5 प्रया * ख्य (→पुरुषाख्य) –b) कारा ब1 3 व्रतमुत्तम (→उत्तम व्रत) –c) व1 दे4 9 गुरुणा दे1 2 ते1 सुराणा (→भृगुणा) दे5 पूव ****** –d) दे5 ** (→सर्व ) दे4 सर्वपापविनाशन

३१ दे1 3 ते1 cd ○ –a) शा1 का1 साङ्गो°(→अङ्गो°); दे1 विप्रर्षि दे4 7 विप्रर्षे (→देवर्ष) –b) कारा °गुरु न1 °गुरु (→°गुरो ); दे1 4 ते पूजनीयानि च प्रभो –c) दे7 सुरूपिण्यभि वाञ्छद्भिर् –d) दे7 अङ्गानि वसदेव हि

३२ दे1 2 ते1 ○ –b) दे4 तु (→च); का2 कुलसङ्ग गत च यद् ब3 कुलशङ्काकृत च यत् दे3 कलिसङ्गागत च यत् –c) दे4 -समुद्भूत (→समुत्थ च)

३३ दे 2 ते1 ○ –c) च1 दे7 सन्तति (→अनन्ता) का1 मानसीं (→मनस ) दे7 तुष्टि (→प्रीतिं); दे9 मनायास मन प्रीति

३४ –a) दे1 4 ते1 सुख (दे2 ते1 °ख) सौभाग्यमारोग्यं

ददाति नक्षत्रपुमान् पूजितस्तु जनार्दनः ॥ ३४

उपोष्य सम्यगेतेषु क्रमेणर्क्षेषु नारद ।
अरुन्धती महाभागा ख्यातिमग्र्यां जगाम ह ॥ ३५

आदित्यस्तनयार्थाय नक्षत्राङ्गं जनार्दनम् ।
सपूजयित्वा गोविन्दं रेवन्तं पुत्रमाप्तवान् ॥ ३६

रम्भारूपमवापाग्र्यं वाङ्माधुर्यं च मेनका ।
कान्तिं विधुरवापाग्र्यां राज्यं राजा पुरूरवाः ॥ ३७

एवं विधानतो ब्रह्मन्नक्षत्राङ्गो जनार्दनः ।
पूजितो रूपधारी यैस्तैः प्राप्ताः तु सुकामिता ॥ ३८

एतत् तवोक्तं परमं पवित्रं
धन्यं यशस्यं शुभरूपदायि ।
नक्षत्रपुंसः परमं विधानं
शृणुष्व पुण्यामिह तीर्थयात्राम् ॥ ३९

इति श्रीवामनपुराणे चतुष्पञ्चाशोऽध्याय ॥५४॥ वे. ८०.

---

दे$_7$ ऐश्वर्यं हि तया कान्ति –b) शा$_1$ कारा का$_1$ दे$_{5\ 7}$ [-अ]न्य दपि, दे$_3$ [-अ]न्यमपि (→[-अ]न्यदभि) –d) ब$_1$ दे$_{10}$ पूजितश्च दे$_5$ ते जितस्तु, दे$_7$ पूजितो हि, दे$_{9\ 11}$ पूजितास्तु (→पूजितस्त) ब॰ जनार्दन, दे$_9$ जनार्दनात् (→जनार्दन)

३५ ब$_{1-3}$ दे$_{1\ 3}$ ते$_1$ ३५ a–३६ b ○ (ह स) –c) शा$_1$ महाभाग, दे$_4$ महायोगा (→महाभागा)

३६ ब$_{1\ 3}$ दे$_{1\ 3}$ ते$_1$ ab ○ –a) शा$_1$ दे$_7$ आदित्या (?), दे$_{4\ 10}$ अदितिस (→आन्त्यिस्) –b) दे$_9$ पुरूरवा (→जनार्दनम्) –c) दे$_{1\ 4}$ ते$_1$ पूजयित्वा तु (→सम्पूजयित्वा) दे$_4$ गोविन्दे दे$_9$ देव त (→गोविन्द) –d) का$_1$ रवत, ब$_1$ विश्रव, ब॰ विदर्भ, ब$_3$ विदन्त दे$_{4\ 5\ 7\ 10\ 11}$ न$_1$ रे (दे$_{5\ 7\ 10}$ रैं) वत (→रेवन्त) दे$_{1\ 3}$ ते$_1$ विप्र (ते$_1$ वित्त ?) पुत्रमवाप्तवान्

दे$_9$ ३६ श्लोकस्य ab, cd मध्ये अधिकम्—

308 * एव विधानतो ब्रह्मन्नक्षत्राङ्गो जनादन । ( = ३८ पू )

३७ –a) दे$_{1\ 4}$ ते$_1$ रम्भा रूप तथा लेभे –b) दे$_{1\ 3}$ तिलोत्तमा, ते$_1$ द्विजोत्तम (→च मेनका) –c) ब$_{1\ 3}$ कान्तिनशिर वाप्याग्रध (ब$_1$ °ग्रधा) दे$_1$ कान्ति शशिवन्ग्रधा च, दे॰$_3$ ते$_1$ कान्ति च शशिवदग्रधा, दे$_9$ कान्ति शरीरे चाप्यग्रधा दे$_{10}$ कान्ति विधु (चन्द्र) रवापाग्रधा न$_1$ कान्ति मिन्दुरवापाग्रधा –d) ब$_1$ दे$_7$ राज्य (?) (→राज्य) दे$_9$ राजराज्य पुरूरवा

३७ श्लोकात् पर दे$_7$ अधिकम्—

309 * सपूजयित्वा गोविन्द विदत पुत्रमात्मवान् ।

३७ श्लोकात्पर दे$_2$ अधिकम्—

310 * सुरूपमभिवीक्षद्भिर्नगानि वसुदेव हि ।
सप्तजन्मकृत पाप कालसगागत नयन् ।
पितृमातृसमुत्थ च तत् सर्वं हन्ति केशव ।
सर्वानि भद्राण्याप्नोति शरीरारोग्यमुत्तमम् । [ 4 ]
सन्तति मनसस्तुष्टि रूप चातीव शोभनम् ।
ऐश्वर्यं हि तथा कान्ति यच्चान्यदपि वाञ्छित ।
ददाति नक्षत्रपुमान् पूजितो हि जनार्दन ।
उपाष्य सम्यगेतेषु क्रमेनर्क्षेषु नारद । [ 8 ]

३८ –c) ब$_{2\ 3}$ ब्रह्मचारी यै, दे$_4$ रूपधारा वै (→रूपधारीयै) –d) शा$_1$ प्राप्तास्तु, ते$_1$ प्राप्तानु (→प्राप्ता तु), दे$_{1\ 4\ 5}$ स्वकामिता, दे$_2$ स्वकारीता, दे$_3$ स्वकामता, न$_1$ सकामिता+मिका (→सुकामिता); ब$_3$ तै प्राप्तास्तुल्यकामता

३८ श्लोकात्पर दे$_7$ अधिकम्—

311 * पुरुषो वायवा नारी रूपस्वी जायते मुने ।

३९ –a) दे$_{7\ 9\ 10}$ एव (→एतत्), दे$_7$ श्रुत ते, दे$_1$ तवोस्तु (→तवोक्त) दे$_{1\ 4}$ ते$_1$ एव पवित्रं च (दे$_4$ तु) शुभप्रदायि. –b) शा$_1$ धान्य (→धन्य); शा$_1$ शुभरूपदायिन, का$_2$ ब$_1$ दे$_7$ शुभरूपदायी, ब$_2$ तव रूपदायि, दे$_5$ शुभ वदायिन, दे$_{11}$ शुभदय दापि (→शुभरूपदायि), दे$_{1\ 4}$ ते$_1$ यशस्यमारोग्यकर तु पुंसां (दे$_2$ °स) –c) दे$_9$ °पुस (→°पुस) –d) शा$_1$ शृण्वन्त (→शृणुष्व)

पुष्पिका—ब$_3$ ○, शा$_1$ कारा का$_1$॰ दे$_{10\ 11}$ इति श्री (कारा दे$_{11}$ [श्री]) वामनपुराणे वामनप्रादुर्भावे प्रह्लादतीर्थयात्राया, ब$_1$॰ दे$_{1\ 3\ 7}$ ते$_1$ न$_1$ इति श्री (ब$_{1\ 2}$ दे$_{1\ 2}$ [श्री]) वामनपुराणे प्रह्लादतीर्थयात्रायाम्, दे$_4$ इति वामनपुराणे दे$_5$ इति श्री वामन पुराणे भैरवप्रादुर्भावे प्रह्लादतीर्थयात्रायाम्, दे$_9$ श्रीवामनपुराणे मुवे इति श्री वामनपुराणे पुलस्त्यनारदसंवादे वामनप्रादुर्भावे प्रह्लादतीर्थ यात्रायाम् अध्यायनाम—दे$_9$ ○, शा$_1$ का$_{1\ 2}$ दे$_{4\ 5\ 7\ 10}$ न$_1$ नक्षत्रपुरुषव्रत नाम (दे$_{4\ 7}$ नामाध्याय) कारा नक्षत्रपुरुषव्रतविधान नाम, ब$_{1\ 3}$ दे$_{1\ 3}$ ते$_1$ नक्षत्रपुरुषो नाम, दे$_{11}$ नक्षत्रव्रत अध्याय सख्या शा$_1$ ब$_{1\ 3}$ दे$_{1\ 5\ 7}$ ○, कारा षण्नवतितमोऽध्याय, का$_1$ ॥७०॥, का$_2$ ॥६६॥ ब$_2$ अष्टमोऽध्याय, दे$_9$ द्विपञ्चाशत्तमोऽध्याय, दे$_{10}$ ॥८०॥, दे$_{11}$ ॥७६॥, ते$_1$ षष्ठोऽध्याय, न$_1$ त्रिपञ्चाशोऽध्याय, मुवे अशीतितमोऽध्याय

# ५५

पुलस्त्य उवाच ।❀
८१.१ इरावतीमनुप्राप्य पुण्यां तामृषिकन्यकाम् ।
स्नात्वा संपूजयामास चैत्राष्टम्यां जनार्दनम् ॥ १
नक्षत्रपुरुषं चीर्त्वा व्रतं पुण्यप्रदं शुचि ।
जगाम स कुरुक्षेत्रं प्रह्लादो दानवेश्वरः ॥ २
ऐरावतेन मन्त्रेण चक्रतीर्थे सुदर्शनम् ।
उपामन्त्र्य ततः सस्नौ वेदोक्तविधिना मुने ॥ ३
उपोष्य क्षणदां भक्त्या पूजयित्वा कुरुध्वजम् ।
कृतशौचो जगामाथ द्रष्टुं पुरुषकेसरिम् ॥ ४
स्नात्वा तु देविकायां च नृसिंहं प्रतिपूज्य च ।
तत्रोष्य रजनीमेकां गोकर्णं दानवो ययौ ॥ ५
तस्मिन् स्नात्वा तथा प्राचीं पूज्येशं विश्वकर्मिणम् ।
प्राचीने चापरे दैत्यो द्रष्टुं कामेश्वरं ययौ ॥ ६
तत्र स्नात्वा च दृष्ट्वा च पूजयित्वा च शंकरम् ।
द्रष्टुं ययौ च प्रह्लादः पुण्डरीकं महाम्भसि ॥ ७
तत्र स्नात्वा च दृष्ट्वा च संतर्प्य पितृदेवताः ।
पुण्डरीकं च संपूज्य उवास दिवसत्रयम् ॥ ८
विशाखयूपे तदनु दृष्ट्वा देवं तथाजितम् ।

---

५५

❀ दे$_7$ ते$_1$ ○; शा$_1$ का$_1$ न$_1$ पुलस्त्य, दे$_4$ पुलस्त्य उ, दे$_9$ श्री पुलस्त्य

१ –a) ब$_{1\ 3}$ दे$_{2\ 7}$ न$_1$ ऐरावतीं (→इरावतीं) –b) दे$_7$ ऋखि°, + ऋषि°, दे$_9$ अपि° (→ऋषि°) –d) ब$_{1\ 3}$ कृष्णाष्टम्या (→चैत्राष्टम्या)

२ –a) शा$_1$ कारा का$_{1\ 2}$ दे$_{1\ 3\ 7}$ ते$_1$ कृत्वा, ब$_{1\ 2}$ तीर्थं, दे$_9$ तीर्थात्, न$_1$ तीर्त्वा (→चीर्त्वा) –b) शा$_1$ का$_2$ दे$_7$ °प्रत्ययि (शा$_1$ °य) च (दे$_7$ °व), कारा °प्रदायि तत्, का$_1$ °प्रद महत्, दे$_{1-3}$ प्रद शुचि, दे$_4$ °मिद शुचि, दे$_{5\ 11}$ °व्रत शुचि, दे$_{10}$ °तर शुचि, दे$_9$ ते$_1$ प्रद शुभम् (→°प्रद शुचि) –c) शा$_1$ कारा का$_{1\ 2}$ ब$_1$ दे$_{10\ 11}$ न$_1$ [अ]थ, दे$_1$ सु दे$_5$ सोथ (→स)

३ a) ब$_2$ पारचैत्र न, ब$_3$ दे$_{5\ 9\ 11}$ न$_1$ पारावतेन, दे$_4$ इरावतेन (→ऐरावतेन) ब$_1$ चक्रे परेण चन्द्रेण –b) ब$_{1\ 2}$ °दर्शं, (→°तीर्थे) –c) ब$_1$ जपा°, दे$_3$ उप° (→उपा°) दे हुत (→तत) शा$_1$ सस्तौ, का$_1$ स्नातो, ब$_2$ स्नात्वा, ब$_3$ सस्नो, दे$_9$ सध्यौ (→सस्नौ); कारा उपासत तत शस्ते d) दे$_1$ मनु (→मुने)

४ a) ब$_3$ क्षणदात् (→क्षणदां) –b) दे$_1$ वृषध्वजम्, दे$_{3\ 7}$ खगध्वजम् (→कुरुध्वजम्) –c) दे$_7$ कृते (→कृत) –c) शा$_1$ कारा का$_1$ दे$_{4\ 5\ 10}$ °शौच दे$_9$ °शौचा (→°शौचो), ब$_1$ जगन्नाथ (थ?) (→जगामाथ) दे$_{1\ 3}$ ते$_1$ कृत शौचस्तु स द्रष्टु –d) दे$_{1\ 4}$ ते$_1$ ययौ (→द्रष्टुं) शा$_1$ कारा दे$_{3\ 5\ 7}$ °केस (दे$_7$ °श) री (→°केशरिं)

५ –a) दे$_4$ मत्वा तु, दे$_7$ स्नात्वा च (→स्नात्वा तु); ब$_{1\ 2}$ दे$_{1\ 3\ 9\ 10}$ ते$_1$ तु दे$_{5\ 11}$ न$_1$ स (→च), दे$_4$ स्नात्वा नद्या देविकाया –b) दे$_4$ तु (→च) –c) शा$_1$ ततोष्य, ब$_3$ दे$_{1\ 4}$ ते$_1$ उरोष्य (→तत्रोष्य) –d) दे$_{2\ 10}$ गोकर्णौ (दे$_{10}$ °र्णं) (→गोकर्णं)

६ ब$_{1\ 3}$ दे$_3$ ○ –a) कारा तथा प्राच्या, का$_1$ तथा प्राच्य, + तथा प्राच्या, दे$_{11}$ तत प्राली (→तथा प्राचीं) दे$_{1\ 4.7}$ ते$_1$ तस्मि स्नात्वाथ प्राचीने –b) न$_1$ पूज्यन्त (त ?) (→पूज्येशं) दे$_{1\ 4}$ ते$_1$ °कारकम् दे$_5$ °कर्मिणा, दे$_7$ °कर्मणा, न$_1$ कर्मण (→°कर्मिणम्) –c) ते$_1$ प्राचीनेश्वरे, न$_1$ प्राचामेवापर (→प्राचीने चापरे) दे$_3$ दैत्येन्द्रो (→दैत्यो) –d) दे$_2$ ते$_1$ कामश्वरन्, दे$_3$ कामश्वर (य) न् (→कामेश्वर)

७ दे$_{10}$ ○ –a) शा$_1$ च द्रष्टाच, दे$_4$ तथा दृष्ट्वा, दे$_7$ च पीत्वा च (→च दृष्ट्वा च) –c) ब$_3$ प्रह्लादश्च (→च प्रह्लाद) –d) दे$_7$ महौजस (→महाम्भसि)

८ दे$_{11}$ d ○ –a) दे$_{1-4\ 9}$ ते$_1$ महाम्भसि तत स्नात्वा –b) दे$_7$ सपूज्य (→संतर्प्य) शा$_1$ का$_{1\ 2}$ दे$_{11}$ °दे (शा$_1$ दे$_{11}$ दे) वतान् (→°देवता) –c) दे$_4$ तु (→च) –d) ब$_{1\ 3}$ दे$_{1\ 4.7\ 10}$ ते$_1$ उपोष्य (→उवास); ब$_3$ रजनीद्वय, दे$_{10}$ दिवसव्रत (→दिवसत्रयम्) दे$_9$ उपवास दिनत्रयम्

९ दे$_{11}$ ○, दे$_{10}$ ab ○ –a) दे$_{1\ 5}$ ते$_1$ °रूपे (→°यूपे) –b) दे$_5$ देव (→देवं), का$_2$ दे$_4$ तथाजितम्, ब$_1$ तयोजितम्, ब$_3$ तदार्चितम, दे$_5$ तथा द्विज, दे$_9$ नखाजित, न$_1$ नखायुध (→तथाजितम्) –c) दे$_9$ क्लाम° (→कृष्ण°) –d) दे$_4$ न्यवसन्, दे$_7$ निवस (सत् ?), दे$_9$ ह्यवसत्, दे$_4$ चावसत् (→न्यव)

स्नात्वा तथा कृष्णतीर्थे त्रिरात्रं न्यवसच्छुचिः ॥ ९
ततो हसपदे हसं दृष्ट्वा संपूज्य चेश्वरम् ।
जगामासौ पयोष्णायामखण्डं द्रष्टुमीश्वरम् ॥ १०
स्नात्वा पयोष्ण्या. सलिले पूज्याखण्ड जगत्पतिम् ।
द्रष्टुं जगाम मतिमान् वितस्तायां कुमारिलम् ॥ ११
तत्र स्नात्वाऽर्च्य देवेशं वालखिल्यैर्मरीचिपैः ।
आराध्यमानं यद्यत्र कृत पापप्रणाशनम् ॥ १२
यत्र सा सुरभिर्देवी स्वसुता कपिला शुभाम् ।
देवप्रियार्थमसृजद्धितार्थं जगतस्तथा ॥ १३
तत्र देवह्रदे स्नात्वा शम्भु सपूज्य भक्तितः ।
विधिवद्दधि च प्राश्य मणिमन्त ततो ययौ ॥ १४
तत्र तीर्थवरे स्नात्वा प्राजापत्ये महामतिः ।
ददर्श शम्भु ब्रह्माणं देवेश च प्रजापतिम् ॥ १५
विधानतस्तु तान् देवान् पूजयित्वा तपोधन ।
पड्रात्रं तत्र च स्थित्वा जगाम मधुनन्दिनीम् ॥ १६
मधुमत्सलिले स्नात्वा देव चक्रधर हरम् ।
शूलबाहु च गोविन्दं ददर्श दनुपुंगवः ॥ १७

नारद उवाच ।❀

किमर्थं भगवान् शम्भुर्दधाराथ सुदर्शनम् ।
शूलं तथा वासुदेवो ममैतद् ब्रूहि पृच्छतः ॥ १८

पुलस्त्य उवाच ।❀

श्रूयता कथयिष्यामि कथामेता पुरातनीम् । वे. ८१

---

सद्) दे2 3 ते1 भुवि (→शुचि)

१० दे10-11 a ○ –a) मुवे °पद (→ °पदे) दे1 4 वे1 ततो हस स्थ (दे2 स्य ?) देहस्थ दे9 ततो १सपदे देवं –b) दे11 ❀❀❀❀❀ चेश्वर –c) दे7 स दे9 [-अ] थो (→ [-अ]सौ) कारा पयोष्णा वें, दे॰ पयोष्ण्या त, दे5 पयोस्न्याय दे7 10 पैष्णीं ता (दे10 °तु); मुवे पयोष्णा तु (→पयोष्णायाम्) –d) दे5 अखण्डे (→अखण्ड) ब1 3 दे1-4 7 वे1 अच्युतम् (→ईश्वरम्)

११ –a) शा1 पयोष्ण्य, दे1 3 7 9 पयोष्णी (→पयोष्ण्या) –b) दे3 10 पूज्या (दे10 °ज्या) (→पूज्य) –c) दे4 जुष्ट (→द्रष्टु) –d) शा1 कारा का1 2 दे॰ 3 7 ते1 कुमारिकाम् (दे॰ °का दे7 °क) ब1 कुमारिणं (→कुमारिलम्)

१२ –a) शा1 कारा दे9 स्नात्वा च (→स्नात्वाच्य) दे7 सत स्नात्वाचयेदेवं –b) दे7 10 वालि° (→बाल°) शा1 का1 दे2 3 ते1 मरीचिभि (→मरीचिपैं) –c) दे1 आरोध्यमान दे2 3 ते1 न1 आराध्यमान दे7 9 आराध्यमाने (→आराध्यमान) शा1 कारा का1 ॰ दे11 वैयत्र ब1 यद्गत्तु, व॰ 3 यन्यतु (व3 °तत्) दे1 3 ते1 न1 यप्ययुतं (→यद्यत्र) –d) ब2 3 दे3 न1 हृत ते1 हृतं दे2 स्व त (→कृत) न1 °प्रणाशिन (→°प्रणाशनम्)

१३ –a) दे5 9 11 तत्र (→यत्र) ब1 3 सारस्वती (→सासुरभि) –b) शा1 का2 दे9 11 स सुता (→स्वसुता). c) दे10 देवे (→देव); दे7 देवान्पितृ समभ्यर्च्य –d) का1 हितार्थे, ब1 हिताना ब3 हिताय (→हितार्थं)

१४ दे3 वे1 शम्भु b इत्यारभ्य स्नात्वा' १७ a इति यावत ○ इ सं –a) दे9 ततो (→तत्र); दे9 °भवे (→°ह्रदे) –b) दे2 7 य नत (→भक्तित) –c) शा1 विधिवद् दधिच प्राप्य, ब1 विधिवच्च हरि प्राश्य ब2 3 विधिवच्च विधि प्राप्य (ब2 °स्य), दे9 विधिवद् दधि सम्प्राद्य, दे2 7 विधिवत्प्रदक्षिणं कृ (दे7 °द) त्वा –d) कारा सुणिमन्त दे2 अनिरत्त (→मणिमन्त) दे5 यततो (→ततो)

१५ दे3 वे1 ○ (द्र १४ पा वि) –a) दे2 °पदे, दे5 °वर (→°वरे) –c) दे7 सुब्रह्मन् (→ब्रह्माण) –d) दे2 जगद्गुरु, दे7 जगत्पति (→प्रजापतिम्)

१६ दे3 वे1 ○ (द्र १४ पा वि) –a) दे7 न1 त्रीन् देवान् (→तान् देवान्) दे1 विधानेन स तान् देवान्, दे4 विनया वनतो देवान् –b) ब1 3 °धन (→°धन) –c) न1 त्रिरात्रं (→षड्रात्र) दे5 च तत्र स्थित्वा दे7 तत्र स्थित्वा तु दे9 च तत स्थित्वा (→तत्र च स्थित्वा), –d) दे2 (च) जगाम (→जगाम); दे9 मधुरा नदीं (→मधुनन्दिनीम्)

१७ दे3 वे1 a ○ (द्र, १४ पा वि) –a) दे5 मधुवत्, (→मधुमत्) मुवे मधु सलिलेस्नात्वा च –b) दे5 दिव (→देव); दे1 4 °गन्धर (→°धर हरम्) –c) दे1 चक्रबाहु, दे9 शूलपाणि (→शूलबाहु) दे4 जनार्दन तु गोविन्दं d) कारा दैत्य पुङ्गव (→दनुपुङ्गव)

❀ दे9 ○ शा1 न1 नारद दे1 4 नारद उ

१८ पाठान्तर नास्ति

❀ शा1 न1 पुलस्त्य दे1 4 पुलस्त्य उ ; दे9 श्रीपुलस्त्य

१९ –c) दे2 5 वे1 ता (→या) –d) कारा भविष्यति, का1 महिष्यामि, (→भविष्यामि); दे1 सुरा (→पुरा) ब2 दे10 11 भविष्यामवनो पु (ब2 सु)रा, ब3 भविष्यामि कलौ सुरा', दे2 3 भविष्यामि मुनौ सुरा, दे7 9 न1 भविष्याम्य (दे9 न1 °ष्या) म

=१.१६ कथयामास यां विष्णुर्भविष्याम्यवनौ पुरा ॥ १९
जलोद्भवो नाम महासुरेन्द्रो
घोरं स तप्त्वा तप उग्रवीर्यः ।
आराधयामास विरञ्चिमारात्
स तस्य तुष्टो वरदो बभूव ॥ २०
देवासुराणामजयो महाहवे
निजैश्च शस्त्रैरमरैरवध्यः ।
ब्रह्मर्षिशापैश्च निरीप्सितार्थो
जले च वह्नौ स्वगुणोपहर्त्ता ॥ २१
एवंप्रभावो दनुपुंगवोऽसौ
देवान् महर्षीन् नृपतीन् समग्रान् ।
आबाधमानो विचचार भूम्यां
सर्वाः क्रिया नाशयदुग्रमूर्तिः ॥ २२
ततोऽमरा भूमिभवाः सभूपाः
जग्मुः शरण्यं हरिमीशितारम् ।
तैश्चापि सार्द्धं भगवाञ्जगाम
हिमालयं यत्र हरस्त्रिनेत्रः ॥ २३
संमन्त्र्य देवर्षिहितं च कार्यं
मतिं च कृत्वा निधनाय शत्रोः ।
निजायुधानां च विपर्ययं तौ
देवाधिपौ चक्रतुरुग्रकर्म ॥ २४
ततश्चासौ दानवो विष्णुशर्वौ
समायातौ तज्जिघांसू सुरेशौ ।
मत्वाऽजेयौ शत्रुभिर्घोररूपौ
भयात्तोये निम्नगायां विवेश ॥ २५
ज्ञात्वा प्रनष्टं त्रिदिवेन्द्रशत्रुं

(दे$_9$ मा) न वे पुरा, ते$_1$ भविष्यामि म्यु (?) नि पुरा.

२०. –a) दे$_1$ °सुरेन्द्रा (→°सुरेन्द्रो. –b) ब$_1$ घोर (→घोर), ब$_{1\ 3}$ दे$_7$ न$_1$ सुतप्त्वा(→स तप्त्वा); दे$_9$ घोर तपोतप्यत उग्रवीर्यं –c) शा$_1$ का$_2$ दे$_{11}$ न$_1$ विरिंचि (→विरञ्चि); दे$_7$ एव (→आरात्). –d) शा$_1$ सन् तस्य तुष्टो, का$_2$ दे$_{11}$ सन्तर्प्य तुष्टो, दे$_5$ सन्तर्प्य तुष्टा, दे$_7$ सन्तुष्ट रूपो, दे$_9$ वसन् तस्य तुष्टो (→स तस्य तुष्टो)

२१. दे$_7$. ०○. –a) शा$_1$ अजेयो, दे$_7$ दरणो (?) (→अजयो); का$_2$ देवासुराणामपरेष्वजेय. –b) शा$_1$ कारा. का$_{1\ 2}$ नित्य स्व (→निजैश्च); दे$_9$ स्वमरै (→[-अ]मरै); दे$_2$ [-अ]वध्या, दे$_4$ च वध्य, दे$_7$ महामुने, दे$_9$ न$_1$ [-अ]वध्यता (न$_1$ °ता) (→[-अ]वध्य) –c) का$_1$ तु, न$_1$ स (→च), शा$_1$ का$_{1\ 2}$ दे$_5$ निरोप्सितार्थं (का$_2$ °र्थं), ब$_1$ स नीप्सितार्थो, ब$_2$ निसीप्सितार्थो, ब$_3$ निशिप्सितानि, दे$_{11}$ निधिशो सोतार्थे(?) (→निरीप्सितार्थो); दे$_{1\ 4\ 10}$ ते$_1$ अनन्य लब्धैर्न (दे$_3$ लध्येन, दे$_4$ लब्धैर्न, दे$_{2.3}$ ते$_1$ °ड्घन) तु ब्रह्मण पुरा –d) ब$_1$ च तस्यौ, दे$_5$ न वह्नौ (→च वह्नौ); शा$_1$ कारा. ब$_{1-3}$ दे$_{11}$ स्व गुणा (शा$_1$ °गुणै, ब$_{1.2}$ °गणा-) पहर्ता, का$_2$ सुगुणोपहर्ता, दे$_7$ भ्रमणे चकार, न$_1$ चगुणोपहर्त्ता (→स्वगुणोपहर्ता). दे$_{1\ 4\ 10}$ ते$_1$ न याति शापै क्षय (दे$_{2.3}$ ते$_1$ °शम) मेष शत्रु (दे$_{2\ 3}$ ते$_1$ शक्र).

२२. –a) शा$_1$ कारा का$_1$ स्वभावो (→ प्रभावो) –b) दे$_9$ देवानृषीन्नृपतीन् वै समग्रान्. –c) ब$_1$ अवाधयानो, दे$_{1-4}$ ते$_1$ प्रबाधमानो, दे$_7$ दा (?) बाधमानो, दे$_9$ स बाधमानो (→आवाधमानो); कारा. का$_2$ भूमौ (→भूम्या). –d) का$_2$ °नुग्र°,+°दुग्र°, ब$_2$ °नुग्र° (→°दुग्र°); दे$_{1-4}$ ते$_1$ सर्वा क्रिया प्रा(ते$_1$ °र)क्षिपदुग्र मूर्ति, दे$_9$ तदा दुरात्मस्त्वन घोर मूर्ति, दे$_{11}$ तदा दुरात्मा स नर घोर मूर्ति, म$_1$ तदा दुरात्मा स च घोर मूर्ति.

२३. –a) दे$_{1-4\ 10}$ ते$_1$ °तटे (दे$_4$ °ले) निषण्णा, दे$_5$ °भवा स भूप, दे$_7$ °मवाप्य भूयो (→°भवा सभूपा). –c) दे$_2$ तत्रैवश्चापि सार्द्धं भगवान् जगाम. –d) दे$_7$ हिमालये (→हिमालय), ब$_{1\ 3}$ दे$_3$ ते$_1$ त्रिणेत्र, दे$_5$ त्रिनेत्रा (→त्रिनेत्र).

२४. –a) दे$_{1-4}$ ते$_1$ गताहि सर्वे न तु (दे$_{2.4}$ °नु) कार्य सिद्धयै (ते$_1$ °द्धौ) –c) दे$_9$ आत्मा° (→निजा°); दे$_{1\ 4}$ निरायुधाना च विपर्यय तौ, (दे$_1$ °यातो ?), दे$_{2\ 3}$ ते$_1$ निरायुधौ तावपि पर्यटन्तौ. –d) ब$_3$ देवाधिशौ, दे$_7$ देवाधिपै (?) (→देवाधिपौ); शा$_1$ कारा. का$_{1.2}$ दे$_5$. न$_1$ °कर्मिणौ, दे$_7$ °वीर्यो (→°कर्म)

२५. –a) शा$_1$ का$_1$ ब$_{2.3}$ दे$_{1-3.5.9}$ ते$_1$ दानवौ (→दानवो); शा$_1$ ब$_1$ दे$_7$ °सर्वौ (→°शर्वौ). –b) शा$_1$ कारा का$_2$ समायान्तौ (→समायातौ); दे$_{1-4}$ ते$_1$ हन्तुकामो, दे$_3$ तत्किघासौ (→तज्जिघासू), शा$_1$ कारा. का$_{1\ 2}$ ब$_2$ दे$_7$ सुवेशौ (→सुरेशौ); ब$_3$ समायातौ तज्जायथक्षवेशौ. –c) शा$_1$ कारा दे$_{3\ 7}$ मत्वा य (शा$_1$ ज)यौ, दे$_3$ सत्वाजेयौ, ते$_1$ स चायर्यौ, न$_1$ मत्वाजेतौ (→मत्वाऽजेयौ); दे$_{2\ 4}$ ते$_1$ °रूपै (→°रूपौ). –d) शा$_1$ का$_2$ ब$_3$ दे$_9$ भयात्तो वै (शा$_1$ ब$_3$ ये), दे$_7$ भयान्वितो (→भयात्तोये), दे$_{1-4\ 7}$ निम्नगाया (→निम्नगायां); दे$_{10}$ 'भया ·····वेश खण्डितम्.

२६. –a) ब$_1$ प्र(वि)मृष्ट, दे$_{1-4.7.10}$ ते$_1$ प्रविष्टं, दे$_9$ प्रयान्ति (→प्रनष्ट); शा$_1$ कारा. का$_{1.2}$ दितिजं (कारा. °ज) द्र (कारा. °स्व-), दे$_2$ त्रिदिवेश, दे$_5$ दितिजे द (न्द्र ?), दे$_9$ चेन्द्रशत्रुं

नदीं विशाला मधुमत्सुपुण्याम् ।
द्वयोः सशस्त्रौ तटयोर्हरीशौ
प्रच्छन्नमूर्ती सहसा बभूवतुः ॥ २६

जलोद्भवश्चापि जल विमुच्य
ज्ञात्वा गतौ शंकरवासुदेवौ ।
दिशस्समीक्ष्य भयकातराक्षो
दुर्गं हिमाद्रिं च तदारुरोह ॥ २७

महीध्रशृङ्गोपरि विष्णुशम्भू
चङ्क्रूर्यमाणं स्वरिपुं च दृष्ट्वा ।
वेगादुभौ दुद्रुवतुः सशस्त्रौ
विष्णुस्त्रिशूली गिरिशश्च चक्री ॥ २८

ताभ्यां स दृष्टस्त्रिदशोत्तमाभ्यां
चक्रेण शूलेन च भिन्नदेहः ।
पपात शैलात् तपनीयवर्णो
यथान्तरिक्षाद् विमला च तारा ॥ २९

एव त्रिशूलं च दधार विष्णु-
श्चक्रं त्रिनेत्रोऽप्यरिसूदनार्थम् ।
यत्राघहन्त्री ह्यभवद् वितस्ता
हराङ्घ्रिपाताच्छिशिराचलात्तु ॥ ३०

(→त्रिदिवेन्द्र ); दे$_{7}$ °तन्त्र (→°शत्रु) –b) का$_{7}$ दे$_{5\ 11}$ मधुमत्स्य-पुण्याम्, ब$_{1}$ मधुपत सुपुण्या, दे$_{1\ 4\ 10}$ ते$_{1}$ द्विजमत्स्यपूर्णा, दे$_{9}$ मधुमत्स्यपूर्णाम् (→मधुमत्सुपुण्याम्) –c) शा$_{1}$ का$_{1\ 2}$ दे$_{5}$ द्वयौ (दे$_{7}$ °पो), कारा देवौ, दे$_{1\ 4\ 10}$ ते$_{1}$ तीर (→द्वयो) शा$_{1}$ कारा का$_{1\ 2}$ दे$_{5}$ हि तत्र, दे$_{7}$ तद(ट ?)यो (→तटयो) दे$_{9}$ हरीश्वरौ (→हरीशौ) दे$_{1\ 4}$ ते$_{1}$ तीर समाश्रित्य स्थितौ हि देवौ –d) शा$_{1}$ प्रसन्न, दे$_{3}$ प्रच्छिन्न- (→प्रच्छन्न), शा$_{1}$ ब$_{2}$ दे$_{1\ 4\ 5\ 7\ 11}$ °मूर्त्ति (→°मूर्ती) शा$_{1}$ बभूवत (→बभूवतु)

२७ दे$_{2\ 3}$ ते$_{1}$ ab ○ –a) दे$_{7}$ विमुच्चत (→विमुच्य) –b) का$_{1}$ च तौ, दे$_{9}$ [अ]मरौ (→गतौ) –c) दे$_{1\ 4}$ ते$_{1}$ दिव, दे$_{2}$ दिश (→दिश) कारा समैक्षन्, ब$_{1\ 3}$ दे$_{1\ 4\ 7\ 10}$ समीक्षन् (दे$_{3\ 4}$ °क्ष्यन्) दे$_{9}$ समीक्ष्यैव, न$_{1}$ समीक्ष्याथ (→समीक्ष्य) का$_{2}$ भयकातराक्ष्यो,+भयकातराक्षौ, ब$_{1}$ दे$_{2\ 3}$ ते$_{1}$ सहसा कातराक्षो ब$_{3}$ य त (त ?)कातराक्षो, दे$_{9}$ सकातरादधो, न$_{1}$ सकातराक्षो (→भयकातराक्षो) –d) ब$_{2\ 3}$ दुर्गा (ब$_{3}$ र्ग ?) दे$_{5}$ दुर्गं (→दुर्गं) ब$_{1\ 3}$ ससमारुरोह, दे$_{1\ 4}$ ते$_{1}$ सहसा विवेश (→च तदारुरोह) दे$_{7}$ दुद्राव दुर्गं स हिमाद्रिशृङ्ग

२८ –a) शा$_{1}$ दे$_{11}$ महीन्द्रशृङ्गो°, ब$_{1}$ महीध्रपृष्ठो° (→महीध्रशृङ्गो°) कारा शम्भुविष्णू (→विष्णुशम्भू) –b) का$_{1}$ चचूर्ण°,+चचूय°, दे$_{1\ 4}$ ते$_{1}$ ब (दे$_{1}$ ते$_{1}$ ब) भ्रम्य°, दे$_{5}$ चतुय°, दे$_{11}$ चचूर्ण° (→चञ्चूय°) ब$_{1}$ दे$_{1\ 4\ 10}$ ते$_{1}$ न$_{1}$ च मत्वा, दे$_{5}$ न दृष्ट्वा, दे$_{11}$ च हत्वा (→च दृष्ट्वा) ब$_{2}$ चञ्चूर्यमाणौ स्वरिपुश्च मत्वा ब$_{3}$ चाश्चर्यमान स्व॰ रिपुश्च हन्तु दे$_{9}$ बभूव च छूयमार्गं स्वरिपु च सत्वा –c) शा$_{1}$ का$_{2}$ दुद्रवतु (→दुद्रुवतु), दे$_{9}$ वेगादुवावाथ सत स शत्रो, न$_{1}$ वेगादुभावुद्रूवत सशस्त्रौ –d) दे$_{4}$ सुचक्री, दे$_{11}$ -ह्वचक्री (→च चक्री)

२८ श्लोकानन्तर दे$_{7}$ अधिकम्—

312 * ताभ्यां प्रसेकादभवद्वितस्ता ।

२९ –a) दे$_{4}$ दृष्टा, दे$_{11}$ दृष्ट्वा (→दृष्ट): दे$_{7}$ सहसो° (→त्रिदशो°) –b) ब$_{1\ 3}$ दे$_{1\ 3\ 7\ 9\ 10}$ ते$_{1}$ न$_{1}$ विभिन्न°, ब$_{2}$ विभेद°, दे$_{5}$ च छिन्न° (→च भिन्न°) –c) दे$_{9}$ शैले (→शैलात्), दे$_{1}$ °वर्णा, दे$_{9}$ °वर्णौ (→°वर्णो); दे$_{5}$ अन्तरिक्षा (→अन्तरिक्षात्) –d) ब$_{1}$ दे$_{4}$ विव(म ?)लां च तारा, ब$_{2\ 3}$ विमलास्तु भावा, दे$_{1}$ विमलाच्च तारा, दे$_{2\ 3}$ ते$_{1}$ हि मनुष्यतारा, दे$_{5}$ विमलाद्य तारा, दे$_{7}$ विमलाल्पतारा, दे$_{9}$ विमलावतार, न$_{1}$ विमलाय तारा,+विमलाचतारा (→विमला च तारा)

३० –a) दे$_{7\ 11}$ त्रिशूली (दे$_{11}$ °लो) (→त्रिशूल) कारा का$_{1\ 2}$ विदधार, दे$_{9\ 11}$ न$_{1}$ विदधाति, दे$_{10}$ विबभार (→च दधार); दे$_{11}$ विष्णु (ष्णु ?) (→विष्णु) –b) शा$_{1}$ का$_{1}$ त्रिनेत्रोपरि, कारा त्रिशूली रिपु, ब$_{1}$ त्रिनेत्रो रिपु, दे$_{4}$ त्रिनेत्रोथ (प?) रिपु, दे$_{7}$ त्रिशूल्यप्यरि (→ त्रिनेत्रोप्यरि) –c) कारा का$_{1}$ °हर्त्री (→°हन्त्री) ब$_{1}$ यत्वाघ (द्य?) हन्त्रीह भवद्वितस्ता, ब$_{2}$ यत्राम हन्त्रीह्व (ह्य?)भवद्वितस्ता ब$_{3}$ यत्राद्यह न्त्रद्भवद्वितस्त, दे$_{1\ 4}$ यात्यसौ शूलभवा वितस्ता, दे$_{2\ 3}$ ते$_{1}$ यत्राप्यसौ शूलभवाभिघातात्, दे$_{5}$ यत्राद्यहन्त्री द्युभवद्वितस्ता, दे$_{7}$ यत्राव हन्तीत्व भवाद्वितस्ता, दे$_{9}$ यत्राभवत्तिस्त्व-भवद्वितस्ता, दे$_{11}$ यात्राद्य हन्तीत्व भवद्विदस्त, न$_{1}$ यत्राभवन्तीव भवद्वितस्ता –d) कारा का$_{1}$ हराङ्घ्रिपाताच्छिखराचलात्तु, ब$_{1}$ हराङ्घ्रि पाताच्छिशिरा विलालु, ब$_{2}$ हराङ्घ्रि पात्रास्थिशिरा विनातु, ब$_{3}$ हराङ्घ्रिपाताच्छिशिराचलात्तु दे$_{1\ 4\ 10}$ ते$_{1}$ हरा पपाताथ ब(दे$_{1\ 3}$ °ध)रा चलेन्द्रात्, दे$_{5}$ धराङ्घ्रि पाताथि शिरा विलालु दे$_{7}$ हरा ह्रिजाताथ सिश्वि(सि)सिराचला च, दे$_{9}$ हिचाप्रयाता शिशिराचलात्तु, दे$_{11}$ हार ह्रिजाता छि (?) शिरा चलातु, न$_{1}$ धरात्पपाता शिशिराचलाच्च

३० श्लोकात्पर मुवे अधिकम्—

313 * जलोद्भवश्चापि जल विमुच्य
ज्ञात्वा गतौ शङ्करवासुदेवौ । (=२७ पू)

१ ३१ तत्प्राप्य तीर्थं त्रिदशाधिपाभ्यां
पूजां च कृत्वा हरिशंकराभ्याम् ।
उपोष्य भक्त्या हिमवन्तमागाद्
द्रष्टुं गिरीशं शिवविष्णुगुह्यम् ॥ ३१
तं समभ्यर्च्य विधिवद् दत्त्वा दानं द्विजातिषु ।
विस्तृते हिमवत्पादे भृगुतुङ्गं जगाम सः ॥ ३२
यत्रेश्वरो देववरस्य विष्णोः
प्रादाद्रथाङ्गप्रवरायुधं वै ।
येन प्रचिच्छेद त्रिधैव शंकरं
जिज्ञासमानोऽस्त्रबलं महात्मा ॥ ३३

इति श्रीवामनपुराणे पञ्चपञ्चाशोऽध्यायः ॥५५॥

# ५६

नारद उवाच ।❀
भगवँल्लोकनाथाय विष्णवे विषमेक्षणः ।
किमर्थमायुधं चक्रं दत्तवाँल्लोकपूजितम् ॥ १

पुलस्त्य उवाच ।❀
शृणुष्वावहितो भूत्वा कथामेतां पुरातनीम् ।
चक्रप्रदानसंबद्धां शिवमाहात्म्यवर्धिनीम् ॥ २

---

३१. दे$_{10}$ 'शङ्कराभ्या' b इत्यारभ्य 'गिरिशं' d इति यावत् ○ (द सं) —a) दे$_{9}$ यत् (→तद्) —b) दे$_{1\ 3}$ ते$_{1}$ उपोषित दैत्यपति' स्वशुद्धये, न$_{1}$ पूजा चकाराय हरीश्वराभ्या —c) दे$_{7}$ तत्रा (ध) (→भक्त्या), दे$_{9}$ [-अ] भिमव'त (→हिमवन्त) शा$_{1}$ कारा का$_{1\ 2}$ भ्यगात्, दे$_{9}$ मारात् (→आगात्) —d) ब$_{1}$ द्रष्टुं (रव) (→द्रष्टु); दे$_{9}$ हरीश (→गिरीश) ब$_{2\ 3}$ दे$_{5\ 10.11}$ °मु (ब$_{\circ.3}$ °म) ग्र, दे$_{1}$ °भाग्य, दे$_{2\ 3}$ ते$_{1}$ °मार्ग, दे$_{9}$ न$_{1}$ °सस्थ (→°गुह्यम्) दे$_{4}$ धरा पपाताय वराचलेन्द्रात्

३१ श्लोकानन्तर दे$_{7}$ अधिकम्—

314 * दे गिरीशं शिवमध्यम् विष्णुं ।

३२ —a) दे$_{11}$ तत समर्च्य विधिवत् —c) ब$_{2}$ दे$_{1\ 5}$ ते$_{1}$ वितस्ता, दे$_{11}$ विसूते (→विस्तृते) दे$_{1}$ हिमवत्पार्श्वे, दे$_{\circ\ 4}$ ते$_{1}$ हिमवत्योभ्र, दे$_{5}$ हिमवत्याह, न$_{1}$ हिमवत्पाद (→हिमवत्पादे) —d) ब$_{1}$ दे$_{2}$ ते$_{1}$ भृगु तुङ्ग, दे$_{4}$ भृगुतीर्थं, दे$_{9}$ भृगु तुद (→भृगुतुङ्ग), ब$_{1\ 3}$ ददर्श, दे$_{11}$ दर्श * (→जगाम), शा$_{1}$ कारा का$_{1\ 2}$ दे$_{5}$ ह (→स)

३३ —a) शा$_{1}$ °वरस्व, का$_{2}$ दे$_{5\ 10}$ न$_{1}$ °वरश्च, ब$_{1}$ °देवस्य (→°वरस्य) —b) का$_{1}$ प्रनात्, + प्रागत् (→प्रागाद्); दे$_{7}$ स वरा°, दे$_{10}$ परमा°, दे$_{11}$ च वरा° (→प्रवरा°) कारा तत् (→वै) —c) कारा येन प्रचिच्छेद त्रिधा स शंकर, दे$_{1\ 4\ 10}$ ते$_{1}$ चिच्छेद येनाखिल च शङ्कर, दे$_{5}$ येन प्रविष्टदत्त्रिवैव शङ्कर, दे$_{7}$ येन प्रचिच्छेद सुरेन्द्रशत्रु दे$_{9}$ येन प्रचिच्छेद सशङ्कर हरिं, न$_{1}$ येन प्रचिच्छेद द्विधैव शङ्करो —d) दे$_{1\ 4}$ ते$_{1}$ विजान°, दे$_{2}$ विराज°, दे$_{3}$ विजात°, मुवे विज्ञाय° (→जिज्ञास°); का$_{1}$ ह्यबल, दे$_{9}$ [-अ] त्र वल (→[-अ]स्त्रबल)

पुष्पिका—शा$_{1}$ कारा, का$_{1\ 2}$ दे$_{5\ 10\ 11}$ इति श्री (कारा [श्री]) वामनपुराणे वामनप्रादुर्भावे प्रह्लादतीर्थयात्राया, (शा$_{1}$ का$_{1}$ [या]), ब$_{1\ 2}$ इति वामनपुराणे, ब$_{3}$ इति श्रीवामनपुराणे, दे$_{1\ 4}$ इति वामनपुराणे प्रह्लादतीर्थयात्रायाम्, दे$_{7}$ ते$_{1}$ न$_{1}$ इति श्री वामनपुराणे प्रह्लादतीर्थयात्रायाम्, दे$_{9}$ श्रीवामनपुराणे मुवे इति श्री वामनपुराणे पुलस्त्यनारदसंवादे प्रह्लादतीर्थयात्रायाम् अध्यायनाम—शा$_{1}$ का$_{1\ 2}$ दे$_{5\ 10\ 11}$ न$_{1}$ ○, कारा ब$_{1\ 3}$ दे$_{1\ 4\ 7}$ ते$_{1}$ जलोद्भववधो नाम, दे$_{9}$ जलोदरबधो नाम अध्यायसंख्या—शा$_{1}$ ब$_{3}$ दे$_{1\ 5\ 7}$ ते$_{1}$ ○, कारा सप्तनवतितमोध्याय, का$_{1}$ ॥७१॥, का$_{2}$ ॥७०॥, ब$_{1\ 2}$ नवमोध्याय, दे$_{9}$ त्रिपञ्चाशोध्याय, दे$_{10}$ ॥८१॥, दे$_{11}$ ॥७७॥, न$_{1}$ चतु पञ्चाशोध्याय, मुवे एकाशीतितमोऽध्याय.

५६

❀ शा$_{1}$ का$_{1}$ दे$_{9}$ न$_{1}$ नारद' दे$_{1\ \circ}$ नारद उ

१ ब$_{1\ 2}$ ○ —a) दे$_{1\ 7\ 9}$ न$_{1}$ भगवान् (→भगवन्); न$_{1}$ लोकनायोय (→लोकनाथाय)

अस्य श्लोकस्य स्थाने ब$_{1\ \circ}$ पुस्तकयोरय पाठ —

* कथन्तद्देव देवेन चक्र दत्त हरे पुरो ।
कथ यास प्रचिच्छेद त्रिधा चक्रेण शङ्कर ॥

१ श्लोकान्तर ब$_{1\ \circ}$ अधिकम्—

315 * एतन्मे सर्वमाचक्ष्व विचित्र प्रतिभाति मे ।

❀ शा$_{1}$ न$_{1}$ पुलस्त्य', दे$_{1\ \circ\ 4}$ पुलस्त्य उ, दे$_{9}$ श्रीपुलस्त्य

२ दे$_{2\ 3}$ ते$_{1}$ cd○ —c) दे$_{10}$ °प्रधान- (→°प्रदान) ब$_{1}$ -समुद्दा, दे$_{9\ 11}$ -सबन्धा (→-सबद्धा), दे$_{7}$ चक्रप्रदानज विष्णो

आसीद् द्विजातिप्रवरो वेदवेदाङ्गपारग ।
गृहाश्रमी महाभागो वीतमन्युरिति स्मृत ॥ ३
तस्यात्रेयी महाभागा भार्यासीच्छीलसमता ।
पतिव्रता पतिप्राणा धर्मशीलति विश्रुता ॥ ४
तस्यामस्य महर्षेस्तु ऋतुकालाभिगामिन ।
सम्बभूव सुत श्रीमान् उपमन्युरिति स्मृत ॥ ५
त माता मुनिशार्दूल शालिपिष्टरसेन वै ।
पोषयामास वदती क्षीरमेवत् सुदुर्गता ॥ ६

सोऽज्ञानानोऽथ क्षीरस्य स्वादुता पय इत्यथ ।
सभावनामप्यकरोच्छालिपिष्टरसेऽपि हि ॥ ७
स त्वेकदा सम पित्रा कुत्रचिद् द्विजवेश्मनि ।
क्षीरौदन च बुभुजे सुस्वादु प्राणपुष्टिदम् ॥ ८
स लब्ध्वानुपम स्वाद क्षीरस्य ऋषिदारक ।
मात्रा दत्त द्वितीयेऽह्नि नादत्ते पिष्टवारि तत् ॥ ९
रुरोदाथ ततो बाल्यात् पयोऽर्थी चातको यथा ।
त माता रुदती प्राह बाष्पगद्गदया गिरा ॥ १० वँ ८२

---

३ ते$_{1}$ d ○ –a) दे$_{9}$ °प्रवर (→°प्रवरो) –b) दे$_{3}$ राध्यो° (→वेद°) –c) ब$_{3}$ दे$_{9}$ गृ (दे$_{9}$ °दा) हाश्रम दे$_{4}$ गुहाश्रमो (→गृहाश्रमी); ब$_{3}$ महाश्रमो दे महाभागे दे$_{7}$ महाभोगी दे$_{3}$ महाबाहो (→महाभागो) –d) ब$_{1\ 2}$ न$_{1}$ श्रुतः (→स्मृत )

४ ते$_{1}$ a○ –a) दे$_{11}$ [-आ] त्रया (→[-आ] त्रेयी) ब$_{1}$ महाभागो (→महाभागा); दे$_{3}$ मू * (→शील°)

५ –a) का$_{1}$ अस्मात् (→अस्य) द$_{1\ 4}$ ते$_{1}$ मुनेस्तस्या नपत्यस्य –b) न$_{1}$ [-अ] भिमा +[-अ]भिगामिन (→[-अ]भि गामिन ) –c) द$_{9}$ पति (→सुत ) –d) ब$_{3}$ अपमन्यु (→उप मन्यु ) ब$_{1\ 3}$ दे$_{1-4-9\ 10}$ ते$_{1}$ न$_{1}$ श्रुत (→स्मृत )

५श्लोकस्यानन्तर कारा अधिकम्—

316 * सदव माता बालस्य मुग्धत्वादनताजुष ।
आलोड्य पिष्ट तोयेन क्षीरमित्यस्य सन्ददौ ।
कदाचित्क्षीरमपिबत्तदा कालेन भूयसा ।
उपमन्युगतो यज्ञसमये ज्ञातिमन्दिरम् ॥ [4]
तत्र स्वादुपय पीत्वा रसायनरसोपमम् ।
असौ पिष्टरस मेने माधुर्यपरिवर्जितम् ॥
ज्ञातक्षीर रसास्वादो जननीमवन्तत
परमाथपयो मातदहीति स पुन पुन ॥ [8]

६ शा$_{1}$ ६ a–६ d ○ कारा का$_{1}$ ६ a इत्यारम्य १० b यावान्नास्ति –a) ब$_{1\ 3}$ दे$_{1\ 2\ 5\ 7}$ ते$_{1}$ न$_{1}$ °शादूल (→°शार्दूल) –b) दे$_{5\ 7\ 11}$ शा (सा) लिपृष्ट° (→ शालि पिष्ट°) दे$_{2}$ हि (→वै) c) दे$_{0}$ पोषया (स्मू) मास (→पोषया मास) दे$_{2}$ सतत दे$_{3\ 5}$ ददतो (→वदती) –d) दे$_{4}$ हि दुर्ग (दे$_{1}$ °र्ग?) ता दे$_{2}$ दिति स्वयम्, दे$_{3}$ हि सतत दे$_{5}$ सुदु खिता (→सुदुर्गता): ब$_{1\ 3}$ क्षीरोयमिति दुगता (ब$_{3}$ °तान्)

७ शा$_{1}$ कारा का$_{1}$ ○ (द्र ६पा वि ) –a) का$_{2}$ भोज नादथ ब$_{1}$ सोज्ञानादथ दे$_{1\ 3}$ सोजानानोस्य दे$_{4}$ सोज्ञातीनोस्य (→सोजानानोथ) दे$_{2}$ नतादृभारोपक्षीरस्य –b) का स्वादुला + दां दे$_{9}$ स्वादुतर (→स्वादुता); दे$_{2}$ स्वादुवाममयोथवा दे$_{7}$ स्वदित न्यप पावय दे$_{11}$ स्वादुतां (त) वद इयय –c) दे$_{4}$ मयकरोत् (?) दे$_{3}$ अ यकरोत् न$_{1}$ इ यकरोत् (→अप्यकरोत्) –d) दे$_{3}$ (स) शालि दे$_{7}$ सोपि (→शालि ) दे$_{1}$ °रसेति हि, दे$_{4\ 9}$ न$_{1}$ °रसेन हि, दे$_{7}$ °रसेन वै (→°रसेपि हि)

८ शा$_{1}$ कारा का$_{1}$ ○ (द्र ६पा वि ) –a) ब$_{1\ 3}$ सा दे न (→स) दे$_{9}$ समाहूत (→सम पित्रा) दे$_{9}$ कुत्रापि न$_{1}$ कस्य चित (→कुत्रचित) c) ब$_{1}$ दे$_{4\ 7\ 10}$ न$_{1}$ क्षीरोदन (→क्षीरौदनं) दे$_{11}$ न$_{1}$ वै (→च) दे$_{9}$ क्षीरोदनेन बुभुजे –d) दे$_{1\ 4}$ ते$_{1}$ श्रद्धया प्रा (दे$_{2}$ °पा) णि (दे$_{1\ 4}$ °ण) पु (दे$_{4}$ °तु) ष्टिदम्, दे$_{9}$ सुस्वादु घ्राणपुष्टिद

९ शा$_{1}$ कारा का$_{1}$ ○ (द्र ६पा वि ) a) ब$_{1\ 2}$ दे$_{2\ 3\ 5}$ स लब्ध्वानुपम स्वादु (ब$_{1}$ ते$_{1}$ °दु) दे$_{7}$ स लब्ध्वादुपभ साधु +स्वादु दे$_{9}$ सलब्ध्वा च त्व स स्वा , न$_{1}$ स लब्ध्वा च समास्वादु b) व दे$_{10}$ क्षीर च (→क्षीरस्य) ब$_{1}$ °बालक दे -4 7 ते$_{1}$ °पुत्रक (→°दारक ) –c) दे द्वितीय (→द्वितीये) –d) दे ते$_{1}$ नात्त (→नादत्त) का$_{2}$ दे$_{1\ 4}$ ते$_{1}$ °कारित (दे$_{4}$ °क) दे °शालितत् (→°वारि तत); ब$_{1\ 2}$ पिष्टवारि न चापिबत्, दे$_{7}$ नात्ते क्षीर वारित

१० कारा का ab○ (द्र ६पा वि ) –a) का$_{2}$ दे$_{5}$ न$_{1}$ तथा दे$_{9\ 11}$ तदा (→ततो) ब$_{1\ 3}$ दे $_{3\ 4\ 7}$ ते$_{1}$ रुरोद च तथा बाल्यात्, दे$_{2}$ रुरोद (य) च तथा बा यात –b) शा$_{1}$ दे$_{3}$ ते$_{1}$ पायोय का$_{2}$ दे$_{2}$ पयोर्थं (→पयोऽर्थी) का$_{2}$ बालको (→चातको) –c) दे$_{2}$ ते$_{1}$ त माता रुद (ते$_{1}$ °द) त प्राह, दे तस्माता रुदती प्राह, भुवे माता रुदत त प्राह

१० श्लोकानन्तर कारा पुस्तके अधिकम्—

317 * ज्ञातक्षीररसास्वादपुत्रस्नेहविशृङ्खला
कन्दमूलफलाहारै प्राणवृत्ति विधायिनाम् ॥
वने निवसतां पुत्र कुतोस्माक पयोरस ।
नदीना पावन वारि पीयते मुनिभिर्वने ॥ [4]
अरण्येषु कुतो गावस्तत्किं मिथ्यव खिद्यसे ।

८२ ११ उमापतौ पशुपतौ शूलधारिणि शंकरे ।
अप्रसन्ने विरूपाक्षे कुतः क्षीरेण भोजनम् ॥ ११
यदीच्छसि पयो भोक्तुं सद्यः पुष्टिकरं सुत ।
तदाराधय देवेशं विरूपाक्षं त्रिशूलिनम् ॥ १२
तस्मिंस्तुष्टे जगद्धाम्नि सर्वकल्याणदायिनि ।
प्राप्यतेऽमृतपायित्वं किं पुनः क्षीरभोजनम् ॥ १३
तन्मातुर्वचनं श्रुत्वा वीतमन्युसुतोऽब्रवीत् ।
कोऽयं विरूपाक्ष इति त्वयाराध्यस्तु कीर्तितः ॥ १४
ततः सुतं धर्मशीला धर्माढ्यं वाक्यमब्रवीत् ।
योऽयं विरूपाक्ष इति श्रूयतां कथयामि ते ॥ १५
आसीन्महासुरपतिः श्रीदाम इति विश्रुत. ।
तेनाक्रम्य जगत्सर्वं श्रीर्नीता स्ववशं पुरा ॥ १६
निःश्रीकास्तु त्रयो लोकाः कृतास्तेन दुरात्मना ।
श्रीवत्सं वासुदेवस्य हर्तुमैच्छन्महाबलः ॥ १७
तमस्य दुष्टं भगवानभिप्राय जनार्दनः ।
ज्ञात्वा तस्य वधाकाङ्क्षी महेश्वरमुपागमत् ॥ १८
एतस्मिन्नन्तरे शंभुर्योगमूर्तिधरोऽव्यय. ।
तस्थौ हिमाचलप्रस्थमाश्रित्य श्लक्ष्णभूतलम् ॥ १९
अथाभ्येत्य जगन्नाथं सहस्रशिरसं विभुम् ।
आराधयामास हरिः स्वयमात्मानमात्मना ॥ २०
साग्रं वर्षसहस्रं तु पादाङ्गुष्ठेन तस्थिवान् ।
गृणंस्तत्परमं ब्रह्म योगिज्ञेयमलक्षणम् ॥ २१

---

११ –a) ब$_{1 3}$ दे$_{2 3 7}$ ते$_{1}$ शूलधरे (→पशुपतौ) –b) ब$_{1 3}$ सर्वघातरि शङ्करे, दे$_{3}$ घातुर्वैरिणि शङ्करे, दे$_{7}$ स्मरवैरिणि शंकरे न$_{1}$ शूलपाणिनि शङ्करे –c) ब$_{3}$ दे$_{3}$ सु(दे$_{3}$ °स)प्रसन्ने (→अप्रसन्ने) –d) कारा क्षीरस्य (→क्षीरेण)

१२ –a) यदिच्छसि (→यदीच्छसि) ब$_{1}$ दे$_{7}$ भुक्त (→भोक्तु) –b) शा$_{1}$ यद्य (→सद्य); दे$_{9}$ तुष्टिकर (→पुष्टिकर); दे$_{2}$ सुत, दे$_{10}$ सुत (→सुत) –c) ब$_{1 3}$ न$_{1}$ त (→तद्) –d) शा$_{1}$ कारा का$_{1 2}$ दे$_{3 5 10}$ त्रिलोचन (→त्रिशूलिनम्); दे$_{7}$ शूलपाणि त्रिलोचनम्

१३ –a) शा$_{1}$ कारा का$_{1 2}$ दे$_{5 11}$ तत्र, दे$_{10}$ अत्र (→तस्मिन्)

१४ ते$_{1}$ १४ d–१५ c ○ (द्र स) –a) दे$_{1 4}$ ते$_{1}$ समातु (→तन्मातु) –b) कारा दे$_{11}$ °मन्य (→°मन्यु), ब$_{3}$ वच, दे$_{1 3}$ ते$_{1}$ तत (→सुत) –c) का$_{1}$ योय (→कोय) –d) दे$_{7}$ साध्य (→[-आ]राध्य)

१५ ते$_{1}$ abc ○ (द्र १४ पा वि) –a) ब$_{1 2}$ दे$_{10}$ ततस्तु त ब$_{3}$ ततस्तु तद्, दे$_{3}$ तत सुते (→तत सुत); दे$_{7}$ तत्सुत धर्मशीलस्य –b) शा$_{1}$ कारा का$_{1 2}$ दे$_{11}$ धर्मार्थं, दे$_{4}$ धर्माद्य (→धर्माढ्य) –c) कारा का$_{1}$ ब$_{2}$ कोय, दे$_{7}$ यो(गजो)य (→योऽय) –d) मुवे तम् (→ते)

१६ दे$_{5}$ d ○ –b) का$_{2}$ श्रीधाम (→श्रीदाम) –c) ब$_{1 3}$ दे$_{2 3}$ ते$_{1}$ येनाभ्रम्य दे$_{1 4-7 9}$ न$_{1}$ येनाक्रम्य (→तेनाक्रम्य) –d) ब$_{1 3}$ श्री नीता विषवत् पुरा दे$_{2}$ श्री भुक्ता विष्णुवत्पुरा, दे$_{3}$ ते$_{1}$ श्रीदामा विष्णुवत्पुरा दे$_{7}$ श्री मता स्ववश पुरा, दे$_{9}$ श्रीमता वृषवत्पुरा, दे$_{11}$ श्री दामा विष * त्पुरा, न$_{1}$ श्रीदाम्ना वृषत्पुरा, मुवे श्रीदाम्ना विष्णुवत्पुरा

१७ –a) न$_{1}$ कृतास्तेन (→त्रयो लोका) –b) कारा कृता तेन, दे$_{9}$ कृतास्ते ह, न$_{1}$ त्रयोलोका (→कृतास्तेन) –c) ब$_{1}$ श्रिय वं, दे$_{7}$ श्री च वं (→श्रीवत्स) –d) ब$_{1}$ तुर्ण मै *, दे$_{1 3-9 11}$ ते$_{1}$ हर्तुमिच्छत (→हर्तुमैच्छन्), दे$_{1 4}$ ते$_{1}$ महासुर (→महाबल)

१८ –a) ब$_{1 2}$ तमस्य दृष्ट्वा, ब$_{3}$ दे$_{1 3}$ तस्य दुष्ट स (दे$_{1 3}$ *), दे$_{9}$ तस्य तुष्टस्तु, ते$_{1}$ तमस्य तुष्ट (→तमस्य दुष्ट); दे$_{7}$ विज्ञाय च (→भगवान्) –b) ब$_{3}$ मभिप्रायात्, दे$_{7}$ मभिप्राय (→अभिप्राय) –c) शा$_{1}$ वध्वकांक्षी, ब$_{3}$ दे$_{2}$ ते$_{1}$ वधकाक्षी (→वधाकाक्षी) –d) ब$_{1 3}$ दे$_{7}$ उपागत (→उपागमत्)

१९ –a) दे$_{1}$ शम्भु (→शम्भु) –c) दे$_{4}$ हिमालय° (→हिमाचल°), न$_{1}$ °प्रस्थ्य (→°प्रस्थ) –d) दे$_{11}$ मास्थित्य (→आश्रित्य), ब$_{3}$ दे$_{3}$ ते$_{1}$ °भूषितम्, दे$_{1.4}$ °भूमिकम्, दे$_{2}$ °भूषितः (→°भूतलम्); ब$_{1 2}$ माश्रित्य शुद्ध (ब$_{2}$ °क्ल) भूतलम्, दे$_{9}$ माश्रित्य क्षणभूषितम्

२० –a) ब$_{1 2}$ दे$_{11}$ तथाभ्येत्य, दे$_{7}$ न$_{1}$ मथाभेत्य, (→अथाभ्येत्य) ब$_{3}$ दे$_{2 4 9}$ ते$_{1}$ न$_{1}$ जगन्नाथः (→जगन्नाथ) –b) दे$_{9}$ सहसा (→सहस्र) दे$_{2 7}$ °शिरसा (→°शिरस) दे$_{7}$ विभु, दे$_{7}$ भुवि (→विभु); ब$_{1 7}$ स सहस्रशिरा विभु –c) शा$_{1}$ मावार° (→माराध°) –d) शा$_{1}$ का$_{1}$ दे$_{3}$ आत्मन (→आमना)

२१ –a) दे$_{1 4}$ ते$_{1}$ आसीत् (→साग्र°) –b) का$_{1}$ प्राङ्गुष्ठन, ब$_{1 3}$ पादेनैकेन (→पादाङ्गुष्ठन); दे$_{1 4}$ ते$_{1}$ तद्गिरौ, मुवे तद्गिरा (→तस्थिवान्) –c) दे$_{1 4}$ ते$_{1}$ गृणन्सनातन ब्रह्म, दे$_{9}$ हरिस्तत्र पद ब्रह्मन्, न$_{1}$ गुह्य तत्परम ब्रह्म –d) शा$_{1}$ कारा का$_{1}$ दे$_{5}$ योगिज्ञय स(कारा °स्व)लक्षणम्, ब$_{1 2}$ दे$_{1.4.10}$ ते$_{1}$ योगिध्येयमलक्षणम्, ब$_{3}$ योगिज्ञेयमलन्मयम्

६ ६२ मा भैर्द्विजसुताऽहं त्वां मोक्षयिष्यामि संकटात् ॥ ६१
यदस्य रक्षसः श्रेयो जिह्वाग्रे संस्थिता तव ।
तत् सर्वं कथयिष्यामि ततो मोक्षमवाप्स्यसि ॥ ६२
अदृश्या रक्षसा तेन प्रोक्त्वेत्थं सा सरस्वती ।
अदर्शनं गता सोऽपि द्विजः प्राह निशाचरम् ॥ ६३
ब्राह्मण उवाच ।❀
श्रूयतां तत्र यच्छ्रेयस्तथाऽन्येषां च पापिनाम् ।
समस्तपापशुद्धयर्थं पुण्योपचयदं च यत् ॥ ६४
प्रातरुत्थाय जप्तव्यं मध्याह्नेऽह्नःक्षयेऽपि वा ।
असंशयं सदा जप्यो जपतां पुष्टिशान्तिदः ॥ ६५
ॐ हरिं कृष्णं हृषीकेशं वासुदेवं जनार्दनम् ।
प्रणतोऽस्मि जगन्नाथं स मे पापं व्यपोहतु ॥ ६६
चराचरगुरुं नाथ गोविन्दं शेषशायिनम् ।
प्रणतोऽस्मि परं देवं स मे पापं व्यपोहतु ॥ ६७
शङ्खिनं चक्रिणं शार्ङ्गधारिणं स्रग्धरं परम् ।
प्रणतोऽस्मि पतिं लक्ष्म्याः स मे पापं व्यपोहतु ॥ ६८
दामोदरमुदाराक्षं पुण्डरीकाक्षमच्युतम् ।
प्रणतोऽस्मि स्तुतं स्तुत्यैः स मे पापं व्यपोहतु ॥ ६९
नारायणं नरं शौरिं माधवं मधुसूदनम् ।
प्रणतोऽस्मि धराधारं स मे पापं व्यपोहतु ॥ ७०
केशवं चन्द्रसूर्याक्षं कंसकेशिनिषूदनम् ।
प्रणतोऽस्मि महाबाहुं स मे पापं व्यपोहतु ॥ ७१

---

द्विजपुत्र त्वाम् –d) ब$_{2}$ न$_{1}$ मोक्षयाम्यतिसङ्कटात ब$_{3}$ मोक्षयाम्यस्मि (?) सङ्कटात् , दे$_{3}$ मोक्षयाम्यद्य सङ्कटात्

६२ दे$_{9}$ cd ○ –a) दे$_{9}$ तत् (→यत) –b) जिह्वाग्र, दे$_{10}$ द्विजाग्र (→जिह्वाग्र), दे$_{4}$ तव सस्थिता, न$_{1}$ सस्तुता तव (→संस्थिता तव)

६३ दे$_{9}$ ○ –a) शा$_{1}$ कारा का$_{1\ 2}$ अदृष्टा (→अदृश्या); शा$_{1}$ ब$_{1}$ राक्षसा (→रक्षसा) –b) का$_{1}$ प्रोच्येत्थ सा, ब$_{1\ 2}$ प्राक्त्वेव च, ब$_{3}$ दे$_{1}$ प्रोक्त्वेत्थ च, दे$_{3}$ प्रोक्त चैव, दे$_{7}$ प्राक्त्वेत्थ तम्, दे$_{10}$ प्रोक्त्वे छे (?) सा, दे$_{11}$ प्रोक्त्य सा, न$_{1}$ प्राहेत्य सा (→प्रोक्त्वेत्थ सा). –c) शा$_{1}$ तत सोऽपि, ब$_{1}$ दे$_{1\ 4\ 10\ 11}$ गता सापि, दे$_{7}$ कृता या तु, न$_{1}$ गायतापि (→गता सोऽपि)

❀ दे$_{9}$ ○ शा$_{1}$ न$_{1}$ ब्राह्मण ; दे$_{1\ 7}$ ब्राह्मग , उ

६४ दे$_{9}$ ab○. –b) दे$_{4}$ तु, दे$_{7}$ चैव (→च) –c) दे$_{1}$ समयपापशुद्धयर्थं, दे$_{7}$ समस्तपापशुद्धयर्य-. –d) ब$_{3}$ दे$_{11}$ पुण्योपचयन च यत्, दे$_{1}$ पुण्योपचयद तु यत्, दे$_{7}$ पुण्यास्थपन महत्, दे$_{9}$ पुण्योपममुद च यत्, न$_{1}$ पुण्योपचयस च यत्

६५ –a) ब$_{1}$ जप्तव्यो (→जप्तव्य) b) दे$_{11}$ मह्न (→मह्न); दे$_{9}$ तया (→[प्र]पि वा) –c) दे$_{7}$ असश्य (→असंशय); दे$_{7}$ तदा (→सदा); ब$_{1\ 3}$ दे$_{4\ 7}$ जाप्यो, दे$_{1}$ जपो, दे$_{9}$ जप्य (→जप्यो) –d) न$_{1}$ जपतो (→जपता); शा$_{1}$ दे$_{4\ 5}$ शान्तिपुष्टिद (दे$_{5}$ °दं), दे$_{7}$ तुष्टिशान्तिदः, दे$_{9\ 11}$ न$_{1}$ पुष्टिशान्तिदम् (→पुष्टिशान्तिद )

६६ –a) दे$_{1}$ ॐहरि केशम्, दे$_{4}$ ॐकारं कृष्ण , दे$_{5-7}$ हरिकृष्णं (→ॐहरिं कृष्णम्), दे$_{1}$ हृषीकृष्ण, दे$_{1}$ हृषीकेशम् न$_{1}$ हृषीकेश (→हृषीकेशम्) –b) ब$_{1}$ च,+वासुदेवम् (→वासुदेवम्) –c) न$_{1}$ प्रणतो (→प्रगतो), दे$_{4}$ °नाथ (→°नाथम्)

६७ दे$_{4\ 10}$ ○ –c) दे$_{9}$ जगन्नाथ, न$_{1}$ पर देवं (→परं देवम्)

६७श्लोकात्पर दे$_{3}$ अधिकम्—

336 ❁ यमीश सर्वभूतानां ध्यायन्ति यतयोक्षरम् ।
वासुदेवमनिर्देश्य तमस्मि शरण गतः ।

६८ दे$_{4\ 7\ 9}$ ○ –a) ब$_{3}$ शार्ङ्गिणम्, दे$_{1\ 3}$ शङ्खिण, दे$_{10}$ शङ्खिन,+णम् (→शङ्खिनम्); शा$_{1}$ कारा का$_{1\ 2}$ दे$_{1\ 5\ 10\text{-}11}$ न$_{1}$ शान्त (→शार्ङ्ग ) –b) शा$_{1}$ कारा का$_{1\ 2}$ दे$_{1\ 5\ 10\text{-}11}$ न$_{1}$ शार्ङ्गिणम् (→धारिणम्). ब$_{1}$ दे$_{1}$ स्रग्वरं, न$_{1}$ प्रगवम् (→स्रग्धरं). शा$_{1}$ कारा का$_{2}$ दे$_{1\ 5\ 11}$ न$_{1}$ वरम्, दे$_{10}$ धरम् (→परम्) –c) न$_{1}$ पुण्य°(→प्रग°); न$_{1}$ सम (→पतिं); ब$_{2}$ लक्ष्म्याम्(→लक्ष्म्याः)

६९ –a) दे$_{1}$ °राक्ष्य, दे$_{3}$ °रंत, दे$_{7\ 9}$ न$_{1}$ °रागम्, दे$_{10}$ °राक्ष्यम् (→°राक्षम्) –b) ब$_{1}$ उतमम् (→मच्युतम्) –c) न$_{1}$ पुण्यतो (→प्रगतो); दे$_{1}$ सुत, दे$_{7}$ पतिं, दे$_{9}$ स्तुत , न$_{1}$ स्तवम् (→स्तुतम्); दे$_{7}$ लक्ष्म्याः, दे$_{3}$ न$_{1}$ स्तुत्यं (→स्तुत्यैः )

६९ श्लोकात्पर दे$_{4}$ अधिकम्—

337 ❁ केशवं चन्द्रमासूर्यं कितकेशिनिषूदन ।
प्रणतोऽस्मि महाबाहुं स मे पापं व्यपोहतु ॥ (=७१)

७०. दे$_{1\ 7\ 9}$ ७०a–७१d○ (द्र सं ) –a) ब$_{1,2}$ शौरं (→शौरिम्)

७१. दे$_{4\ 7\ 9}$ ○ (द्र ७०पा वि ) –a) दे$_{3}$ केशवद्रष्टारम् (→चन्द्रसूर्याक्षम्) –b) ब$_{1\ 2}$ दे$_{3}$ कंसारिकेशिनि-, ब$_{3}$ कंसारि बलि-, न$_{1}$ कंसमेसयरि(→कंसकेशिनि-) –c) न$_{1}$ °बाहु (→बाहुं)

७१श्लोकात्पर दे$_{1}$ अधिकम्—

338 ❁ दामोदरमुदाराक्षं पुण्डरीकाक्ष- (=६९ab)

श्रीवत्सवक्षसं श्रीशं श्रीधरं श्रीनिकेतनम् ।
प्रणतोऽस्मि श्रियः कान्त स मे पापं व्यपोहतु ॥ ७२
यमीशं सर्वभूताना ध्यायन्ति यतयोऽक्षरम् ।
वासुदेवमनिर्देश्यं तमस्मि शरणं गत ॥ ७३
समस्तालम्बनेभ्यो यं व्यावृत्य मनसो गतिम् ।
ध्यायन्ति वासुदेवाख्य तमस्मि शरण गत. ॥ ७४
सर्वग सर्वभूतं च सर्वस्याधारमीश्वरम् ।
वासुदेव पर ब्रह्म तमस्मि शरण गत ॥ ७५
परमात्मानमव्यक्त य प्रयान्ति सुमेधसः ।
कर्मक्षयेऽक्षरं देवं तमस्मि शरण गतः ॥ ७६
पुण्यपापविनिर्मुक्ता यं प्रविश्य पुनर्भवम् ।
न योगिनः प्राप्नुवन्ति तमस्मि शरणं गतः ॥ ७७
ब्रह्मा भूत्वा जगत् सर्वं सदेवासुरमानुषम् ।
य. सृजत्यच्युतो देवस्तमस्मि शरणं गत. ॥ ७८
ब्रह्मत्वे यस्य वक्त्रेभ्यश्चतुर्वेदमय वपु. ।
प्रभुः पुरातनो जज्ञे तमस्मि शरण गत. ॥ ७९
ब्रह्मरूपधरं देवं जगद्योनिं जनार्दनम् ।
स्रष्टृत्वे संस्थित सृष्टौ प्रणतोऽस्मि सनातनम् ॥ ८०

---

७२ –b) दे$_{5}$ स' (→श्री°) –c) न$_{1}$ श्रिया (→श्रिय) –d) दे$_{3\ 5}$ **** (→व्यपोहतु)

शा$_{1}$ कारा का$_{1}$ ६९–७२श्लोकाना क्रम इत्थ वर्त्तते—
339 * श्रीवत्सवक्षस श्रीश श्रीधर श्रीनिकेतनम ।
प्रणतोऽस्मि श्रिय· कान्त स मे पाप व्यपोहतु ।
दामोदरमुदाराक्ष पुण्डरीकाक्षम च्युतम ।
प्रणतोऽस्मि स्तुतं स्तुत्यं स मे पापं व्यपोहतु । [4]
नारायण नर शौरिं माधव मधुसूदनम ।
प्रणतोऽस्मि धराधार स मे पाप व्यपोहतु ।
केशव चन्द्रसूर्याक्षं कंसकेशिनिषूदनम् ।
प्रणतोऽस्मि महाबाहु स मे पाप व्यपोहतु । [8]

७३ दे$_{5}$ ○ –b) शा$_{1}$ कारा का$_{1\ 2}$ दे$_{1\ 4\text{-}10\ 11}$ शतशो (→यतयो) –d) दे$_{7}$ नतोऽस्मि, न$_{1}$ तमस्मिन् (→तमस्मि)

७४ ब$_{2}$ ७४a–७५d○ (द्र स); न$_{1}$ cd○ दे$_{5}$ a○ –a) न$_{1}$ लवणेभ्यो (→[-आ] लम्बनेभ्यो) दे$_{3\ 9}$ य, न$_{1}$ [-अ] ह (→[-अ]यम्) दे$_{11}$ नभस्त्वस्त्वालम्बनेभ्यो –b) ब$_{1}$ दे$_{4\ 10\ 11}$ व्यावृत्त, दे$_{3\ 7\ 9}$ समृ (दे$_{9}$ °ह्व) त्य (→व्यावृत्य); न$_{1}$ हृदयस्मिन् शरण गत· –c) कारा परमात्मान (→वासुदेवाख्यम्)

७५ ब$_{2}$ ○ (द्र ७४ पा वि) ब$_{3}$ दे$_{7}$ ○ (द्र स) न$_{1}$ ○ –a) दे$_{4}$ °भूतस्य, दे$_{9}$ °शास्तार (→°भूतञ्च) –c) दे$_{5}$ वायु° (→वासु°); दे$_{5}$ परमय (→पर); दे$_{9}$ वासुदव वर ब्रह्म –d) ब$_{1}$ दे$_{3\ 4\ 9}$ शरणा- (→शरण)

७६ दे$_{9}$ ७६a–७८d ○ (द्र स) न$_{1}$ ○ –a) दे$_{4}$ अव्ययं (→अव्यक्तम्) –b) ब$_{1\ 3}$ दे$_{3}$ यान्ति च (→प्रयान्ति) शा$_{1}$ समेधस, दे$_{1\ 5}$ सुमेधसम् (→सुमेधस) –c) दे$_{7}$ °क्षया° (→°क्षये°), ब$_{3}$ यान्ति, दे$_{1}$ देव (→देवम्)

७७ दे$_{9}$ ○ (द्र ७६ पा वि) –a) ब$_{1}$ दे$_{3}$ °मुक्तो, दे$_{5}$ °मुक्त, दे$_{10}$ °मुक्त (→°मुक्ता) –b) दे$_{1\ 3\ 7}$ प्राप्य च (→प्रविश्य) ब$_{1}$ पुनर्भव दे$_{5}$ [-आ]पुनर्भव (→पुनर्भवम्) –c) शा$_{1}$ योगिनम् (→योगिन) दे$_{7}$ योगिन प्राप्नुवन्ताह –d) दे$_{5}$ गते (→गत)

७८ ब$_{1\ 3}$ ७८a–७९ d ○ (द्र स) दे$_{9}$ ○(द्र ७६ पा वि) –a) शा$_{1}$ का$_{1\ 2}$ दे$_{1\ 3\ 5\ 7}$ न$_{1}$ ब्रह्म (→ब्रह्मा) दे$_{7}$ भूतम् (→भूत्वा) –b) दे$_{4}$ °मानवम् (→°मानुषम्) –c) दे$_{7}$ न$_{1}$ य (→य) दे$_{5}$ [-अ] श्रुतो (→[-अ] च्युतो), दे$_{3}$ देवान् (→देव)

७९ ब$_{1\ 3}$ ○ (द्र ७८ पा वि) –a) शा$_{1}$ का$_{1\ 2}$ दे$_{1\ 3\text{-}5\ 7\ 9\ 11}$ ब्रह्मत्व,कारा ब्रह्म तत्, न$_{1}$ ब्रह्मणो (→ब्रह्म त्वम्); दे$_{4}$ पश्य (→यस्य); दे$_{11}$ चक्रेभ्य (→वक्त्रेभ्य) –b) दे$_{5}$ चतुर्वेदे (→चतुर्वेद) –c) शा$_{1}$ कारा का$_{1\ 2}$ दधत्प्रभु पुरा यज्ञे दे$_{9}$ न$_{1}$ कृत्वा प्रभु (न$_{1}$ °भो) पुरा यन, दे$_{3\ 7}$ वपु· प्रभो पुरो (दे$_{7}$ °रा) ज (दे$_{7}$ °य) ज्ञे, दे$_{11}$ प्रभुर्धत्त पुरा यज्ञे

८० –a) न$_{1}$ °रूपपर (→°रूपधर); न$_{1}$ तेन (→देव) –b) का$_{1}$ °थि,+°योनिं दे$_{7}$ न$_{1}$ °योनि (→°योनिं) –c) शा$_{1}$ दे$_{1}$ स्रष्टात्वे का स्रष्ट्यात्वे ब$_{1}$ स्रष्ट्याग्र, दे$_{3}$ सष्टृत्वे, दे$_{5}$ धष्टृत्वे, दे$_{7}$ सृष्ट्यर्थं, दे$_{10}$ शृष्ट्य ते (→स्रष्टृत्वे) दे$_{1\ 5\ 11}$ सस्थिते, दे$_{10}$ सस्थित, न$_{1}$ सस्थितं (→सस्थितम्) दे$_{1}$ न$_{1}$ सृष्टि, दे$_{7}$ देव, दे$_{4}$ दित्य, दे$_{5}$ सृष्ट्यै, मुवे सष्टम् (→सृष्टौ) –d) ब$_{1}$ त नतो स्मि (→प्रणतोऽस्मि) ब$_{1\ 3}$ दे$_{7}$ जनार्द्दनम्, दे$_{10}$ सदाशिवम् (→सनातनम्), दे$_{3}$ तमस्मि शरण गत

८० श्लोकात्पर कारा पुस्तके अधिकम्—
340 * भक्षयित्वा च सकल यथा धृतमिद जगत् ।
यो वै नुयति रुद्रात्मा प्रणतोऽस्मि सदाशिवम् । (=८५)

८६ ८२ स्रष्टा भूत्वा स्थितो योगी स्थित्वासुरसूदनः ।
तमादिपुरुषं विष्णुं प्रणतोऽस्मि जनार्दनम् ॥ ८१
धृता मही हता दैत्याः परित्रातास्तथा सुराः ।
येन तं विष्णुमाद्येशं प्रणतोऽस्मि जनार्दनम् ॥ ८२
यज्ञैर्यजन्ति यं विप्रा यज्ञेशं यज्ञभावनम् ।
तं यज्ञपुरुषं विष्णुं प्रणतोऽस्मि सनातनम् ॥ ८३
पातालवीथीभूतानि तथा लोकान् निहन्ति यः ।
तमन्तपुरुषं रुद्रं प्रणतोऽस्मि सनातनम् ॥ ८४
सभक्षयित्वा सकलं यथासृष्टमिदं जगत् ।
यो वै नृत्यति रुद्रात्मा प्रणतोऽस्मि जनार्दनम् ॥ ८५
सुरासुराः पितृगणा यक्षगन्धर्वराक्षसाः ।
संभूता यस्य देवस्य सर्वगं तं नमाम्यहम् ॥ ८६
समस्तदेवाः सकला मनुष्याणां च जातयः ।
यस्यांशभूता देवस्य सर्वगं तं नतोऽस्म्यहम् ॥ ८७
वृक्षगुल्मादयो यस्य तथा पशुमृगादयः ।
एकांशभूता देवस्य सर्वगं तं नमाम्यहम् ॥ ८८

---

८१ दे$_3$ न$_1$ ○ (इ स) —a) दे$_{1\ 4\ 9\ 11}$ सृष्टवा, दे$_5$ सृष्टा, दे$_7$ दृष्टवा (→स्रष्टा) दे$_{1\ 4\text{-}5\ 7\ 10\text{-}11}$ भूत (दे$_7$ °ता) स्थितो दे$_9$ भूतानि यो (→भूत्वा स्थितो) ब$_{1\ 3}$ सृष्टवा भूतान् स्थितो योगी —b) दे$_9$ स्थिता चासुरसूदन —d) दे$_5$ सनातन (→जनार्दनम्)

८२ दे$_1$ ○ (इ स) —a) ब$_1$ धाता (→धृता), दे$_3$ हृता दे$_7$ मही (→मही) दे$_3$ मही (→हता) दे$_5$ देव्या (→दैत्या) —b) ब$_1$ पावितास्ता, ब$_2$ परित्रात (→परित्राता) ब$_{1\ 3}$ दे$_3$ तथामरा, दे$_{1\ 4\ 10}$ स्थिता सुरा, दे$_7$ ततोमरा (→तथा सुरा) —c) दे$_7$ योग (→येन); शा$_1$ कारा का$_1$ ॰ ब$_1$ दे$_5$ विष्णु (→विष्णु); शा$_1$ कारा का$_1$ ॰ ब$_1$ दे$_1$ आद्येशम् दे$_{3\text{-}7}$ मादेश (दे$_7$ °र्श) दे$_{10}$ एवेशम् (→आद्येशम्) —d) कारा परात्परम्, का$_2$ सनातनम् दे जगत्पतिम् (→जनार्दनम्)

८३ शा$_1$ का$_1$ ॰ ८३a–८४d ○ (इ स): कारा ८३a–८५d ○ (इ सं) ब$_{1\ 3}$ cd ○ —a) दे$_5$ यज्ञे (→यज्ञै), दे$_1$ यै (→यं) —b) दे$_3$ °वाहनम्, न$_1$ °भाजनम् (→°भावनम्) —c) न$_1$ यज्ञ (→यज्ञ) —d) दे$_3$ जनार्दनम् (→सनातनम्)

८३ श्लोकानन्तरं न$_1$ अधिकम्—

341 ● सृष्ट्वा भूतानि योगी स्थित्वा चासुरसूदन ।
तमादिपुरुषं विष्णुं प्रणतोऽस्मि जनार्दनम् ।　[ = ८१]

८४ शा$_1$ कारा का$_1$ ॰ ○ (इ ८३ पा वि) —a) ब$_3$ पातालपृथ्वी° दे$_3$ यतानिवीथि°, दे$_9$ पातालावधि°, दे$_{11}$ पातालावीथि° (→पातालवीथी°) —b) दे$_1$ नीमन्ति (→निहन्ति), दे$_9$ यथा लोकानि यान्ति यम् —c) दे$_3$ एतद, दे$_7$ उग्र, दे$_9$ नित्य (→मन्त); दे$_{1\ 4\text{-}10}$ रुद्रं, दे$_3$ विष्णुं, न$_1$ विष्णु + रुद्र (→रुद्रम्) —d) ब$_1$ ॰ दे$_3$ जनार्दनम् (→सनातनम्)

८५ कारा ○ (इ ८३ पा वि); दे$_{11}$ ○ (इ सं) —a) शा$_1$ का$_1$ ॰ दे$_{1\ 4\ 5\ 10}$ भक्षयित्वा च (दे$_4$ तु) ब$_1$ स भक्षयित्वा न$_1$ समभक्ष्यन्त (→संभक्षयित्वा) —b) शा$_1$ का$_1$ ॰ यथा धृतम्, दे$_7$ तथा सृष्टिम् (→यथासृष्टम्) —c) ब$_3$ दुष्टात्मा दे$_7$ योगात्मा (→रुद्रात्मा) —d) दे$_4$ न$_1$ सनातनम् (→जनार्दनम्)

८६ —a) शा$_1$ का$_{1\ 2}$ दे$_{1\ 4\ 11}$ सुरासुर (→सुरासुराः), दे$_1$ °गणान् (→°गणाः); न$_1$ सुरपितृगणा यक्ष —b) न$_1$ सिद्ध° (→यक्ष°); दे$_1$ °राक्षसान् (→°राक्षसाः) —c) ब$_{1\ 3}$ दे$_{3\ 7}$ यस्या (ब$_3$ दे$_7$ °स्मात्) दा (ब$_3$ दे$_7$ स) भूता (→सम्भूता यस्य)

८७ दे$_7$ ○ (इ सं) —a) दे$_1$ सगणा (→सकला) —c) दे$_{11}$ संभूता यस्य (→यस्यांशभूता) —d) कारा सर्वदं (→सर्वगं)

८७ श्लोकानन्तरं का अधिकम्—

342 ● यया प्रकृतये तस्मै अजिताय महात्मने ।
अज्ञातितत्त्व देवाय निःस्पृहाय नमोऽस्तु ते ।
नमः अजाय पीठाय प्रार्थनीय प्रवर्तिने ।
अनन्तराय चैकाय अव्यक्ताय नमोऽस्तु ते । [4]
नमो गूढाय गुह्याय गुणाय गुणवर्तिने ।
अप्रमेयप्रमेयाय अतुलाय नमो नमः ।
नमः शिवाय शान्ताय निश्चिताय यशस्विने ।
सनातनाय पूर्वपुराणा (णा) य नमो नमः । [8]
नमो देवादिदेवाय स्वभावाय नमो नमः ।
नमो यज्ञवराहाय गोविन्दाय नमो नमः ।
नमो प्रज्ञाधाराय सांख्ययोगोद्भवाय च (परं) ।
विश्वधराय देवाय विश्वेश्वराय नमः ।　[12]

८८ दे$_{10}$ ○ (इ सं) —c) दे$_5$ देवस्य (→देवस्य) —d) कारा सर्वगं (→सर्वगं)

यस्मान्नान्यत् परं किंचिद् यस्मिन् सर्वं महात्मनि ।
यः सर्वमध्यगोऽनन्तः सर्वगं तं नमाम्यहम् ॥ ८९
यथा सर्वेषु भूतेषु गूढोऽग्निरिव दारुषु ।
विष्णुरेवं तथा पापं ममाशेषं प्रणश्यतु ॥ ९०
यथा विष्णुमयं सर्वं ब्रह्मादि सचराचरम् ।
यच्च ज्ञानपरिच्छेद्यं पापं नश्यतु मे तथा ॥ ९१
शुभाशुभानि कर्माणि रजःसत्त्वतमांसि च ।
अनेकजन्मकर्मोत्थं पापं नश्यतु मे तथा ॥ ९२
यन्निशायां च यत्प्रातर्यन्मध्याह्नापराह्णयोः ।
संध्ययोश्च कृतं पापं कर्मणा मनसा गिरा ॥ ९३
यत् तिष्ठता यद् व्रजता यच्च शय्यागतेन मे ।
कृतं यदशुभं कर्म कायेन मनसा गिरा ॥ ९४
अज्ञानतो ज्ञानतो वा मदाचलितमानसैः ।
तत् क्षिप्रं विलयं यातु वासुदेवस्य कीर्तनात् ॥ ९५
परदारपरद्रव्यवाञ्छा द्रोहोद्भवं च यत् ।
परपीडोद्भवां निन्दां कुर्वता यन्महात्मनाम् ॥ ९६
यच्च भोज्ये तथा पेये भक्ष्ये चोष्ये विलेहने ।
तद् यातु विलयं तोये यथा लवणभाजनम् ॥ ९७
यद् बाल्ये यच्च कौमारे यत् पापं यौवने मम ।
वयःपरिणतौ यच्च यच्च जन्मान्तरे कृतम् ॥ ९८
तन्नारायण गोविन्द हरिकृष्णेश कीर्तनात् ।
प्रयातु विलयं तोये यथा लवणभाजनम् ॥ ९९ वँ. ८६

---

८९. दे$_4$. ⊙ (ह. सं.). –a) ब$_1$ वरम्, दे$_5$ पर,+रा (→परं). –b) शा$_1$ कारा. का$_{1\ 2}$ दे$_{1.5.10}$ यत्र (→यस्मिन्); ब$_3$ दे$_3$ प्रतिष्ठितं, दे$_7$ चिदात्मनि (→महात्मनि). –c) दे$_{11}$ तत् (→य); ब$_{1.2}$ दे$_{3.7}$ य सर्वम (दे$_7$ °मे) ध्य (दे$_7$ °व) गोनन्त, ब$_3$ यस्तु सर्वोऽप्ययोनन्त. –d) कारा. सर्वगं (→सर्वगं).

९०. ब$_3$ ९०-९२ ○. –b) दे$_9$ गूढाग्नि (→गूढोग्नि); दे$_3$ न$_1$ इह (→इव). –c) शा$_1$ कारा. का$_1$ ब$_1$ दे$_7$ न$_1$ एव (→एवं). –d) दे$_5$ समाशेषं, दे$_7$ स मां शेष, न$_1$ ममादोषं (→ममाशेषं); दे$_9$ व्यपोहतु (→प्रणश्यतु)

९१. ब$_3$ दे$_9$. ○. –a) ब$_2$ दे$_7$ तथा (→यथा); ब$_{1.2}$ दे$_{3.7}$ सर्व° (→विष्णु°); ब$_{1.2}$ दे$_{3\ 7}$ विष्णु (→सर्वम्). –b) दे$_7$ च (→स-). –c) कारा. यस्य, दे$_3$ यच्चि (च्चित् ?), दे$_7$ यत्तु (→यच्च); दे$_{10}$ यच्चज्ञानं तप (प)च्छेद्यम्, न$_1$ स च ज्ञानपरिच्छेद्य. –d) शा$_1$ कारा. का$_{1\ 2}$ मे सदा, दे$_5$ मे तदा, न$_1$ सर्वदा (→मे तथा).

९२. ब$_{1-3}$. ⊙ (ह. स). –a) दे$_9$ यथा (→शुभा-); ब$_2$ दे$_{3.7}$ कार्याणि (→कर्माणि). –b) दे$_9$ कुर्वन्त चातिपापिनम्. –d) शा$_1$ कारा. का$_{1.2}$ दे$_5$ मे सदा, न$_1$ सर्वथा (→मे तथा)

९२ श्लोकस्य ab, cd मध्ये दे$_9$ अधिकम्—रक्षत (?) पते तमेव च ।

९३. –a) दे$_3$ यम् (→यत्); दे$_7$ तथा (→च यत्). –b) न$_1$ तत् (→यत्). –c) दे$_7$ यत् (→च) –d) ब$_{1\ 2}$ [-श्र] पिवा (→गिरा).

९४. –a) न$_1$ प्रव्रजता (→यद्व्रजता). –b) दे$_7$ स्वपता जाग्रतेन (→यच्च शय्यागतेन), दे$_9$ च (→मे). –d) दे$_{10}$ कार्य (ये?) न (→कायेन), ब$_{1.2}$ दे$_{3.7.9\ 10}$ [-श्र] पिवा (→गिरा).

९५. –a) दे$_7$ वा ज्ञानाच्च (→ज्ञानतो वा). –b) का$_2$ सदा (→मदात्), दे$_9$ चालितमानस', न$_1$ चरितमानसै (→चलितमानसै). –c) शा$_1$ का$_1$ सक्षिप्रं, का$_2$ स,+तत् क्षिप्रम्, दे$_7$ सं क्षिप्रं, दे$_{11}$ तत्सर्वम् (→तत् क्षिप्रम्); दे$_9$ समुत्क्षिपन्ति पापेभ्य'. –d) न$_1$ तेन गच्छामि तत्पदम्.

९६. a) दे$_1$ परदाराम् (रान् ?), दे$_7$ परदारा (→परदार-); दे$_{1.3.5-7.9.10}$ न$_1$ °द्रव्यं (→°द्रव्य-). –b) दे$_7$ पर- (→वाञ्छा); दे$_1$ तु (→च); दे$_9$ वा श्रद्धो (?) ह परस्य यत्. –c) कारा. का$_1$ दे$_7$ न$_1$ °भवं (→°भवाम्). –d) शा$_1$ का$_1$ दे$_{1-5\ 10}$ कुर्वताम्, दे$_{7.9-11}$ कुर्वतो (→कुर्वता); दे$_4$ मया कृतम् (→महात्मनाम्)

९७. –a) का$_2$ यश्च, दे$_5$ यत्स, दे$_7$ या च, दे$_9$ यथा (→यच्च); ब$_3$ भक्ष्ये (→भोज्ये) –b) ब$_1$ भक्षणे, दे$_7$ चोष्ये, दे$_{10}$ भ.ते (क्ष्ये ?), दे$_7$ लेह्य, दे$_9$ भोज्ये, न$_1$ भोक्ष्ये (→चोष्ये); दे$_{3-7-9}$ विलेपने, न$_1$ विलेह्यके (→विलेहने) –c) दे$_7$ तत्प्रातु, दे$_9$ तथेतु, न$_1$ तथा तु (→तद् यातु), दे$_7$ तेजो (→तोये) –d) दे$_5$ यत्रा (→यथा).

९८. –a) न$_1$ तत् (→यत्), का$_2$ य (→यत्) –c) न$_1$ °परिणमे (→°परिणतौ); का$_2$ य (→यत्).–d) का$_2$ यश्च, दे$_1$ ∗∗, (→यच्च); दे$_1$ जन्मान्तरै (→जन्मातरे).

९९. –a) दे$_3$ त (→तत्). –b) ब$_{1-3}$ दे$_7$ हरे कृष्णेति, दे$_3$ न$_1$ हरिकृष्णेति (→हरिकृष्णेश-). –c) शा$_1$ प्रयान्तु, ब$_1$ सयातु (→प्रयातु); दे$_3$ प्रलयं, दे$_4$ लवणम् (→विलयम्); न$_1$ तोय (→तोये).

८६.१०० विष्णवे वासुदेवाय हरये केशवाय च ।
जनार्दनाय कृष्णाय नमो भूयो नमो नमः ॥ १००
भविष्यन्नरकघ्नाय नमः कंसविघातिने ।
अरिष्टकेशिचाणूरदेवारिक्षयिणे नमः ॥ १०१
कोऽन्यो बलेर्वञ्चयिता त्वामृते वै भविष्यति ।
कोऽन्यो नाशयति बलाद् दर्पं हैहयभूपतेः ॥ १०२
कः करिष्यत्यथाऽन्यो वै सागरे सेतुबन्धनम् ।
वधिष्यति दशग्रीवं कः सामात्यपुरःसरम् ॥ १०३
कस्त्वामृतेऽन्यो नन्दस्य गोकुले रतिमेष्यति ।
प्रलम्बपूतनादीनां त्वामृते मधुसूदन ।
निहन्ताऽप्यथवा शास्ता देवदेव भविष्यति ॥ १०४

जपन्नेवं नरः पुण्यं वैष्णवं धर्ममुत्तमम् ।
इष्टानिष्टप्रसंगेभ्यो ज्ञानतोऽज्ञानतोऽपि वा ॥ १०५
कृतं तेन तु यत् पापं सप्तजन्मान्तराणि वै ।
महापातकसंज्ञं वा तथा चैवोपपातकम् ॥ १०६
यज्ञादीनि च पुण्यानि जपहोमव्रतानि च ।
नाशयेद् योगिनां सर्वमामपात्रमिवाम्भसि ॥ १०७
नरः संवत्सरं पूर्णं तिलपात्राणि षोडश ।
अहन्यहनि यो दद्यात् पठत्येतच्च तत्समम् ॥ १०८
अविलुप्तब्रह्मचर्यं संप्राप्य स्मरणं हरेः ।
विष्णुलोकमवाप्नोति सत्यमेतन्मयोदितम् ॥ १०९
यथैतत् सत्यमुक्तं मे न ह्यल्पमपि मे मृषा ।

---

१००. –d) कारा. दे$_{10}$ भूयो भूयो, दे$_{3}$ गोविन्दाय (→नमो भूयो).

१०१. दे$_{9}$. १०१a–१०४d ⊙ (द्र. सं). –a) दे$_{1}$ भविष्यम्, दे$_{3}$ नमामि, दे$_{7}$ भवाय (→भविष्यत्). –b) शा$_{1}$ का$_{1.2}$ दे$_{1.4.5-7.11}$ काम°, कारा. कर्म° (→कंस°). –c) ब$_{2}$ °चसूर° (→°चाणूर°). –c) शा$_{1}$ का$_{1.3}$ °क्षयिने, कारा. °घातिने, न$_{1}$ °क्षपणे (→°क्षयिणे).

१०२. दे$_{9}$. ⊙. (द्र १०१ पा. वि.). –a) ब$_{1}$ °यित्वा (→°यिता) –b) दे$_{3}$ वि भविष्यति (→वै भविष्यति). –c) कारा. दर्पं नाशयति, ब$_{1.2}$ दे$_{3}$ बला (दे$_{3}$ °ल) नाशयिता (ब$_{1}$ °त्वा), दे$_{4}$ नाशयिता दर्पं (→नाशयति बलात्); दे$_{7-11}$ न$_{1}$ को नाशयिष्यति बलात्. –d) कारा. दे$_{1}$ बलात् (→दर्पम्); ब$_{2}$ हेल्लय° (→हैहय°).

१०३. दे$_{9}$ ⊙. (द्र. १०१ पा. वि.). –a) शा$_{1}$ दे$_{1}$ का करिष्यत्यथा°, ब$_{1.3}$ दे$_{3}$ क करिष्यति था°, दे$_{7}$ क करिष्ये तथा°, न$_{1}$ करिष्यते तथा° (→क करिष्यत्यथा°). –b) ब$_{1}$ सागरो, दे$_{5}$ सागर- (→सागरे). –c) शा$_{1}$ कारा. का$_{1.2}$ दे$_{1.4.5.10.11}$ हनि° (→वधि°) –d) दे$_{1}$ का सामात्य°, दे$_{7}$ सो ममात्य°, दे$_{10}$ क समात्य° (→कः सामात्य°), न$_{1}$ क समात्यस्तु पूरुष .

१०४. दे$_{9}$ ⊙. (द्र. १०१ पा वि) –a) दे$_{7}$ हृष्यस्य, न$_{1}$ [-ब्र] नत्तस्य (→नन्दस्य) –b) ब$_{2}$ रि (?) तिम् (→रतिम्), दे$_{4}$ एष्यति (→एष्यति); दे$_{7}$ गोकुले (त्वामृते) रतिमेष्यति. –d) ब$_{1}$ ऋते (?) (→ऋते), दे$_{4}$ °दन, दे$_{3}$ न$_{1}$ °दनम् (→°दन) –e) ब$_{2.3}$ दे$_{3}$ नियन्ता (→निहन्ता); दे$_{7}$ '[-ब] प्ययवा' असष्टम्, दे$_{11}$ यागर (→[-अ] प्ययवा), ब$_{1.2}$ पाता, न$_{1}$ दा (शा ?) स्ता (→शास्ता). –f) न$_{1}$ वागदेवो (→देवदेव).

१०५. –a) ब$_{1.3}$ दे$_{3}$ जपत्येव, ब$_{2}$ जगत्येव, दे$_{9}$ जपन्नेव (→जपन्नेवम्); शा$_{1}$ तर, का$_{1}$ तरे, दे$_{7}$ नैव (→नरः). –b) दे$_{9}$ वैष्णव (→वैष्णवम्); कारा. दे$_{9}$ स्तोत्रम् (→धर्मम्). –c) का$_{1}$ कारा. का$_{1.2}$ दे$_{1.4.5-10}$ °प्रयोगेभ्यो (→°प्रसङ्गेभ्यो). –d) दे$_{7}$ ज्ञानादज्ञानतो (→ज्ञानतोऽज्ञानतो).

१०५ श्लोके c, d मध्ये कारा. अधिकम्—

343 * मुच्यते नात्र संशयः ।
यत्नर्न बन्धक दुष्टम् ।

१०६. –a) दे$_{9}$ त्वया (→तु यत्). –b) दे$_{3}$ जन्मान्तरेण, दे$_{4}$ जन्मान्तरेषु (→जन्मान्तराणि). –c) कारा, °पातकं संज्ञं वा, दे$_{9}$ °पातकसंयुक्तम्, दे$_{11}$ °पातकसं (दा ?) शास्वा (→°पातकसंज्ञं वा) –d) दे$_{11}$ वं लोप° (→चैवोप°)

१०७. –a) दे$_{4}$ तु (→च). –b) दे$_{3}$ °वृतानि, न$_{1}$ °जपानि (→°व्रतानि); कारा. वै, दे$_{4}$ तु (→च). –c) ब$_{2}$ नाशयात्, न$_{1}$ नाशयत् (→नाशयेत्), दे$_{7}$ योगिन (→योगिनां)

१०७ श्लोके ab, cd मध्ये दे$_{9}$. अधिकम्—

344 * कृतानि सकलान्येव जपस्तोत्रमनुत्तमम् ।
महापातकसंज्ञं वा तथा चैवोपपातकम् ॥

१०८. –a) का$_{2}$ पूर्णम्, ब$_{2.3}$ दे$_{1.9}$ पूर्णं-, न$_{1}$ पुण्यम् (→पूर्णम्). –c) दे$_{7}$ यो (→यो). –d) का$_{1}$ पठ्यते, दे$_{4}$ पठत (→पठति); दे$_{4}$ म (त ?) त्समम् (→तत्समम्)

१०९. –a) शा$_{1}$ कारा. का$_{1.2}$ दे$_{7}$ अविप्लुतं, दे$_{10}$ अवि-स्मृत- (→अविप्लुत-); कारा. ब$_{2.3}$ दे$_{4.9}$ ब्रह्मचर्यं (→ब्रह्मचर्यं) –b) शा$_{1}$ का$_{1}$ स्मरणे, ब$_{1}$ दारणं (→स्मरणं)

११०. –a) ब$_{1}$ दे$_{7}$ तथैतत्, दे$_{3}$ तदेतत्, दे$_{5}$ अथैतत् (→यथैतत्); का$_{1.2}$ सम्यगुक्तं, दे$_{5-10}$ सम्यगुक्तम् (→सत्यमुक्तम्); दे$_{7.11}$ हि (→मे) –b) दे$_{5}$ न तु (त्व ?) ल्पमपि,

राक्षसत्रस्तसर्वाङ्गं तथा मामेप मुञ्चतु ॥ ११०

पुलस्त्य उवाच ।🏵

एवमुच्चारिते तेन मुक्तो विप्रस्तु रक्षसा ।
अकामेन द्विजो भूयस्तमाह रजनीचरम् ॥ १११

ब्राह्मण उवाच ।🏵

एतद् भद्र मया ख्यातं तव पातकनाशनम् ।
विष्णोः सारस्वतं स्तोत्रं यज्जगाद सरस्वती ॥ ११२
हुताशनेन प्रहिता मम जिह्वाग्रसंस्थिता ।
जगादैनं स्तवं विष्णोः सर्वेषां चोपशान्तिदम् ॥ ११३
अनेनैव जगन्नाथं त्वमाराधय केशवम् ।
ततः शापापनोदं तु स्तुते लप्स्यसि केशवे ॥ ११४
अहर्निशं हृषीकेशं स्तवेनानेन राक्षस ।
स्तुहि भक्तिं दृढां कृत्वा ततः पापाद् विमोक्ष्यसे ॥ ११५
स्तुतो हि सर्वपापानि नाशयिष्यत्यसंशयम् ।
स्तुतो हि भक्त्या नृणां वै सर्वपापहरो हरिः ॥ ११६

पुलस्त्य उवाच ।🏵

ततः प्रणम्य तं विप्रं प्रसाद्य स निशाचरः ।
तदैव तपसे श्रीमान् शालग्राममगाद् वशी ॥ ११७
अहर्निशं स एवैनं जपन् सारस्वतं स्तवम् ।
देवक्रियारतिर्भूत्वा तपस्तेपे निशाचरः ॥ ११८ वे ८६

---

दे$_7$ ना * ल्पमपि, दे$_{11}$ नाप्यल्पमपि, न$_1$ न स्वल्पमति (→न ह्यल्पमपि) ब$_{1\ 3}$ दे$_3$ वै, दे$_{11}$ ते (→मे) दे$_9$ न त्वन भापित मृषा –c) दे$_7$ रक्षसो, दे$_9$ राक्षसो (→राक्षस), का$_2$ तत्र सर्वाग, ब$_{1\ 3}$ दे$_{3\ 7\ 11}$ न$_1$ ग्रस्तसर्वांगम् (दे$_7$ न$_1$ °ग) दे$_9$ ग्रस्त नष्टाङ्ग (→त्रस्तसर्वाङ्गम्) –d) ब$_3$ दे$_7$ मामेव, न$_1$ मामव (→मामेप) ब$_1$ मुश्चत दे$_7$ मुच्यतु (→मुञ्चतु)

🏵 दे ○ शा$_1$ न$_1$ पुलस्त्य दे$_1$ पुलस्त्य उ : दे$_3$ श्रीपुलस्त्य

१११ –a) दे$_{7\ 11}$ उच्चरिते (→उच्चारिते) –b) शा$_1$ कारा का$_{1\ 2}$ दे$_{1\ 4\ 5\ 9\ 10}$ स न$_1$ सु (→तु) दे$_4$ राक्षस, दे$_{5\ 7\ 9}$ राक्षसात (→रक्षसा) –c) ब$_3$ आकाशेन, दे$_{1\ 10}$ प्रकामेन दे$_9$ अकाम तु (→अकामेन)

🏵 शा$_1$ दे$_9$ न$_1$ ब्राह्मण दे$_1$ ब्राह्मण उ

११२ –a) शा$_1$ कारा का$_{1-7}$ भद्रमुपाख्यात (का$_2$ °नम्) दे$_{1\ 5-10-11}$ भद्रमुख्या(दे$_7$ °ख)ख्यातम् (दे$_{10}$ °नम्), दे$_9$ न$_1$ भद्र समाख्यातम् (→भद्र मया ख्यातम्) –c) न$_1$ °स्वत (→°स्वतम्) –d) दे यदूचे (→जगाद)

११३ –a) दे$_3$ विहिता दे$_{11}$ कथिता, मुत्रे दीप्ता च (→प्रहिता) –c) ब$_1$ दे$_{3\ 7}$ इमम् ब$_{2\ 3}$ दे$_{11}$ एव दे$_{1\ 4\ 5\ 10}$ एतम्, दे$_3$ एतत् (→एनम्) –d) दे$_{1\ 4\ 10}$ यथैषा (→सर्वेषां) दे$_9$ दोष° (→च प°) दे$_5$ स. पापोपशा तदम्, दे$_7$ सर्वपातकशा तदम्

११४ –c) दे$_1$ तथा (→तत) शा$_1$ कारा का$_{1\ 2}$ ब$_{2\ 3}$ दे$_{1\ 4\ 5\ 7\ 9\ 11}$ न$_1$ पापापनाद (ब$_3$ °द) ब$_1$ शापापनाद दे$_3$ पाशापनोद (→शापापनोदं) कारा ब$_3$ त्व (→तु) –d) न$_1$ लय (→स्तुते) दे$_{7\ 11}$ प्राप्स्यसि, न$_1$ एष्यति (→लप्स्यसि) दे$_1$ केशवम् (→केशवे)

११५ कारा ११५ c–११६ b○ –b) दे$_1$ * * * *, दे$_9$ अर्ह नर, मुत्रे प्रत्यह त्व (→अहर्निशम्) कारा का$_1$ दे$_7$ हृषीकेश (→हृषीकेशं) –b) दे$_5$ न$_1$ राक्षसा (→राक्षस) –c) शा$_1$ त्वयि, का$_1$ त्वयि,+तस्मिन्, ब$_{1\ 2}$ दे$_{3\ 9}$ स्तुति, ब$_3$ स्तुत्वा, दे$_{1\ 4\ 10}$ त्व हि दे$_7$ विष्णो (→स्तुहि) ब$_1$ भक्तिदृढा कृत्वा, दे$_7$ भक्तीह सद्दत्वा (→भक्ति दृढा कृत्वा) –d) शा$_1$ का$_1$ विमोक्षसे, दे$_{1\ 7}$ प्रमोक्षसे, दे$_{3\ 5\ 11}$ प्रमोक्ष्यसे (→विमोक्ष्यसे)

११६ कारा ab○ (द्र ११५ पा वि) –a) दे$_7$ श्रुते (→स्तुतो) –b) दे$_7$ नाशयिष्यामि न$_1$ नाशमेष्यति (→नाशयिष्यति) न$_1$ सशयम् (→[-अ]संशयम्) –c) दे$_7$ ततो (→स्तुतो); शा$_1$ [अ]भिभक्त्या, कारा का$_1$ [-अ]तिभक्त्या (→हि भक्त्या), कारा च नृणाम्, ब$_{1\ 3}$ दे$_3$ नृणा स, दे$_3$ नृणा हि, दे$_4$ देवोसो, दे$_{11}$ स नृणाम् (→नृणा वै), का$_2$ दे$_7$ स्तुतो भक्त्या नृणा चैव (का$_2$ °वै हि), न$_1$ सस्तुतो हि नृणा भक्त्या –d) दे$_1$ धम°, दे$_4$ नृणाम्° (→सर्व°)

🏵शा$_1$ न$_1$ पुलस्त्य दे$_{1\ 7}$ पुलस्त्य उ दे$_9$ श्रीपुलस्त्य

११७ दे$_{11}$ ११७ c–११८ d ○ (इ स) –b) ब$_{1\ 2}$दे$_{1\ 4\ 9\ 10}$ न$_1$ प्रसाद्य च (दे$_4$ °तु), ब$_3$ दे$_{3\ 7\ 11}$ अभिवाद्य (→प्रसाद्य स) कारा °चरम् (→°चर) –c) दे$_7$ तदेव (→तदव) –d) शा$_1$ कारा दे$_3$ न$_1$ साल°, का$_{1\ 2}$ सालि°, दे$_5$ शाल°, दे$_7$ शालि° (→शाल°); ब$_3$ दे$_3$ बली (→वशी)

११८ दे$_{11}$ ○(द्र ११७ पा वि); दे$_1$ ११८ d–१२० a 'तप कथित ○ –a) दे$_9$ अह नृश (→अहर्निशम्) न$_1$ वै (→स) शा$_1$ कारा का$_{1-7}$ दे$_{1\ 4\ 5-9\ 10}$ एवैतद् ब$_{1\ 3}$ एवैतम्, दे$_7$ चैवैनम्, न$_1$ तदनु (→एवैन) –b) दे$_5$ सारस्तुत (→सारस्वतम्) –c) का$_1$ °रतो, दे$_1$ °पति, दे$_4$ °परो, दे$_{10}$ °मति (→°रति)

११८ श्लोके c, d मध्ये दे$_1$ अधिकम्—

345 * ब्रह्मन् विष्णो सारस्वत स्तवम् ।
विष्णुवक्त्र(*)या सम्यक् सरस्वत्या समीरितम् ।

११९ समाराध्य जगन्नाथ स तत्र पुरुषोत्तमम् ।
सर्वपापविनिर्मुक्तो विष्णुलोकमवाप्तवान् ॥ ११९
एतत ते कथित ब्रह्मन् विष्णो सारस्वत स्तवम् ।
विप्रवक्त्रस्थया सम्यक्सरस्वत्या समीरितम् ॥ १२०
य एतत् परम स्तोत्र वासुदेवस्य मानव ।
पठिष्यति स सर्वेभ्य पापेभ्यो मोक्षमाप्स्यति ॥ १२१

इति श्रीवामनपुराणे एकोनषष्टितमोऽध्याय ॥५९॥

## ६०

पुलस्त्य उवाच ॥❀

नमस्तेऽस्तु जगन्नाथ देवदेव नमोऽस्तु ते ।
वासुदेव नमस्तेऽस्तु बहुरूप नमोऽस्तु ते ॥ १
एकशृङ्ग नमस्तुभ्य नमस्तुभ्य वृषाकपे ।
श्रीनिवास नमस्तेऽस्तु नमस्ते भूतभावन ॥ २
विष्वक्सेन नमस्तुभ्य नारायण नमोऽस्तु ते ।
ध्रुवध्वज नमस्तेऽस्तु सत्यध्वज नमोऽस्तु ते ॥ ३
यज्ञध्वज नमस्तुभ्य धर्मध्वज नमोऽस्तु ते ।

---

११९ दे1 ○ (द्र ११८ पा वि) –d) दे3 4 7 अवाप्नुयात् मुवे अगा च्छुभम् (→अवाप्तवान्)

१२० –a) दे1 एतत्त कथितम् ○ (द्र ११८ पा वि) –a) दे7 कथिते (→कथितम्) –c) कारा का1 विप्रदवक्त्रात्तया सम्यक्, दे1 विष्णुवक्त्रस्थया सम्यक्, दे3 विप्रवर्याय य सम्यक –d) दे5 °हितम् (→°रितम्)

१२१ –a) दे3 एतच्च (→य एतत्) –b) व॰ मानवा न1 नारद (→मानव) –c) शा1 कारा का दे11 य पठिष्यति का प्रपठिष्यति, न1 य पठिष्यन् स (→पठिष्यति स) –d) दे9 दु खेभ्यो (→पापेभ्यो) शा1 कारा का॰ दे1 5 10 एष्यति का1 आप्स्यति + एष्यति न1 आप्स्यसि (→आप्स्यति)

पुष्पिका—व3 ○1 शा1 इति श्रीवामनप्रादुर्भावे प्रह्लादतीर्थयात्रायाम् कारा दे9 न1 इति (दे3 [इति]श्री कारा न1 [श्री]) वामनपुराणे प्रह्लादतीर्थयात्रायाम्, का॰ दे1 1 5 10 इति श्री (दे4 [श्री])वामनपुराणे (दे10 श्री)वामनप्रादुर्भावे प्रह्लादतीर्थयात्रायाम्, व1 3 दे7 11 इति श्री (व1 • [श्री]) वामनपुराणे दे3 इति श्रीवामनपुराणे वामनप्रादुर्भावे मुवे इति श्रीवामनपुराणे पुलस्त्यनारदसंवादे वामनप्रादुर्भावे अध्ययानाम—दे5 ○1 शा1 का1 • दे1 4 10 सारस्वत स्तोत्रम्, कारा दे3 न1 सारस्वतस्तोत्र नाम व1 3 सारस्वतस्तोत्र (व1 • °त्र)दे 11 सारस्वतस्तवो नाम दे3 सारस्वत स्तव नाम अध्यायसंख्या—शा1 व1-3 दे1 4 5 ○1 कारा द्वयाधिकशततमोऽध्याय, का1 ॥७२॥ का ॥७४। दे3 अष्टपञ्चाशत्तमोऽध्याय दे9 सप्तपञ्चाशोऽध्याय, दे10 ॥८६॥ दे11 षडशीतितमोऽध्याय, न1 अष्टपञ्चाशोऽध्याय, मुवे षडशीतितमोऽध्याय

अध्यायनामानन्तर व1 • अधिकम्—समाप्तम्, दे10 अधिकम—सम्पूर्णम् ।

६०

[दे 3 अयमध्यायो नास्ति (द्र ५८–३३ पा वि) दे 1 (इत्यारभ्य ३१ d यावन्नास्ति ]

❀ शा1 का1 दे7 9 पुलस्त्य, दे1 पुलस्त्य उ 1 न1 श्री पुलस्त्य

१ व1 १० 'वासुदेव' इत्यारभ्य ३b ते इति यावन्नास्ति (द्र स) –a) शा1 कारा का1 दे 9 ॐ नमस्तेस्तु (दे1 •) दे11 नमोस्तु ते (→नमस्तेस्तु) –d) दे11 सत्यध्वज° (→बहुरूप°)

१ श्लोकान्तर दे11 अधिकम्—

346 * यमध्वज नमस्तुभ्यं धर्मध्वज नमोस्तु ते ।

२ व1 ○ (द्र १ पा वि) व cd ○ दे 11 c–४ b ○ –a) दे •••• दे11 नमस्तेस्तु (→नमस्तुभ्यं) –b) व3 सत्यध्वज नमोस्तु ते

३ व1 ab ○ (द्र १ पा वि) दे11 ○ (द्र २ पा वि) –c) व3 दे10 वृषध्वजा° दे1 4 धुतध्वज° न1 ऋतध्वज (→ध्रुवध्वज) न1 नमस्तुभ्यं (→नमस्तेस्तु) –d) शा1 सत्यध्वज (→सत्यध्वज)

४ व ४० तात इत्यारभ्य ६b ते इति यावन्नास्ति (द्र स) दे11 ab ○ (द्र २ पा वि) दे5 cd ○ –a) न1 जय° (→यज्ञ°) न1 नमस्तेस्तु (→नमस्तुभ्य) –b) दे4 सत्र°

तालध्वज नमस्तेऽस्तु नमस्ते गरुडध्वज ॥ ४
वरेण्य विष्णो वैकुण्ठ नमस्ते पुरुषोत्तम ।
नमो जयन्त विजय जयानन्त पराजित ॥ ५
कृतावर्त महावर्त महादेव नमोऽस्तु ते ।
अनाद्याद्यन्त मध्यान्त नमस्ते पद्मजप्रिय ॥ ६
पुरंजय नमस्तुभ्य शत्रुंजय नमोऽस्तु ते ।
शुभंजय नमस्तेऽस्तु नमस्तेऽस्तु धनंजय ॥ ७
सृष्टिगर्भ नमस्तुभ्य शुचिश्रव पृथुश्रव. ।
नमो हिरण्यगर्भाय पद्मगर्भाय ते नम ॥ ८
नम. कमलनेत्राय कालनेत्राय ते नम ।
कालनाभ नमस्तुभ्य महानाभ नमो नम ॥ ९

वृष्टिमूल महामूल मूलावास नमोऽस्तु ते ।
धर्मावास जलावास श्रीनिवास नमोऽस्तु ते ॥ १०
धर्माध्यक्ष प्रजाध्यक्ष लोकाध्यक्ष नमो नम. ।
सेनाध्यक्ष नमस्तुभ्य कालाध्यक्ष नमोऽस्तु ते ॥ ११
गदाधर श्रुतिधर चक्रधारिन् श्रियो धर ।
वनमालाधर हरे नमस्ते धरणीधर ॥ १२
आर्चिषेण महासेन नमस्तेऽस्तु पुरुष्टुत ।
बहुकल्प महाकल्प नमस्ते कल्पनामुख ॥ १३
सर्वात्मन् सर्वग विभो विरिञ्चे श्वेत केशव ।
नील रक्त महानील अनिरुद्ध नमोऽस्तु ते ॥ १४ व ८

(→धम°) –c) शा1 का1 2 घमध्वज कारा शमध्वज दे9 तलध्वज दे11 देवदेव (→तालध्वज)

५ व2 ○ (द्र ४ पा वि ) –c) न1 यजन्ति (→जयन्त); ब3 नमोस्तु वैजयन्त –d) ब3 जयानिन्तामपराजित

६ ब2 ab ○ (द्र ४ पा वि ) दे9 ६a इत्यारभ्य १७ b यावन्नास्ति a) का2 कृतावन्त ब1 कृतानत्त (→कृतावत) का2 महावर्त ब1 महानत (→महावत) –c) शा1 कारा का 2 दे1 [ अ]नन्त (→[ आ]द्यन्त) –d) का1 दे पद्मजा° (→पद्मज°) दे3 °प्रिये (→°प्रिय)

७ दे ○ (द्र ६ पा वि ) न1 cd द्विरावृत्तम् –c) कारा का1 सुदुजय ब1 3 दे3 धनञ्जय दे1 पुलञ्जय न1 कुशेशय (→शुभजय) –d) दे1 10 11 च (→तु) ब1 3 दे3 शुगञ्जय नमोस्तु ते (ब1 °नम ) न1 पद्मनाय नमोस्तु ते

८ दे8 ○ (द्र ६ पा वि ) –a) शा1 का1 2 धृष्टि° (का2 °ष्नि°) न1 वृष्णि° (→सृष्टि°) न1 नमस्तेस्तु (→नमस्तुभ्य) –b) कारा का1 2 दे4 5 10 11 न1 शुचिश्रव (→शुचिश्रव ); ब1 पृथक (→पृथु ) कारा का1 2 दे4 5 10 11 न1 °श्रव (→°श्रव ) –d) दे1 °नाभाय (→°गर्भाय)

९ दे3 ab ○ दे7 9 ○ (द्र ६ पा वि ) न1 ab○ तथा न1 ६d महा इत्यारभ्य ११c तुभ्य यावन्नास्ति (द्र स ) –a) ब1 सकल° (→कमल°) b) ब1 पद्मनेत्राय दे1 ***** (→कालनेत्राय) ब1 3 वै (→ते) –d) कारा ब1 3 दे3 नमोस्तु ते (→नमो नम ); का1 महानाभ (°भा ?) य ते नम

१० दे9 ○ (द्र ६ पा वि ); न1 ○ (द्र ६ पा वि ) –a) ब1 2 सृष्टि° ब3 दे1 3 वृष्णि° (→वृष्टि°); दे3 °माला (→°मूल); ब1 नमोनम· (→ नमोऽस्तु ते) –c) शा1 ब1 2 दे1 4 11 धम° (→धर्मा°)

११ ब1 cd ○ दे9 ○ (द्र ६ पा वि ); न1 abc ○ (द्र ६ पा वि ) –b) दे11 भोगा° (→लोका°) कारा ब1 3 दे3 नमोस्तु ते दे5 नमो (स्तु) नम (→नमो नम )

११ श्लोकात्पर न1 अधिकम्—

347 * कृतावत महावर्त ।

१२ दे9 ○ (द्र ६ पा वि ) –a) दे3 गंगा° (→गदा°) दे1 °धर (→°धर) b) कारा °धारित्रमाधर का1 दे1 5 °धारिन् श्रियाधर का2 दे3 °धारिश्रियाधर ब1 2 °धारि वरा धर ब3 °धरश्रियप्रिय न1 °धरश्रियाधर (→°धारिन् श्रियोधर) –c) दे5 धनलाभा° (→वनमाला°)

१३ दे9 ○ (द्र ६ पा वि ) –a) ब1 2 दे1 न1 आर्ष्णिषेण (न1 °न) ब3 पार्ष्णिसेण दे3 आर्ष्णिसेन दे11 अर्च्चिषेण (→आर्चिषेण) –b) शा1 कारा का1 2 नमस्ते पुरुषोत्तम ब3 नमस्तेस्तु पुरस्कृत –c) दे5 (महा) महा कल्प (→महाकल्प) –d) ब3 कल्पनामुख दे5 कल्पनाश्रय दे11 कल्पमुख्य च न1 कल्पना सुख (→कल्पनामुख)

१४ दे9 ○ (द्र ६ पा वि ) –a) ना1 सर्वाभा ब1 सर्वासु (→सर्वात्मन्) दे4 5 विभा (?) (→विभो) दे11 सर्वमरादे सवग ** –b) ब1 विरश्चि दे1 विरच (→विरिञ्चे) ब2 वाहन (→केशव) – ) भुवे नमो नीन (→नील रक्त) –d) दे5 अनिरुद्ध (→अनिरुद्ध)

७ १५ द्वादशात्मक कालात्मन् सामात्मन् परमात्मक ।
व्योमकात्मक सुब्रह्मन् भूतात्मक नमोऽस्तु ते ॥ १५
हरिकेश महाकेश गुडाकेश नमोऽस्तु ते ।
मुञ्जकेश हृषीकेश सर्वनाथ नमोऽस्तु ते ॥ १६
सूक्ष्म स्थूल महास्थूल महासूक्ष्म शुभंकर ।
श्वेतपीताम्बरधर नीलवास नमोऽस्तु ते ॥ १७
कुशेशय नमस्तेऽस्तु पद्मेशय जलेशय ।
गोविन्द प्रीतिकर्ता च हंस पीताम्बरप्रिय ॥ १८
अधोक्षज नमस्तुभ्य सीरध्वज जनार्दन ।
वामनाय॰ नमस्तेऽस्तु नमस्ते मधुसूदन ॥ १९

सहस्रशीर्षाय नमो ब्रह्मशीर्षाय[1] ते नमः ।
नमः सहस्रनेत्राय सोमसूर्यानलेक्षण ॥ २०
नमश्चाथर्वशिरसे महाशीर्षाय ते नमः ।
नमस्ते धर्मनेत्राय महानेत्राय ते नम. ॥ २१
नम. सहस्रपादाय सहस्रभुजमन्यवे ।
नमो यज्ञवराहाय महारूपाय ते नम. ॥ २२
नमस्ते विश्वदेवाय विश्वात्मन् विश्वसंभव ।
विश्वरूप नमस्तेऽस्तु त्वत्तो विश्वमभूदिदम् ॥ २३
न्यग्रोधस्त्वं महाशाखस्त्वं मूलकुसुमार्चित. ।
स्कन्धपत्राङ्कुरलतापल्लवाय नमोऽस्तु ते ॥ २४

---

१५ ब1 O; दे3 4 ab O; दे7 O (द्र ६ पा वि) —a) ब3 कामात्मन्, दे5 कामात्मा (→कालात्मन्) —b) ना1 दे7 समात्माद् (दे7 °त्मा), कारा का1 2 समात्मन्, ब3 न1 सोमात्मन् (→सामात्मन्) —c) ब2 व्योमार्कात्वक, ब3 दे1 3 व्योमार्कात्मक (दे3 °क) दे5 द्योमकात्मक (→व्योमकात्मक); दे3 तु (→सु) —d) दे3 सूक्ष्मात्मक, दे11 घृतात्मक (→भूतात्मक)

१६ ब3 cd O दे9 O (द्र ६ पा वि) —a) दे11 हरि (→हरि); न1 गुहा° (→महा°) —c) ब1 ॰ मञ्ज°, दे3 अज°, दे11 मुण्ड° (→मुञ्ज°) दे7 हृषी° (→हृषी°) —d) ना1 कारा का1 सेनानाथ, दे7 सर्वनाश (→सर्वनाथ)

१७ ब3 दे4 O; दे9 ab O (द्र ६ पा वि) —a) ब1 ॰ स्थूल सूक्ष्म, दे5 सूक्ष्म स्थूले (→सूक्ष्म स्थूल) ब॰ महासूक्ष्म (→महास्थूल) —b) ब1 ॰ दे3 भयकर (→शुभकर) —c) कारा का1 ब॰ दे3 °वासो (→°वास)

१८ —b) दे1 पद्मेश (ल)य (→पद्मेशय); ब3 जलाशय, दे1 4 10 दलेशय (→जलेशय) —c) कारा °कतस्ते, का1 °कर्तश्च, का॰ °कर्मश्च, ब1.॰ °कर्तार, ब3 °कर्तांच, दे3 °कर्ताह, दे7 न1 °कर्ता त्व (→°कर्ता च) —d दे9 न1 त्व तु (न1 °च) (→१८); ना1 दे5 न1 °प्रिय (→°प्रिय)

१९ दे10 d O —a) कारा °स्तेभ्या, ब॰ 3 दे3 °स्तेस्तु (→°स्तुभ्य) —b) ब1 3 दे3 शाङ्गध्वज, दे1 शरीरध्वज, दे1 10 धीरध्वज दे5 सारध्वज, दे9 धीरध्वज दे11 सीतध्वज (→सीरध्वज); ब3 ●●●●, न1 नमोस्तुते (→जनार्दन) —c) ब1 3 दे3 °स्तुभ्यं (→°स्तेस्तु) —d) दे11 नमस्त(स्तु) (→नमस्ते), दे1 ब्रह्मशीर्षाय ते नम

१९ श्लोकान्तरं दे1 अधिकम्—
348 ● वामनाय नमस्तेस्तु ब्रह्मशीर्षाय तु नम ।

१९ श्लोकात्पर दे अधिकम्—
१ वामनाय नमस्तेस्तु नमस्ते मधुसूदन ।

२० दे1 4 ab O दे10 a O —a) ब1.3 ते सहस्र° दे3 ऋतुसहस्र° (→सहस्र°) दे7-11 वामनाय नमस्तेस्तु —b) ब1-3 दे5 10 11 ते, दे3 वै (→ते) —d) ब॰ सोमसूर्यात्मने नम, दे10 सोमसूर्यायतेक्षण

२० श्लोकस्य ab, cd मध्ये दे9 अधिकम्—
349 ● नमस्ते सर्वशिरसे महाशीर्षाय ते नम ।
२० श्लोकस्य ab, cd मध्ये न1 अधिकम्—
350 ● नमश्चाथर्वशिरसे महाशीर्षाय ते नम ।

२१ ब1 २१c 'नमस्ते इत्यारभ्य २२d 'नम' यावन्नास्ति (द्र स) दे1 3 cd O; दे7 ab O; न1 ab, d O —a) ना1 कारा का1 ॰ नमस्तेयर्व°, दे7 नमश्चोयव° (→नमश्चार्थर्व°); ब1 °शिवाय (→°शिरसे) दे10 नमश्चाथर्वशिरसे —b) दे1 ब्रह्म° (→महा°); ब1 3 दे4 10 ते (→ते); दे3 महाशीर्षनमो नम

२२ ब1 O (द्र २१ पा वि); न1 a O —a) दे9 सहस्र श्रुति गीताय —b) ब॰ °मुच्य च दे1 °मन्यते, दे11 °भागवे (→°मन्यवे) दे7 सहस्रभुजनाशिक —d) दे3 9 न1 °पुष्पाय (→°रूपाय) ब॰ 3 दे1 10.11 ते (→ते)

२३ —a) ना1 कारा का1 2 विश्र° (→विश्व°) —b) ब॰ त्वत (→त्वत्तो)

२४ —a) दे7 न्यग्रोधस्य (→न्यग्रोधस्त्व); का1 °स्थ,+ °शाख (→°शाख) —b) ना1 कारा का1 ॰ दे1 4.5 10 त्वं (दे5 °स्त्व) मूल (क1 °ल) कुसुमार्चित (कारा °त, दे1 10 °त), दे7 त्वं मूलं कुसुमार्चिता, दे9 न1 त्वमूलकुसुमार्चित —c) कारा दे7 11 स्कन्ध (दे3 °न्ध) (→स्कन्ध); का॰ पत्राङ्कुर लता° + पत्रान्तरलता°, न1 पत्राङ्कुरतल° (→पत्राङ्कुरलता°) —d) दे7 पत्रांश नमोस्तु ते न1 चांश पाश्च नमोस्तु ते

मूलं ते ब्राह्मणा ब्रह्मन् स्कन्धस्ते क्षत्रियाः प्रभो ।
वैश्याः शाखा दलं शूद्रा वनस्पते नमोऽस्तु ते ॥ २५
ब्राह्मणाः साग्नयो वक्त्राः दोर्दण्डाः सायुधा नृपाः ।
पार्श्वाद् विशश्चोरुयुगाज्जाताः शूद्राश्च पादतः ॥ २६
नेत्राद् भानुरभूत् तुभ्यं पद्भ्यां भूः श्रोत्रयोर्दिशः ।
नाभ्या ह्यभूदन्तरिक्षं शशाङ्को मनसस्तव ॥ २७
प्राणाद् वायुः समभवत् कामाद् ब्रह्मा पितामहः ।
क्रोधात् त्रिनयनो रुद्रः शीर्ष्णो द्यौः समवर्तत ॥ २८
इन्द्राग्नी वदनात् तुभ्य पशवो मलसंभवाः ।
ओषध्यो रोमसंभूता विराजस्त्वं नमोऽस्तु ते ॥ २९
पुष्पहास नमस्तेऽस्तु महाहास नमोऽस्तु ते ।
ॐकारस्त्वं वषट्कारो वौषट् त्वं च स्वधा सुधा ॥ ३०
स्वाहाकार नमस्तुभ्यं हन्तकार नमोऽस्तु ते ।
सर्वाकार निराकार वेदाकार नमोऽस्तु ते ॥ ३१
त्वं हि वेदमयो देवः सर्वदेवमयस्तथा ।
सर्वतीर्थमयश्चैव सर्वयज्ञमयस्तथा ॥ ३२
नमस्ते यज्ञपुरुष यज्ञभागभुजे नमः ।
नमः सहस्रधाराय शतधाराय ते नमः ॥ ३३ वं ८७

२५ –a) व1 मूल (→मूल) दे4 ब्राह्मग (ब्राह्मगा); ब1 3 दे1 3 5 10 स्कन्ध (दे3 °न्द), दे11 चैव, मुद्रे स्कन्धा (→ब्रह्मन्) –b) शा1 का1 2 स्कन्ध, कारा स्कन्द, न1 स्कन्धा (→स्कन्ध); कारा विभो (→प्रभो), ब1 3 दे1 3 5 10 क्षत्रिया भवत प्रभो –c) ब1 3 दे1 3 5 10 11 शाखास्त्वच, दे3 शाखा वृत, न1 शाखा पत्र (→शाखान्ल) शा1 का2 शूद्रो, न1 शूद्र (→शूद्रा). –d) शा1 ब2 दे9 10 न1 वनस्पति, कारा का1 वानस्पत्य, दे1 4, वनस्पत्त, दे7 वनस्यते (°स्पते ?) (→वनस्पते), दे3 ते नमोस्तु वनस्पते

२६ –a) दे9 ब्राह्मगं (→ब्राह्मगा) ब2 दे3 साग्नयो, दे1 5 सामया (दे1 °यो) (→साग्नयो) दे3 रद्दंन् (?) मुद्रे वक्त्रात् (→वक्त्रा) दे10 ब्राह्मगासागगावक्त्रात् –b) शा1 कारा का1 ब1 3 दे9 10 दोदण्डात् (→दोर्दण्डा) दे9 साधनापरा (→सायुधा नृपा) दे3 भपठास्वायुधा नृपा मुद्रे सायुधा बाहुतोनृपा –c) दे7 पश्चाद्वश्चोरु युगात् दे9 विश शस्वोरुयुगला, दे11 वैश्या जानुयुगाज्जाता –d) शा1 का2 शूद्रा (का2 °द्रा) स्य, कारा शूद्रास्तु (→शूद्राश्च) दे1 पारज (→पान्त) दे4 शूद्रा जाताश्च पादत, दे9 जातशूद्राश्च पादत

२७ –a) ब3 त्वत्त (→तुभ्य) –b) व1 3 भू श्रोत्रियो (ब3 °या) दिश, दे7 भूसात्रयोन्शि दे9 भो श्रोत्रयादिश, न1 भूस्रोतसो दिश (→भू श्रोत्रयादिश) –c) शा1 का1 2 दे3 5 9 11 न1 नाभ्याम्°, ब1 3 नाश्या° (→नाभ्या°) शा1 कारा का1 2 दे5 9 11 न1 अभूत्, ब1 3 दे3 चाभूत (→ह्यभूत)

२८ –a) दे9 काम, दे11 वायु (→ वायु) ब2 अभवन् (→अभवत्) –b) दे1 कामा (तु) (→कामाद्); दे9 न1 ब्रह्म (→ब्रह्मा) –c) ब2.3 दे9 त्रिणयनो (→त्रिनयनो) –d) का2 दे5 11 शीर्षो (दे11 °र्षा) द्यो, ब1 श्रोत्राद् द्यं (→शीर्ष्णो द्यौ)

२९ –a) न1 इन्द्राय (→ इन्द्राग्नी), दे1 तुल्यं, दे3 जातौ (→तुभ्य) –b) शा1 दे1 पश्यवोम (दे1 °न) ल, ब1 2 दे3 पशवो वल°, दे4 पशवोनल° (→पशवो मल°); दे11 पश्यमोवल सत्तवा (?) –c) दे3 उपगो (→ओषध्यो) दे9 मनसोद्भूता, न1 मेदसम्भूता (→रोमसम्भूता) –d) शा1 ब1 3 दे1 3 5 10 11 विरजास्त्व (ब3 °त्म) (→विराजस्त्व); ब1 नमो नम (→नमोऽस्तु ते)

३० कारा का2 दे9 cd ○; ब3 ३०a–३१b ○ (द्र स) –b) का2 त्व हि वेदमयो देव, न1 महासन नमोस्तुते –d) ब1 ? दे4 सुधास्वधा, दे3 स्वधास्वधा (→स्वधा सुधा), शा1 वोषदो षटषट स्वधा, कारा वोषड्श्चोषद्वषटस्वधा, का1 वौषट श्च षट षट स्वधा, न1 यौ षड वौषड वषट् स्वधा

३१ कारा दे5 cd ○, (द्र स) का2 ○, ब3 ab ○ (द्र ३० पा वि) दे3 ab ○ –b) ब1 भन्तकार (→हन्तकार) –c) ब1 2 दे3 वेगाकार, दे11 देवाकार, न1 विश्वाकार (→वेदाकार)

३२ का2 ab ○; दे9 cd ○ –a) दे7 11 देव° (→वेद°) –b) ब1 दे7 वेद° (→देव°)) –d) ब1 दे3 रस ब2 3 नभ, दे7 मन (→तथा)

३३ दे3 ab ○ –b) ब1 3 महाभाग° (→यज्ञभाग°); ब3 नमोस्तुते(→ –भुजे नम), दे9 यज्ञभागायजे(?) नम –d) दे3 नमोनम (→ते नम)

३३ श्लोकस्य ab, cd मध्ये दे5 अधिकम्—
351 * ब्रह्मोणाप नमस्तुभ्य, ब्रह्मादे ब्रह्मरूपधृक् । (= ३५ ab)

८७.३४ भूर्भुवःस्वःस्वरूपाय गोदायामृतदायिने ।
सुवर्णब्रह्मदात्रे च सर्वदात्रे च ते नमः ॥ ३४
ब्रह्मेशाय नमस्तुभ्यं ब्रह्मादे ब्रह्मरूपधृक् ।
परब्रह्म नमस्तेऽस्तु शब्दब्रह्म नमोऽस्तु ते ॥ ३५
विद्यास्त्वं वेद्यरूपस्त्वं वेदनीयस्त्वमेव च ।
बुद्धिस्त्वमपि बोध्यश्च बोधस्त्वं च नमोऽस्तु ते ॥ ३६
होता होमश्च हव्यं च हूयमानश्च हव्यवाट् ।
पाता पोता च पूतश्च पावनीयश्च ॐ नमः ॥ ३७
हन्ता च हन्यमानश्च ह्रियमाणस्त्वमेव च ।
हर्ता नेता च नीतिश्च पूज्योऽग्र्यो विश्वधार्यसि ॥ ३८
स्रुक्स्रुवौ परधामासि कपालोलूखलोऽरणिः ।
यज्ञपात्रारणेयस्त्वमेकधा बहुधा त्रिधा ॥ ३९
यज्ञस्त्वं यजमानस्त्वमीड्यस्त्वमसि याजकः ।
ज्ञाता ज्ञेयस्तथा ज्ञानं ध्येयो ध्याताऽसि चेश्वर ॥ ४०
ध्यानयोगश्च योगी च गतिर्मोक्षो धृतिः सुखम् ।
योगाङ्गानि त्वमीशानः सर्वगस्त्वं नमोऽस्तु ते ॥ ४१
ब्रह्मा होता तथोद्गाता सामयूपोऽथ दक्षिणा ।
दीक्षा त्वं त्वं पुरोडाशस्त्वं पशुः पशुवाह्यसि ॥ ४२

---

३४ दे$_9$. ३४ c–४१ d ○. –b) दे$_7$ गोविन्दाय मृदायिने, दे$_9$ सर्वत्रत्रे नमोस्तुते, न$_1$ गोपायामृत धारिणे. –c) का$_2$ स्वर्वर्ग°, ब$_1$ स्वर्लक्ष° (→सुवर्ण°); शा$_1$ दे$_7$ °पा (शा$_1$ °धा) त्रे (→°दात्रे); कारा. वे (→च); न$_1$ अपवर्गब्रह्मदात्रे. –d) शा$_1$ का$_1$ ब$_1$ दे$_4$°धात्रे (→°दात्रे); कारा. दे$_3$ नमोनम (→च ते नमः); दे$_7$ न$_1$ सर्वदातरि ॐ (न$_1$ ते) नम.

३५. दे$_9$. ⊙ (द्र. ३४ पा. वि.). –a) शा$_1$ ब्रह्मश ● (→ब्रह्मेशाय). –b) शा$_1$ का$_2$ दे$_{11}$ ब्रह्मादि ब्रह्मरूपधृक् (का$_2$ °धृत्), ब$_{1-3}$ दे$_{3-4}$ $_7$ ब्रह्मणे ब्रह्मरूपधृक्, दे$_1$ ब्रह्मवेदस्वरूपधृक्. –c) का$_1$ ९ ब$_2$ 3 दे$_1$ 2-5.7-10-11 पर (→पर-); कारा. °ब्रह्मन् (→°ब्रह्म).

३६. दे$_9$. ○ (द्र. ३४ पा. वि.), दे$_{11}$. cd ○. –a) का$_2$ ब$_1$ 3 दे$_{3.7}$ न$_1$ विद्यास्त्वं, दे$_5$ विद्यास्त्वा (→विद्यास्त्वं); का$_3$ दे$_{4-7}$ वेदरूप, दे$_{11}$ वेद्य ● ९, न$_1$ त्रिरूप (→वेद्यरूप) –b) ब$_1$ 3 दे$_3$ 7 न$_1$ वन्दनीय (→वेदनीय); दे$_4$ नमोस्तु ते, दे$_{11}$ व ॐ नम (→त्वमेव च). –c) कारा. दे$_{7.10}$ असि (→अपि); कारा बोध्यस्त्व, दे$_7$ 10 बोध्यस्तु, न$_1$ वोधाश्च (→बोध्यश्च). –d) शा$_1$ बोद्धस्त्व, कारा. बोधश्च, का$_2$ ब$_1$ 3 दे$_{10}$ बाद्धा त्व, ब$_2$ दे$_3$ बोध्य (ब$_2$ °घ्य) त्वं, दे$_{1.4}$ बोधत्व, दे$_5$ बोद्धारत्व, न$_1$ बोधात्व (→बोधस्त्वं); कारा त्व (→च)

३७. दे$_3$ ○; (द्र ३४ पा वि); दे$_{11}$ ○. –a) ब$_1$ ९ दे$_3$ होम च, दे$_7$ होतश्च, न$_1$ हव्य च (→होमश्च), न$_1$ होम (→हव्य). –b) ब$_1$ 2 हूयमान (→हूयमान); न$_1$ हव्यवान् (→हव्यवाट्), कारा. दे$_1$ पाता पोता (कारा. °त) श्च, दे$_{10}$ पाता पाता च, (→पाता पोता च). न$_1$ पावा पूता च पोता च. –d) दे$_{10}$ न$_1$ °नीयाय (→°नीयश्च), कारा का$_1$ 2 न$_1$ ते (→ॐ).

३८. दे$_3$ ○ (द्र. ३४ पा वि). –a) का$_2$ हता च, दे$_4$ हन्ताश्च, दे$_5$ 11 हता च (→हन्ता च); का$_2$ ब$_1$ 2 दे$_4$ हन्यमान (ब$_2$ °ना) (→हन्यमान·), दे$_7$ होतावयश्च पानाश्च. –b) का$_2$ ब$_{1-3}$ दे$_3$ क्रियमाग, दे$_7$ हूयमान (→ह्रियमाण·). –c) शा$_1$ का$_1$ दे$_7$ हन्ता, दे$_1$ कर्त्ता (→हर्त्ता); ब$_1$ नेत्रा च, ब$_2$ नेताश्च (→नेता च). –d) ब$_{1.2}$ दे$_4$ न$_1$ पूज्योग्रो (ब$_2$ °ग्रे) (→पूज्योऽग्र्यो); ब$_1$ 3 दे$_7$ °धामसि (ब$_3$ दे$_7$ च), दे$_3$°धार्यपि, दे$_{5.10.11}$ °धार्यसे (→°धार्यसि).

३९. दे$_9$. ○ (द्र. ३४ पा. वि.). –a) दे$_1$ स्रुक्स्रुवौ (→स्रुक्स्रुवौ); ब$_{1-3}$ दे$_3$ विश्व° (→पर°); दे$_{1.4}$ 5.10 °धामा च (→°धामासि), दे$_7$ स्रुव स्रुवौ परधामासि, दे$_{11}$ शुकं शुचौ च परं धाम. –b) दे$_1$ 5 खले (दे$_5$ °लो) लो दूख (दे$_5$ °खु) लोरणि, दे$_{4-10}$ चखा (दे$_4$ °पा) लो दूखलोरणि, दे$_7$ कलापोलूखलो रवि, दे$_{11}$ चखालोश्रुखना रणि –c) शा$_1$ का$_{1.2}$ °रणिय, न$_1$ °रणाय (→°रणेय) –d) ब$_3$ द्विधा (→त्रिधा).

४० दे$_9$. ○ (द्र. ३४ पा वि.) –a) दे$_7$ यज्ञस्त्वय च मानस्त्व. –b) शा$_1$ कारा. दे$_{10}$ ईज्यस्त्वं (→ईड्यस्त्व), शा$_1$ का$_2$ असि योजक, दे$_1$ असियाजक, दे$_7$ असि पायक (→असि याजक). दे$_{11}$ सोयस्त्वमतियाजक. –d) ब$_{1.2}$ ध्याता (ब$_2$ °तं) ध्येयासि, ब$_3$ ध्याता ध्यानासि, दे$_1$ ● ● ध्येया ●, दे$_3$ ध्यायं ध्येयासि, दे$_7$ ध्येया ध्यानासि, न$_1$ ध्येया ज्ञातासि (→ध्येयो ध्यातासि); कारा. का$_{1.2}$ दे$_3$ न$_1$ चेश्वर (→चेश्वर), दे$_{11}$ ● ता धातासि चेश्वरा.

४१. दे$_9$. ○ (द्र. ३४ पा वि.). –a) दे$_1$ ध्यान, दे$_{11}$ ज्ञान- (→ध्यान-). दे$_3$ -योगश्च (→-योगश्च). –b) दे$_{11}$ मात्तधृत (→मोक्षो धृति) –c) शा$_1$ कारा का$_1$ 2 त्वमासीन (→त्वमीशान), न$_1$ यागी नित्यं त्वमीशान.

४२. –a) दे$_7$ महा° (→ब्रह्मा°), ब$_1$ 2 तथा ज्ञान, न$_1$ पाद्गाता (→तयोद्गाता). –b) शा$_1$ कारा का$_1$ 2 सोमसाम्य (का$_2$ °या) च, ब$_{1.2}$ दे$_3$ साय (ब$_2$ °मं) यूपाय, ब$_3$ दे$_{10}$ साम-यूपोय, दे$_1$ सामभूताय, दे$_5$ सामसारोय, दे$_7$ स्वामा यूपोय, दे$_{11}$ सोमगोपाय (?), न$_1$ मासो यूपोऽ- (→सामयूपाय); का$_{1.2}$ ब$_1$ दे$_3$ दक्षिणा (का$_2$ ब$_1$ °ण), न$_1$ दक्षिणाम् (→दक्षिणा). –c) दे$_1$

गुह्यो धाता च परमः शिवो नारायणस्तथा।
महाजनो निरयनः सहस्रार्केन्दुरूपवान् ॥ ४३
द्वादशारोऽथ षण्णाभिस्त्रिव्यूहो द्वियुगस्तथा।
कालचक्रो भवानीशो नमस्ते पुरुषोत्तमः ॥ ४४
पराक्रमो विक्रमस्त्वं हयग्रीवो हरीश्वरः।
नरेश्वरोऽथ ब्रह्मेशः सूर्येशस्त्वं नमोऽस्तु ते ॥ ४५
अश्ववक्त्रो महामेधाः शंभुः शक्रः प्रभञ्जनः।
मित्रावरुणमूर्तिस्त्वममूर्तिरनघः परः ॥ ४६
प्राग्वंशकायो भूतादिर्महाभूतोऽच्युतो द्विजः।
त्वमूर्ध्वकर्ता ऊर्ध्वश्च ऊर्ध्वरेता नमोऽस्तु ते ॥ ४७

महापातकहा त्वं च उपपातकहा तथा।
अनीशः सर्वपापेभ्यस्त्वामहं शरणं गतः ॥ ४८
इत्येतत् परमं स्तोत्रं सर्वपापप्रमोचनम्।
महेश्वरेण कथितं वाराणस्यां पुरा मुने ॥ ४९
केशवस्याग्रतो गत्वा स्नात्वा तीर्थे सितोदके।
उपशान्तस्तथा जातो रुद्रः पापवशात् ततः ॥ ५०

एतत् पवित्रं त्रिपुरघ्नभाषितं
पठन् नरो विष्णुपरो महर्षे।
विमुक्तपापो ह्युपशान्तमूर्तिः
संपूज्यते देववरैः प्रसिद्धैः ॥ ५१ हं. ८७.

इति श्रीवामनपुराणे षष्टितमोऽध्याय ॥६०॥

दीसा च, दे5 दीप्तास्त्वं, दे10 दप्ता स्व (→दीप्तात्वं) –d) का1 ब1-3 दे. 9 10 प तु- (→पशु), ब1 2 दे1 4 पशुपो (दे1 °पा) ह्यसि, दे3 पशुपाहर्सि, दे9 पशुपोऽप्यसि, दे10 पशुहा ह्यसि (→पशुपाह्यसि)

४३. –a) दे4 तु (→च); ब1 3 दे3-9 न1 गुह्यो धाता-परमसि –b) ब1 3 दे3-9 न1 नरो, दे9 न1 नमो (→शिवो) –c) कारा महाजनो, ब1 2 महामाया, दे 10 महाजन, दे7 महाधनो, न1 महायशो (→महाजनो); शा1 कारा का1 2 दे7 निरञ्जन, दे9 निरयन (→निरयन) –d) ब1 2 सहस्रागरव°, दे7 सहस्रा एन्द° (?) (→सहस्रार्केन्दु°)

४४ ब1 2 ○; ब3 दे3 cd ○ –a) दे7 द्वादशारोप्य, दे11 द्वादशारगु (→द्वादशारोऽथ); दे1 षमाभि, दे3 षडानि (?), दे7 दशा हि (?) (→षण्णाभि) –b) दे3 द्विपुक, दे3,10 न1 द्विगुण (→द्वियुग) –c) दे1 10 °चक्रो (→°चक्रो) न1 भवानीशं (→भवानीशो) –d) दे5 नमोस्तु (→नमस्ते)

४५. ब1 3 दे3. ○ –b) दे10 हरीश्वर (→हरीश्वरः) –c) दे 9 न1 नरीश्वरोथ (→नरेश्वरोऽथ); दे7 ब्रह्मे, दे ब्रह्मणं (→ब्रह्मेशः) –d) दे7 सूर्येसि, दे9 न1 सूर्येशु (→सूर्येशः)

४६ –a) ब3 वाजवक्त्रो, दे1,3-4 - 10 मध च (दे1 °ध्र) क्रो, न1 व्यामेधा (→अश्ववक्त्रो); कारा का1 महामेध, दे1 4.9 10-11 महामेधो, दे7 मनाद्येता (→महामेधा) –b) दे7 शंभु- (→शंभु); शा1 कारा का1 2 दे4.5.- न1 शुक, दे7 वक्र:, दे11 चक्र (→शक्र), दे3 प्रभंजना (→प्रभंजन) –c) न1 मित्रा° (→मित्रा°) –d) ब1 3 दे1-7 शुभ, न1 शिव (→परः).

४७ –a) दे11 °कामो, न1 °कोय (→°कायो) –b) दे1, 4 5 द्विज (→द्विज); न1 महाभूताच्युतेरत –c) कारा त्वमूर्ध्वकर्त्तोर्ध्वचर, शा1 त्वमूर्ध्वकर्त्ता ऊर्ध्वं च, ब1 दे4 5 त्वमूर्ध्वकर्त्तोर्ध्वचर, ब2 3 दे1 त्वमूर्ध्वरेतोर्ध्वचर, दे7 त्वमूर्ध्वं ●●●●, दे7 त्वमूर्ध्वमूर्ध्वोर्ध्वभानु, दे10 त्वमूर्द्ध कर्तार्द्ध धर, न1 त्वमूर्द्ध मता उप्वाध –d) दे10 मर्द्ध° (→ऊर्ध्व°)

४८ –a) ब3 दे3 मुनीश, दे7 आसीन (→अनीश), ब1 3 दे3 °पापभ्य (→°पापेभ्य)

४९ ब3. ○ –b) दे7 °प्रणाशनं (→°प्रमोचनम्) –d) ब3 महात्मने, दे7 महामुने (→पुरा मुने).

५० ब3. ○ –a) दे7 स्थित्वा, दे10 दे:ई (→गत्वा); दे7 केशवस्यप्रभाटिक्ये –b) दे7 स्नुत्वा (→स्नात्वा), ब1-2 दे3 तीर्थेशितोदके, शुभे तीर्थोदके शुभे (→तीर्थे सितोदके) –c) दे10 उपशान्त (→उपशान्त), शा1 कारा का2 ब1 2 दे1 3-4 10.11 तदा, दे7 ततो, न1 सदा (→तथा) –d) शा1 का1 ब1 2 दे1 3 10.11 रुद्र पापोपशान्तिदम् (शा1 का1 दे1 5 °द, दे10 °दि); कारा का2 रुद्र पापप्रशान्तिद, दे9 रुद्र पापविदारक

५१ b) कारा का1 दे7,10 पठेन्नरो (→पठन्नरो); ब1 3 दे1 3-5.9 °पुरे (→°परो) –c) न1 (प)विमुक्त° (→विमुक्त°); शा1 ब1 3 दे3-5 [-प]पि, दे7 विदे, 11 [-प]पि (→हि) –d) कारा ब2-3 दे3 7 न सिद्धैः, दे5 न1 प्रसिद्ध (न1 °द्धि) (→प्रसिद्धैः)

पुष्पिका – ब3. ○, शा1 का1 2 दे1 4 5 इति श्रीवामनपुराणे वामनप्रादुर्भावे प्रह्लादतीर्थयात्रायाम्, कारा दे11 इति वामनपुराणे

# ६१

पुलस्त्य उवाच ।ꕥ

८८ १ द्वितीयं पापशमनं स्तवं वक्ष्यामि ते मुने ।
येन सम्यगधीतेन पापं नाशं तु गच्छति ॥ १
मत्स्यं नमस्ये देवेशं कूर्मं गोविन्दमेव च ।
हयशीर्षं नमस्येऽहं भवं विष्णुं त्रिविक्रमम् ॥ २
नमस्ये माधवेशानौ हृषीकेशकुमारिणौ ।
नारायणं नमस्येऽहं नमस्ये गरुडासनम् ॥ ३
ऊर्ध्वकेशं नृसिंहं च रूपधारं कुरुध्वजम् ।
कामपालमखण्डं च नमस्ये ब्राह्मणप्रियम् ॥ ४
अजितं विश्वकर्माणं पुण्डरीकं द्विजप्रियम् ।
हंसं शम्भुं नमस्ये च ब्रह्माणं सप्रजापतिम् ॥ ५
नमस्ये शूलबाहुं च देवं चक्रधरं तथा ।
शिवं विष्णुं सुवर्णाक्षं गोपतिं पीतवाससम् ॥ ६
नमस्ये च गदापाणिं नमस्ये च कुशेशयम् ।
अर्धनारीश्वरं देवं नमस्ये पापनाशनम् ॥ ७
गोपालं च सवैकुण्ठं नमस्ये चापराजितम् ।
नमस्ये विश्वरूपं च सौगन्धिं सर्वदा शिवम् ॥ ८
पाञ्चालिकं हयग्रीवं स्वयम्भुवममरेश्वरम् ।

---

प्रह्लादतीर्थयात्रायाम्, ब1 2 दे3 इति श्री (ब1 2 [श्री]) वामनपुराणे वामनप्रादुर्भावे, दे7 इति श्रीवामनपुराणे, दे9 श्रीवामनपुराणे प्रह्लाद तीर्थयात्रायाम्, दे10 इति श्रीवामनपुराणे वामनमाहात्म्ये प्रह्लाद तीर्थयात्रायाम्, मुवे इति श्री वामनपुराणे पुलस्त्यनारदसंवादे वामनप्रादुर्भावे अध्यायनाम—दे9 ○, शा1 का1 2 ब1 ० दे1 4 5 7 पापप्रशमन(दे1 7 °न)स्तव, कारा दे3 पापप्रशमनस्तवो नाम, ब3 इति पाप प्रशमनस्तव, दे10 पापप्रशमनस्तोत्र सम्पूर्ण, दे11 पापप्रणाशन स्तोत्र न1 पापप्रणाशनस्तवो नाम अध्यायसंख्या—शा1 का1 ० ब1 3 दे1 4 5 7 11 ○, कारा शतोत्तरस्तृतीयोध्याय, दे3 एकोन षष्ठितमोध्याय, दे9 अष्टपञ्चाशोध्यायाः, दे10 ॥८७॥, न1 एकोन षष्ठितमाध्याय, मुवे सप्ताशीतितमोऽध्याय

अध्यायनामानन्तर का2 अधिकम्—॥समाप्त ।

६१

[दे2 ते1 प्रथमध्यायो नास्ति (द्र अ० ५८श्लोक ३३पा वि)]

ꕥ शा1 दे7 पुनस्त्य, दे1 पुलस्त्य उ दे9 ○, न1 श्री पुलस्त्य

१ –a) ब1 2 °नाशनं दे1 10 (प्र)°शमन (→°शमनं) –b) दे11 वम्गामि (→वक्ष्यामि); दे5 11 ते पुन, न1 नाप्न (→ते मुने) –d) शा1 का 1 ० दे1 5 9 11 ते1 न1 पापनाशत ब1 पापनाशस्तु, ब3 पापं नश्यन्तु (→पापं नाशं तु)

२ –a) दे7 मर्हं (→मत्स्यं); ब3 नृपात्म दे3 नमस्यं (→नमस्ये); दे11 देवेन (→देवेशं) –b) दे3 देवेशं (→गोविन्द°) –c) दे1 हयग्रीवं, दे7 हयग्रीवं (→हयशीर्षं) –d) न1 विष्णुं त्रिविक्रम तथा

३ –a) दे11 नमस्ते (→नमस्ये) –c) दे7 नारायण (→नारायण) –d) का1 ब2 3 दे1 3 नमस्ते दे4 तथैव (→नमस्ये); दे3 7 गरुडाशनं, दे11 गरुडध्वज (→गरुडासनम्)

४ –a) ब1 3 दे3 7 न1 ऊर्ध्वेशं न (दे3-7 ना) रसिंह च –b) शा1 का1 2 दे1 3 5 10 रूपधारि॰ (दे3 °र), कारा भूम्याधारं, ब1 2 रूपाधार ब3 दे7 न1 रूपधारि दे11 रूपवारि (→रूपधार) c) ब1 कामधानं (→कामपाल) –d) दे11 ब्रह्मण (→ब्राह्मण)

५ ब1 2 ab ○ –b) कारा पौण्डरीक (→पुण्डरीकं) –c) ब1 दे1 10 हंसशम्भु, दे3 हरिं शम्भु (→हंसं शम्भुं); कारा का2 नमस्येहं, दे4 नमस्ये तु (→नमस्ये च) –d) ब1 स्व°, ब० सु° (→स°)

६ –b) शा1 दे3 चक्रधरस्, न1 चक्रग° (→चक्रधरं) –c) ब1 3 दे4 5 10-11 सुवर्णाक्षं (दे4 11 °क्ष) न1 सुधारक्षं (→सुवर्णाक्ष)

७ –a) दे4 नमस्येहं न1 नमस्ये स (→नमस्ये च) –b) कारा नमस्येहं, दे4 तथैव च, दे5 वामस्येन न1 नमस्येन (→नमस्ये च)

८ –a) शा1 कारा का1 2 गोपालं चैव वैकुण्ठ –b) शा1 का1 ० स्वापराजित, कारा स्वपराजित, ब1 3 चापधारिणं दे3 चापराजितं, दे5 वापराजितं (→चापराजितम्) –c) शा1 कारा का1 2 ब1-3 दे3 7 विष्णु° (→विश्व°) –d) कारा सुगन्धि दे सौगन्धं न1 सौगन्ध्यं (→सौगन्धि), ब1 ० ज्येष्ठेनं मध्यमं तथा, ब3 चानिनं मध्यम तथा, दे4 सौगन्धं च सनातिवे

९ ब1-3 दे3 ○ –a) दे11 पांचानिके (→पांचालिक) –b) शा1 कारा का1 2 दे1 5-7 10-11 न1 स्वयंभुम् (→स्वयंभुवं),

शेषाहिभोगपर्य्यङ्कं कृत्वा सम्पूज्य केशवम् ।
कृत्वा पवित्रकञ्चैव सम्यक् सम्पूज्य च द्विजान् ॥
अनुज्ञा ब्राह्मणेभ्यश्च द्वादश्यां प्रयत शुचि ।
लब्ध्वा पीताम्बरधर स्वस्तिनिद्रा समानयेत् ॥ [8]
त्रयोदश्यान्तत काम स्वपते शयने शुभे ।
कदम्बाना सुगन्धाना कुसुमै परिकल्पिते ॥
चतुर्दश्या तथा यक्षा स्वपन्ति सुखशीतले ।
सौवर्णपङ्कजकृते सुखास्तीर्णोपधानके ॥ [12]
पौर्णमास्यामुमानाथ स्वपते चर्म्मसंस्तरे ।
वैय्याघ्र स जटाभारं समुन्मथ्याशु चर्म्मणा ॥
ततो दिवाकरो राशिं सम्प्रयाति च कर्क्कटम् ।
ततोऽमराणा रजनी भवते दक्षिणायनम् ॥ [16]
ब्रह्मा प्रतिपदि तथा नीलोत्पलमये शुभे ।
तल्पे स्वपिति लोकाना दर्शयन् मार्गमुत्तमम् ॥
विश्वकर्मा द्वितीयाया तृतीयाया गिरे सुता ।
विनायकश्चतुर्थ्यान्तु पञ्चम्यामपि धर्म्मराट् ॥ [20]
षष्ठ्याञ्च स्कन्द स्वपिति सप्तम्या भगवान् रवि ।
कात्यायनी तथाऽष्टम्या नवम्यां कमलालया ॥
दशम्या भुजगेन्द्रास्तु स्वपन्ते वायुभोजना ।
एकादश्यान्तु कृष्णाया साध्या ब्रह्मन् स्वपन्ति च ॥ [24]
एव क्रमस्ते कथितो न भाद्रे स्वपते सुर. ।
स्वपत्सु तत्र देवेषु प्रावृट्काल समाययौ ॥

—कृ र. P 206। [स्मृ त (एका त) Part I P 111 and Part II P 111, कृत्यतत्त्वे P 436 व कि को P. 286, L 4, 5, 7, 8]

[—L 8) स्मृ त व कि कौ देव (→ स्वस्ति)]

[मनुना लब्धेत्यन्वय एकादशीसमये निद्रायनं परिकल्पयद् रात्रौ द्वादशीक्षणे निद्रति—स्मृ त]

धा म १७ ३०–५४ ab, ५६ cd ६४

नभस्ये मासि च तथा या स्यात्कृष्णाष्टमी शुभा ।
युक्ता मृगशिरेणैव सा तु कालाष्टमी मता ॥
तस्यां पुरैकलिङ्गेषु[1] तिथौ स्वपिति शङ्कर ।
वसन्ते सन्निपाने तु तत्र पूजाऽक्षया स्मृता ॥ [4]

स्नायीत विद्वान् विधिवद् गोमूत्रेण जलेन च ।
स्नात्वा सपूजयेत्पुष्पै कुटजस्य त्रिलोचनम् ॥
धूपैः केसरनिर्यासैर्नैवेद्य मधुसर्पिषा । (केसरो बकुल)
प्रीयता मे विरूपाक्षेत्युच्चार्य च दक्षिणाम् ॥ [8]
विप्राय दद्यान्नैवेद्य सहिरण्य द्विजोत्तम. ।
[2]तद्वदाश्वयुजे मासि सोपवासो जितेन्द्रिय ॥
नवम्या गोमयस्नान कुर्यात्पूजा च पङ्कजै ।
धूपयेत्सर्जनिर्यासैर्नैवेद्य मधुमोदकम् ॥ [12]
कृत्वोपवासमष्टम्या नवम्या स्नानमाचरेत् ।
प्रीयता मे निरूपाक्षो दक्षिणा च तिलै कृता ॥
कार्त्तिके पयसा स्नानं करवीरेण चार्चनम् ।
धूप [3]श्रीवासनिर्यासैर्नैवेद्य मधुपायसम् ॥ [16]
सनैवेद्य च रजत दातव्य दानमग्रजे[4] ।
प्रीयतां भगवान् स्थाणुरिति वाच्यमनन्तरम् ॥
कृत्वोपवासमष्टम्या नवम्या स्नानमाचरेत् ।
मासि मार्गशिरे स्नान [5]तत्रार्चा रुद्रना स्मृता ॥ [20]
धूपं श्रीवृक्षनिर्यासैर्नैवेद्य मधुपायसम् । (श्रीवृक्षो बिल्व)
नैवेद्य रक्तशाली च दक्षिणा परिकीर्तिता ॥
नमोस्तु प्रीयता शर्व इति वाच्य च पण्डितै ।
पौषे स्नान च हविषा पूजा स्यात्पारणेन तु ॥ [24]
(हविषा घृतेन)
धूपो मधूकनिर्यासैर्नैवेद्य मधुशष्कुली ।
समुक्ता दक्षिणा प्रोक्ता प्रीणनाय जगद्गुरो ॥
वाच्य नमस्ते देवेश त्र्यम्बकेति प्रकीर्तयेत् ।
माघे कुशोदकस्नान मृगमदेन चार्चनम् ॥ [28]
(मृगमदो लताकस्तूरी)
धूपो (प ?) कदम्बनिर्यासो नैवेद्य सतिलौदनम् ।
पय कुसुम्भ नैवेद्य सरक्तं प्रतिपादयेत् ॥
प्रीयता मे महादेव उमापतिरितीरयेत् ।
एवमेक समुद्दिष्ट षड्भिर्मासैस्तु पारणम् ॥ [32]
पारणान्ते त्रिणेत्रस्य स्नपनं कारयेत् क्रमात् ।
गोरोचनाचन्दनकुङ्कुमेन

देवं समालभ्य च पूजयेद्य ।
प्रीयस्व दीनोऽस्मि भवन्तमीशं [36]
शशाङ्कनाथ प्रणतोऽस्मि नित्यम् ॥
ततस्तु फाल्गुने मासि कृष्णाष्टम्यां यतव्रत' ।
उपवास समुद्दिष्ट कर्तव्यो द्विजसत्तम ॥
द्वितीयेऽह्नि तत स्नान पञ्चगव्येन कारयेत् । [40]
पूजयेत्कुन्दपुष्पैस्तु धूपन चन्दनेन तु ॥
नैवेद्य सघृतं दद्यात् ताम्रपात्रे गुडौदनम् ।
दक्षिणा च द्विजातिभ्यो नैवेद्यसहिता तथा ॥
वासोयुग प्रयच्छेच्च रुद्रमुच्चार्य नामत । [44]
चैत्र चोदुम्बरफले स्नानं मन्दारकाचनम् ॥
गुग्गुल महिषाख्य च घृताक्त धूपयेद् बुध ।
समोदक तथा सर्पि प्रीणन विनिवेदयेत् ॥
दक्षिणा चैव नैवेद्य मृगाजिनमुदाहरेत् । [48]
आद्ये श्रवणमन्ते चापीदमुच्चार्य नामत ॥
प्रीणने देवनाथस्य कुर्याच्छ्रद्धासमन्वित ।
वैशाखे स्नानमुद्दिष्ट सुगन्धिकुसुमाम्भसा ॥
पूजन शङ्करस्योक्तं व्रत नक्तादिभि प्रभो । [52]
धूप सूर्याख्यपुष्प च नैवेद्य सफल घृतम् ॥
( सूर्याख्यमर्कपुष्पम् )
नाम चप्तव्यमीशस्य कालघ्नेति विपश्चिता ।
जलकुम्भान् सनैवेद्यान् ब्राह्मणाय निवेदयेत् ॥

* * *

उपानद्युगल छत्रं दानं दद्याच्च भक्तित । [56]
नमस्ते भगनेत्रघ्न पुष्पदन्तविनाशन ॥
इदमुच्चारयेद् भक्त्या प्रीणनाय जगत्पते ।
आषाढे स्नानमुदित श्रीफलैरर्चन सदा ॥
धुत्तूरकस्य कुसुमैर्धूपार्थे सिह्लक तथा । [60]
नैवेद्य सफला पूपा दक्षिणा सघृतास्तथा ॥
नमस्ते दैत्यदर्पघ्न इदमुच्चारयेत्तत ।
श्रावणे मृगमदेन स्नानं कृ वार्चयेद्धरिम् ॥
श्रीवृक्षपत्रै सफलैर्धूप दद्यात्तथाऽगरुम् । [64]
नैवेद्य सघृत दद्याद्दधिपूर्णं समोदकम् ॥
दध्योदनं सकृसरं कृष्णधाना सशष्कुली ।
दक्षिणा वृषभ धेनुं दद्याच्च कपिला शुभाम् ॥
कनक रक्तवसन मदद्याद् ब्राह्मणाय च । [68]
गङ्गाधरेति विख्यात नाम शम्भोस्तु पण्डिते ॥
अमीभि षड्भिरपरैर्मासै पारणमुत्तमम् ।
एव सवत्सर पूर्णं सपूज्य वृषभध्वजम् ॥
अक्षयाल्लभते लोकान् माहेश्वरपरो नर. । [72]
इदमुक्तं मत पुण्य सर्वक्षेमकरं शुभम् ॥
स्वय चन्द्रेण देवर्षे तत्तथा न तदन्यथा ।

( इति वामनपुराणोक्त कालाष्टमीव्रतम् । )

—कृ क ( व्र का ) P 258 [ चतु चि ( व्र ख ) P 849 ]

[ चतु चि —L. ? ) °गिरश्च स्मृता —L 3 ) सर्वै° — L 4 ) वस रस° — L 5 ) तत्र स्नायीत विद्वान् हि —L 6 ) धुस्तूरस्य त्रि° —L 7 ) धूप —L 9 ) °जोत्तम —L 11 ) कृत्वा पू° —L 12 ) मधुमोत्कान् —L 14 ) °पाम स्मृता —L 16 ) °पायसै —L ?1 ) धूप श्रीवृक्षनिर्यास °पुमोन्व —L 22 ) रक्तनालिश्च —L 25 ) धूपोऽस्य मधुकनिर्यासो नै° —L 26 ) सामुद्र दक्षि° —L 27 ) °न्य नमोऽस्तु —L 30 ) पय कुम्भेन —L 36 ) भायस्व —L 37 ) नशाङ्कनाथ —L 39 ) °वास समुदित —L 41 ) स्तु धूपयेत —L 42 ) गुडोदनम —L 43 ) °ता मुने —L 44 ) ब्राह्मणेभ्य प्रन्त्तो च रुन्मभ्यच्य —L 48) उमाकान्ताय दापयेत् —L 49 ) नन्दीश्वर नमस्तेस्तु नारद —L 50 ) °नाथाय कुर्याच्च श्रद्धयान्वित —L 51 ) °नमुदित °कुकुमाम्भसा —L 52) भूतमञ्ज रभिर्विभो —L 53) पुष्पैस्तु —L 54) °मीशेति —L 55 ) ब्राह्मणेभ्यो नि° —L 56 ) भक्तित —L 57 ) भगवन्नत्र° —L 59) °नमुदितं —L 61) सघृता पूपा —L 62) °स्ते दक्षयज्ञघ्न —L 65 ) °धि पूर्णास्तु मोदकान् —L 66) कृशरक कटिधाना सशस्कुला —L 67) दक्षिणा श्वतवृषभ धेनु च —L 68) °णाय तु —L 69) °रेति वक्तव्य नाम शम्भोस्तु —L 67 ) षड्भिर दितैर्मासै —L 72 ) महेश्वरपरो नर —L 73 ) सर्वा क्षयकरं पर ( शुभम् ) —L 74 ) °य रुद्रेण ]

[ 1 एकलिङ्गानि वृषभगणपतिसहितानि पश्चिमाभिमुखानि प्रसिद्धानि ।

2 'तद्वदाश्वयुजे मासि सोपवास इत्यभिधानाद् पूर्वमासे प्युपवासो बोद्धव्य ।

3 श्रीवास सरलवृक्ष ।
4 अग्रजे ब्राह्मणे ।
5 अर्चा पूजा स्रजा दामोपुलाजा । —टिप्प. चतु चि ]

धाम १८ १–२४

## अखण्डद्वादशीव्रतम्

पुलस्त्य उवाच—
मासि चाश्वयुजे ब्रह्मन् यदा पद्माऽऽजगत्पते ।
नाभ्या निर्याति हि तथा देवस्यैतद्यथा भवेत् ॥
कन्दर्पस्य कराग्रेषु कदम्बश्चारुदर्शन ।
तेन तस्य परा प्रीति कदम्बेन विवर्धते ॥
यक्षाणामधिपस्यापि मणिभद्रस्य नारद ।
वटवृक्ष समभवत्तेन तस्य हि रतिस्तदा ॥
महेशस्यापि हृदये धुत्तूरविटप शुभ ।
संजातस्तेन शर्वस्य रतिकृत्तस्य चेतसः ॥
तथैव मध्यतो देहाज्जातो मरकत प्रभु ।
खदिर कटकी श्रीमान् भगवद्विश्वकर्मण ॥
गिरिजाया करतले कुन्दवृक्षस्तु जायते ।
गणाधिपस्य कुसुम राजते सिन्धुवारक ॥
यमस्य दक्षिणे पार्श्वे पलाशो दक्षिणोत्तरे ।
कृष्ण. कुसुलको रौद्राज्जात क्षोभकरोऽव्ययः ॥
स्कन्दस्य बन्धुजीवश्च रवेरश्वत्थ एव च ।
कात्यायन्या शमी जाता बिल्वो लक्ष्म्या करे करे॥
नागाना प्रभुतो ब्रह्मन् शरस्तम्बो व्यजायत ।
वासुके सुगुमे पुच्छे पृष्ठे दूर्वाऽसिता सिता ॥
साध्याना हृदये जातो वृक्षो हरितचन्दन ।
एव तेषु च सर्वेषु तेन तत्र रतिर्भवेत् ॥
तस्मिन् पुण्ये शुभे काले या शुक्लैकादशी भवेत् ।
तस्यां सम्यग्यजेद्विष्णु येन[1] खण्ड प्रपूर्यते ॥
पुष्पै पत्रै फलैर्वापि गन्धवर्णरसान्वितै ।
ओषधीभिश्च सर्वाभि यावत्स्यावरजङ्गमैः ॥
घृतं तिलान् व्रीहियवान् हिरण्यं कनकादि यत् ।
मणिमुक्ताप्रवालानि वस्त्राणि विविधानि च ॥
रसाश्च स्वादुकट्वम्लकषायलवणादयः ।
तिक्तानि च निवेद्यानि तान्यखण्डानि यानि हि ॥
तत्पूजार्थं प्रदातव्य केशवाय महात्मने ।
येन संवत्सर पूर्वमखण्डं जायते गृहे ॥
कृत्वोपवासं देवर्षे द्वितीयेन न संशय. ।
स्नानेन तेन स्नायीत येनाखण्डं हि वत्सरं ॥
सिद्धार्थकैस्तिलैर्वापि तेनैवोद्वर्तन शुभम् ।
हविषा पद्मनाभस्य स्नानमेव समाचरेत् ॥
होमे तदेव गदित दान शक्त्या द्विजोत्तम ।
पूजा च कुसुमै कार्या पादाद्यारभ्य केशवम् ॥
धूपयेद्विविधं धूप येन स्याद्वत्सरं परम् ।
हिरण्येन च वासोभि पूजयेच्च जगद्गुरुम् ॥
सरसद्रव्यचूष्याणि हविष्याणि निवेदयेत् ।
सपूज्य देवदेवेशं पद्मनाभं जगद्गुरुम् ॥
विज्ञाप्य यन्मुनिश्रेष्ठ मन्त्रेणानेन सुव्रत ।
नमोऽस्तु पद्महस्ताय पद्मगर्भाय वै नमः ॥
धर्मार्थकाममोक्षाणि अखण्डानि भवन्तु वै ।
विकासिपद्मपत्राक्ष तथाऽखण्डोऽसि सर्वत ॥
तेन सत्त्वेन धर्माद्यास्त्वखण्डा सन्तु केशव ।
एव संवत्सरे पूर्णे सोपवासो जितेन्द्रिय ॥
अखण्डं पारयेद् ब्रह्मन् व्रतं वै सर्ववस्तुषु ।
तस्मिंश्चीर्णे व्रते व्यक्तं परितुष्यति माधवः ॥
धर्मार्थकाममोक्षाद्यास्त्वखण्डया संभवन्ति च ।

—कृ क (व का ), P. 3441 [चतु चि , P. 1103 ]

[ L. 1 पूव चतु चि "शृणु राजन्महाभाग व्रतं चानुत्तमं शुभम्' ]

[ चतु चि —L 1 ) पद्मजनिधि°. L. 3–20 O. —L 21 ) रम्ये —L 23 ) गन्धवर्णसमन्वितै —L. 25) °वर्णि च —L 27 ) °लवणानि च —L. 31 ) °पवास • • °हनि सर्वत —L 33 ) °वर्तनं स्मृतं —L 35) गदितो दाने —L. 36 ) पूजयेद्यत्र कुसुमै पादादारभ्य —L. 37 ) °पवे द्विविधं —L 38 ) हिरण्यरत्न° —L. 40 ) तत संपूज्य देवेश —L. 41 ) विज्ञाप्ये° —L 42) पद्मनाभाय पद्मावह महाद्युते —L. 43 ) °शुभे —L 45) सर्वगच°. —L. 47) व्रते —L 48) धर्मकामो . —L. 49 ) त्वेष्वदा स° ]

[ 1 येन विष्णुप्रजनन खण्डमसम्पूर्णं धर्मादिभि परिपूर्णं भवत्येव । ]

2 प्रथमैकादन्या येन द्रव्येग यत् कर्म निष्पादित चेपाञ्नेका दशोषु तेनैव द्रव्येणान्यन्निष्पाद्यम् । —टिप्प चतु चि ]

वाम २३ २० ab

पुष्करेऽपि—

प्रतीची पुष्करे वेदिस्त्रिभि कुण्डैरलङ्कृता ।

(इत्युक्त वामनपुराणे)

—वी मि ( ती प्र ) P 466

वाम २३ ३३ ३८ ab

यावदेतन्मया कृष्ट धर्मक्षेत्र तदस्तु च ।

स्नाताना च मृताना च महापुण्यफल विदु ॥

उपवास च दान च स्नान जप्य च माधव ।

होमो यज्ञादिक चान्यच्छुभ वाप्यशुभ विभो ॥ [4]

त्वत्प्रसादाद्धृषीकेश शङ्खचक्रगदाधर ।

अक्षयं प्रवरक्षेत्रे भवत्वत्र महत्फलम् ॥

तथा त्व च सुरै सार्द्धं सम देवेन शूलिना ।

वसात्र पुण्डरीकाक्ष मन्नाम्ना चेदमुच्यते ॥ [8]

इत्येवमुक्तस्तेनाह राज्ञा वै दत्तवान् वरम् ।

तथा च त्वं दिव्यवपुर्भव भूयो महीपते ॥

तथान्तकाले मामेव लयमेष्यसि सुव्रत ।

कीर्तिश्च शाश्वती तुभ्य भविष्यति न सशय ॥ [12]

—कृ क ( ती का ) P 175 [ वी मि ( ती प्र ) P 458 469 L 3 4 ]

[ वी मि —L 3 ) उपवासस्तथा दान —L 6 ) प्रवरे महाफल —L 7 ) सह —L 11 ) मध्येव ]

वाम स मा १ १ a–d

सरस्वतीदृषद्वत्योरन्तरे कुरुजाङ्गले ।

मुनिप्रवरमासीनं पुराण लोमहर्षणम् ॥

—वी मि ( ती प्र ) P 464

वाम स मा १ ६–१०

कलिद्वापरयोर्मध्ये व्यासेन च महात्मना ।

सर प्रमाण यत्प्रोक्त तच्छृणुध्व द्विजोत्तमा ॥

विश्वेश्वरादस्ति पुरा तथारण्या जरद्गवी ।

यावद् गौर्जरती प्रोक्ता तावत्सन्निहित सर ॥ [4]

मया श्रुतं प्रमाण तु पच्यमान च वामने ।

तच्छृणुध्व द्विजश्रेष्ठा पुण्यवृद्धिकर महत् ॥

विश्वेश्वरादेकरात्रियावधाथ सरस्वती ।

सर सन्निहित ज्ञेय समन्तादर्धयोजनम् ॥ [8]

एतदाश्रित्य देवाश्च ऋषयश्च समागता ।

सेवन्ति मुक्तिकामाश्च गन्धर्वाप्सरसः स्थिता ॥

—कृ क ( ती का ) P 175 [ वी मि ( ती प्र ) P. 458 ]

[ —L 3) वी मि तथा कन्या ज° —L. 5) पठ्यमान —L 8 ) °दययो° —L 10 ) सेवन्ते ]

वाम स मा १२ ६

अपवित्र पवित्रो वा सर्वावस्था गतोऽपि वा ।

य स्मरेत्पुण्डरीकाक्ष स बाह्याभ्यन्तर शुचि ॥

*इति वामनपुराणोक्तं मानसस्नानश्लोकम् ।*

—प्राचा भू P 4

वाम स मा १३ ३ ७ ab, ८–१०

कुरुक्षेत्रमाहात्म्यमधिकृत्य—

शृणु सप्त वनानीह कुरुक्षेत्रस्य मध्यत ।

येषा नामानि पुण्यानि सर्वपापहराणि च ।

काम्यक च वन पुण्य तथादितिवन महत् ॥

व्यासस्य च वन पुण्य फलकीवनमेव च । [4]

तत्र सूर्यवन स्थानं तथा मधुवनं महत् ॥

पुण्य सीतावन नाम सर्वकल्मषनाशनम् ।

वनान्येतानि वै सप्त नदी शृणुत मे द्विजा ॥

सरस्वती नदी पुण्या तथा वैतरणी नदी । [8]

अपगा च तथा पुण्या गङ्गा मन्दाकिनी नदी ।

दृषद्वती महापुण्या तथा हिरण्वती नदी ।

वर्षाकालवहा सर्वा वर्जयित्वा सरस्वतीम् ।

एतासामुदक पुण्य प्रावृट्काले प्रकीर्तितम् । [12]

रजस्वलत्वमेतासा विद्यते न कदाचन ॥

तीर्थस्य च प्रभावेन(ण°) पुण्या ह्येता सरिद्वरा ।

—वी मि ( ती प्र ) P 458

शृण्वन्तु मुनय सर्वे तीर्थस्नानफलं महत् ।

गमनं स्मरण चैव सर्वकल्मषनाशनम् ॥ [16]

—वी मि ( ती प्र ) P 32

[ वी. मि ( माह्नि प्र ), P. 186, only L. 8–13 with an extra line reading after 9th and before 10th —

"मधुस्रवा अंशुमती कौशिकी यमुना तथा",

स्मृ मु (माह्निक प्र ), P 288, 523, L 8, 9, 10, 12, 13. with an extra line before L 10

"मधुस्रवाह्यंशुमती कौशिकी पापनाशिनी",

स्मृ च 2 काण्ड P 343 L 8-13 with an extra L.

"मधुस्रवा चांशुनदी कौशिकी पापनाशिनी" । ]

[ —L 9 ) स्मृ मु., स्मृ च धारगा च महापुण्या तथा, वी मि ( माह्नि प्र ) धारगा नर्म्मदा चैव • तथा —L 10 ) स्मृ मु °या वैतरणी नदी, वी मि ( माह्नि प्र ), स्मृ च हैरण्वती नदी —L 12 ) स्मृ मु वर्षाकाले प्रवर्धितम्, वी मि ( माह्नि प्र ) वर्षाकाले प्रकार्तितम् , स्मृ च वर्षाकाले प्रवर्षित —L 13 ) वी मि ( माह्नि प्र ), स्मृ मु स्मृ च 'रजस्वलात्व' ]

वाम स मा १३ १७, १८, १६, ३२–३५, ३८ cd ३९ab, ४१ cd–४२

तत पारिप्लव गच्छेत्तीर्थं त्रैलोक्यविश्रुतम् ।
तत्र स्नात्वा च दृष्ट्वा च ब्राह्मणवेदसंयुतम् ॥
ब्रह्मयज्ञफल प्राप्य निष्पापः स्वर्गमाप्नुयात् ।
तत्रापि सङ्गमं पुण्य कौशिक्यास्तीर्थसम्भवम् । [4]
सङ्गमेऽपि नर स्नात्वा प्राप्नोति प्रियसङ्गमम् ॥
पृथिव्यास्तीर्थमासाद्य सर्वपापप्रमोचनम् ।
क्षान्तियुक्तो नर स्नात्वा गोसहस्रफल लभेत् ॥
वाराहतीर्थं विख्यातं विष्णुना परिकीर्तितम् [8]
तस्मिन् स्नात्वा श्रद्दधान प्राप्नोति परम पदम् ॥

अथ सोमतीर्थम्

ततो गच्छेत विप्रेन्द्रा सोमतीर्थमनुत्तमम् ।
यत्र सोमस्तपस्तप्त्वा व्याधिमुक्तोभवत् पुरा ॥ [12]
तत्र सोमेश्वरं दृष्ट्वा स्नात्वा तीर्थवरे शुभे ।
राजसूयस्य यज्ञस्य फलं प्राप्नोति मानव ॥
व्याधिभिश्च विनिर्मुक्त सर्वदोषविवर्जित ।
सोमलोकमवाप्नोति सुखेन रमते चिरम् ॥ [16]

* * *

ततो मुञ्जवटं नाम महादेवस्य धीमत ।
तत्रोष्य रजनीमेकां गाणपत्यमवाप्नुयात् ॥

* * *

पुष्करं च ततो गत्वा अभ्यर्च्य पितृदेवता ।
जामदग्न्येन रामेण आहृत तन्महात्मना ॥ [20]
कृतकृत्यो भवेद्राजा अश्वमेध च विन्दति ।

[ राजा अश्वमेध विन्दति अस्य कृतकृत्य इत्यर्थ –नि टिप्प ]
—वी मि, P 186

वाम स मा १३ ५०

यदा सूर्यस्य ग्रहण कालेन भविता क्वचित् ।
सन्निहत्य तदा स्नात्वा पूता स्वर्गं गमिष्यथ ॥
—कृ क ( ती का ) P. 175

वाम स मा १४ १—१५

ततो रामह्रदान् गच्छेत्तीर्थसेवी द्विजोत्तम ।
यत्र रामेण विप्रेण तरसा दीप्ततेजसा ।
क्षत्रमुत्सार्य वीरेण ह्रदा पञ्च निवेशिता ।
पूरयित्वा नरव्याघ्र रुधिरेण विमिश्रिता । [4]
पितरस्तर्पितास्तेन तथैव च पितामहा ।
ततस्ते पितर प्रीता राममूचुर्द्विजोत्तमा. ।
राम राम महाबाहो प्रीता स्म तव भार्गव ।
अनया पितृभक्त्या च विक्रमेण च ते विभो ॥ [8]
वरं वृणीष्व भद्र ते किमिच्छसि महायश ।
एवमुक्तस्तु पितृभी राम प्रभवतां वर ॥
अब्रवीत्प्राञ्जलिर्वाक्यं स पितॄन् गगनस्थितान् ।
भवन्तो यदि मे प्रीता यद्यनुग्राह्यता मयि । [12]
पितृप्रसादादिच्छेयं तपसाप्यायनं पुन ॥
यच्च रोषाभिभूतेन क्षत्रमुत्सादितं मया ।
ततस्तु पापान्मुच्येयं युष्माकं तेजसाप्यहम् ॥
ह्रदाश्चैते तीर्थभूता भवेयुर्भुवि विश्रुता [16]
एवमुक्ता. शुभं वाक्यं रामस्य पितरस्तदा ।
प्रत्यूचु परमप्रीता राम हर्षपुरस्कृता ॥
तपस्ते वर्धतां पुत्र पितृभक्त्या विशेषत ।
यच्च रोषाभिभूतेन क्षत्रमुत्सादितं त्वया ॥ [20]
ततश्च पापान्मुक्तस्त्वं पातितास्ते स्वकर्मभि ।
ह्रदाश्च तव तीर्थत्वं गमिष्यन्ति न संशय ॥

ह्रदेष्वेतेषु ये स्नात्वा स्वान् पितॄंस्तर्पयन्ति च ।
तेभ्यो दास्यन्ति पितरो यथाभिलषित वरम् ॥ [24]
ईप्सितान् मनसा कामान् स्वर्गवास च शाश्वतम् ।
एव दत्त्वा वरान् तुष्टा रामस्य पितरस्तदा ॥
आमन्त्र्य भार्गव प्रीतास्तत्रैवान्तर्हितास्तदा ।
एव रामह्रदा पुण्या भार्गवस्य महात्मन ॥ [28]
स्नात्वा ह्रदेषु रामेषु ब्रह्मचारी शुचिव्रत ।
राममभ्यर्च्य श्रद्धावान् विन्देद्बहु सुवर्णकम् ॥
—वी मि (ती प्र), P. 470.

वाम स मा २० ६ab
ऋणमोचनमासाद्य तीर्थं ब्राह्मणसेवितम् ।
—वी मि (ती प्र), P. 477.

वाम स मा २४ २, १४
एतत्सन्निहित मोक्ष सर पुण्यतम महत् ।
मयोपसेवित यस्मात् तस्मान्मुक्तिप्रदायकम् ॥
* * *
यस्तत्र कुरुते श्राद्ध वटलिंगस्य चान्तरे ।
तस्य प्रीताश्च पितरो दास्यन्ति भुवि दुर्लभम् ॥ [4]
—वी मि (ती प्र), P 466 470.
[ लिङ्गस्य पश्चिमे भागे वट इति ।—नि टिप्प ]

वाम स मा २४ १७, २१–२३
ये तु सिद्धा महात्मानस्ते लिङ्गस्पर्शनेन च ।
व्रजन्ति परमा सिद्धि पुनरावृत्तिदुर्लभाम् ॥
एवं ज्ञात्वा ततो गङ्गा देवाना हितकाम्यया ।
उपर्युपरि लिङ्गानि सप्त तत्र चकार ह ॥ [4]
ततो ये मुक्तिकामाश्च सिद्धा यज्ञपरायणा ।
संसेव्यते प्रयत्नेन प्रयाता परम पदम् ॥
पांसवोऽपि कुरुक्षेत्रे वायुना समुदीरिता ।
अतिदुष्कृतकर्माण नयन्ति परमा गतिम् ॥ [8]
—कृ क ( ती का ), P. 175

वाम स मा २४ २६, ३० ab, ३१
कृते युगे सान्निहत्य त्रेताया वायुसञ्ज्ञितम् ।
कलिद्वापरयोर्मध्ये कूपो रामह्रदः स्मृतः ।
चैत्रकृष्णचतुर्दश्यां यस्त्वेतानि परिक्रमेत् ।
यस्तु वटस्थितो रात्र्यां ध्यायते परमेश्वरम् ॥ [4]
स्थाणोर्वटप्रसादेन मनसा चिन्तितं फलम् ।
—वी मि ( ती प्र ), P. 466
[इति वामनपुराए सगच्छते । नन्वेकस्यैव युगभेदेन नामभेदोऽस्तु । मैवमिति वामनपुराणे नैतानीति बहुवचननिर्देशात्—नि टिप्प ]

वाम स मा २८ ३२ cd–३६ ab
ततोऽह ता प्रजा दृष्ट्वा पिहितास्तेन तेजसा ।
क्रोधेन महता युक्तो लिंगमुत्पाट्य चाक्षिपम् ॥
संक्षिप्त. सरसोर्मध्ये ऊर्ध्वमेव पुनः स्थितः ।
तदाप्रभृति लोकेषु स्थाणुरित्येव विश्रुत ॥ [4]
सकृद्दर्शनमात्रेण विमुक्त सर्वकिल्बिषै ।
प्रयाति मोक्ष परम यस्मान्नावर्तते पुन ॥
यश्चेह तीर्थे निवसेत् कृष्णाष्टम्या समाहित ।
स मुक्त पातकै सर्वैरगम्यागमनोद्भवै ॥ [8]
—कृ क ( 8 ती का ), P. 175.

वाम ४३ ४
कुजम्भाद्याश्च निहितो भ्रातरो मम भार्गव ।
अक्षया परमाश्रामी कुरुक्षेत्रे फल तथा ॥
—वी मि, P. 468.

वाम ५०. १४–१५ ab, १६ cd
कालञ्जरस्योत्तरत सुपुण्य–
स्तथा हिमाद्रेरपि दक्षिणस्थ ।
स कोमलः पूर्वत एव विस्तृतः
पशो पुरः पश्चिमतोऽवतस्थे ॥ [4]
गयेन पूर्वं नृवरेण यत्र
इष्टोऽश्वमेधश्च सकृत्सदक्षिण ।
यत्र स्वचक्रे भगवान् मुरारि
द्विस्तरवमव्यक्ततनुस्तु मूर्तिः ॥ [8]
—नृसिंह प्र, P. 33

वाम ५३. ५० cd–५४, ५७

वामनपुराणे श्रवणद्वादशीव्रतम्

श्रवणद्वादशी नाम मासि भाद्रपदे भवेत् ।
ततो नागरिकोऽन्नैको गत स्नातु च सङ्गमे ॥
ऐरावत्यनड्वल्योर्ब्रह्मक्षत्रपुर सराः ।
मातिवेश्यप्रसङ्गेन तत्राप्यनुगतोऽस्म्यहम् ॥
कृतोपवास शुचिमानेकादश्या शुचिव्रत ।

ततः सङ्गमतोयेन वारिधाराधरं नवम् ॥
सम्पूर्णवस्त्रसंवीतं संगमाम्भःसमन्वितम् ।
मृत्पात्रमभिमृश्याथ पूर्णं दध्योदनेन वै ॥
प्रददौ ब्राह्मणाय्याय शुचये कृतकर्मणे ।
एतत्ते कारणं प्रोक्तं यदन्नं च सहाम्भसा ॥
दत्तं तदिदमायाति मध्याह्नेऽपि दिने दिने ।

—कृ. क., P. 344.

वाम. ५३. ६४–६५, ६७, ६६ cd—७२ :

गयायां तीर्थजुष्टायां स्नात्वा शौचसमन्वितः ।
मम नाम समुद्दिश्य पिण्डनिर्वपणं कुरु ॥
तत्र पिण्डप्रदानेन प्रेतभावादहं सखे ।
मुक्तस्तु सर्वदृष्टॄणां यास्यामि शुभलोकताम् ॥ [4]
इत्येवमुक्त्वा वणिजं प्रेतराजोऽनुजैः सह ।
स्वनामानि यथान्यायं सम्यगाख्यातवाञ्छुचिः ॥
तथार्चयित्वा प्रययौ [1]गयाशिरमनुत्तमम् ।
पिण्डनिर्वपणं तत्र प्रेतानामनुपूर्वशः । [8]
चकार च सदा प्राणान् पितृश्चक्रे त्वनन्तरम् ॥
आत्मनश्च महाबुद्धिर्महाबोधौ तिरैर्विना ।
पिण्डनिर्वपणं चक्रे तथान्यानपि गोत्रजान् ॥
एवं प्रदत्तेष्वथ च पिण्डेषु प्रेतभावत । [12]
विमुक्तास्ते द्विजाः प्राप्य ब्रह्मलोकं ततो गताः ॥

—कृ. क. ( 8 ती. का. ), P. 166; [ ती. चि, P. 273; वी. मि. P. 394, त्रि. से P. 320; वि पा. P. 813; ध. द्वै. नि. 115 L. 8–9 only. ]

[ —L. 3 ) त्रि. से., ती चि सुखम्. —L. 4) त्रि. से., ती. चि., वी. मि. दातॄणा. —L 5 ) त्रि. से. [ म ] तुगे. —L. 6 ) ती चि, त्रि. से. °वान् सह. —L. 7 ) ती. चि., त्रि. से. उपार्जयित्वा, ती. चि. शिरसमुत्तमं. —L. 9 ) वी. मि. च स दायादान्, त्रि. से., वि. पा. च स्वदायादान्, ती. चि. चसुदाय. स्वान् L—. 10 ) त्रि. से. महाम्भोधौ. —L. 12 ) त्रि से. दत्तेषु पिण्डेषु वणिज, ती. चि, वी.मि दत्तेषु पिण्डेषु वणिजा. —L. 13 ) ती. चि द्विज प्रेता ; त्रि. से. च ते ( → तत ). ]

[ 1. गयाशिरसमिति—एवञ्च गयाशिरसि प्रेताय पिण्डे दत्ते तस्य प्रेतत्वविमुक्तिब्रह्मलोकावाप्ती भवत इति—ती. चि, नि. टिप्प; —वी. मि.—नि. टिप्प. गयाशिरमिति—एवं च गयाशिरसि प्रेताय पिण्डे दत्ते प्रेतत्वनिवृत्तिब्रह्मलोकावाप्तिर्भवतीति. ]

वाम. ५५ ४ cd-५ :

कृतशौचं[1] जगामाथ द्रष्टुं पुरषकेश्वरी ।
स्नात्वाथ देविकायां च नृसिंहं प्रतिपूज्य च ॥
तत्रोष्य रजनीमेकां गोकर्णं दानवो ययौ ॥

—वी. मि. ( आह्नि. प्र. ), P. 186.

[ 1. कृतशौचस्य नामान्तरं देविकेति, यत्र देविकाग्राही पक्षिह्रद ग्रादौ स्थित पश्चान्नरसिंहेन कृतं शौचमस्मिन्निति कृतशौचमिति—नि. टिप्प. ]

वाम. ५७ १–३ ab, ४–६ a, ७ d-८ ab :

तस्मिंस्तीर्थवरे स्नात्वा दृष्ट्वा देवं त्रिलोचनम् ।
पूजयित्वा सुवर्णाख्यं नैमिशं प्रययौ ततः ॥
तत्र तीर्थसहस्राणि त्रिंशत् पापहराणि च ।
गोमत्यां काञ्चनस्थांश्च सुनन्दामध्यवासिनः ॥ [4]
तेषु स्नात्वार्च्य देवेशं पीतवाससमच्युतम् ।
देवदेवं तथेशानं संपूज्य विधिना ततः ।
गयायां गोपतिं द्रष्टुं जगाम स महासुरः ॥
सरसि ब्रह्मणः स्नात्वा कृत्वा चास्य प्रदक्षिणाम् ॥ [8]
पिण्डं निर्वपणं पुण्यं पितॄणां स चकार ह ।
उदपाने तथा स्नात्वा सरयूं च जगाम सः ॥
तस्यां स्नात्वा समभ्यर्च्य गोप्रतारे जलेशयम् ।

—कृ. क. (8 ती. का ), P. 234; [वी. मि. ( ती. का. ), P. 603; कृ क ( ती. का. ), P. 172; ती. चि, P. 279; त्रि. से, P. 320. ( L. 7–9 only ).]

[ —L. 7 ) त्रि. से, ती चि, कृ. क. स जगाम ( → जगाम स ). —L. 8 ) ती चि. गत्वा चास्य प्रदक्षिणं, त्रि. से. कृत्वा चैव, वी मि., कृ. क प्रदक्षिण ( → प्रदक्षिणां ). —L. 9 ) ती. चि, त्रि. से, कृ. क. पिण्डनिर्व°, त्रि. से. च चकार ह. ]

वाम ५७ ८ cd–४२ ab, ५० cd-६१ ab, ६२ cd-७०

उपोष्य रजनीमेकां विरजां स नदीं ययौ ।
स्नात्वा विरजसे तीर्थे दत्त्वा पिण्डं पितुस्तथा ॥
दर्शनार्थं ययौ श्रीमान् अजितं पुरषोत्तमम् ।
तं दृष्ट्वा पुण्डरीकाक्षमक्षरं परमं शुचिः ॥ [4]
उपोष्य षड् दिनान्येष महेन्द्रं दक्षिणां ययौ ।
तत्र देववरं शंभुमर्धनारीधरं हरम् ॥

दृष्ट्वा सपूज्य[च]पितॄन् महेन्द्रस्योत्तरं गत ।
तत्र देववरं शंभुं गोपाले सोमशीतलम् ॥ [8]
दृष्ट्वा स्नात्वा सोमतीर्थे सह्याचलमुपागत ।
तत्र स्नात्वा महोदधौ वैकुण्ठ चार्च्य भक्तित ॥
पितॄन् पिण्डैः समभ्यर्च्य पारियात्र गिरं गत ।
तत्र स्नात्वा शङ्कुलिन्या पूजयित्वाऽपराजितम् ॥ [12]
करपादे समाहृत्य विश्वरूप ददर्श स ।
यत्र देववर शंभुर्देवानां तु सुपूजित' ॥
विश्वरूपमथात्मानं दर्शयामास योगवित् ।
तत्र संकुणिकातोये स्नात्वाभ्यर्च्य महेश्वरम् ॥ [16]
जगामाद्रिं च सौगन्ध महाद्रो मलयाचलम् ।
महाह्रदे तत स्नात्वा पूजयित्वा च शंकरम् ॥
ततो जगाम योगात्मा द्रष्टुं विन्ध्ये सदाशिवम् ।

* * *

त्रिरात्र समुपोष्येशमवन्तीं नगरीं ययौ ॥ [20]
तत्र शिप्राजले स्नात्वा विष्णु सम्पूज्य भक्तित ।
श्मशान तु जगामाथ महाकालवपुर्हरम् ॥
तस्मिन् स सर्वसत्त्वाना तेन रूपेण शङ्कर ।
तामस रूपमास्थाय सहार कुरुते वशी ॥ [24]
तत्रस्थेन सुवेषेण श्वेतकिर्नाम भूपति ।
रक्षितस्त्वन्तकं हत्वा सर्वभूतापहारिणम् ॥
स तत्र हृष्टो वसति नित्यं चैव सहोमया ।
वृत परमकोटीभिर्वन्दद्भिस्त्रिदशाचित ॥ [28]
दृष्ट्वाथ च महाकाल कालकालान्तकारकम् ।
दैत्याना यमसयमन मृत्युमृत्यु विचित्रकम् ॥
श्मशाननिलय शभु भूतनाथ जगत्पतिम् ।
पूजयित्वा शूलधरं जगाम निषध मति ॥ [32]
तत्रामरेश्वर देव दृष्ट्वा सम्पूज्य भक्तित ।
महोदय समभ्येत्य हयग्रीव ददर्श स ॥
अश्वतीर्थे नर स्नात्वा दृष्ट्वा च तुरगाननम् ।
श्रीधर तु विभुं पूज्य पाञ्चालविषय ययौ ॥ [36]
भद्रेश्वरं गणैर्गुप्तं पुत्रमर्थपतेरथ ।
पश्चात्मकं रथी दृष्ट्वा प्रयाग प्रयतो ययौ ॥

स्नात्वा सन्निहिते तीर्थे यामुने लोकविश्रुते ।
दृष्ट्वा वटेश्वरं रुद्र माधव योगशायिनम् ॥ [40]
द्वावेव भक्तित पूज्य पूजयित्वा महेश्वरम् ।
माघमासमथोपोष्य ततो वाराणसीं गत ॥
दशाश्वमेधे गगाया तीर्थे सुरगृहादिषु ।
सर्वपापहरास्वेषु संपूज्य पितृदेवता ॥ [44]
प्रदक्षिणीकृत्य पुरीं पूज्याविमुक्तकेशवौ ।
लोल दिवाकरं दृष्ट्वा ततो मधुवन ययौ ॥
तत्र स्वयभुव देव दृष्ट्वा चासुरसत्तम ।
तमभ्यर्च्य महातेजा पुष्करारण्यमागतम् ॥ [48]
तेषु त्रिष्वपि तीर्थेषु स्नात्वार्च्य पितृदेवता ।
पुष्कराक्षमयोगन्धि ब्रह्माण चाप्यपूजयत् ।
ततो भूय सरस्वत्यास्तीर्थे त्रैलोक्यविश्रुते ॥
कोटितीर्थे रुद्रकोटिं ददर्श वृषभध्वजम् । [52]
नैमिशे ये द्विजवरा मागधेया ससैन्धवा ॥
धर्मारण्या पौष्करेया दण्डकारण्यकास्तथा ॥
चाम्पेया भृगुकच्छीया देविकातीरकाश्च ये ।
ते तत्र शकरं द्रष्टु समायाता द्विजातय ॥ [56]
कोटिसख्या स्त्रिय' सिद्धा हरदर्शनलालसा ।
अह पूर्वमह पूर्वमित्येव वदतो मुने ॥
तान् सक्षुब्धान् हरो दृष्ट्वा महर्षीन् दग्धकिल्बिषान् ।
तेषामेवानुकम्पार्थं कोटिमूर्तिरभूद्धर ॥ [60]
ततस्ते मुनय प्रीता सर्वे एव महेश्वरम् ।
सम्पूजयन्ति ते भक्त्या तीर्थे कृत्वा पृथक् पृथक् ॥
इत्येव रुद्रकोटीति नाम शोभमजायत ।
तान् ददर्श महातेजा प्रह्रादो भक्तिमान् वशी ॥ [64]
कोटितीर्थे नरः स्नात्वा तर्पयित्वा वसून् पितॄन् ।
रुद्रकोटिं समभ्यर्च्य जगाम कुरुजाङ्गलम् ॥
तत्र देववरं स्थाणुं शङ्करं पार्वतीप्रियम् ।
सारस्वतीजले मग्न ददर्श सुरपूजितम् । [68]
सारस्वतेऽम्भसि स्नात्वा स्थाणुं सम्पूज्य भक्तित ।

* * *

क्षीरिका च समभ्येत्य नीलकण्ठं ददर्श ह ॥

नीलतीर्थजले स्नात्वा पूजयित्वा तत्र शिवम् ।
जगाम सागरान्ते स प्रभासे द्रष्टुमीश्वरम् ॥ [72]
स्नात्वा च स सङ्गमे नद्या सरस्वत्यार्णवस्य च ।
सोमेश्वरं लोकपतिं ददर्श च कपर्दिनम् ॥
यो दक्षशापनिर्दग्ध क्षयी ताराधिप शशी ।
आप्यायित शक्रेण विष्णुना च कपर्दिना ॥ [76]
तानभ्यर्च्य वरान् देवान् आजगाम महालयम् ।
तत्र रुद्रं समभ्यर्च्य स जगामोत्तरान् कुरून् ॥
पद्मनाभ समभ्यर्च्य सप्तगोदावर ययौ ।
तत्र स्नात्वार्च्य देवेश भीम त्रैलोक्यवेदिनम् ॥ [80]
गत्वा दारुवने श्रीमान् (श्री)लिङ्ग प्रददर्श ह ।
तमभ्यर्च्याथ ब्रह्माणीं गत्वार्च्य त्रिदशेश्वरीम् ॥
प्लक्षा च तरणं गत्वा श्रीनिवासमपूजयत् ।
ततश्च कुण्डिन गत्वा सपूज्य प्राणितृप्तिदम् ॥ [84]
सूर्यारक चतुर्बाहुं पूजयित्वा विधानत ।
मागध रण्यमासाद्य ददर्श वसुधाधिपम् ॥
तमर्चयित्वा विश्वेशं स जगाम प्रजामुखम् ।
महातीर्थे तत स्नात्वा वासुदेव प्रणम्य च ॥ [88]
शोण सप्राप्य संपूज्य रुक्मधर्माणमीश्वरम् ।
महाकाश्या महादेव हंसाख्य भक्तिमानथ ॥
पूजयित्वा जगामाथ सैन्धवारण्यमुत्तमम् ।

* * *

तं दृष्ट्वार्च्य हरिं चासौ तीर्थं कनखलं ययौ ॥ [92]
तत्रार्च्य रुद्र कामेश वीरभद्रं च दानव ।
गणाधिप च मेधाम ययावथ गिरिव्रजम् ॥
तत्र देव पशुपतिं लोकनाथ महेश्वरम् ॥
सम्पूजयित्वा विधिवत् कामरूप जगाम ह । [96]
शशिप्रभं देववरं त्रिनेत्र
संपूजयित्वा सहित मृडान्या ।
जगाम तीर्थप्रवरं महाख्य
तस्मिन् महादेवमपूजयच्च ॥ [100]
तत्र त्रिकूट गिरिराजपुत्रं
द्रष्टुं जगामाथ स चक्रपाणिम् ।
तमीड्य भक्त्या च गजेन्द्रमोक्षणम्
जजाप जप्य परम पवित्रम् ॥ [104]
तत्रोष्य दैत्येश्वरसूनुरादरात्
मासत्रय मूलफल बुभुक्षी ।
निवेद्य विप्रप्रवरेषु काञ्चन
जगाम घोर स हि दण्डक वनम् ॥ [108]
तत्र दिव्य महाशाखस्य वनस्पतिवपुर्धरम् ।
ददर्श पुण्डरीकाक्ष महान्त चापधारिणम् ॥
तस्याधस्तात् त्रिरात्र तु महाभागवतोऽसुर ।
स्थित स्थण्डिलशायी च पठन् सारस्वत स्तवम् ॥ [112]
तस्माच्चीर्थवरं विन्ध्य सर्वपापप्रणाशनम् ।
जगाम दानवो द्रष्टु सर्वपापहर हरिम् ॥

—कृ क (ती का) P 23८–237 [ वी मि (ती प्र) P 603 L 13 ○ नृसिंह प्र P 66 L 79–80 ]

[ —L 5 ) °येष महे पर्वत —L 7 ) सुसम्पूज्य पितॄन् महेन्द्र चोत्त° —L 10 ) महोन्नत्या —L 11 ) गिरि तत —L 1 ) लाङ्गलि° —L 13 ) करपा° —L 16) सङ्गणिकातो° —L 20 ) °पोष्यैव —L 21 ) सिप्राज° —L 22 ) ईशान °वर —L 25 ) तत्र तेन सुरेशेन श्वे° —L 28 ) प्रमय को° —L 29 ) दृष्ट्वा वय —L 30 ) गमन मृत्युमृत्यु चित्रविचित्रकं —L 32 ) निपधाम्यति —L 33) दृष्ट्वा देवं —L 35 ) तु चतुराननं —L 36 ) पञ्चालवि° —L 38 ) पञ्चालक रथा —L 41 ) द्वारे च भक्तित पूज्य —L 44 ) सर्वपापहराद्यपु —L 49 ) तेष्वपि त्रिपु —L 50 ) °मयो गत्वा —L 53 ) नमिपेया द्विजवरा —L 55 ) भारभ छीया देविकास्ती° —L 57 ) °सत्या स्तत्र सिद्धा —L 63 ) गम्भीरजायत —L 64 ) त दर्भ —L 70 ) क्षीरिकावासमभ्येत्य —L 73 ) च सङ्गमे —L 75 ) यदम° —L 78 ) प्रजगाम महा° —L 80 ) °लोकयवन्दित नृसिंह प्र च विश्वन °विश्रुत —L 82) तम भ्यर्च्य च ब्रह्मा° —L 83 ) प्लक्षावतरणं —L 85 ) शूर्पारके —L 86 ) महातीर्थे —L 90 ) महाकोश्यां —L 93 ) रु कालीन —L 94 ) च मेधाम —L 101 ) ततस्त्रिकू° —L 103 ) भक्त्याथ —L 105 ) मूलफलाम्बुभक्षी ]

[ मात् जप्यात् भगवद्भक्तो प्रह्लादो वैष्णवो बभौ । गजेन्द्रमोक्षणार्थेस्तु चतुरस्तान् बन्दस्व मे ॥ इत्युपक्रम्य वामनीये च

गजेन्द्रमोक्षणमुक्त्वा हरिं कृष्ण हृषीकेशमित्यादि सारस्वत, नमस्ते जय जगन्नाथेत्यादि नमस्ये देवदेवेशमित्यादि स्तोत्रत्रयमुक्त पठनीयम् । निस्या पद्ध, P. 495 ]

वाम ६५ ५८ cd–६० ab

वीरप्रतिपदा नाम तव भावी महोत्सव ।
तत्र त्वा नरशार्दूल ततो हृष्टा. स्वलङ्कृता ॥
पुष्पधूपप्रदानेन अर्चयिष्यन्ति तस्वत. ।
तत्रोत्सवो मुख्यतमो भविष्यति दिवानिशम् ॥ [4]

—चतु चि (श्रा का नि) P 617 [का त वि, P 321, first 3 L स्मृ त part I (ति त) P 27, first 3 L कृ र. P 412]

[—L 1) का त वि °प्रतपद प्राप्य —L 2) स्मृ त अत्र त्वा कृ र. हृष्ग [पृष्टा] —L 3) का त वि अर्घ्यं° (→ पुष्प°) कृ र स्मृ त का त वि °दीप प्रदानेन स्मृ त पूजयिष्यन्ति का त वि स्मृ त पूजयिष्यन्ति मानवा; कृ र. यत्नत —L 4) कृ र. तवोत्सव ]

याम ६५ ५८ ab ६० cd

तथान्यमुत्सव पुण्य वृत्ते शक्रमहोत्सवे ।
यथैव राज्ये भवतश्च साम्प्रतम्
तथैव सा भाव्यति कौमुदीति ॥
—कृ र. P 412

[ प्रतिकं मुनीति वचनान्श्विनपूर्णिमातोऽत्तिायो लभ्यते— नि टिप्प, कृ र. ]

वाम. ६७ ६०

सर्वमङ्गलमङ्गल्य वरेण्य वरदं शुभम् ।
नारायण नमस्कृत्य सर्वकर्माणि कारयेत् ॥

—स्मृ त (एका त) II, P 12 [स्मृ त (ति त) I, P 22 स्मृ त (प्रति त) II P 632 ह भ वि P 108 दा म P. 17 धा सा (गन्ग प) P 3]

[—L 1) ह भ वि शिवं (→ शुभ) ]

वाम ६७ २९, ४०, ५४, ६०–६२ ab, ६३ cd, ७०, ७३

ये संश्रिता हरिमनन्तमनादिमध्यम्,
नारायणं सुरगुरु शुभद वरेण्यम् ।
शुद्ध खगेन्द्रगमनं कमलालयेशम्,
ते धर्मराजकरण न विशन्ति धीरा ॥ [4]

*   *   *

ये शङ्खचक्राब्जकर सशार्ङ्गिण,
खगेन्द्रकेतु वरद श्रिय पतिम् ।
समाश्रयन्ते भवभीतिनाशन,
तेषा भय नास्ति विमुक्तिभाजाम् ॥ [8]

*   *   *

येषा चक्रगदापाणौ भक्तिरव्यभिचारिणी ।
ते यान्ति नियत स्थान यत्र योगेश्वरो हरि ॥

*   *   *

सर्वमङ्गलमङ्गल्य वरेण्य वरद शिवं ।
नारायण नमस्कृत्य सर्वकर्माणि कारयेत् ॥ [12]
विष्ट्यो व्यतिपाताश्च ये ह्न्ये दुर्नीतिसम्भवा ।
ते सर्वे स्मरणाद्विष्णोर्नाशमायान्त्यपप्रदा: ॥
तीर्थकोटिसहस्राणि तीर्थकोटिशतानि च ।

*   *   *

तानि सर्वाण्यवाप्नोति विष्णोर्नामानुकीर्तनात् ॥ [16]

*   *   *

अनाद्यनन्तमजरामरं हरिं ये
सस्मरन्त्यहरहर्नियत नरा भुवि ।
तत्सर्वग ब्रह्मपरं पुराण
ते यान्ति वैष्णवपद ध्रुवमव्ययञ्च ॥ [20]
ये कीर्तयन्ति वरद वरपद्मनाभं
शङ्खाब्जचक्रशरचापगदासिहस्तम् ।
पद्मालयावदनपङ्कजषट्पदाक्षं
नून प्रयान्ति सदनं मधुघातिनस्ते ॥ [24]

*   *   *

—ह भ वि, P. 779, 111, 711, 100, 666, 109, 677; [स्मृ त Part I (ति त) P. 59, (श्रा त), P. 263, (ज्यो त) P 588 L 11–12]

[—L 11) स्मृ त °तिपाताश्च येऽन्ये —L 12) स्मृ त ते नाश नाश यान्ति महात्मन. ]

याम ६८, ७–९

पूजितेषु द्विजेन्द्रेषु पूजित स्याज्जनार्दन ।
यस्तान् द्विषति मूढात्मा स याति नरकं ध्रुवम् ॥

तानर्चयेन्नरो भक्त्या ब्राह्मणान् विष्णुतत्पर ।
एवमाह हरि पूर्वं ब्राह्मणो मामकी तनु ॥
ब्राह्मणो नावमन्तव्यो बुधो वाप्यबुधोऽ[ऽपि]वा ।
सोपि दिव्या तनूर्विष्णोस्तस्मात्तानर्चयेद्बुध. ॥

—दा सा P 11

वाम ६८ ५, १०, १२ab–१६ २०–२१, ३७ ३८,४०

श्रद्धानैर्भक्तिपरैर्यान्युद्दिश्य जनार्दनम् ।
बले दानानि दीयन्ते अक्षयाणि विदुर्बुधा. ॥
तान्येव सुप्रशस्तानि कुसुमानि महासुर ।
यानि स्युर्वर्णयुक्तानि रसगन्धयुतानि च ॥

* * *

जाती शताह्वा[1] सुमना कुन्द चारुपुट तथा ।
बाणश्च चम्पकाशोक करवीरश्च यूथिका ॥
पारिभद्र पाटला च बकुल गिरिशालिनी[2] ।
तिलक जासुवनज[3] पीतकं तगरस्तथा ॥
एतानि सुप्रशस्तानि कुसुमान्यच्युतार्चने ।
सुरभीणि तथान्यानि वर्जयित्वा तु केतकीम् ॥
बिल्वपत्रं शमीपत्रं पत्र भृगराजस्य च ।
तमालामलकीपत्रं शस्त केशवपूजने ॥
येषा न सन्ति पुष्पाणि प्रशस्तान्यर्चने विभो ।
पल्लवान्यपि तेषा स्यु शस्तान्यर्चाविधौ हरे ॥

* * *

[4]रुहिकाख्य कणो दारु सिह्रक चागुरु. सिता ।
शङ्खो जातीफल श्रीशे धूपानि स्यु प्रियाणि वै ॥
हविषा सस्कृता ये च यवगोधूमशालय ।
तिलमुद्गादयो माषा व्रीहयश्च[5] प्रिया हरे ॥
य कारयेन्मन्दिरं माधवस्य,
पुण्यान् लोकान् स जयेच्छाश्वतान् वै ।
दत्त्वारामान् पुष्पफलाभिपन्नान्,
भोगान् भुङ्क्ते कामत स्वर्गसस्थः ॥
पितामहस्य पुरत कुलान्यष्टौ च यानि तु ।
तारयेदात्मना सार्धं विष्णोर्मन्दिरकारक ॥
अपि न स्वकुले कश्चिद् विष्णुभक्तो भविष्यति ।
हरिमन्दिरकर्ता यो भविष्यति शुचिव्रत ॥

—ह भ वि, P. 407, 326, 354, 377, 393, 1288, [श्रा वि, P 82, 83, L 17–18, नित्या प्र P. 630 L 3–10, 17–18 स्मृ त part II (एका त ), P. 66, L 7–10; स्मृ त (ग्राह्नि त ) P 411, L 7–12, 15–18, वी मि P 50 (पु प्र ) P 40 (पू प्र ), P 73 (धू प्र ) 78, 191 प्रतिरिक्त च L 27–30 ]

चन्दनेनानुलिप्तेत कुङ्कुमेन तु यत्नत ।
उशीरपद्मकाभ्या च तथा कालेयकादिना ॥
गोदानानि पवित्राणि भूमिदानानि चानघ ।
वस्त्रान्नस्वर्णदानानि प्रीतये मधुघातिन ॥

Cr (६८ १६,२२ )

धू शि P 152, 141, L 10, 15–16, [ग्राचारा P. 49, L 10 कृ र P 574 L 19–20; व कि को P 166, 173, L 10 17–18; श्रा कि को P 261, L 17–18 ]

[—L 3) नित्या प्र महामुने —L 4 ) नित्या प्र सुप्रशस्तानि —L 5 ) नित्या प्र शताका कु "श्चाश्टप (टरूप ) —L 7 ) नित्या प्र °भद्र °मालिनी स्मृ त° (ग्राह्नि त ) °शायिनी (एका त ) °शालिनी —L 8 ) नित्या प्र जासव°, स्मृ त जम्बु° नित्या प्र पानक नित्या प्र स्मृ त स्वपि ( → तथा ) —L 9 ) स्मृ त (एका त ) हि प्रश° स्मृ त (ग्राह्नि त ) °तायाह प्रश° —L 11 ) स्मृ त भृङ्गराजस्य पत्रकम् —L 12 ) वी मि प्रशस्त केशवार्चने स्मृ त तुलसी कृष्ण तुलसी सद्यस्तुष्टिकर हरे —L 15 ) धू शि तुहिकाख्य कण सिह्रक सागर सित —L 16 ) धू शि शङ्ख जा° —L 17 ) वी मि हविष्यार्थं कृता श्रा कि कौ श्रा वि व कि कौ ये तु —L 18 ) नित्या प्र माषा —L 19 ) कृ र केशवस्य —L 20 ) कृ र च ( → वै ) —L 22 ) कृ र श्लाघनीयान् ( → स्वर्गसस्थ ) ]

[1 शताका स ओप इति प्रसिद्धम् । ग्राटरूप वासकपुष्पम् । जासवनज जवाकुसुमम्—नित्या टिप्प नित्या प्र ।

2 गिरिशायिनी श्वेतापराजिता—नि टिप्प स्मृ त (आह्नि त ) गिरिशालिनी अपराजिता—नि टिप्प स्मृ त (एका त ) ।

3 जम्बुवनज श्वेतजवाकुसुमम्—नि टिप्प स्मृ त (ग्राह्नि त ) जम्बुवनज श्वेतजवापुष्पम्—नि टिप्प स्मृ त (एका त ) ।

4 —रुहिका मासी कणो गुग्गुलु दारु देवदारु, सित कर्पूर शङ्खा नखी धूपानीति बहुवचनात् प्रत्येक धूपत्वमेषाम्—नि टिप्प वी मि ।

—रुहिका जटामासी कण गुग्गुलु सिता कर्पूर, शङ्ख नखी शङ्खविज्ञानान्न धूपाय जीवजातमिति विष्णूक्त निषेधस्तदितरविषय —नि टिप्प, नित्या प्र ।

—रुहिका = मासी, कर्ण = महिषाख्यगुग्गुलु सित = कर्पूर सितेति पाठे सिता = शर्करा शङ्खो = नखी श्रीशे = विष्णौ ।

5 व्रीहि' धान्यस्वधान्य, न तु शालिधान्यम् अन्यथा व्रीह्युपचारे नालिप्रतिनिधित्वेन तृणधान्यान च नोपपद्यते—नि टिप्प था कि को ]

वाम ६८ २३ ३६

माघे मासि तिला देयास्तिलधेनुश्च दानव ।
'इध्मेन्धनादयश्चैव माधवप्रीणनाय वै ॥
फाल्गुने व्रीहयो गावो वस्त्रं कृष्णाजिनान्वितम् ।
गोविन्दप्रीणनार्थाय दातव्यं पुरुषर्षभ ॥ [4]
चैत्रे विचित्रवस्त्राणि शयनान्यासनानि च ।
विष्णोः प्रीत्यर्थमेतानि देयानि ब्राह्मणेष्वथ ॥
गन्धाश्च माल्यानि तथा वैशाखे सुरभीणि च ।
देयानि द्विजमुख्येभ्यो मधुसूदनतुष्टये ॥ [8]
उदकुम्भाम्बु धेनुं च तालवृन्तं सचन्दनम् ।
त्रिविक्रमस्य प्रीत्यर्थं दातव्यं साधुभिस्सदा ॥
उपानद्युगलं छत्रं लवणामलकानि च ।
आषाढे वामनप्रीत्यै दातव्यानि तु भक्तितः ॥ [12]
घृतं च क्षीरकुम्भाश्च घृतधेनुस्तथैव च ।
श्रावणे श्रीधरप्रीत्यै दातव्यानि विपश्चिते ॥
मासि भाद्रपदे दद्यात्पायसं मधुसर्पिषी ।
हृषीकेशप्रीणनाय लवणं सगुडौदनम् ॥ [16]
तिलास्तुरङ्गं वृषभं दधिताम्ररसादिकम् ।
प्रीत्यर्थं पद्मनाभस्य देयमाश्वयुजे नरैः ॥
रजतं कनकं दीपाः मणिमुक्ताफलादिकम् ।
दामोदरस्य प्रीत्यर्थं प्रदद्यात्कार्तिके नरः ॥ [20]
खरोष्ट्राश्वतरा नागा यानयुग्यमजाविकम् ।
दातव्यं केशवप्रीत्यै मासि मार्गशिरे नरैः ॥
प्रासादनगरादीनि गृहप्रावरणानि च ।
नारायणस्य तुष्ट्यर्थं पौषे देयानि यत्नतः ॥ [24]
दासीदासमलङ्कारमन्नं षड्रससंयुतम् ।
पुरुषोत्तमतुष्ट्यर्थं पौषे देयानि यत्नतः ॥
'यद्यदिष्टतमं किंचिद्यच्चाप्यस्ति शुभं गृहे ।
तत्तद्धि देयं प्रीत्यर्थं देवदेवस्य चक्रिणः ॥ [28]

—चत टी (व्रतखण्डे) P. 354–365 [कृ क. P. 239, चतु. वि. P. 885 (व्रतखण्डे), दा सा P. 571-577, 366, 437, 496, 694 L 27 28 ○, मतिरिक्तिश्लोकी—

दत्वारामान् पुष्पफलाभ्युपेतान् ।
भोगान्भुङ्क्ते कामतः श्लाघनीयान् ॥ (Cr ६८ ३७cd)

कृ र P. 487, 415, 83 150, 180, 196, 222, 254 308, 402 443, L 23 24, L 25, 26 ○, पु चि P 6-7, L 25-28 ○; स म P. 147, 148, 150, 155 156, 162, 165 L 1 2 23 28 ○; व कि कौ P. 517, 260, 298, L 5 6, 9-10, 15 16 एव सन्ति, नि प्र P 701, L 23 27 28 एव सन्ति, स्मृ त (उद्वा त), P 139 L ९ एव ]

[—L 1) कृ क, कृ र, दा सा, पु चि, व कि दातव्या (→देया) पु चि दानत (→दानव) —L 2) पु चि एव° (→इध्म°) कृ क, कृ र, पु चि दा सा चान्ये (→चैव); कृ क, कृ र., दा सा तु (→वै) पु चि च (→वै) —L 3) दा सा पुरुषा (→गाव), °जिनान्वि, कृ र. °जिनाम्बर (→जिनान्वितं) —L 4) कृ क पुरुषर्षभं —L 5) स म, पु चि मासि विचित्राणि, दा सा विचित्राणि वस्त्राणि —L 7) पु चि गन्धमा°, दा सा गन्धानिमा° —L 9) कृ र पु चि °धेनुश्च, स म °कुम्भाश्च, व कि कौ °कुम्भश्च धेनुश्च —L 10) कृ क तथा, व कि कौ सदः; पु चि, स म ज्येष्ठमासि च —L 11) दा सा नवकम्बलकानि च —L 12) स म मानसप्रीत्यै°, कृ क स्वभक्तितः —L 13) दा सा, कृ क, कृ र °धेनुफलानि पु चि °धेनुफलानि, स म °कुम्भाश्च घृतपत्र फलानि च —L 14) कृ क, दा सा विपश्चितैः, कृ र, पु. चि विपश्चिता स म °न्विते —L 15) कृ र, पु चि, स म, दा सा °सर्पिषा —L 16) कृ क, कृ र, पु चि दा सा, व कि कौ, स म °प्रीणनार्थं व कि कौ (कार्तिक) सगुडौदनं, कृ र., कृ क, सगुडौदनं —L 17) स म स्तिरस्तुरङ्गवृषभं; कृ क, कृ र. °लास्तुरङ्ग , पु चि °तुरग, दा सा, कृ क कृ र वृषभं ताम्ररसान्वि, पु चि °रसान्वितं —L 19) स म कनक रजत; कृ क, कृ र., स म, पु चि दीपान्, दा सा दीपं; कृ क °न्वितं [तथा] —L 20) कृ र. तुष्ट्यर्थं, दा सा दद्यात् —L 21) कृ क, दा सा, कृ र. °तरान् नागान्, पु चि °श्वा नाग, स म °तरा नाग , कृ र. यानयुग्य°, दा सा यानदाय°, पु चि यानदानि च°, स म यानप्रानि च° —L 22) स म मासे मा° —L 23) दा सा °प्रावरणान्वितं, निर्णय प्र °नगरानीति प्रावाराकाश्रितं —L 24) दा सा दक्षिण (→यत्नत) —L 25) दा सा °तमन्नेस्तथैव, दा सा., कृ क. प्रत्येकं सार्वकालिकं —L 27) कृ क लोके, कृ र. वस्तु (→किंचित्) निर्णय प्र यद्याप्यस्ति, कृ क., नि प्र, कृ र. इह गृहे (→शुभं गृहे) —L 28) निर्णय प्र चक्रिणे ]

[ 1 इध्म होमप्रत्योग्य दारु इन्धनम्गिन्वालनोपायम्—नि टिप्प, कृ र. ]

2 इति वामनपुराणे मासानां प्रत्येकं देवतानां दानविधानादिव दिष्टम्—कृ क ]

# Part B

### Vāmana Purāna Slokas Quoted in the Nibandhas, which could not be traced in the Extant Vāmana Purāna text

### ( वामनपुराणेऽनुपलभ्यमाना निबन्धेपूद्धृता वामनपुराणश्लोकाः )

[Below are given the Vāmana Purana Ślokas quoted in the Nibandhas, which could not be identified in the extant Vāmana Purana text available both in manuscripts and printed editions. Such unidentified Vamana Purāna quotations given here number 442 lines, and are grouped here under the heads —1 सदाचार, 2 तीर्थ, 3 व्रत-पूजा, 4. श्राद्ध, 5 दान, and 6. कर्मविपाक and प्रायश्चित्त The abbreviations for the Nibandhas are the same as in Part A of the Appendix After the abbreviation of a Nibandha the number of the page of its printed edition is given An explanatory note if given in a Nibandha is also noted here within brackets

The Nibandha work entitled the *Jayasimha Kalpadruma* gives two long passages, one on the लक्षवर्तिव्रतकथा (lines 196) and the other on the करकचतुर्थीव्रतकथा (lines 81) The author ascribes both these passages to the Vamana Purana but no other Nibandha work contains any of these passages, nor they are found in any of the available manuscripts of the Vamana Purāna

But many independent booklets on *mahatmyas* and *vratas* are available both in the manuscripts and in the printed form, in which these *mahatmyas* and *vratas* are ascribed to various Puranas Two such small popular booklets printed in Varanasi are *Laksavarti pujavidhi* and *Karakacaturthivrata kathā*, the former contains 100 slokas with a Nepali translation, and the latter 41 ślokas with Hindi translation These booklets also, like the *Jayasimha Kalpadruma* ascribe these two *vrata kathas* to Vamana Purāna —

'इति वामनपुराणे पूर्वखण्डे लक्षवर्त्तिकथाया याजकसुलक्षणासवादे लक्षवर्त्तिकथा समाप्ता ।। (*Laksavarti Pujavidhi*)

'इति वामनपुराणान्तर्गतकरकचतुर्थीव्रतकथा ।।' (*Karakacaturthīvratakatha*)

The texts of these two booklets mostly agree with the texts of लक्षवर्त्तिकथा and करकचतुर्थीव्रत given in *Jayasimha Kalpadruma*, where these two *kathas* are also ascribed to the Vāmana Purāna as already mentioned above In the Sarasvatī Bhavana Library of the Varanaseya Sanskrit University there are three manuscripts of the लक्षवर्त्तिकथा, all of which ascribe it to the Vayu Purāna —

'इति वायुपुराणे लक्षवर्त्तिव्रतकथा समाप्ता' (MS No 0081515)

'इति श्रीवायुपुराणे माघमाहात्म्ये याजकलक्षणासवादे लक्षवर्त्तिव्रते त्रयोविंशोऽध्याय' (MS No 010088)

'इति श्रीवायुपुराणे लक्षवर्त्तिव्रत सम्पूर्णम्' (MS No 008537)

There are also in the Sarasvatī Bhavana two or three MSS of the करकचतुर्थीव्रतकथा, in one of which it is ascribed to the Bhavisyottara Purāna (MS No 006987—'इति श्रीभविष्योत्तरे करकचतुर्थीव्रत सम्पूर्णम्' ), but one MS (No 11032) ascribes this करकचतुर्थीव्रतकथा to the Vamana Purāṇa —'इति वामनपुराणे करकचतुर्थीव्रत' (Aufrecht s Catalogus Catalogorum on p 81 of Part 1 refers perhaps to this same MS as Ben 53) Aufrecht s *Catalogus Catalogorum* also refers to a MS of लक्षवर्त्तिव्रत (Taylor 1,416) as belonging to the Vāyu Purāna, and to a MS. of the करकभद्राचतुर्थीव्रत (W P 338) as belonging to the Bhavisyottara Purāna

It seems that the authors of the Nibandhas often quoted from memory or simply copied the quotations from some older Nibandhas without themselves verifying them from the original sources, they also sometimes attributed by mistake some quotations to a wrong source (e g to Vamana Puraṇa

in place of the Vāyu-Purāṇa or vice versa) It is also possible that some of the quotations in the Nibandhas might have been drawn from the small independent works on *māhātmyas, vratas, kathās* etc. The anonymous authors of these works often attributed them to some Purāṇas for gaining authority and popularity for these works.

The author of the *Jayasiṁha Kalpadruma* might also have quoted the passages on the लक्षवर्तिव्रतकथा and करकचतुर्थीकथा from some such independent works on these two *kathās*, in which both these topics might have been wrongly or traditionally attributed to the Vāmana-Purāṇa, otherwise these two topics might also have been available in some of the Vāmana-Purāṇa manuscripts of that time.

Thus nothing can be said with certainty with regards to these unidentified passages of the Nibandhas. But it seems probable that at least a sufficient number of these passages might have belonged to a Vāmana-Purāṇa text which was current in the times of the Nibandhakāras quoting these passages or in the times of the older Nibandhakāras from whom such passages might have been copied.

[ अत्र निबन्धेषूद्धृता परन्तु वामनपुराणस्य विद्यमानहस्तलेखेषु मुद्रितसंस्करणेषु चानुपलब्धा वामनपुराणश्लोका प्रदीयन्ते। एते श्लोकाः सदाचार-तीर्थ व्रत-पूजा-श्राद्ध-दान कर्मविपाक प्रायश्चित्तविषयका सन्ति। निबन्धकाराणां रचनाकालादीनां च निर्देश अस्य परिशिष्टस्य A भागे प्रदत्त । श्लोकानामधस्ताद् निबन्धसंकेता प्रदत्ता, तदग्रे च मुद्रितनिबन्धग्रन्थस्य पृष्ठाङ्क प्रदत्त । यदि कस्मिंश्चिद् निबन्धे काचिद् व्याख्यात्मिका टिप्पणी वर्तते तदा साप्यत्र कोष्ठे प्रदत्ता ।

'जयसिंहकल्पद्रुम' नामके निबन्धे वामनपुराणाद् लक्षवर्तिव्रतकथा, करकचतुर्थीव्रतकथा चाप्युद्धृते वर्तेते, तेऽप्यस्मिन् परिशिष्टे प्रदत्ते स्त । परन्तु, अन्यस्मिन् कस्मिंश्चिदपि निबन्धग्रन्थे वामनपुराणस्योपलभ्यमाने कस्मिंश्चिदपि च हस्तलेखे लक्षवर्तिकथाविषयका करकचतुर्थीव्रतविषयकाश्च इमे श्लोका न प्राप्यन्ते । तीर्थमाहात्म्यव्रतकथादिविषयिका या काश्चन स्वतन्त्रा लघुपुस्तिका हस्तलेखरूपेण मुद्रिता वा प्राप्यन्ते तासु लेखकैर्बहुधा लोकश्रुति स्वकल्पना वाश्रित्य लोकप्रचारमुद्दिश्य तानि माहात्म्यादीनि कैश्चित् पुराणै सह सम्बद्धानि, न तु तानि तेषां पुराणानां हस्तलेखेषु मुद्रितपुस्तकेषु वा प्राप्यन्ते । एतादृश्यौ द्वे लघुपुस्तिके 'लक्षवर्तिपूजाविधि' 'करकचतुर्थीव्रतकथा' च नाम्ना वाराणस्यां मुद्रिते प्राप्येते । एतयो पुस्तिकयो एतौ विषयौ वामनपुराणेन सह सम्बद्धौ स्त । परन्तु वाराणसेयसंस्कृतविश्वविद्यालयस्य सरस्वतीभवननामके ग्रन्थागारे 'लक्षवर्तिपूजाविधि' इत्यस्या 'करकचतुर्थीव्रतकथा' इत्यस्याश्च केचन हस्तलेखा विद्यन्ते । तेषु लक्षवर्तिपूजाविधिस्तु वायुपुराणेन सह सम्बद्धा वर्तते, करकचतुर्थीव्रतकथा च एकस्मिन् हस्तलेखे (संख्या 006987) भविष्योत्तरपुराणेन सह सम्बद्धा वर्तते । अत जयसिंहकल्पद्रुमे उद्धृते एते कथे वामनपुराणस्यैव अंशत्वेन तदानीम् प्रवर्तेतामिति कथयितुं न शक्यते । सम्भवत, जयसिंहकल्पद्रुमनिबन्धकारेण तदानीं विद्यमानाभ्यां प्रचार गताभ्यां च एतद्विषयिकाभ्यां पुस्तिकाभ्यां उभेऽपि एते कथे स्वनिबन्धे उद्धृते, तयो पुस्तिकयो पुष्पिकामनुसृत्य च वामनपुराणेन सह एते कथे तेन संयोजिते ।

कदाचिद् निबन्धकारा स्वस्मृत्यनुसारेण प्राचीनतरनिबन्धकारवचनमनुसृत्य वा स्वेषु निबन्धेषु पुराणवचनान्युद्धृतवन्त, अनवधानतया च कदाचिद् अन्यपुराणवचनानि अन्यपुराणेन सहापि संयोजितवन्त इति संभावना अप्रत्याख्येया । एवं सति, वामनपुराणनाम्ना निबन्धेषूद्धृतानि अत्र 2B परिशिष्टे च प्रदत्तानि सर्वाण्येवोद्धरणानि वामनपुराणस्यैवेति कथं वक्तुं शक्यते ? तथाप्येषामुद्धरणानां मध्ये बहून्युद्धरणानि वामनपुराणे कदाचिदविद्यन्त कालान्तरे च कथंचित् लोपं गतानीत्यपि सम्भाव्यते । ]

## १. सदाचारः

उदयाद्वर्द्धमानेश्च मध्याह्नं भावयेद्रवि ।
ततः परं ह्रसन्तीति ज्योतिरस्तं स गच्छति ॥

—का. वि, P. 360

दानं प्रतिग्रहो होमो भोजनं देवतार्चनम् ।
साङ्गुष्ठेन सदा कार्यमसुरेभ्योऽन्यथा भवेत् ॥ [4]

—दा. सा. (परि. प्र.), P. 53

तैलाभ्यङ्गो नार्कवारे न भौमे
नो सङ्क्रान्तौ वैधृतौ विष्टिषष्ठ्यो ।
पर्वस्वष्टम्यां च नेष्टः स इष्ट
प्रोक्तो मुक्त्वा वासरे सूर्यसूनो. ॥ [8]

—स्मृ. मु. (आ. प्र.), P. 283 ; [स्मृ. च. (आ. का), P. 327-28]

साय मन्त्रवदाचम्य मोक्ष्य सूर्यस्य चाञ्जलिम् ।
दत्त्वा प्रदक्षिण कृत्वा जल स्पृष्ट्वा विशुद्धयति ॥
—स्मृ च (श्रा का), P. 363.

चतुर्दश्यष्टमीदर्शपौर्णमास्यर्कसङ्क्रमा ।
एषु स्त्रीतैलमासानि दन्तकाष्ठं विवर्जयेत् ॥ [12]
—चतु चि (ना व प्र) P 684, 688

देवकार्ये पितृश्राद्धे रवेरंशपरिक्षये ।
क्षुरकर्म न कुर्वीत जन्ममासे च जन्मभे ॥
—निर्णा प्र, P 56

त्रि प्रदक्षिणमावृत्य कृत्वाष्टाङ्गप्रणामकम् ।
दशाश्वमेधस्य फल प्राप्नुयान्नात्र सशय ॥ [16]
— व क्रि कौ, P 177.

नाभिमात्रजले गत्वा कृत्वा केशान् द्विधा द्विज ।
निरुध्य कर्णौ नासाञ्च त्रि कृत्वो मज्जन तत ॥
त्रि प्रदक्षिणञ्च य कुर्यात् साष्टाङ्गकप्रणामकम् ।
दशाश्वमेधस्य फल प्राप्नुयान्नात्र सशय ॥ [20]
—स्मृ त (श्रा त) P 356, 415.

प्रदक्षिण यस्त्रि कुर्यात् साष्टाङ्गकप्रणामकम् ।
दशाश्वमेधस्य फल प्राप्नुयान्नात्र सशय ॥
—स्मृ त (एका त), P 76

प्रातरुत्थाय य पश्येच्छ्रोत्रियं सुभग नृपम् ।
प्रातरुत्थाय य पश्येत् स आपद्भ्य प्रमुच्यते ॥ [24]
पापिष्ठ दुर्भग मद्य नग्नमुत्कृत्तनासिकम् ।
प्रातरुत्थाय य पश्येत्तत्कलेरुपलक्षणम् ॥
—दुर्गा चि, P 79.

गवार्थे ब्राह्मणार्थे च नित्यमप्याचरेत्तु य ।
तस्येह कीर्तिं मोक्ष च परत्र प्रददाम्यहम् ॥ [28]
—वि मा, P 82

निषिच्य तीरे कुशपिञ्जुलानि
पूर्वोत्तराग्राणि मृदं न्यसेच्च ।
प्रक्षाल्य पादौ च मुखं च कण्ठे
यज्ञोपवीत च जल पिबेत्ति ॥ [32]
—आचा र., P 29, [म पा, P 62]

[—L 1) म पा तीरद्भूशपिञ्जलानि –L 4) म पा पिबेद्धि]
[कण्ठे यज्ञोपवीतमासज्येत्यध्याहार — नि टिप्प म पा]

श्रुतिस्मृत्युक्तमार्गेण मृदो धारणमुच्यते ।
शृणु वत्स विधानेन मृत्साधारणमुत्तमम् ॥
मम क्षेत्रे कुरुक्षेत्रे पुण्यक्षेत्रे तथैव च ।
पर्वताग्रे नदीतीरे तुलसीमूलमाश्रिते ॥ [36]
अश्वत्थबिल्ववल्मीकबकुला पनसस्तथा ।
एतेषु मृत्तिका प्रोक्ता यथाविधि समाहरेत् ॥
—स्मृ मु (श्रा प्र), P 294

सत्यात्प्रमदितव्यं वै धर्माच्च कुशलाच्च न ।
भूत्या अग्निसमुत्थायास्ततो देहावकुण्ठनात् ॥ [40]
ललाटे हृदि दोर्द्वन्द्वे त्रिपुण्ड्रस्य च धारणात् ।
नैव प्रमदितव्य वै प्रमादादपि कदाचन ॥
स्वाध्यायाध्ययनं नित्यं कुरु प्रवचन तथा ॥
—स्मृ मु (श्रा का), P 301

अप्रावृतशरीरस्तु य कुर्ष्ट स्नानमाचरेत् । [44]
पदे पदेऽश्वमेधस्य फल प्राप्नोति मानव ॥
एव स्नानस्यावसाने भोज्य देयमवारितम् ।
भोजयेद् द्विजदाम्पत्यं भूषयेद्वस्त्रभूषणै ॥
—पु चि, P 10.

## २. तीर्थमाहात्म्यम्

अभिगम्य ततो यक्ष द्वारपाल तु रन्तुकम् । [48]
कोटितीर्थमुपस्पृश्य लभेद् बहुसुवर्णकम् ॥
गङ्गाह्रदश्च तत्रैव तीर्थं भरतसत्तम ।
तत्र स्नायीत धर्मज्ञो ब्रह्मचारी समाहित ॥
राजसूयाश्वमेधाभ्या फल विन्दति मानव । [52]
त्रीणि चाप्यग्निकुण्डानि तेषा मध्ये तु जाह्नवी ॥
—वी मि (ती प्र), P 186, 466

## ३. व्रतानि पूजा च

दत्त्वा तु गुग्गुलुं धूप नाकपृष्ठे महीयते ।
मधुसर्पिसमायुक्त द्वादशाहफलप्रदम् ॥
—निर्णा प्र, P 644

अर्कधुस्तूरमन्दारशिरीषैर्नार्चयेद्धरिम् । [56]
—व क्रि कौ, P 166.

ज्येष्ठे मासि विशेषेण यदीच्छेद्वैष्णव पदम् ।
—व क्रि कौ, P 260.

अकाम सात्त्विको लोको यत्किञ्चिद् विनिवेदयेत् ।
तेनैव स्थानमाप्नोति यत्र गत्वा न शोचति ॥
धर्मवाणिजिका मूढा फलकामा नराधमा । [60]
अर्चयन्ति जगन्नाथं ते कामानाप्नुवन्त्यथ ॥
अन्तवत्तु फल तेषा तद् भवत्यल्पमेधसाम् ।
पद्भ्यां प्रतीच्छते देव सकामेन निवेदितम् ॥
मूर्ध्ना प्रतीच्छते दत्तमकामेन द्विजोत्तमै ॥ [64]
—स्मृ त (म मा त), P 480 (मठ त), P 627

देवदेव जगन्नाथ प्राप्तेय द्वादशी तव ।
पार्श्वेन परिवर्तस्व सुख स्वपिहि माधव ॥
गन्धद्वारेति गन्धैस्तु तत्सर्वाङ्ग विलिप्य च ।
व्यजनैश्चामरैश्चैव मधुरैरभिवीजयेत् ॥ [68]
पूजयेत्ताम्बूलचैश्च मन्त्रेणानेन देशिक ।
ॐ सुप्ते त्वयि जगन्नाथ जगत् सुप्तं भवेदिदम् ॥
विबुद्धे त्वयि बुध्येत जगत् सर्वं चराचरम् ।
अनेन विधिना कुर्यात् यः पार्श्वपरिवर्त्तनम् ॥ [72]
इह भुक्त्वा बहून् भोगान् परत्र मोक्षमाप्नुयात् ।
तस्मिन् काले च य पश्येत् स्तुयाद्वा परमेश्वरम् ॥
परिवृत्तौर्न चाप्नोति जननीगर्भसम्भवे ।
आश्विने च हरेरेव य कुर्यात् पार्श्ववर्त्तनम् ॥ [76]
स सर्वसुखमाप्नोति इहलोके परत्र च ।
द्वादशैता महायात्रा ° राघाश्च पावना ॥
एकैका मुक्तिदा सर्वा धर्मकामार्थवर्धना ।
तासामेकतमा वापि यो भक्त्या चावलोकयेत् ॥ [80]
एकयापि भवाब्धिं स तीर्णो विष्णुपद व्रजेत् ।
प्रीतये मम ये कुर्युर्वासरान् भक्तिभावत ॥
चतुर्वर्गप्रदास्तेषा प्रत्येकास्ता प्रकीर्त्तिता ।
तथा—
एका वा महती यात्रा सर्वा मुक्तिप्रदा हरे । [84]
तस्मिंस्तस्मिंस्तु संदृष्टो भगवान् मुक्तिदो ध्रुवम् ॥
—स्मृ त (या त), P 19

कुञ्जरग्रहसक्षोभो गजाना जायते यदा ।
तदा सपूजयेदिन्द्र पुष्पगन्धादिभि सुधी ॥
विश्वतश्चक्षुरित्यादि सूक्तैरिन्द्रैर्द्विजोत्तम । [88]
पूजयेत्प्रयतो भूत्वा विप्रवर्यै समावृत ॥
अनेनैव तु मन्त्रेण जुहुयादयुतत्रयम् ।
अष्टाधिक तु मतिमान् पायसेन च सर्पिषा ॥
सहावृत्या जपेद् विद्वान् साष्ट चैवायुतत्रयम् । [92]
कुञ्जरा हि यदा रोगपीडिता स्युर्महीपते ।
तदेन्द्र पूजयेत् सम्यक् इत्याह भगवान् शिव ॥
—वि मा, P 96.

मुहूर्त्तमात्रसत्त्वेऽपि दिने गौरीव्रतं परे ।
शुद्धाधिकायामप्येवं गणयोगप्रशसनात् ॥ [96]
—स मा, P 37.

एकादश्या नरो भुक्त्वा द्वादश्या समुपोषणात् ।
व्रतद्वयकृत पुण्य सर्वमाप्नोत्यसंशयम् ॥
उपवासमकृत्वा तु नरो नरकमृच्छति ॥
—वि पा, P 575.

('इति वामनपुराणोक्त श्रवणद्वादशीव्रत नित्यमित्याहु' टिप्प)
बलिराज नमस्तुभ्यं विरोचनसुत प्रभो । [100]
भविष्येन्द्र सुराराते पूजेय प्रतिगृह्यताम् ॥
—का त. वि, P 321

सुगन्धैश्च सुरामासीकर्पूरागुरुचन्दनै ।
तथान्यैश्च शुभैर्द्रव्यैरर्चयेज्जगत पतिम् ॥
—वी मि (पू प्र), P 40

अतिनीलघनश्याम नलिनायतलोचनम् । [104]
स्मरामि पुण्डरीकाक्ष तेन स्नातो भवाम्यहम् ॥
—प्रायि भू, P 4.

## लक्षवर्तिव्रतकथा

सूत उवाच—
आर्यावर्ते पुरा काचिद् वेश्याऽभूद् लक्षणाभिधा ।
तस्या भुजङ्ग शूद्रोऽभूद् दासो नाम महाबल ॥
सा लक्षणा तु सुस्नाता स्थिता गोदावरीतटे । [108]

बालवैधव्यदोषेण रुदन्तीं कुररीमिव ॥
मृत पतिं पुर स्थाप्य बन्धुभि परिवारिताम् ।
आक्रन्दन्तीं ततो वीक्ष्य शनैस्तां प्रत्यपद्यत ॥
लुठन्तीं भुवि कायेन मुहुर्म्लानीमुखी मुहु । [112]
जडानामपि कारुण्य जायते सा तु पश्यताम् ॥
तदा सा लक्षणा वाक्य स्वमुजङ्गमुवाच ह ।
कुल्जाना तु नारीणा दर्शयमतिदारुणा ॥
कन्यात्वं जीवभर्तृत्व विधवात्वमिति त्रिधा । [116]
पारवश्य च नारीणा दु खमामरणान्तिकम् ॥
मृतापत्यत्ववैधव्ये तथैवापुत्रता स्त्रिय ।
असह्यमेतत्त्रितयं वैधव्य तत्र चोत्तरम् ॥
शोचन्तीना तु नारीणा कस्येद कर्मण फलम् । [120]
निवर्त्ततेऽथ केनैव पृच्छन्तीमिति तामथ ॥
उवाच दासनामासौ भुजङ्ग सूनृत वच ।
शृणु भद्र प्रवक्ष्यामि सृष्टा सृष्टा पुरा द्विजा ॥
देवाना चैव लोकाना हितार्थं मन्त्रकोविदा । [124]
शास्त्रज्ञानात् स्वभावाच्च जीवाना यत् पुरा कृतम् ॥
जानन्ति कर्मज फल ते प्रष्टव्या धृतव्रता ।
भुजङ्गवचनं श्रुत्वा तथैवमिति सा पुन ॥
तत्रागतं महावृद्ध याजक नाम वै द्विजम् । [128]
पप्रच्छ ता तदा दीना प्रश्न चोत्तरमानसा ॥
मुने त्वह दुराचारा वेश्यास्मि लक्षणाह्वया ।
तथापि ते दयापात्र पृच्छन्तीं मा सुबोधय ॥
साधूना समचित्तानां जना सर्वे समा भुवि । [132]
दुर्गन्धो वा सुगन्धो वा यथा वायो समो भवेत् ॥
मुने दर्शय नारीणा तृतीयातीव दु सहा ।
कर्मणा जायते चैव केन वाथ निवर्त्तते ॥
एतद्वित्तीर्यं मे ब्रह्मन् कृपया वद सुव्रत । [136]
इति तस्या वच श्रुत्वा याजको वाक्यमब्रवीत् ॥
दैवे कर्मणि पित्र्ये च नार्य पाके व्यवस्थिता ।
अकस्माच्च रजो दृष्ट्वा भाण्डाद्युपस्करान् ॥
अज्ञानाद्वा भयाद्वापि कामाल्लोभात् क्वचित् स्त्रिय । [140]
अवेदयित्वा गच्छन्ति तेन दुष्यन्ति सत्क्रिया ॥
क्रियालोपगता ह्येता पापात् तस्मात् सुदुस्त्यजात् ।
दशामिमा प्राप्नुवन्ति सर्वा अपि न सशय ॥
बाल्ये वा यौवने वापि वार्धके वा कदाचन । [144]
तत्र याति दुराचारा परानेवाभिकाङ्क्षति ॥
इतश्चेतश्च(पति)बन्धूनामतिचारात् सुदु सहात् ।
एतत् सहायतो नारी या लोपयति सत्क्रिया ॥
बाल्ये वैधव्यमाप्नोति सा नारी नात्र संशय । [148]
सा तत्कर्म सहायेन रजसा दूषिता च या ॥
मृतापत्या तदा भूत्वा वैधव्य यौवने व्रजेत् ।
या नारी तु रजो दृष्ट्वा सर्वभाण्डादिसंकरम् ।
कुरुते यदि सा नारी वैधव्यं वार्धके व्रजेत् ॥ [152]
या चानुकूल्यरहिता पतिधर्मेषु सर्वदा ॥
बाल्ये वैधव्यमापन्ना गतिहीना भवत्यलम् ।
सर्वासामपि वैधव्ये निदान पुष्पिता च न ॥
शान्ति तस्य प्रवक्ष्यामि कर्मणश्चापि लक्षणम् । [156]
कृते तु मुनिपञ्चम्या व्रते पाप च योषिताम् ॥
क्षयं गच्छति नारीणामिति वेदविदो विदु ।
शूर्पे सवायन दत्त्वा कृते लक्षमौनतादिके ॥
मूलावशेषं व्रजति रजोदोषो न सशय । [160]
निर्मूल स व्रजत्याशु लक्षवर्त्तिव्रते कृते ॥
रजसोत्थं महापाप नारीणा नात्र सशय ।
इति तद् वचन श्रुत्वा पुन पप्रच्छ लक्षणा ॥
मनसा शङ्किता भूत्वा सादर मुनिपुङ्गवम् । [164]
साधु साधु महाभाग चित्तं मे भयविह्वलम् ॥
लक्षवर्त्तिव्रतस्यास्य विधान कीदृशं वद ।
कस्मिन् मासे तु कर्त्तव्य कस्य वा तत्समर्पणम् ॥
उद्यापन कथ कार्यं किं फल तस्य वा मुने । [168]
तथा पृष्टो याजकोऽपि लोकाना हितकाम्यया ॥
फल विधानं तत् सर्वमवदद् वदता वर ।
मुनिरुवाच—
लोमशस्य मुनीना च संवाद कथयामि ते ।
काले हि कार्तिको मासो वैशाखो माघ एव वा ॥ [172]
सहस्रगुणित पत्ते व्रतं तन्मासि कार्तिके ।

